# वैयाकरणसिद्धान्तकौमुदी

बालमनोरमा-तत्त्वबोधिनीसहिता

(कारकप्रकरणान्ता)

(प्रथमो भागः)

म० म० पं० गिरिधरशर्मा चतुर्वेदः
म० म० पं० परमेश्वरानन्दशर्मा विद्याभास्करः

मोतीलाल बनारसीदास
दिल्ली वाराणसी पटना बंगलौर मद्रास

श्रीमद्भट्टोजिदीक्षितविरचिता

# वैयाकरणसिद्धान्तकौमुदी

( कारकप्रकरणान्ता )

## [ प्रथमो भागः ]

श्रीवासुदेवदीक्षितप्रणीतया बालमनोरमाख्यया व्याख्यया श्रीज्ञानेन्द्र सरस्वतीविरचितया तत्त्वबोधिन्याख्यया व्याख्यया च सनाथिता

महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरानन्दशर्मणा
च संशोध्य सम्पादिता

मोतीलाल बनारसीदास
दिल्ली वाराणसी पटना बंगलौर मद्रास

॥ श्रीः ॥

# प्राक्कथनम् ।

संस्कृतवाङ्मये वैदुष्यमभिलषतां सिद्धान्तकौमुद्या अध्ययनमतीवावश्यकम्, परमेतदध्ययनं यावदावश्यकं तावदेव दुष्करमपि । विशेषतस्त्वस्मिन् ह्रासयुगे यत्रानुदिनमध्येतॄणां मेधाप्रतिभे ह्रसन्त्यौ विलोक्येते तत्र सिद्धान्तकौमुद्या अध्ययनं सुगमव्याख्यया विना असम्भवमिवेति निश्चप्रचम् । बह्वीषु सिद्धान्तकौमुदीव्याख्यासु एका बालमनोरमैव ग्रन्थान्तरसँल्लापनेनाध्येतॄणां मनःसु निहितभावा विजयते । अस्या निर्मात्रातिविशदमतिप्राञ्जलमतिसरलञ्च विलिख्य वस्तुतो बहूपकृताः सुकुमारमतयोऽध्येतारः । अल्पीयसा समयेन प्रचाराधिक्यमेवास्या उपयोगितामत्युत्तमताञ्चाख्याति ।

किन्तु अत्युत्तमापीयं व्याख्या प्रकाशकमहोदयानामनवधानेन तथा कदर्थिता, यथास्या उपयोगिता पांसुभिराकीर्णेव । अस्याः प्रथमं संस्करणं यत् त्रिवेन्द्रात् प्रकाशितम्, तदतिमहार्घं सदशुद्धिभाण्डमप्यभूत् । पाठानामस्तव्यस्ततया विपर्यस्ततायाश्चैतत् संस्करणं निदर्शनमिवाभवत् । अन्येऽप्यध्येतृवर्गस्योद्वेजकाः कतिपये दोषास्तत्र कृतावासा आसन् । द्वितीये मद्रासात् प्रकाशिते संस्करणे सम्मार्जितेष्वपि बहुषु दोषेष्वनेके दोषाः प्रमादाद्वा दृष्टिदोषाद्वा न सम्मार्ष्टुमशक्यन्त । बहुत्र तु व्यर्थमेवोपजीव्यपाठस्य विरोधस्तेनाक्रियत । तृतीयं संस्करणं मद्राससंस्करणस्य प्रतिलिपिमात्रम् । तदित्थमद्यावधि सिद्धान्तकौमुदीमधिजिगांसवश्छात्रा ग्रन्थार्थावगतिसौकर्यलाभे टीकाया अस्याः कतिभिश्चन प्रबलाभिरसुविधाभिर्बलादबाध्यन्त ।

अत एव, इदानीमस्माभिर्बहुपरिश्रमेणेयं टीका संशोधिता । पुरातनेषु संस्करणेषु तत्तत्संस्करणानां सर्वथाप्यसंलग्नं पाठं परित्यज्य अनेकधा सङ्गतेषु च पाठेषु सुसङ्गतं मूले निधाय कथञ्चित्सङ्गतः पाठष्टिप्पण्यां निक्षिप्तः । सोऽयं पाठान्तरोद्धारोऽत्र सर्वथा असञ्जातपूर्व आरम्भः । यस्तु मूलग्रन्थकर्तुरेव त्रुटेः प्रख्यापकः स सर्वथा त्रुटिपूर्णोऽपि पाठोऽनधिकारचेष्टाभयान्नास्माभिर्निष्कासितो नैव च संस्कृतः, यथास्थितमेव तु स्थापितः । न केवलं पाठाशुद्धय एवास्माभिः संशोधिताः, यावद्विरामादिचिह्नान्यपि अद्यावधि अव्यवस्थापतितानि यथाशक्ति सुव्यवस्थामापादितानि । तद्यथा प्रत्नसंस्करणेषु सूत्राणि क्वचिदुपहितपदेभ्यः सर्वथा पृथक्कृत्योद्धरणचिह्ननिबद्धानि उद्धृतानि क्वचिच्च समभिव्याहृतपदेनाविच्छिन्नसन्धिबन्धनान्येव तानि निदर्शितानि । ए

वाक्येष्वपि क्वचित् पदानि तथा विच्छिन्नानि, यथा सर्ववैयाकरणसम्मताः सन्धिनियमा अपि सुदूरमवधीर्य वाक्यान्येवासाधुत्वमापादितानि ; क्वचित्तु सर्वथा प्राचीनप्रथानुकूलं प्रलम्बवाक्यान्यपि तथानुस्यूतानि येषु सौकर्यार्थं कृतान् सन्धिविच्छेदांस्तु को गणयति पदच्छेदोऽपि पददलितो विलोक्यते, तादृशेऽतिमहति ग्रन्थे पूर्णविरामान् स्वल्पविरामांश्च को बिभर्ति ।

अस्माभिस्तु इयमव्यवस्था यावच्छक्यमपाकृता । सूत्राणि पृथक्कृत्य सर्वत्रो-द्धरणचिह्नैर्निदर्शितानि । शाब्दिक-नियमानुल्लङ्घयन्ति विश्लेषणानि, यथा—अचि वाक्यान्ते वा अनुस्वारादेशः, अजादौ परे वा दकारस्य तकारादेश इत्येवमादीनि यथा-सम्भवं दूरीकृतानि, विरामादिचिह्नानि च यथोचितं निवेशितानि । उद्धृतप्रतीकेषु सूत्रेषु प्रयोगेषु चैवंविधेषु सन्धिनियमोपेक्षणं टीकाकर्तृशैलीसम्मतमित्यस्माभिरपि तत्तथैवानुसृतम् ।

बालमनोरमा मूलस्य विशदीभूता व्याख्या सत्यमस्ति, परं सिद्धान्तकौमुदीमूलानुक्त-शङ्कासमाधानैः प्राचीनाध्ययनाध्यापनप्रणालीप्रचुरप्रचरितैः नैयमस्पृष्टैवास्ति । छात्रो-पयोगिनामनतिकठिनानां व्युत्पादकानां चेदृशां शङ्कासमाधानानां यादृशः सङ्ग्रह-स्तत्त्वबोधिन्यामस्ति, तादृशोऽन्यत्र दुर्लभ इति प्रकाशकानुरोधेनेदमुचितमिति विचार्यो-भयोरनयोष्टीकयोरेकत्र संकलनं कृतम् , येन छात्राः सरलव्याख्यया मूलग्रन्थार्थग्रहण-समर्था उपयुक्तशङ्कासमाधानव्युत्पन्नाश्च भवेयुः । तेन हि उभयोष्टीकयोरेकत्र समा-वेशेनेदं पुस्तकमेकमेव, मन्ये, स्वधीतं सम्यक् परिशीलितं चाध्येतारमुत्तमवैयाकरणेषु सङ्ख्यापयितुमलम् । प्रकाशकस्यायमुपक्रमो विद्वत्सु छात्रेषु चादरं भजिष्यत इत्याशासे। टीकाद्वयसङ्ग्रहणे ग्रन्थोयं महान् मेदुरः सञ्जातः, अतः परं यदि अवश्यज्ञातव्यानां विषयाणां टिप्पण्योऽप्यत्र निवेशिताः स्युस्ततोऽस्य तुन्दिलताऽनुमितात् परिमाणात् कियती बहिर्भूता स्यादिति स्वयं विभावनीयमध्येतृभिः । ततष्टिप्पणीसंनिवेश इदानीं न कृतः । किन्तु यद्ययं ग्रन्थो विदां समाजे समुचितं प्रचारमासादयिष्यति तदा शीघ्र-मेव वयं ज्ञातव्यविषयटिप्पणीभिरेनं द्वितीयसंस्करणेऽलङ्करिष्यामः ।

## ग्रन्थकर्तॄणां सङ्क्षिप्तः परिचयः ।

तत्र तावदतिगहने विविधमतभेदमहावर्त्ते पाणिन्यादिमुनित्रयसमयादिनिर्णय-महार्णवे नेदानीमुत्तितीर्षामः, स्वतन्त्रनिबन्धसाध्यं ह्येतत् । प्रकृतग्रन्थकर्तॄणां तु परिचयः संक्षिप्य प्रदीयते । सिद्धान्तकौमुदीनिर्माता तत्र भवान् भट्टोजिदीक्षितो विक्रमार्कस्य षोडश-शताब्द्यां जनिमलभतेति निश्चितप्रायम् । पूर्वार्द्धे उत्तरार्द्धे वा जन्मेति सन्दिग्धम् , परं ग्रन्थनिर्माणन्तु तस्याः शताब्द्या उत्तरार्द्धे एवेति बहवोऽभिप्रयन्ति । अयं महाभागो महाराष्ट्र-

ब्राह्मण इति बहवः, सारस्वतब्राह्मण इति च केचित् । अस्य तु महाभागस्य कृत्स्नमप्यायुः प्रायेण काश्यामेव व्यतीतमिति विद्वत्सु प्रसिद्धाभ्यः किंवदन्तीभ्यः प्रसिध्यति । सिद्धान्तकौमुदी, प्रौढमनोरमा, शब्दकौस्तुभः, वैयाकरणभूषणकारिका चेति व्याकरणे प्रसिध्यन्त्येतदीया ग्रन्थाः । तत्त्वकौस्तुभाख्योऽद्वैतवेदान्तप्रतिपादको दर्शनग्रन्थोऽप्येतद्रचितः । धर्मशास्त्रे तु कालनिर्णय-प्रवरनिर्णय-त्रिस्थलीसेतु-चतुर्विंशतिमतव्याख्या प्रभृतयो दशैकादश ग्रन्था एतद्रचिता विद्वद्भिराख्यायन्ते । एतद्रचितां सिद्धान्तकौमुदीमनधीत्य न कोप्यधत्वे संस्कृतविद्वान् भवतीत्यहो अस्य पुण्यमहिमा ।

## तत्त्वबोधिनीकारः श्रीज्ञानेन्द्रसरस्वती ।

अयं भट्टोजिदीक्षितस्य शिष्य आसीदिति प्रसरति विद्वत्सु किंवदन्ती । प्रायशः प्रौढमनोरमाक्षराणामेव व्याख्यायामुद्धरणात्सम्भाव्यते चेयम् । यदि सत्यमिदं तर्हि भट्टोजिदीक्षितसमकालोऽयमित्यनुक्तमपि सिद्धमेव । संन्यासाश्रमप्रविष्टोऽयमिति नाम्नैव सुसिद्धम् । श्रीवामनेन्द्रस्वामीति स्वगुरोर्नामाप्यनेन ग्रन्थसमाप्तौ लिखितम् । अन्यः कोऽप्यस्य देशकालादिवृत्तान्तो न ज्ञायतेऽस्माभिः ।

## श्रीवासुदेवदीक्षितः ।

बालमनोरमाया अन्ते या समाप्तिसूचिका पुष्पिका तस्यामस्य महाविदुषः परिचय उल्लिखितः । तत इदं विज्ञायते यत् श्रीमहादेववाजपेययाजिसुतः श्रीविश्वेश्वरवाजपेययाजितो लब्धविद्योऽयं श्रीवासुदेवदीक्षित आनन्दरायविद्वत्सार्वभौमस्याध्वर्युरनुगृहीतश्चासीत् । आनन्दरायश्चायं भोसलचोलदेशाधिपतीनां (तञ्जोरराजानाम्) श्रीशाहजी, शरभजी, तुक्कोजीतिनामधेयानां त्रयाणां मन्त्रिपदकार्यं निरवहत् । एषां राज्ञां समयः १६८४ खीस्ताब्दादारभ्य १७३६ खीस्ताब्दपर्यन्तं निर्द्धारितस्तद्देशवासिभिरैतिहासिकैःस एष आनन्दरायमहोदयस्य समय एव श्रीवासुदेवदीक्षितस्यापि समयो भवितुमर्हति । बालमनोरमायाः प्रथमः प्रकाशकः श्रीचन्द्रशेखरशास्त्री त्वेनं खीस्ताब्दाष्टादशशतकस्य चरमपादजातं ब्रवीति । दाक्षिणात्योऽयमिति च पूर्वोक्तया पुष्पिकया प्रसिध्यत्येव । जैमिनीयमीमांसासूत्राणामध्वरमीमांसाकुतूहलाख्यावृत्तिरेतन्निर्मिता सुप्रशस्तो महानपरो ग्रन्थः । तेनास्य चतुरस्रं पाण्डित्यं कर्मकाण्डनिष्णातत्वं च सुव्यक्तम् । एतदीया व्याख्यालेखनशैली सुप्रसन्ना अतिसरला च । व्याख्यायामस्यामनेकत्र स्खलनं जातमिति तु न परोक्षं व्याख्यानुशीलिनां वैयाकरणानाम् । भवतु च्छात्राणामत्युपकारकोऽयं ग्रन्थ इति तु निर्विवादमिति—

सम्पादकौ

॥ श्रीः ॥

बालमनोरमा-तत्त्वबोधिनीव्याख्याद्वयोपेता

# वैयाकरणसिद्धान्तकौमुदी।

**मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च।**
**वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ १ ॥**

---

## बालमनोरमा टीका

स जयति दिव्यनटेशो नृत्यति योऽसौ चिदम्बरसभायाम्।
पाणिन्याद्या मुनयो यस्य च दयया मनोरथानभजन् ॥ १ ॥

अस्तु नमः पाणिनये भूयो मुनये तथास्तु वररुचये।
किंचास्तु पतञ्जलये भ्रात्रे[2] विश्वेश्वराय गुरवे च ॥ २ ॥

व्याख्याता बहुभिः प्रौढैरेषा सिद्धान्तकौमुदी।
वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम् ॥ ३ ॥

ॐ 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते। वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च, अध्येतारश्च वृद्धियुक्ता यथा स्युः' इति वृद्धिसूत्रस्थभाष्यादिस्मृतिसिद्धकर्तव्यताकं ग्रन्थादौ कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् प्राचीनग्रन्थैरगतार्थतां विषयप्रयोजनसम्बन्धाधिकारिणश्च सूचयन् चिकीर्षितं प्रतिजानीते—**मुनित्रयमिति श्लोकेन**। इयं वैयाकरणसिद्धान्तकौमुदी विरच्यत इत्यन्वयः। इयमिति ग्रन्थ-

---

## तत्त्वबोधिनी टीका

ॐ ॥ नत्वा विश्वेश्वरं साम्बं कृत्वा च गुरुवन्दनम्।
सिद्धान्तकौमुदीव्याख्या क्रियते तत्त्वबोधिनी ॥ १ ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते—**मुनित्रयमित्यादिना**। त्रयोऽवयवा यस्येति तत्त्रयम्। 'संख्याया अवयवे तयप्' 'द्वित्रिभ्यां तयस्य–'इत्ययच्। मन्तारो वेदशास्त्रार्थतत्त्वावगन्तारो मुनयः। 'मनेरुच्च' इत्यौणादिकसूत्रेण मनेरत उकारो मनेः पर इन् प्रत्ययश्च। गुणस्तु नेह भवति, किदित्यनुवर्तनात्तपरकरणाद्वा। तेषां पाणिनिकात्यायनपतञ्जलीनां त्रयं मुनित्रयम्। ननु 'स्वयं-

---

१. (क) (ख) पुस्तकयोः 'येनाक्षरसमाम्नायम्' इत्यादि प्रसिद्धं पद्यत्रयं मूलेऽधिकं दृश्यते, तत्तु सांप्रदायिकमूलपुस्तकेषु क्वाप्यदर्शनादुपेक्षितम्।

२. 'शब्दब्रह्मात्मने च धूर्जटये' इति 'क' पुस्तकपाठः।

तया वाक्यावलिर्विवक्षिता। भाविन्या अपि तस्या बुद्ध्या विषयीकरणादियमिति प्रत्यक्षवन्निर्देशः। व्याकरणमधीयते विदन्ति वा वैयाकरणाः, तेषां सिद्धान्ताः 'एवमेते शब्दाः साधवः' इति निश्चितार्थाः, तेषां कौमुदी चन्द्रिका। अत्यन्तसादृश्यात्ताद्रूप्यव्यपदेशः। चन्द्रिका हि तमो निरस्यति, भावान् सुखं प्रकाशयति, दिनकरकिरणसंपर्कजनितं संतापमपनयति। एवमियमपि ग्रन्थरूपवाक्यावलिरज्ञानात्मकं तमो निरस्यति, मुनित्रयग्रन्थभावाननायासं प्रकाशयति, अतिविस्तृतदुरूहभाष्यकैयटादिमहाग्रन्थपरिशीलनजनितं चित्तसंतापं च शमयतीति अत्यन्तसादृश्याद्युज्यते चन्द्रिकातादात्म्याध्यवसायः। विरच्यते-क्रियते। वर्तमानसामीप्याद्वर्तमानव्यपदेशः। किं कृत्वेत्यत आह—**मुनित्रयं नमस्कृत्येति**। त्रयः अवयवा अस्य समुदायस्य त्रयं त्र्यवयवकसमुदायः। 'संख्याया अवयवे तयप्' इति तयप् तद्धितः। 'द्वित्रिभ्यां तयस्यायज्वा' इति तयस्यायजादेशः। मुनीनां त्रयमिति षष्ठीसमासः। त्रयाणां मुनीनां समुदाय इति यावत्। यद्यपि मुनिशब्दस्य त्रिशब्दस्य चाभेदान्वये त्रिशब्दस्य मुनिशब्दसापेक्षत्वाद् असामर्थ्यात्तद्धितानुपपत्तिः, तथापि त्रयोऽवयवा अस्य समुदायस्य त्रयम् इति प्रथमं व्युत्पाद्यम्। अत्र त्रिशब्दस्य मुनिशब्दमनपेक्ष्यैव समुदायेऽन्वयान्नास्त्यसामर्थ्यम्। ततो मुनीनां त्रयमिति मुनिशब्दः समुदायेऽन्वेति, तस्य प्रत्ययार्थतया प्रधानत्वात्। न तु मुनिशब्दस्य त्रयशब्दैकदेशभूतत्रिशब्देनाभेदान्वयः, 'पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन' इति न्यायात्। ततश्च मुनिशब्दत्रिशब्दयोः परस्परवार्तानभिज्ञयोरेव शब्दमर्यादया समुदायेऽन्वये सति पश्चात् संख्यायाः परिच्छेदकत्वस्वभावतया त्रित्वस्य परिच्छेद्यपर्यालोचनायां संनिहितपदान्तरो-

---

भुवे नमस्कृत्य' इत्यत्रेवात्रापि 'नमःस्वस्ति–' इत्यादिना चतुर्थी स्यात्। मैवम्। उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति वक्ष्यमाणत्वात् 'नमस्करोति देवान्' इतिवद् द्वितीयाया एव युक्तत्वात्। किं च 'जहत्स्वार्था वृत्तिः' इति पक्षे नमःशब्दस्यात्र निरर्थत्वात् तद्योगे चतुर्थी न भवति। अर्थवद्ग्रहणपरिभाषायाः प्रवृत्तेः। 'स्वयंभुवे नमस्कृत्य' इत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थीति मूल एव स्फुटीभविष्यति। नन्वेवं 'नमःस्वस्ति–' इति सूत्रे नमःपदं व्यर्थमिति शङ्क्यम्। हरये नम इत्यत्र हरिमनुकूलयितुमित्यर्थेऽविवक्षिते संबन्धसामान्ये षष्ठ्यां प्राप्तायां तदपवादतया तस्यावश्यकत्वात्॥ **तदुक्तीरिति**। तेषां पाणिन्यादीनामुक्तीः। सूत्रवार्तिकभाष्याणीत्यर्थः। तस्य मुनित्रयस्योक्तीरिति व्याख्यानेऽपि समुदायेन सूत्रं वार्तिकं भाष्यं वा नोक्तमिति समुदायिनां मुनीनामेवोक्तीरिति पर्यवस्यति॥—**परिभाव्येति**। पर्यालोच्येत्यर्थः। नच परिपूर्वस्य भवतेस्तिरस्कारार्थत्वात्कथमत्र ज्ञानार्थतेति

---

१. 'एते शब्दाः' इति 'ख'।

# अथ सञ्ज्ञाप्रकरणम्

१ अइउण्। २ ऋऌक्। ३ एओङ्। ४ ऐऔच्। ५ हयवरट्।

पस्थितनन्वान्मुनय एव परिच्छेद्यतया संबध्यन्ते—त्रयाणां मुनीनां समुदाय इति। सोऽयं पाष्ठिकान्वयोऽरुणाधिकरण (पू० मी० ३-१-८) न्यायविदां सुगम इत्यलं विस्तरेण। मुनित्रयमिति कर्मणि द्वितीया। 'नमः स्वस्ति' इति चतुर्थी तु न, कारकविभक्तेर्बलीयस्त्वस्य वक्ष्यमाणत्वात्। नमस्कृत्य अञ्जलिशिरःसंयोगादिव्यापारेण तोषयित्वेत्यर्थः। नमस्करोतेरञ्जलिशिरःसंयोगादिरूपव्यापारमात्रार्थकत्वे अकर्मकत्वापत्त्या द्वितीयानुपपत्तेः। ननु प्राचीनेषु प्रक्रियाकौमुद्यादिग्रन्थेषु वैयाकरणसिद्धान्तानां संग्रहात्तैरेव ग्रन्थैः चरितार्थत्वात् किमनेन ग्रन्थेनेत्यत आह—**तदुक्तीः परिभाव्य चेति**। तस्य मुनित्रयस्य उक्तयः, तदुक्तयः, सूत्रवार्तिकभाष्यात्मकग्रन्थरूपवाक्यावलयः, ताः परिभाव्य च सम्यगालोच्य चेत्यर्थः। भूधातोः स्वार्थिकणिजन्ताद्रूपम्। चुरादौ हि 'भुवोऽवकल्कने' इत्यत्र णयन्तभूधातोश्चिन्तनार्थकत्वमपि वक्ष्यते मूलकृतैव। न च 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति कोशविरोधः शङ्कयः, कोशस्य अणयन्तभूधातुविषयत्वात् 'परौ भुवोऽवज्ञाने' इति सूत्रेण तिरस्कारार्थे वर्तमानादणयन्तात्परिपूर्वकभूधातोर्भावे घञि परिभावशब्दस्य व्युत्पत्त्यवगमात्। एवं च तदुक्तीरिति तच्छब्दस्य बुद्धिस्थपरामर्शित्वात्प्राचां प्रक्रियाकौमुदीप्रसादादिकृतामुक्तीस्तिरस्कृत्येत्यर्थ इति व्याख्यानं क्लिष्टत्वादुपेक्षितम्। अनेन स्वग्रन्थस्य मुनित्रयग्रन्थानुयायित्वं प्राचीनप्रक्रियाकौमुद्यादिग्रन्थानां तद्विरुद्धत्वं च सूचितम्। तच्च प्रौढमनोरमायां स्वयमेव मूलकृता                    । वैयाकरणसिद्धान्तकौमुदीत्यन्वर्थसंज्ञया

शङ्कयम्, परीत्यस्य भावीति चुरादिणिजन्तेन योगात्। केचिदत्र भवतिना योगमभ्युपेत्याहुः—'परौ भुवोऽवज्ञाने' इति सूत्रे परौ भुव इत्यस्यावज्ञान इति विशेषणान्न तिरस्कारार्थत्वनियमः। 'मनसा परिभाव्य किंचित्' इत्यादिश्रीहर्षप्रयोगाच्च। अतएवात्राप्रयुक्तत्वदोषशङ्कापि नास्तीति। अन्ये तु 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति कोशात्परिपूर्वकाद्भवतेर्घञन्तादेव तिरस्कारप्रतीतिर्नान्यस्मादित्याशङ्कैवात्र नास्तीत्याहुः। तन्मन्दम्। परिभूय परिभवतीत्यतोऽपि तिरस्कारप्रतीतेः॥—**वैयाकरणेति**। व्याकरणमधीयते विदन्ति वा वैयाकरणास्तत्सिद्धान्तानां कौमुदी। प्रकाशिकेत्यर्थः। निर्दुष्टसकलजनाह्लादकत्वसाम्येन कौमुदीशब्दप्रयोगः। करिष्यमाणाया अपि कौमुद्याः बुद्ध्या संनिधापितत्वादियमित्यङ्गुल्या निर्देशः॥—**विरच्यत इति**। मयेति शेषः। 'रच प्रतियत्ने'। प्रतियत्नो गुणाधानम्। विपूर्वादस्माद्वर्तमानसामीप्ये भविष्यदर्थे वर्तमानप्रत्ययः॥—**अइउणिति**। णानुबन्धोऽणसंज्ञार्थः। या या संज्ञा सा सा प्रयोज-

**६ लण् । ७ ञमङणनम् । ८ झभञ् । ९ घढधष् । १० जबगडदश् । ११ खफछठथचटतव् । १२ कपय् । १३ शषसर् । १४ हल् ॥**

**इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । लण्सूत्रे ऽकारश्च । हकारादिष्वकार उच्चारणार्थः ॥**

---

वैयाकरणसिद्धान्ताः प्रतिपाद्यत्वेन विषयाः । अनायासेन तदवगमः प्रयोजनम् । तस्य ग्रन्थस्य च जन्यजनकभावः संबन्धः । वैयाकरणसिद्धान्तजिज्ञासुरधिकारीति सूचितम् । अथ वैयाकरणसिद्धान्तान्निरूपयिष्यन्, व्याकरणशास्त्रस्य मूलभूतानि चतुर्दश सूत्राणि पठति—**अइउणित्यादिना** । नन्विमानि सूत्राणि मुनित्रयग्रन्थबहिर्भूतत्वादप्रमाणमित्यत आह—**इति माहेश्वराणि सूत्राणीति** । महेश्वरादागतानि माहेश्वराणि । 'तत आगतः' इत्यण् । महेश्वरादधिगतानीति यावत् । तदुक्तं पाणिनिशिष्यप्रणीतशिक्षायाम्—

'येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥' इति ।

एतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृतायां काशिकायामप्युक्तम्—

'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥' इति ।

अत्र ननादेत्यन्तर्भावितण्यर्थो नदधातुः । ढक्कां नादयामासेत्यर्थः । नवपञ्चवारं चतुर्दशकृत्वः । एतच्छिवढक्कोत्थितं वर्णजालं शिवसूत्रजालतया विमर्शे जानामीत्यर्थः । आर्षस्तङ् । एवं च महेश्वरेण प्रोक्तानि माहेश्वराणीति निरस्तम् । एतेन माहेश्वरत्वादेतेषां सूत्राणां नाप्रामाण्यमित्युक्तं भवति । नन्वेवमपि अनर्थकवर्णराश्यात्मकानामेषां सूत्राणां वैयाकरणसिद्धान्तप्रकाशने उपयोगाभावादिह तदुपन्यासो व्यर्थ इत्यत आह—**अणादिसंज्ञार्थानीति** । अण् आदिर्यासां ता अणादयः, अणादयश्च ताः संज्ञाश्च

---

नवती ॥—**ऋलृगिति** । ककारस्त्वक्इक्उक्संज्ञार्थः ॥—**एओङिति** । ङकार एङ्संज्ञार्थः ॥—**ऐऔजिति** । चकारस्त्वच्इच्एच्ऐच्संज्ञार्थः । वर्णानामसंदिग्धत्वेन बोधनाय संहिताया अविवक्षणादेतेष्वसंधिः । स्वराणां चादिषु पाठात् 'चादयोऽसत्त्वे' इति निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावान्न संधिरित्यन्ये । स्यादेतत् । अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋलृवर्णयोरपि सावर्ण्यादिकारोपदेशेनैवोभयसिद्धेः किं पृथगुपदेशेन । नच जातिपक्षे ऋलृवर्णयोः पृथगुपदेश आवश्यकस्तयोर्भिन्नजातित्वादिति वाच्यम् । सावर्ण्यादेवैकजात्युपदेशे जात्यन्तरस्यापि लाभात् । ऋलृवर्णयोः प्रत्येकं त्रिंशतः संज्ञासिद्ध्ये अणुदित्सवर्णस्य—'इति सूत्रे अण्ग्रहणस्य जातिपक्षेऽप्यावश्यकत्वादिति चेत् ।

१ हलन्त्यम्। (१-३-३)। 'हल्' (प्र. सू. १४) इति सूत्रेऽन्त्यमित्स्यात्। २ आदिरन्त्येन सहेता। (१-१-७१) अन्त्येनेता सहित आदिर्मध्य-

अणादिसंज्ञाः, ता अर्थः प्रयोजनं येषां तानि अणादिसंज्ञार्थानि। अनर्थकवर्णराशित्वेऽपि एषां सूत्राणां व्याकरणशास्त्रगतव्यवहारोपयोग्यणादिसंज्ञासु उपयोगान्नानर्थक्यमिति भावः। कथमेषां सूत्राणामणादिसंज्ञार्थत्वमित्यत आह—**एषामन्त्या इत इति**। एषामुदाहृतसूत्राणामन्त्याः-अन्ते भवाः, णकारादिवर्णा इत्संज्ञकाः प्रत्येतव्या इत्यर्थः॥ **लण्सूत्रेऽकारश्चेति**। इत इत्यनुषज्यते। तच्च एकवचनान्ततया विपरिणम्यते। लण्सूत्रे लकारात्परोऽकारश्च इत्संज्ञकः प्रत्येतव्य इत्यर्थः। अनन्त्यत्वात्पृथक् प्रतिज्ञा। ननु लण्सूत्रे एव अकारस्य इत्संज्ञकत्वे हयवरेत्यादौ पुनः पुनरकारोच्चारणस्य किं प्रयोजनमित्यत आह—**हकारादिष्वकार उच्चारणार्थ इति**। हकारादीनां सुखोच्चारणार्थं पुनः पुनरकारपाठ इत्यर्थः। अन्यथा ह्य्व्र् इत्येवं क्लिष्टोच्चारणापत्तेरिति भावः। अथवा अचं विना हलामुच्चारणाभावात् पुनः पुनरकारपाठो हकाराद्युच्चारणार्थ इत्येव व्याख्येयम्। अत एव 'उच्चैरुदात्तः' इति सूत्रे भाष्यम्—'नान्तरेणाचं व्यञ्जनस्योच्चारणं भवति' इति। अत्र च इदमेव अकारस्य पुनः पुनरुच्चारणं ज्ञापकम्। एवं च 'वर्णात्कारः' इति कारप्रत्यये सति ककार इत्यादि। वाक्-इत्याद्यवसानेषु वृक्ष इत्यादौ संयुक्तवर्णेषु च, पदान्ते 'चोः कुः' इत्यादिविधिबलात् 'हलोऽनन्तराः संयोगः' इत्यादिशास्त्रबलाच्च, नायं नियम इत्यलम्।

ननु चतुर्दशसूत्र्यां णकाराद्यन्तवर्णानाम् इत्संज्ञा प्रतिज्ञाता—एषामन्त्या इत इति। तदनुपपन्नम्। तेषां हि 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा वक्तव्या। तच्च सूत्रं हल्पदार्थावगमोत्तरमेव प्रवृत्तिमर्हति। हल्संज्ञा च हलिति सूत्रे लकारस्य इत्संज्ञायां

अत्राहुः—ऋऌवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोर्निर्देशः, तत्फलं तु क्लृप्ता शिखा यस्य क्लृप्तशिखः, तस्य दूरात्संबोधने क्लृ ३ प्तशिखेति प्लुतः। ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु 'अनृतः' इति पर्युदासादृकारस्येव ऌकारस्यापि प्लुतो न स्यादिति समाधानान्तरमपि 'ओर्गुणः' इत्यत्र दर्शयिष्यते॥—**हयवरडिति**। टानुबन्धोऽट्संज्ञार्थः। हकारोपदेशस्तु अट्अश्हश्इण्ग्रहणेषु हकारग्रहणार्थः॥ अर्हेण 'अड्व्यवायेऽपि' इति णत्वम्। देवा हसन्ति 'भोभगो-' इति रोर्यत्वम्। देवो हसति 'हशि च' इत्युत्वम्। लिलिहिढ्वे लिलिहिढ्वे 'विभाषेटः' इति वा ढः॥—**लणिति**। णकारोऽनुबन्धोऽण्इण्यण्संज्ञार्थः॥ नन्वाणिति क्वचित्पूर्वणकारेण गृह्यते, क्वचित्तु परेण णकारेण, इणिति तु परणकारेणैव। तथाच निःसंदेहार्थमनुबन्धान्तरमेव कर्तुमुचितम्। सत्यम्। '**व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्**' इति परि-

सत्याम् 'आदिरन्त्येन सहेता' इति सूत्रेण वाच्या। हलिति सूत्रे लकारस्य इत्संज्ञा च 'हलन्त्यम्' इति सूत्रेणैव वाच्या। एवं च हलिति सूत्रे लकारस्य इत्संज्ञायां सत्याम् 'आदिरन्त्येन' इति हल्संज्ञासिद्धौ 'हलन्त्यम्' इति सूत्रप्रवृत्तिः, 'हलन्त्यम्' इति सूत्रेण हल्सूत्रे लकारस्य इत्संज्ञायाम् 'आदिरन्त्येन सहेता' इति हल्संज्ञासिद्धिः—इत्येवं 'हलन्त्यम्' 'आदिरन्त्येन' इत्यनयोः परस्परसापेक्षत्वेन अन्योन्याश्रयत्वादबोधः। एवं च हल्संज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य केनचित् सूत्रेण इत्संज्ञामबोधयित्वा 'हलन्त्यम्' इति हलामित्संज्ञाबोधनं पाणिनेरयुक्तमित्याशङ्क्य हल्संज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य इत्संज्ञां विधातुं 'हलन्त्यम्' इति सूत्रं द्विरावृत्य प्रथमसूत्रमुपक्षिपति—**हलन्त्यम्**। एकपदं सूत्रम्। हलि अन्त्यं हलन्त्यमिति विग्रहः। शौण्डादेराकृतिगणत्वात् 'सप्तमी शौण्डैः' इति सप्तमीसमासः। सुप्सुपेति समासो वा। हल्पदमिह सूत्रपरम्। 'उपदेशेऽजनुनासिक इत्' इति पूर्वसूत्रात् इदित्यनुवर्तते। तदाह—**हलिति सूत्र इत्यादिना**। **इत्स्यादिति**। इत्संज्ञकः स्यादित्यर्थः, संज्ञाप्रस्तावात्। एवं च अनेन सूत्रेण हल्सूत्रे लकारस्य हल्संज्ञामनुपजीव्यैव इत्संज्ञा सिद्धेति नान्योन्याश्रय इति भावः।

नन्वस्तु हल्सूत्रे लकारस्य इत्संज्ञा। ततः किमित्यत आह—**आदिरन्त्येन सहेता**। अन्ते भवः अन्त्यः। तेन इता सहोच्चार्यमाण आदिः 'अण्' 'अच्' इत्यादि-

---

भाषाज्ञापनाय पुनर्णकारोऽनुबन्ध इति स्थितमाकरे ॥—**ञमङणनमिति**। मकार इह अम्यम्ञम्ङम्संज्ञार्थः ॥—**झभञिति**। ञकारो यञ्संज्ञार्थः ॥—**घढधषिति**। षकारस्तु झष्भष्संज्ञार्थः ॥—**जबगडदशिति**। शोऽनुबन्धोऽश्हश्वश्झश्जश्बश्संज्ञार्थः ॥—**खफछठथचटतविति**। वकारस्तु छव्संज्ञार्थः ॥—**कपयिति**। यकारो यय्मय्झय्खय्चय्संज्ञार्थः ॥—**शषसरिति**। रेफस्तु यर्झर्खर्चर्शर्संज्ञार्थः ॥—**हलिति**। लकारः अल्हल्वल्रल्झल्शल्संज्ञार्थः। पुनर्हकारोपदेशस्तु वल्रल्झल्शल्षु हकारग्रहणार्थः। रुदिहि। स्वपिहि। 'रुदादिभ्यः सार्वधातुके' इति वलादिलक्षण इट्। स्निहित्वा। स्नेहित्वा। 'न क्त्वा सेट्' इति निषेधं बाधित्वा 'रलो व्युपधात्—' इति वा कित्त्वम्। अदाग्धाम्। घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् 'झलो झलि' इति सलोपः। अलिक्षत्। 'शलः—' इति क्सः। ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्य एव हकारं पठित्वा 'अलोऽन्त्यस्य', 'हलोऽनन्तराः संयोगः', 'झलो झलि', 'शल इगुपधा—' इत्यादिसूत्राणि यावन्ति लानुबन्धानि तानि 'अरोऽन्त्यस्य' 'हरोऽनन्तराः' इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा 'हल्' इति पृथक् सूत्रं त्यज्यताम्। मैवम्। तथाहि सति हरिर्हसति हरिर्हरिरित्यादि न सिध्येत्। तत्र 'खरवसानयोर्विसर्जनीयः', 'वा शरि' इत्यादिप्रसङ्गात्। अतो 'हल्' इति सूत्रमावश्यक-

गानां स्वस्य च संज्ञा स्यात् । इति हल्संज्ञायाम् । 'हलन्त्यम्' (सू. १)। उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । ततः 'अण्' 'अच्' इत्यादिसंज्ञासिद्धौ । **३ उपदेशेऽजनुनासिक इत्। (१-३-२)** उपदेशेऽनुनासिकोऽ-

---

रूपः संज्ञेत्यर्थः, संज्ञाप्रस्तावात् । तत्र 'यस्मात्पूर्वं नास्ति परमस्ति स आदिः, यस्मात्परं नास्ति पूर्वमस्ति सोऽन्तः' इति आद्यन्तवत्सूत्रे भाष्यम् । तदिहाद्यन्तशब्दाभ्यां मध्यगा आक्षिप्यन्ते । अतस्तेषां संज्ञेति लभ्यते । 'स्वं रूपम्' इति पूर्वसूत्रात्स्वमित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । तदेतदाह—**अन्त्येनेतेत्यादि, स्वस्य चेति** । अत्र च स्वशब्देन संज्ञाकोटिप्रविष्ट आदिरेव परामृश्यते, नन्वन्त्योऽपि, अन्त्येनेति तृतीयया 'सहयुक्तेऽप्रधाने' इति विहितया तस्य अप्राधान्यावगमात्, सर्वनाम्नां चोत्सर्गतः प्रधानपरामर्शित्वात् । नच इक् उक् इच् यय् मय् इत्यादिप्रत्याहाराः कथं स्युः, इकारादीनामादित्वाभावादिति वाच्यम्, न हि सूत्रापेक्षमिहादित्वम् । किन्तु आद्यन्तशब्दाक्षिप्तसमुदायापेक्षम् । ततश्च अइउणिति इकारमारभ्य ऋलृक् इति ककारपर्यन्तं वर्णसमुदायं बुद्ध्या परिकल्प्य तदादित्वम् इकारस्य संभावनीयम् । एवमिजादिष्वपि । तथा अन्त्यत्वमपि बुद्धिकल्पितसमुदायापेक्षमेव । न तु सूत्रापेक्षम् । ततश्च रप्रत्याहारः सुग्रहः । अन्यथा लण्सूत्रे अकारस्यान्त्यत्वाभावात् स न स्यात् । अत्र आद्यन्तशब्दयोरन्यतराभावे मध्यगानामिनि न लभ्येत । आदिरित्यभावे हि अन्त्येनेता सहोच्चार्यमाणो वर्णोऽन्त्यात्प्राग्भाविनां वर्णानां संज्ञेत्येव लभ्येत । ततश्च हल्प्रत्याहारे अकारादीनामपि ग्रहणं स्यात्, अन्त्यलकारात्पूर्वभावित्वाविशेषात् । अन्त्येनेत्यभावे तु आदिरिता सहो-

---

मेव । एवं च 'हलिति सूत्रेऽन्त्यम्—' इति वक्ष्यमाणग्रन्थोऽपि स्वरसतः संगच्छते ॥—**अणादिसंज्ञार्थानीति** । अणादिसंज्ञा अर्थः प्रयोजनं येषां तानीति विग्रहः । अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति वक्ष्यमाणत्वात् ॥—**एषामन्त्या इत इति** । एषां सूत्राणामन्त्या णादयो 'हलन्त्यम्' इत्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः ॥—**लण्सूत्रेऽकारश्चेति** । अनन्त्यत्वात्पृथगुक्तिः । वचनविपरिणामेनेदिति संबध्यते । इत्संज्ञा चास्य 'उपदेशेऽजनुनासिक इत्' इत्यनेन । एवं च णादिभिरिद्भिः 'आदिरन्त्येन—' इति वक्ष्यमाणेन प्रत्याहारग्रहणाद् 'अणादिसंज्ञार्थानि' इति यदुक्तं तत्संगच्छत इति भावः ॥—**अकार उच्चारणार्थ इति** । न तु लण्सूत्रस्थाकार इव प्रयोजनार्थ इत्यर्थः ॥—**हलन्त्यम्** । अन्तेऽवसाने भवमन्त्यम् । दिगादित्वाद्यत् । 'उपदेशेऽजनुनासिक इत्' इत्यत उपदेशे इति, इदिति चात्रानुवर्तते । 'आदिरन्त्येन—' इति सूत्रेण सहान्योन्याश्रयमाशङ्क्य आवृत्त्या तं परिहरति—**हलिति सूत्रेऽन्त्यमिति** । हलि अन्त्यमिति विग्रहे 'सप्तमी' इति योग-

च्चार्यमाण आदेरूर्ध्वभाविनां वर्णानां संज्ञेत्येव लभ्येत । ततश्च अच्प्रत्याहारे हकारादीनामपि ग्रहणापत्तिः, आदेरकारादूर्ध्वभावित्वाविशेषात् । उभयोपादाने तु मध्यगानामिति लभ्येत इत्यदोषः । परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः । पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इति भाष्ये आद्यन्तशब्दार्थनिर्वचनेन आद्यन्तयोर्मध्यगाविनाभूतत्वेन ताभ्यां मध्यगानामाक्षेपात् । यद्यपि द्वयोरप्याद्यन्तशब्दौ संभवतः, उक्तनिर्वचनाविरोधात् । तथापि नेह द्वयोराद्यन्तशब्दौ भवतः । तथा सति हि अन्त्येनेता सह उच्चार्यमाण आदिः स्वस्य आदेः संज्ञेत्येव लभ्येत, उक्तरीत्या स्वशब्देन अन्त्यस्य परामर्शासंभवात् । ततश्च उण् इत्युकारस्य संज्ञेति पर्यवस्येत् । तत्र एकस्य वर्णस्य वर्णद्वयात्मकसंज्ञाविधानं व्यर्थमापद्येत, गौरवात्, प्रत्याहाराणां व्यवहारलाघवार्थत्वात् । अतो मध्यमसत्त्व एवात्र आद्यन्तशब्दाविति ताभ्यां मध्यगानामिति लभ्यते । इतेति किम्—अम्प्रत्याहारः अमङ्णेति मकारेण मा भूत् । नचैवमपि सुट्प्रत्याहारः टा इति टकारेण किं न स्यात्, टान्तसमुदायापेक्षया तस्य अन्त्यत्वादिति वाच्यम् । प्रथमातिक्रमणे कारणाभावेन सुट्प्रत्याहारस्य औटष्टकारेणैव ग्राह्यत्वात् । उक्तं च जैमिनिना—'प्रथमं वा नियम्येत कारणस्यानतिक्रमात् ।' ( पू. मी. ११ । १ । ४३ ) । इति विस्तरभयाद्विरम्यते । **इति हल्संज्ञायामिति** । हल्सूत्रे लकारस्य हलन्त्यमित्यावृत्तप्रथमसूत्रेण इत्संज्ञायां सत्याम् आदिरन्त्येनेति हल्संज्ञासिद्धौ चतुर्दशसूत्र्यामन्त्यणकारादिवर्णानां हल्त्वं सिद्धमित्यर्थः ।

ततः किमित्यत आह—**हलन्त्यम्** । आवृत्तयोर्द्वितीयं सूत्रमेतत् । हल् अन्त्यमिति च्छेदः । हल्शब्दो नपुंसकलिङ्गोऽप्यस्ति, अन्त्यमिति नपुंसकसामानाधिकरण्यात् । उपदेशेऽजनुनासिक इदिति पूर्वसूत्रादुपदेश इति इदिति चानुवर्तते ।

---

विभागात्, 'सुप्सुपा' इति वा समास इति भावः । यद्वा षष्ठीतत्पुरुषोऽयम्, 'हलिति सूत्रस्यान्त्यमित्स्यात्' इति व्याख्यानसंभवात् ॥—**आदिरन्त्येन सहेता** । अन्त्येनेति किम् । सुडिति प्रत्याहारस्तृतीयैकवचनावयवेन मा भूदिति काशिकाकृत् । यद्यपि टकारान्तसङ्घस्य टाटकारोऽप्यन्त्यो भवति, तथाप्यन्त्येनेति ग्रहणसामर्थ्यादन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेनैव प्रत्याहारः, न हि टाटकारे 'हलन्त्यम्' इतीत्संज्ञा प्रवर्तते । न चैवं रप्रत्याहारासिद्धिः । लण्सूत्रस्थावर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि इता प्रत्याहारात् इत्य काशिकाकाराशयः । निष्कर्षस्त्विह 'स्वौजसमौट्—' इति सूत्रे दर्शयिष्यते । विस्तरस्तु शब्दकौस्तुभेऽनुसंधेयः । इतेति किम् । रप्रत्याहारो यथा स्यात् । स ह्यनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि गृह्यत इत्युक्तम्, न चैतदितेत्यस्य विरहे लभ्यत इति शब्दकौस्तुभे स्थितम् ॥ अत्राद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय

तदाह—**उपदेशेऽन्त्यमित्यादिना**। धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमानामन्त्यमिति भाष्यम्। अथ कोऽयमुपदेशो नाम ? तत्राह[१]—**उपदेश आद्योच्चारणमिति**। उपशब्द आद्यर्थकः। दिशिरुच्चारणक्रियायाम्। भावे घञिति भावः। एतच्च 'आदेच उपदेशे' इत्यादिसूत्रे भाष्ये स्पष्टम्।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः॥

इति प्राचीनकारिका तु प्रौढमनोरमायां बहुधा दूषिता। उपदेशे किम्—'इदमस्थमुः' इति थमुप्रत्यये उकारस्योच्चारणार्थस्य निवृत्तौ मकारस्य प्रत्ययान्तत्वेऽपि इत्संज्ञा मा भूत्। तदेवं हलन्त्यमित्यावृत्तद्वितीयसूत्रेण चतुर्दशसूत्र्याम् अन्त्यणकारादिवर्णानाम् इत्संज्ञा सिद्धेति स्थितम्। ततः किमित्यत आह—**ततः अण् अच् इत्यादिसंज्ञासिद्धाविति**। ततः णकारादीनामित्संज्ञासिद्ध्यनन्तरमादिरन्त्येनेत्यणादिसंज्ञा सिद्धेत्यर्थः। लणसूत्रेऽकारश्चेति प्रतिज्ञातम्। तस्य अकारस्य अनन्त्यत्वादहल्त्वाच्च हलन्त्यमिति इत्संज्ञायामप्राप्तायां तत्प्रापकं सूत्रमाह—**उपदेशे**। संज्ञाप्रस्तावात्संज्ञेति लभ्यते। तदाह—**उपदेशे अनुनासिक इत्यादिना**। सूत्रे अजिति कुत्वा-

---

आक्षिप्यते। तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादित्याशयेनाह—**मध्यगानामिति**।—**स्वस्य चेति**। 'स्वं रूपम्' इत्यनुवर्तत इति भावः। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य। 'अन्त्येन' इत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्॥ ननु स्वमित्यस्यानुवृत्तौ 'कः संज्ञी' इत्याकाङ्क्षायाः शान्तत्वादवयव्याक्षेपो न स्यात्। तथा च 'इको यणचि' इत्यादाविकारस्य स्थाने यकारः स्यादकारे परे इत्येवमर्थः स्यात्। मैवम्। आदेरेव संज्ञित्वे तु 'आदिरन्त्येन' इति संज्ञाकरणस्यैव वैयर्थ्यापत्तेः। किंच अण्अक्अच्अट्अम्अशादीनां पृथङ्निर्देशोऽपि व्यर्थः स्यात्, सर्वत्राकारस्यैव संज्ञित्वादिति दिक्। शब्दकौस्तुभे तु—आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्त्यर्थमिदं सूत्रमिति स्थितम्॥—**उपदेशेऽन्त्यं हलिति**। उपदेशे किम्। अग्निचित् सोमसुत् इति काशिका। अत्रेत्संज्ञायां लोपः स्यात्। नच तुको वैयर्थ्यम्। आगत्येत्यादौ चरितार्थत्वात्। नच क्विपः पित्त्वस्य वैयर्थ्यम्। अग्निचितावित्यादौ चरितार्थत्वादिति हरदत्तः॥ अन्त्यं किम्। मनिनो मकारस्य मा भूत्। सत्यां हल्संज्ञायामन्त्यादचः परः स्यात्। वेश्म, सद्म। 'सर्वधातुभ्यो मनिन्'। हलिति किम्। 'भू सत्तायाम्' भविता। नच प्रयोजनाभावान्नेत्त्वमिति वाच्यम्। सत्यामित्संज्ञायाम्

---

१. 'तदाह' इति 'क' पुस्तके।

जित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। 'लण्' (प्र. सू. ६) सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा। प्रत्याहारेष्वितां न ग्रहणम्।

---

भाव आर्षः। अजित्संज्ञः स्यादिति विवरणे कृत्वाभावोऽसन्देहार्थः। ननु मुखेन नासिकया चोच्चार्यमाणो वर्णः अनुनासिक इत्यनुपदमेव वक्ष्यते। शास्त्रकृता च एते कतिपयवर्णास्तथोच्चारिताः। इतरे तु केवलं मुखेन उच्चारिता इति कथमिदानींतनैरवगन्तव्यमित्यत आह—**प्रतिज्ञानुनासिक्याः पाणिनीया इति**। प्रतिज्ञायते अभ्युपगम्यत इति प्रतिज्ञा। नित्यस्त्रीलिङ्गोऽयम्। स्त्रियामित्यधिकारे 'आतश्चोपसर्गे' इति कर्मण्यङ्। अनुनासिकस्य भावः आनुनासिक्यम्। प्रतिज्ञा आनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः पाणिनिशिष्या इत्यर्थः। शिष्यपरम्परया शास्त्रकृतां तथाविधमुच्चारणमिदानींतनानां सुगममिति यावत्। तदेवं लण्सूत्रे अकारस्य अनुनासिकत्वादित्संज्ञा सिद्धा। ततः किमित्यत आह—**लण्सूत्रस्थेति**। लण्सूत्रे तिष्ठतीति लण्सूत्रस्थः, स चासाववर्णश्च लण्सूत्रस्थावर्णः, तेन सहोच्चार्यमाणो रेफः 'र' इत्येवंरूपः रेफलकारयोः संज्ञेत्यर्थः। वस्तुतस्तु रप्रत्याहार एव नास्तीति शब्देन्दुशेखरे व्यक्तम्। ननु आदिरन्त्येनेति सूत्रे मध्यगानामादेश्च संज्ञेति स्थितम्, एवं च अजादिप्रत्याहारेषु संज्ञाकोटिप्रविष्टानामन्त्यानामितां ग्रहणाभावेऽपि णकारादीनामपि मध्यगत्वाविशेषाद् ग्रहणं स्यात्। ततश्च रलयोः संज्ञेति पूर्वग्रन्थे रलयोरिति न्यूनम्, टकारस्यापि मध्यगत्वेन ग्राह्यत्वादित्यत आह—**प्रत्याहारेष्वितां न ग्रहणमिति**।

'उदितो वा' इतीड्विकल्पापत्तेः। अन्ये तु चिरिणोति। जिरिणोति। इह धातोरन्त्यस्य मा भूत्। सत्यामित्संज्ञायाम् 'इदित' इति नुम् स्यादित्याहुः॥—**आद्योच्चारणमिति।** आद्योच्चारणविषयीभूतो यः शब्दस्तस्यान्त्यं हलित्स्यादिति फलितोऽर्थः॥—**उपदेशेऽजनु—**। उपदेशनमुपदेशः। भावे घञ्। उपदेशे किम्। अभ्र आँ अपः। सप्तम्यर्थद्योतकोऽत्राङ्। 'आङोऽनुनासिकश्छन्दसि' इत्याकारोऽनुनासिकः। यद्यपीह 'उञ ऊँ' इत्यत्रैवानुनासिकविधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तय इहैव कृतम्। अच् किम्। मनिनो मकारस्य मा भूत्। नच 'हलन्त्यम्' इत्यन्त्यग्रहणसामर्थ्यादनन्त्यस्य मकारस्य न भवेदिति वाच्यम्। आलच्त्राप्रत्ययादावतिप्रसङ्गवारणेन तस्य चरितार्थत्वात्। अनुनासिक इति किम्। 'ईक्ष दर्शने' ईक्षितः। सत्यां हीत्संज्ञायां 'श्वीदितो निष्ठायाम्' इतीण् न स्यात्। यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम्। नचैवं 'यरोऽनुनासिके—' इत्यत्र यरः पदान्तस्यानुनासिकशब्दे परेऽनुनासिकशब्दः स्यादित्यर्थः प्रसज्येत, 'स्वं

**'अनुनासिकः' इत्यादिनिर्देशात्। न ह्यत्र ककारे परेऽच्कार्यं दृश्यते। 'आदि-रन्त्येन-' ( सू. २ ) इत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते।**

---

प्रत्याहारेषु अजादिसंज्ञासु मध्यवर्तिनामपि इतां न ग्रहणमित्यर्थः। कुत इत्यत आह- **अनुनासिक इत्यादिनिर्देशादिति**। आदिना 'तृषिमृषिकृषेः काश्यपस्य' इत्यादि-संग्रहः। कथमयं निर्देश उक्तार्थे हेतुरित्यत आह—**न हीति**। अत्र अनुनासिकशब्दे ककारे परे इकारस्य अच्प्रयुक्तं कार्यम् 'इको यणचि'इति यणादेशः न दृश्यते हीति योजना। यदि हि अजादिप्रत्याहारेषु इतामपि ग्रहणं स्यात्, तर्हि अच्प्रत्याहारे ऋलक् इति ककारस्यापि प्रविष्टत्वेन अच्त्वात्तस्मिन् परे इकारस्य 'इको यणचि' इति यणादेशे 'लोपो व्योर्वलि' इति लोपे अनुनास्क इति स्यात्, इकारो न श्रूयेत। श्रूयते च। अतः प्रत्याहारेष्वितां न ग्रहणमिति विज्ञायत इति भावः। यत्तु 'ऋलक्' इति ककारस्य अच्प्रत्याहारप्रविष्टत्वेऽपि 'प्रत्ययस्थात्' इत्यादिना इत्वविधिसामर्थ्या-देव यण् लोपश्च न भवति, अन्यथा लाघवाल्लोपमेव विदध्यात्, अतः प्रत्याहारेष्वितां न ग्रहणमित्यत्र अनुनासिक इत्यादिनिर्देशो न लिङ्गमित्याहुः। तन्न, 'प्रत्ययस्थात्का-त्पूर्वस्यात इदाप्यसुपः' इति लोपविधौ वर्णाधिक्यप्रसङ्गात्। प्रत्याहारशब्द-स्याप्रसिद्धार्थत्वादाह—**आदिरन्त्येनेत्यादिना**। प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा इति व्युत्पत्तेरिति भावः। नच अणुदित्सूत्रसिद्धासु अ इ उ इत्यादिसंज्ञास्वतिप्रसङ्गः शङ्क्यः, योगरूढ्याश्रयणात्, वैयाकरणप्रसिद्धिवशाच्च तथा रूढिरिति भावः। तत्र वर्णसमाम्ना-यसूत्रेण पूर्वेण णकारेण एकः प्रत्याहारः—अण्। ककारेण त्रयः-अक् इक् उक्। ङकारेण एकः-एङ्। चकारेण चत्वारः-अच् इच् एच् ऐच्। टकारेण एकः-अट्।

---

रूपम्-' इति परिभाषोपस्थानात्। संज्ञाकरणे तु 'अशब्दसंज्ञा' इति निषेधान्नायं दोष इति वाच्यम्। उक्तपरिभाषाया भाष्ये प्रत्याख्यानात्। 'उपान्मन्त्रकरणे', 'पुच्छभाण्ड-चीवराण्णिङ्', 'ङमुण् नित्यम्' इत्यादिनिर्देशेन 'स्वं रूपम्-' इति परिभाषाया अनु-पस्थितिकल्पनात्सूत्रमतेऽपि दोषाभावात्। ननूक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवमिति चेत्, अतएव निष्प्रयोजनमित्यनुक्त्वा मन्दप्रयोजनमित्युक्तम्॥—**प्रतिज्ञान्विति**। प्रतिज्ञायत इति प्रतिज्ञा। 'आतश्चोपसर्गे' इति कर्मण्यङ्। अनुनासिकस्य भाव आनुनासिक्यम्। 'गुणवचनब्राह्मणादिभ्यः-' इति ष्यञ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। केचित्तु-प्रतिज्ञानं प्रतिज्ञा सा अस्यास्तीति प्रतिज्ञम्। अर्शआद्यच्। प्रतिज्ञमानुनासिक्य-मेषामिति विगृह्णन्ति। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः॥—**पाणिनीया इति**। पाणिनिना प्रोक्तं पाणिनीयं 'वृद्धाच्छः'। तदधीयते विदन्ति वा पाणिनीयाः।

**४ ऊकालोऽज्झ्रस्वदीर्घप्लुतः । ( १-२-२७ )** उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा। **५ उच्चैरुदात्तः। (१-२-२९)** ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आ ये। **६ नीचैरनुदात्तः। (१-२-३०)** स्पष्टम्।

---

परेण णकारेण त्रयः—अण् इण् यण् । मकारेण चत्वारः—अम् यम् ञम् ङम् । ञकारेण एकः—यञ् । षकारेण द्वौ—झष् भष्। शकारेण षट्—अश् हश् वश् झश् जश् बश् । वकारेण एकः—छव् । यकारेण पञ्च—यय् मय् झय् खय् चय् । रेफेण पञ्च—यर् झर् खर् चर् शर् । लकारेण षट्—अल् हल् वल् रल् झल् शल्। अकारेण एको रप्रत्याहार इति वार्णसमाम्नायिकाः प्रत्याहाराश्चतुश्चत्वारिंशत्, एतेषामेव शास्त्रे उपयोगात् । इञ् इत्यादिप्रत्याहारास्तु प्रयोजनाभावान्न भवन्ति, शास्त्रे तद्व्यवहाराभावात् । अत्रास्मदीया संग्रहकारिका—

'स्यादेको ङञणवटैः षेण द्वौ त्रय इह कणाभ्याम् ।
चत्वारश्च चमाभ्यां पञ्च यराभ्यां शलाभ्यां षट् ॥'

तदेवमणादिसंज्ञासु सिद्धासु अचो ह्रस्वादिसंज्ञां विधत्ते—**ऊकालो** । ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । इतरेतरयोगद्वन्द्वो वा । तथा सत्येकवचनमार्षम् । उ ऊ ऊ३ इति त्रयाणामेकमात्रद्विमात्रत्रिमात्राणां द्वन्द्वसमासे सति सवर्णदीर्घेण ऊ इति प्रश्लिष्टनिर्देशः । तेषां काल ऊकालः । कालशब्दो मात्रापर्यायः कालसदृशे ला[illegible]णिकः । ऊकालः कालो यस्येति विग्रहः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः' इति द्विपदो बहुव्रीहिः । ऊकालशब्दे पूर्वपदे उत्तरखण्डस्य कालशब्दस्य लोप इत्यभिप्रेत्य फलितमाह—**वां काल इवेत्यादिना** । व इति ऊशब्दस्य प्रथमाबहुवचनम् । वामिति षष्ठीबहुवचनम् । वां काल इव कालो यस्येति फलितार्थकथनम् । उक्तरीत्या द्विपद एव बहुव्रीहिः । **क्रमादिति** । यथा-

---

'तदधीते—' इत्यणः 'प्रोक्ताल्लुक्' इति लुक् ॥ ननु रलयोरिति न्यूनम्, टकारस्यापि मध्यगत्वादत आह—**प्रत्याहारेष्विति** ॥—**अनुनासिक इत्यादीति** । आदिशब्देन 'पापाणके कुत्सितैः', 'एङः पदान्तादति' इत्यादि ग्राह्यम् ॥—**प्रत्याहारशब्देनेति** । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति प्रत्याहारः, 'करणाधिकरणयोश्च' इति ल्युटि प्राप्ते 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तम्, तथापि योगरूढिरिति भावः ॥—**ऊकालोऽज्झ्रस्वदीर्घप्लुत इति** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । ऊ इति त्रयाणां प्रश्लेषेण निर्देश इत्याह—**उश्च ऊश्च ऊ३श्चेति** ॥—**वः । वामिति** । त्रयाणां सवर्णदीर्घे कृते जसि परतो

अर्वाङ् । ७ **समाहारः स्वरितः ।** ( १-२-३१ ) उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् । ८ **तस्यादित उदात्तमर्धह्रस्वम् ।** ( १-२-३२ ) ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादावर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः

---

संख्यसूत्रलभ्यमेतत् । इहैव तत्सूत्रमुपन्यसितुमुचितम् । नच उ ऊ ऊ३ इत्युवर्णानां कथं ह्रस्वदीर्घप्लुतसंज्ञाः, तेषां ऊकालसदृशकालत्वाभावात्, सादृश्यस्य भेदनिबन्धनत्वादिति वाच्यम् । ऊशब्दस्यात्र एकमात्रद्विमात्रत्रिमात्रकुक्कुटरुतानुकरणत्वात् । **स इति ।** स ह्रस्वः दीर्घः प्लुतश्च अच् प्रत्येकमुदात्तादिभेदेन उदात्तत्वेनानुदात्तत्वेन स्वरितत्वेन च धर्मविशेषेण त्रिधा त्रिभिः प्रकारैर्वर्तत इत्यर्थः । उदात्तसंज्ञामाह—**उच्चैरुदात्तः ।** नादधर्मविशेष उच्चैस्त्वं नेह विवक्षितम्, उपांशूच्चार्यमाणे अव्याप्तेः । किं तु उच्चैश्शब्दः अधिकरणशक्तिप्रधान ऊर्ध्वभागे इत्यर्थे वर्तते । ऊर्ध्वावयवस्य चावयव्यपेक्षायां तालुकण्ठादिवर्णाभिव्यक्तिस्थानानामित्यर्थो लभ्यते । ऊकालोऽजिति सूत्रादजित्यनुवर्तते, तदेतदाह—**ताल्वादिष्वित्यादिना । सभागेष्विति ।** ताल्वादीनां सावयवत्वकथनमूर्ध्वभागे इत्यस्योपपादनार्थम्, तेषाम् अखण्डत्वे ऊर्ध्वभागे इत्यनुपपत्तेः । उदात्तमुदाहरति—**आ ये इति ।** 'आ ये मित्रावरुणा ' इत्यृचि आकार एकारश्च उदात्त इत्यर्थः । अनुदात्तसंज्ञामाह—**नीचैरनुदात्तः । स्पष्टमिति ।** उक्तरीत्या ताल्वादिषु अधोभागे निष्पन्नोऽच् अनुदात्तसंज्ञः स्यादिति स्पष्टार्थकमित्यर्थः ।[1] इति । 'अर्वाङ् यज्ञस्संक्राम' इत्यृचि आद्यः अकारः अनुदात्त इत्यर्थः । अथ स्वरितसंज्ञामाह—**समाहारः स्वरितः ।** पूर्वसूत्राभ्याम्' उदात्त ' इति ' अनुदात्त ' इति चानुवर्तते । ऊकालोऽजित्यस्मादजित्यनुवर्तते । ततश्च उदात्तः अनुदात्तश्च अच् समाह्रियमाणः स्वरित इत्यर्थः प्रतीयते । एवं सति वर्णद्वयस्य स्वरितसंज्ञा स्यात् । न त्वेकस्य । अतो नैवमर्थः । किं तु उदात्तानुदात्तपदे अनुवृत्ते धर्मप्रधाने षष्ठ्यन्ततया च विपरिणम्येते । यत्र समाहरणं स समाहारः । अधिकरणे घञ् । ततश्च उदात्तत्वा-

---

यणि वः, आमि तु वाम् ॥ **वां काल इव कालो यस्येति ।** फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । अच् किम् । संयोगस्य माभूत् । प्रतक्ष्य, प्रक्ष्य । कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति–' इति तुक् स्यात् ॥ **आ ये इति ।** 'निपाता आद्युदात्ताः' इत्याकार उदात्तः, यच्छब्दस्तु 'फिषः' इत्यन्तोदात्तः । ततः परस्य जसः सुप्त्वादनुदात्तत्वम्, त्यदाद्यत्वे पररूपत्वे शीभावे आद्गुणे च सति 'एकादेश उदात्तेन–' इत्येकार उदात्तः ॥—**अर्वा-**

---

१ 'उदात्तानुदात्तत्वे' इति 'क' । २ 'मित्यर्थो लभ्यते' इति 'क' ।

तिशाख्ये प्रसिद्धा। 'क्व१ वोऽश्वाः', 'रथानां न येऽराः शतचक्रं यो ३ऽह्यः' इत्यादिष्वनुदात्तः।[1] 'अग्निमीळे' इत्यादावुदात्तश्रुतिः। स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा। **९ मुखनासिकावचनोऽनुनासिकः। (१-१-८)** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः

---

नुदात्तत्वयोर्धर्मयोर्यस्मिन्नचि मेलनं सोऽच् स्वरितसंज्ञक इत्यर्थः। फलितमाह–**उदात्तत्वानुदात्तत्वे इत्यादिना**। ननु उदात्तत्वानुदात्तत्वयोरेकस्मिन्नपि मेलने कस्मिन् भागे उदात्तत्वस्य समावेशः, कस्मिन्भागे अनुदात्तत्वस्य समावेश इत्यत आह–**तस्यादितः**। तस्य स्वरितस्य आदितः पूर्वभागे अर्धह्रस्वमुदात्तम् इत्यर्थः प्रतीयते। एवं सति दीर्घस्वरिते इयं व्यवस्था न स्यात्, अत आह—**ह्रस्वग्रहणमतन्त्रमिति**। तन्त्रं प्रधानम्। 'तन्त्रं प्रधाने सिद्धान्ते' इति कोशः। न विद्यते तन्त्रं वाच्यार्थलक्षणं प्रधानं यस्य तद् अतन्त्रं अविवक्षितार्थकमित्यर्थः। ह्रस्वग्रहणं न कर्तव्यमिति यावत्। दीर्घस्वरितेऽप्युत्तरभागस्य वेदे अनुदात्तत्वदर्शनादिति भावः। ततश्च फलितमाह–**स्वरितस्यादावर्धमुदात्तं बोध्यमिति**। ननु अनुदात्तत्वस्य निवेशव्यवस्था कुतो नोक्तेत्यत आह–**उत्तरार्धं त्विति**। ननु एवं सति अग्निमीळ इत्यत्र ईकारे स्वरिते कथमुत्तरार्धमनुदात्तं नेत्यत आह–**तस्य चेति**। चकारो वाक्यालंकारे। तस्य अनुदात्तभागस्य उदात्तस्वरितपरत्वे उदात्तस्वरितौ परौ यस्मात् स उदात्तस्वरितपरः, तस्य भाव उदात्तस्वरितपरत्वम्। उदात्तपरकत्वे स्वरितपरकत्वे वा सति श्रवणं स्पष्टं भवतीत्यर्थः। **अन्यत्रेति**। उदात्तस्वरितपरकत्वाभावे अनुदात्तप्रचयपरकत्वे अनुदात्तभागस्य उदात्ततरत्वापरपर्याया उदात्तश्रुतिः ऋग्वेदप्रातिशाख्ये विहितेत्यर्थः। तत्र त्वेवमुक्तम्—

---

**ङिति**। अर्वन्तमञ्चतीति अर्वाङ्। 'ऋत्विक्–' आदिना अञ्चतेः सुप्युपपदे क्विन्। 'ऋ गतौ' इत्यस्मात् 'स्नामदिपद्यर्ति–' इत्यादिना वनिपि गुणे च निष्पन्नोऽर्वन्शब्दो धातुस्वरेणाद्युदात्तः। वनिपः पित्त्वेनाद्युदात्तत्वात्। अञ्चतेरकारोऽपि धातुस्वरेण नित्स्वरेण वा उदात्तः, 'उपपदमतिङ्' इति समासे कृते 'समासस्य' इति स्वरेण तदपवादभूतेन 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण वा अञ्चतेरकार उदात्तः। वनो नलोपे सवर्णदीर्घे च कृते 'एकादेश उदात्तेन–' इत्याकार उदात्त इति 'अनुदात्तं पदमेकवर्जम्' इति शेषनिघातादाद्योकारोऽत्रानुदात्तः। एतच्च संभवाभिप्रायेणोक्तम्। वेदभाष्ये तु 'अर्वाङ् अभिमुखः' इति स्थितम्॥ **अतन्त्रमिति**। अविवक्षितमित्यर्थः॥— **तस्य चोदात्तस्वरितपरत्व इति**। उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं

---

[1] 'इत्यादिष्वनुदात्तश्रुतिः' इति 'क'।

अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।
उदात्तं वोच्यते किंचित्स्वरितं वाक्षरं परम्॥ ऋ. प्रा (३।५)

इति स्वरिते पूर्वभागस्य उदात्तत्वे सति परः शेष उत्तरभागः अनुदात्तः प्रत्येतव्यः। स परः शेषः उदात्तश्रुतिः क्वचिद्भवति। किं सर्वत्र एवम्? नेत्याह—**न चेदि**त्यादिना। उदात्तं स्वरितं वा किञ्चिदक्षरं परं नोच्यते चेदिति योजना। तत्र अनुदात्तभागस्य स्पष्टं श्रवणमुदाहृत्य दर्शयति—**केत्यादिना—इत्यादिष्वनुदात्त इत्यन्तेन**। तत्र क्व इति ह्रस्वस्वरितः, स तावद् वो इत्योकारात्मकोदात्तपरकः। येऽरा इत्येकारो दीर्घस्वरितः। स च रा इत्याकारात्मकोदात्तपरः। शतचक्रं यो इत्योकारः कम्पस्वरितः। स तु ह्य इत्यकारात्मकस्वरितपरकः—इत्येवमादिप्रदेशेषु अनुदात्तभागः स्पष्टं श्रूयत इत्यर्थः। अन्यत्र तूदात्तश्रुतिरित्येतदुदाहृत्य दर्शयति—**अग्निमीळे इत्यादावुदात्तश्रुतिरिति**। पदकाले अग्निमित्यन्तोदात्तम्। ईळे इति अनुदात्तम्। तत्र 'उदात्तादनुदात्तस्य स्वरितः' इति संहितायाम् ईकारः स्वरितः। 'स्वरितात्संहितायामनुदात्तानाम्' इत्येकारः प्रचयः। ततश्च ईकारः स्वरितः उदात्तस्वरितपरको न भवतीति तदुत्तरभागस्य उदाहृतप्रातिशाख्यवचनेन उदात्ततरत्वात्मिका उदात्तश्रुतिरेव भवतीत्यर्थः। तदेवमुदात्तह्रस्वः, अनुदात्तह्रस्वः, स्वरितह्रस्व इति ह्रस्वस्त्रिविधः। एवं दीर्घोऽपि त्रिविधः। तथा प्लुतोऽपि। ततश्च एकैकः अच् नवविध इति स्थितम्। **स नवविधोऽपीति**। उक्तरीत्या नवविधोऽपि सः अच् अनुनासिकत्वेन अननुनासिकत्वेन च द्विधा—द्वाभ्यां प्रकाराभ्यां वर्तत इत्यर्थः। तदेवमनुनासिका नव अचः, अननुनासिकाश्च नवेत्यष्टादशविधत्वमेकैकस्याच इति स्थितम्। अथानुनासिकसंज्ञामाह—**मुखनासिका**। मुखसहिता नासिका मुखनासिका, शाकपार्थिवादित्वात् सहितपदस्य लोप। उच्यते उच्चार्यते इति वचनः, कर्मणि

---

तस्य भावस्तत्त्वं तस्मिन् सति उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वारितस्य यदुत्तरार्धमनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः॥—**अन्यत्रेति**। उदात्तस्वरितपरत्वाभावे॥—**क्वेति**। 'किमोऽत्', 'तित्स्वरितम्'॥—**व इति**। 'अनुदात्तं सर्वमपादादौ' इत्यधिकारादनुदात्तः॥—**अश्वा इति**। अशेः क्वनि नित्स्वरेणाद्युदात्तम्। संहितायां तु 'एकादेश उदात्तेनोदात्तः' इत्योकार उदात्तः॥ उदात्तपरत्वे ह्रस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितस्योदाहरणमाह—**रथानां न ये इति**। ये अरा इति पदद्वयमपि फिट्स्वरेणान्तोदात्तम्। एकादेशस्तु पक्षे स्वरितः, 'स्वरितो वानुदात्ते पदादौ' इत्युक्तेः॥ स्वरितपरत्वे उदाहरणमाह—**शतचक्रमिति॥—य इति**। फिट्स्वरेणान्तोदात्तः, ततः परस्य सकारस्य इत्वे कृते आद्गुणे च उदात्तैनैकादेशादोकार उदात्तः॥—**अह्य इति**। स्वरितान्तत्वादकारस्य शेषनिघातत्वे, आकारेण सह एकादेशे च कृते 'स्वरितो वानुदात्ते

स्यात् । तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश। तस्य दीर्घाभावात् । एचामपि द्वादश । तेषां ह्रस्वाभावात् ।

**१० तुल्यास्यप्रयत्नं सवर्णम् । (१-१-६)** तालवादिस्थानमाभ्यन्तर-

---

ल्युट्। मुखनासिकया वचन इति 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः तदेतदाह—**मुखसहितेत्यादिना** । मुखं च नासिका चेति द्वन्द्वस्तु न, तथा सति 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति समाहारद्वन्द्वनियमात् 'स नपुंसकम्' इति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे मुखनासिकवचन इत्यापत्तेः । ननु अष्टादश भेदाः किं सर्वेषामचामविशिष्टाः ? नेत्याह—**तदित्थमिति** । इयता प्रबन्धेन यदचां भेदप्रपञ्चनं तद् इत्थं वक्ष्यमाणप्रकारेण व्यवस्थितं वेदितव्यमित्यर्थः । **अष्टादश भेदा इति** । अष्टादश प्रकारा इत्यर्थः । **दीर्घाभावादिति** । तथा च उदात्तलृकारदीर्घः, अनुदात्तलृकारदीर्घः, स्वरितलृकारदीर्घः, ते च अनुनासिकास्त्रयः, अननुनासिकास्त्रयः—इति षड्भेदानामभावे सति ह्रस्वप्रपञ्चः प्लुतप्रपञ्चश्च षड्विध इति लृकारस्य द्वादशविधत्वमेवेति भावः । लृकारस्य दीर्घाभावे होतृ लृकार इत्यत्र सवर्णदीर्घे कृते होतॄकार इति ॠकारस्यैव तुल्यास्यसूत्रे अकस्सवर्णे इति सूत्रे च भाष्योदाहरणमेव प्रमाणम् । **ह्रस्वाभावादिति** । यद्येचो ह्रस्वाः स्युस्तर्हि वर्णसमाम्नाये त एव लाघवाद् अ इ उ इत्यादिवत् पठ्येरन् । नतु दीर्घाः, गौरवात् । अत एचो ह्रस्वा न सन्तीति विज्ञायते । एवं च ह्रस्वप्रपञ्चषड्भेदाभावाद् द्वादशविधत्वमेवैचामिति भावः ।

अथ 'अणुदित्सवर्णस्य चाप्रत्ययः' इति अ इ उ इत्यादिसंज्ञां वक्ष्यन् सवर्णसंज्ञामाह—**तुल्यास्य** । आस्यं मुखम्, तत्साम्यस्य[1] सर्ववर्णेष्वविशिष्टत्वादव्यावर्तकत्वादास्यशब्दोऽत्र न मुखमात्रपरः, किन्तु आस्ये मुखे भवमास्यं ताल्वादिस्थानम् ।

---

पदादौ' इन्योकारः स्वरितः ॥ कथमह्यस्य स्वरितान्तत्वमिति चेदत्राहुः—'अह व्याप्तौ' इत्यस्मात्कर्मणि यत्, 'तित्स्वरितम्' वृद्ध्यभावस्तु संज्ञापूर्वकविधेरनित्यत्वादिति । 'नोदात्तस्वरित–' इति निषेधस्तु 'अनन्तरस्य–' इतिन्यायादुदात्तादिति प्राप्तस्य । यदा ऽहेरित्यर्थेऽह्यः वृत्रस्येत्यर्थः, तदा 'छन्दसि वा वचनम्' इति गुणाभावः । 'उदात्तस्वरितयोः' इति स्वरित उदात्तपर इति छान्दसत्वात् ॥—**अग्निमीळ इति** । ईकारः स्वरितः, ळे इति तु प्रचयापरपर्याया एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति ॥—**मुखनासिका**—। मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह—**मुखसहितेति** ॥—**नासिकयोच्चार्येति** । फलितार्थकथनमिदम्। उच्यतेऽनेनेति वचनम्, मुखनासिका वचनमस्येति विग्रहः ॥-**तुल्यास्य**।-

---

[1] 'तत् स्थानसाम्यस्य' इति क ।

प्रयत्नश्चेत्येतद् द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। **अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्।**

---

'शरीरावयवाद्यत्' इति भवार्थे यत्प्रत्ययः। 'यस्येति च' इति प्रकृत्यन्त्यस्य अकारस्य लोपः। प्रकृष्टो यत्नः प्रयत्नः। आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत्तुल्यास्यप्रयत्नं परस्परं सवर्णसंज्ञकं स्यादिति भावः। तदाह—**ताल्वादि स्थानमित्यादिना। मिथ इति।** परस्परमित्यर्थः। कस्य किं स्थानमित्याकाङ्क्षायां तद्व्यवस्थापकानि पाणिन्यादिशिक्षावचनान्यर्थतः संगृह्णाति—**अकुहेत्यादिना।** अ इत्यष्टादश भेदा गृह्यन्ते। कु इति कादिपञ्चकात्मकः कवर्गः। न चाणुदित्सूत्रस्येदानीमप्रवृत्तेः कथमत्र अ इत्यष्टादशभेदानां ग्रहणमिति वाच्यम्। लौकिकप्रसिद्धिमाश्रित्यैव एतत्प्रवृत्तेः। एवमग्रेऽपि कथञ्चित्समाधानं बोध्यम्। अश्च कुश्च हश्च विसर्जनीयश्चेतिविग्रहः। विसर्जनीयशब्दोऽपि विसर्गपर्यायः। **इचुयशेति।** इ इत्यष्टादश भेदाः। चु इति चवर्गः। इश्च चुश्च यश्च शश्चेति विग्रहः। तालु काकुदम्। **ऋटुरषेति।** ऋ इत्यष्टादश भेदाः। टु इति टवर्गः। आ च टुश्च रश्च षश्चेति विग्रहः। ऋशब्दस्य आ इति प्रथमैकवचनान्तं धाता इतिवत्। **लृतुलसेति।** लृ इत्यस्य द्वादश भेदाः। तु इति तवर्गः। आ च तुश्च लश्च सश्चेति विग्रहः। लृशब्दस्यापि आ इत्येव प्रथमैकवचनान्तम्। आ अलौ अलः। दन्तशब्देन दन्तमूलप्रदेशो विवक्षितः। अन्यथा भग्नदन्तस्य तदुच्चारणानुपपत्तेः। **उपूपेति।** उ इत्यष्टादश भेदाः। पु इति पवर्गः। उश्च पुश्च उपध्मानीयश्चेति विग्रहः। उपध्मानीयशब्दमनुपदमेव स्वयं व्याख्यास्यति। **ञमङणनेति।** ञश्च मश्च ङश्च णश्च नश्चेति विग्रहः। चकारेण स्वस्ववर्गीयस्थानसमुच्चयः। **एदैतोरिति।** एच्च ऐच्च एदैतौ। तपरकरणमसंदेहार्थम्, नतु 'तपरस्तत्कालस्य' इति तत्कालमात्रग्रहणार्थम्। तेन प्लुतयोरपि संग्रहः। कण्ठश्च तालु चेति प्राण्यङ्गत्वात् समाहारद्वन्द्वः, एकवत्त्वं नपुंसकत्वं च। **ओदौतोरिति।** ओच्च औच्च ओदौतौ। तपरकरणं पूर्ववदसंदेहार्थमेव। कण्ठश्च ओष्ठौ चेति प्राण्यङ्गत्वात्समाहारद्वन्द्वः, एकवद्भावो नपुंसकत्वं च। **वका-**

---

आस्ये भवमास्यम्, 'शरीरावयवाद्यत्' इत्यभिप्रेत्याह—**ताल्वादीति। आभ्यन्तरेति।** एतच्च प्रशब्दबलाल्लभ्यते। ओष्ठात्प्रभृति प्राक् काकलकादास्यम्। तुल्यास्यं किम्? तर्प्तं। अत्र पकारस्य तकारे परे 'झरो झरि' इति लोपो मा भूत्। प्रयत्नग्रहणं किम्? वाक् श्चोतति। अत्र शस्य लोपो न। **ञमङणनानां नासिका चेति।** चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते। एदैतोरित्यादौ तपरत्वमसंदेहार्थम्, न

वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकानुस्वारस्य। इति स्थानानि। यत्नो द्विधा। आभ्यन्तरो बाह्यश्च। आद्यश्चतुर्धा। स्पृष्टेषत्स्पृष्टविवृतसंवृत-

---

रस्येति। दन्ताश्च ओष्ठौ चेति समाहारद्वन्द्वः, एकवत्त्वं नपुंसकत्वं च। **जिह्वा-मूलीयस्येति**। जिह्वामूलीयशब्दमग्रे व्याख्यास्यति। एवमनुस्वारशब्दमपि। **इति स्थानानीति**। इति एवंप्रकारेण वर्णाभिव्यक्तिस्थानानि प्रपञ्चितानीत्यर्थः।

ननु किमिह तुल्यास्यसूत्रे यत्किंचित्स्थानसाम्यं विवक्षितम्, उत यावत्स्थान-साम्यम्। न तावदाद्यः, तथा सति इकारस्य एकारस्य च तालुस्थानकतया साव-र्ण्यापत्तौ **भवत्येवे**त्यत्र इकारादेकारे परे सवर्णदीर्घापत्तेः। न च एकारस्य वर्णसमा-म्नाये पाठसामर्थ्यादिकारेण न सावर्ण्यमिति वाच्यम्, एकारपाठस्य अक् इक् उक् इति प्रत्याहारेषु एकारग्रहणनिवृत्त्यर्थत्वसम्भवात्। किंच वकारलकारयोर्दन्तस्थानसाम्येन सावर्ण्यापत्तौ 'तोर्लि' इत्यत्र लकारेण वकारस्यापि ग्रहणात् तद्वानित्यत्र दकारस्य परसवर्णापत्तिः। 'यवलपरे यवला वा' इत्यत्र लकारग्रहणं तु यथासंख्यार्थं भविष्यति। न द्वितीयः; तथा सति कङयोः कण्ठस्थानसाम्येऽपि ङकारस्य नासिकास्थानाधिक्येन सावर्ण्याभावापत्तौ 'चोः कुः' 'क्विन्प्रत्ययस्य' इत्यत्र ङकारस्य ग्रहणानापत्त्या प्राङ् इत्यादौ नुमो नकारस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङकारानापत्तेः। तस्मात्स्थानसाम्यं दुर्निरूपमिति चेत्, अत्र ब्रूमः—यावत्स्थानसाम्यमेव सावर्ण्यप्रयोजकम्। एवं च इकारस्य एकारस्य च तालुस्थानसाम्येऽपि एकारस्य कण्ठस्थानाधिक्यान्न सावर्ण्यम्। वलयोश्च न सावर्ण्यम्। वकारस्य ओष्ठस्थानाधिक्यात्। एवं च 'तद्वानासाम्' 'यजुष्ये-केषाम्' इत्यादिनिर्देशा उपपन्नाः। ङकारस्य नासिकास्थानाधिक्येऽपि ककारेण सावर्ण्य-मस्त्येव, आस्यभवस्थानसाम्यस्यैव सावर्ण्यप्रयोजकत्वात्, नासिकायाश्च आस्यानन्तर्गत-त्वात्। उक्तं च भाष्ये—'किं पुनरास्यं लौकिकमोष्ठात्प्रभृति प्राक्काकलकात्' इति।

---

तत्कालग्रहणार्थम्। तेन प्लुतस्यापि संग्रहः। **चतुर्धेति**। निष्कर्षपक्षे तु पञ्चधा। ऊष्मणामीषद्विवृतप्रयत्नाभ्युपगमात्। **स्पृष्टेषत्स्पृष्टेति**। एतेषामाभ्यन्तरत्वं वर्णोत्पत्तिप्राग्भावित्वात्। तथाहि—नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमा-क्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः। तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति, तदा स्पृष्टता। ईषद्यदा स्पृशन्ति, तदा ईषत्स्पृष्टता। समीपावस्थानमात्रे संवृतता। दूरत्वे विवृतता। अत एव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्तव्ये सम्यक् स्पर्शः, यकारे ईषत्स्पर्शः, शकारेकारयोस्तु

---

१ 'प्रयत्नो' 'क'।

भेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। विवृतमूष्मणां स्वराणां च। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। एतच्च सूत्रकारेण ज्ञापितम्। तथा हि—११ अ अ। (८-४-६८) विवृतमनूद्य संवृतोऽनेन विधीयते। अस्य चाष्टाध्यायीं सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या

'काकलको नाम चुबुकस्याधस्ताद् ग्रीवायामुन्नतप्रदेशः' इति कैयटः। तस्मादास्यभवया-वस्थानसाम्यं सावर्ण्यप्रयोजकमिति शब्देन्दुशेखरे विस्तरः।

ननु तुल्यास्यसूत्रे प्रयत्नशब्देन प्रशब्दबलादाभ्यन्तरयत्नो विवक्षित इति स्थितम्। तत्राभ्यन्तरत्वविशेषणं किमर्थम्, व्यावर्त्याभावादित्यत आह—**यत्नो द्विधेति**। यत्नानामाभ्यन्तरत्वं बाह्यत्वं च वर्णोत्पत्तेः प्रागूर्ध्वभावित्वमिति पाणिन्या-दिशिक्षासु स्पष्टम्। **आद्य इति**। आभ्यन्तरयत्न इत्यर्थः। कथं चातुर्विध्यमित्यत आह—**स्पृष्टेति**। कस्य कः प्रयत्न इत्याकाङ्क्षायां तद्व्यवस्थापकशिक्षावचनानि पठति—**तत्रेति**। तेषु मध्य इत्यर्थः। **प्रयतनमिति**। प्रयत्न इत्यर्थः। स्पर्शादिशब्दानग्रे व्याख्यास्यति। ह्रस्वस्यावर्णस्य संवृतमित्यन्वयः। एतावदेव शिक्षावचनम्। नन्वेवं दण्ड आढकमित्यत्र अकारस्य आकारस्य च विवृतसंवृतप्रयत्नभेदेन सावर्ण्याभावात् सवर्णदीर्घो न स्यादित्यत आह—**प्रयोग इति**। शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां रामः कृष्णः इत्यादिशब्दानां प्रयोगे क्रियमाण एव ह्रस्वस्यावर्णस्य संवृतत्वमित्यर्थः। **प्रक्रियेति**। शास्त्रीयकार्यप्रवृत्तिसमये तु ह्रस्वस्याप्यवर्णस्य विवृतत्वमेवेत्यर्थः। शिक्षा-वचनसिद्धं स्वाभाविकं ह्रस्वावर्णस्य संवृतत्वं प्रच्याव्य शास्त्रमूलभूते वर्णसमाम्नाये तस्य विवृतत्वेनैवोपदिष्टतया कृत्स्नशास्त्रीयप्रक्रियासमये ह्रस्वस्याप्यवर्णस्य विवृतत्वेन दण्डाढ-कमित्यादौ सवर्णदीर्घादिकार्यं निर्बाधमिति अइउणिति सूत्रभाष्ये स्पष्टम्। एवं च ह्रस्वस्यावर्णस्य संवृतमिति शिक्षावचनं परिशेषात् परिनिष्ठितदशायामेव पर्यवस्यतीति न तदानर्थक्यमिति भावः। अयं च शिक्षावचनसंकोचः सूत्रकारस्यापि संमत इत्याह—**एतच्चेति**॥ तदेवोपपादयितुं प्रतिजानीते—**तथा हीति**। यथा एतज्ज्ञापितं भवति तथा स्पष्टमुपपाद्यत इत्यर्थः। **अ अ**। व्याकरणशास्त्रस्येदमन्तिमं सूत्रं द्विपदम्। तत्र

दूरेऽवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चानुसृत्य विवेचनीयम्। विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्त इति बाह्या इत्युच्यन्ते। गलबिलस्य संकोचात्संवारः, तस्यैव विकासाद्विवारः, एतौ च संवृतविवृतरूपाभ्यामाभ्य-न्तराभ्यां भिन्नावेव। तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम्। **अ अ**। 'सुपाम–' इति विभक्त्योर्लुक्, आद्यो विवृतः द्वितीयस्तु संवृतस्तदाह—**विवृतमनू-द्येति**। विवृतस्य स्थाने इत्यर्थः। **विवृतत्वमस्त्येवेति**। तेन दण्डायनमि-

विवृतत्वमस्त्येव । तथा च सूत्रम्—१२ **पूर्वत्रासिद्धम्** । (८-२-१) अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा । त्रिपाद्यामपि पूर्वं प्रति

---

अ इति प्रथमं पदं विवृतपरं लुप्तषष्ठीकम् । द्वितीयं तु संवृतपरं लुप्तप्रथमाकम् । ततश्च शिक्षावचनसिद्धं स्वाभाविकं संवृतत्वं प्रच्याव्य वर्णसमाम्नाये विवृतत्वेनोपदिष्टस्य अवर्णस्य संवृतः अवर्णो भवतीत्यर्थः । तदाह—**विवृतमनूद्येति** । **विधीयत इति** । प्रतिप्रसूयत इत्यर्थः । ननु प्रक्रियादशायामप्येतत्सूत्रं कुतो न प्रवर्तत इत्यत आह—**अस्य चेति** । अस्य अ अ इति सूत्रस्य, स्वप्राक्तनीं कृत्स्नाम् अष्टाध्यायीं प्रति असिद्धत्वात् अविद्यमानत्वात् प्रक्रियादशायां विवृतत्वमस्त्येवेत्यन्वयः । ननु प्रक्रियादशायां ह्रस्वावर्णस्य कथं स्वाभाविकात् संवृतत्वात् प्रच्यवः, कथं वा विवृतत्वम्, तस्य आकारादिधर्मत्वादित्यत आह—**शास्त्र दृष्ट्येति** । असिद्धत्वमिह न वास्तवात्यन्तासत्त्वं विवक्षितम् । किं तर्हि अविद्यमानत्वारोपात्मकमेव । एतावता न स्वाभाविकस्य संवृतत्वस्यावर्णात् प्रच्यवः, नापि विवृतत्वं तस्य वास्तवम्, प्रक्रियार्थं विवृतत्वस्यारोपादिति भावः । ननु 'अ अ' इति सूत्रस्य कृत्स्नामष्टाध्यायीं प्रत्यसिद्धत्वे किं प्रमाणमित्यत आह—**तथा च सूत्रमिति** । चो ह्यर्थे । तथा-तेन प्रकारेण बोधकं सूत्रमस्ति हीत्यर्थः । तथाविधं सूत्रमाह—**पूर्वत्रासिद्धम्** । पाणिनिप्रणीता अष्टाध्यायी । तत्र अष्टमाध्याये द्वितीयपादस्येदमादिमं सूत्रम् । इतः प्राक्तनं कृत्स्नं सूत्रजालं सपादसप्ताध्यायीति व्यवह्रियते । उपरितनं तु कृत्स्नं सूत्रजालं त्रिपादीति व्यवह्रियत इति स्थितिः । तत्र यदीदं सूत्रं स्वतन्त्रविधिः स्यात्, तदा इतः पूर्वस्मिन् शास्त्रे प्रवर्तमाने उपरितनं शास्त्रमसिद्धं स्यादित्यर्थो लभ्येत । ततश्च सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धेति पर्यवस्येत् । एवं सति त्रिपाद्यामपि पूर्वं शास्त्रं प्रति परं शास्त्रमसिद्धमित्यर्थो न लभ्येत । तथा सति किमु उक्तं किम्वुक्तमित्यत्र 'मोऽनुस्वारः' इति शास्त्रं त्रैपादिकं प्रति 'मय उञो वो वा' इति वत्वशास्त्रं त्रैपादिकं नासिद्धं स्यादित्यत आह—**अधिकारोऽयमिति** । अधिक्रियते उपरितनसूत्रजालशेषत्वेन पठ्यत इत्यधिकारः । कर्मणि घञ् । 'घञबन्ताः पुंसि' इति पुंस्त्वम् । अयमिति तदपेक्षया पुँल्लिङ्गनिर्देशः । इदं सूत्रमुपरितनसूत्रेष्वनुवृत्त्यर्थमेव, न तु स्वतन्त्रविधिरिति यावत् । 'मय उञो वो वा' इति सूत्रे पूर्वत्रासिद्धमित्यनुवर्तते । ततश्च 'मयः

---

त्यादौ सवर्णदीर्घः सिध्यतीति भावः । **पूर्वत्रासिद्धम्** । यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात्, तथाच प्रशानित्यत्र 'मो नो धातोः' इति नत्वस्य सिद्धत्वान्नलोपः स्यात्, नत्वविधेः संबुद्धौ चरितार्थत्वात् । तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात्, नुंविधेस्तु संबुद्धौ चरितार्थत्वादत आह—**अधिकारोऽयमिति** । त्रिपाद्यां विहितं

परं शास्त्रमसिद्धं स्यात् । बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ।

खरो यमाः खयः ≍क≍पौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः ।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥

---

परस्य ञो वो वा स्यात्, इदं शास्त्रं पूर्वत्रासिद्धम्'इति तदेकवाक्यं[1] संपद्यते । तत्र च अनुवृत्तपूर्वशब्देन इतः प्राक्तनं त्रिपादीस्थं सपादसप्ताध्यायीस्थं च कृत्स्नं सूत्रजालं विवक्षितमिति 'मोऽनुस्वारः' इति त्रैपादिकं शास्त्रं प्रति 'मय उञो वो वा' इति शास्त्रस्यासिद्धत्वं निर्बाधमित्याह—**तेनेति** । अधिकारत्वेनेत्यर्थः । **परं शास्त्रमसिद्धमिति** । असिद्धत्वं चात्र नात्यन्तासत्त्वम् । किंतु पूर्वशास्त्रदृष्ट्येत्यनुपदमेवोक्तम् । परं शास्त्रमित्यनेन प्रक्रियाकौमुद्यादिग्रन्थोक्तं कार्यासिद्धत्वमप्रामाणिकमिति ध्वनितम् । कार्यासिद्धत्वं पूर्वपक्षयित्वा शास्त्रासिद्धत्वस्यैवात्र सूत्रे 'असिद्धवदत्राभात्' इति सूत्रे च भाष्ये सिद्धान्तितत्वात् । शास्त्रासिद्धत्वकार्यासिद्धत्वयोः फलभेदस्तु शब्देन्दुशेखरे व्यक्तः । अस्माभिश्च स्वादिसन्धौ मनोरथ इत्यत्र मूलव्याख्यावसरे हलन्तशब्दाधिकारे च अदःशब्दप्रक्रियाव्याख्यावसरे प्रपञ्चयिष्यते । तदेवम् 'अ अ' इति संवृतविधेः स्वप्राक्तनीं कृत्स्नामष्टाध्यायीं प्रत्यसिद्धत्वात् प्रक्रियादशायामवर्णस्य ह्रस्वस्य विवृतत्वमेव । परिनिष्ठितदशायामेव संवृतत्वमिति स्थितम् । यद्यपि परिनिष्ठितदशायां संवृतविधिः क्वचिदप्यस्मिन् शास्त्रे नोपयुज्यते, तथापि परिनिष्ठिते संवृतविधिबलात्[2]संवृतत्वेन ज्ञाने सत्येव प्रयोगार्हतेति कल्प्यम् । विवृतसंवृतयोरुच्चारणभेदो वा कल्प्य इत्यलं बहुना ।

अथ बाह्यप्रयत्नान् प्रपञ्चयति—**बाह्यप्रयत्नस्त्विति** । प्रशब्दोऽत्र चिन्त्यः, प्रशब्दबलेन आभ्यन्तरयत्नस्यैव प्रयत्नशब्दवाच्यतायाः तुल्यास्यसूत्रे उक्तत्वात्, यत्नो

कार्यमिति कार्यासिद्धिपक्षे अमू अमूमित्यादि न  भावः ॥ यथा चैतन्न सिध्यति तथाऽदःशब्दव्याख्यावसरेऽस्माभिरुपपादयिष्यते । **एकादशधेति** । यद्यपि भाष्येऽष्टावुक्ताः, उदात्तादयस्तु नोक्ताः, तथापि कैयटोक्तिमनुसृत्यैकादशोक्ता इति बोध्यम् । **खरो यमा इति** । बालबोधनाय बाह्यप्रयत्नाः कैश्चित्सुगमोपायेनोपनिबद्धाः । तद्यथा—'खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च, वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः' इति । **श्वासानुप्रदाना इति** । श्वासप्रयत्नका इत्यर्थः । **विवृण्वते** ।

---

१ 'तदेकवाक्यत्वं' इति 'क'। २ 'बलादेव' इति (क)।

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नी, चख्ख्नतुः, अग्ग्निः, घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । तत्र वर्गाणां प्रथमद्वितीयाः खयः, तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ, विसर्गः, शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च । अन्येषां

द्विधेत्युपक्रमाच्च । अविवक्षितार्थो वा अत्र प्रशब्दः । उदात्तानुदात्तस्वरितशब्दाः धर्मपराः । कस्य को बाह्ययत्न इत्याकाङ्क्षायां तद्व्यवस्थां श्लोकद्वयेन संगृह्णाति— **खयामिति** । यमशब्दो व्याख्यास्यते । श्वासः अनुप्रदानं येषां ते श्वासानुप्रदानाः श्वासाख्यबाह्ययत्नवन्तः । **विवृण्वते कण्ठमिति** । विवार एषां यत्न इति भावः । संवृताः संवाराख्ययत्नवन्तः । नादभागिनः नादाख्ययत्नभाजः । **अयुग्मा वर्गयमगा इति** । कादिपञ्चकं चादिपञ्चकं टादिपञ्चकं तादिपञ्चकं पादिपञ्चकमिति पञ्च वर्गाः । वर्गगता यमगताश्च अयुग्माः प्रथमतृतीयपञ्चमवर्णा इत्यर्थः । अल्पासवः अल्पप्राणाः । अथ श्लोकद्वयं व्याख्यास्यन् यमशब्दं तावत्सामान्यतो व्याचष्टे— **वर्गेष्वित्यादिना** । आद्यानां चतुर्णामिति निर्धारणे षष्ठी । एकैकस्मादित्यध्याहार्यम् । तेन ' अन्यारादितरर्ते ' इति परशब्दयोगे पञ्चमीप्रसङ्गाद् आद्यानां चतुर्णामिति षष्ठ्यनुपपन्नेति[1] निरस्तम् । **यमो नामेति** । नामशब्द इतिपर्यायः । तदयमर्थः— कादिचादिटादितादिपादिपञ्चकात्मकेषु वर्गेषु एकैकस्य वर्गस्य आद्यानां चतुर्णां मध्ये एकैकस्मात् पञ्चमे वर्णे परे मध्ये पूर्ववर्णसदृशो वर्णो यम[2] इति प्रातिशाख्ये प्रसिद्ध इति । अथ यमानुदाहृत्य दर्शयति—**पलिक्क्नीत्यादिना तत्सदृशा एव यमा इत्यन्तेन** । एवं वर्गान्तरयमानामप्युदाहरणं याच्ञ्नेत्यादि द्रष्टव्यम् । तदेवं यमशब्दं सामान्यतो व्याख्याय श्लोकद्वयं व्याचष्टे—**तत्रेत्यादिना** । तत्र खय इत्यस्य व्याख्या— **वर्गाणां प्रथमद्वितीयाः खय इति** । खयां यमा इत्यस्य विवरणम्—**तथा तेषामेव यमा इति** । ≍क ≍पौ इत्यस्य विवरणम्—**जिह्वामूलीयोपध्मानीयाविति** । विसर्गशब्दः प्रसिद्धत्वात् स एवोपात्तः । शर इत्यस्य विवरणम्— **शषसा इति** । एते श्वासानुप्रदानाः अघोषाश्च विवृण्वते कण्ठमित्येतद्व्याचष्टे— **एतेषां विवारः श्वासः अघोषश्चेति** । अन्ये तु घोषाः स्युः संवृता नादभागिन इत्येतद्व्याचष्टे—**अन्येषां तु संवारो नादो घोषश्चेति** । अयुग्मा वर्गयमगा इत्ये-

**कण्ठमिति** । विवार एषां प्रयत्न इति भावः । **अन्ये त्विति** । हशः, हशां यमाः, अनुस्वारश्च । **नादेति** । नादभागिनः नादप्रयत्नवन्त इत्यर्थः । **अयुग्मा इति** । प्रथमतृतीयपञ्चमा वर्गेष्वयुग्माः । **वर्गयमगा इति** । वर्गगा यमगाश्चे-

१ ' निर्धारणषष्ठ्यनुपपन्नेति ' ( क ) । २ पूर्ववर्णसदृशो यम इति 'क' ।

तु संवारो नादो घोषश्च। वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः। अन्ये महाप्राणा इत्यर्थः। बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्ताः, तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम्। कादयो मावसानाः स्पर्शाः। यरलवा अन्तःस्थाः। शषसहा ऊष्माणः। अचः स्वराः। ⌣क ⌣प इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ। अं अः इत्यचः परावनुस्वा-

---

तच्चाचष्टे—**वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमाविति**। पञ्चमानां यमाभावादिति भावः। यणश्चाल्पासवः स्मृता इत्येतच्चाचष्टे—**यरलवाश्चाल्पप्राणा इति**। ननु श्लोकद्वये महाप्राणा एतेषामिति नोक्तम्। अतो न्यूनतेत्याशङ्क्य तदपि परिशेषादुक्तप्रायमित्याह—**अन्ये महाप्राणा इति**। वर्गाणां द्वितीचतुर्थौ द्वितीयचतुर्थयमाः शषसाश्च अन्यशब्देन विवक्षिताः। यमानां यत्नविशेषकथनं वस्तुस्थितिकथनमात्रम्, अत्र शास्त्रे तदुपयोगाभावात्। तदयमत्र मध्यसिद्धान्तकौमुद्यां वरदराजीयः संग्रहः—'खरो[1] विवारश्वासाः अघोषाश्च। हशः संवारनादाः घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमाः यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थाः शलश्च महाप्राणाः' इति। नन्विह बाह्ययत्नप्रपञ्चनं व्यर्थम्, तुल्यास्यसूत्रे प्रयत्नशब्दस्य आभ्यन्तरयत्नमात्रपरत्वादत आह—**बाह्यप्रयत्नाश्चेति**। यद्यपीति समुदायः शङ्काद्योतकः। परिहरति—**तथापीति**। सवर्णसंज्ञाप्रस्तावे बाह्ययत्नानामुपयोगाभावेऽपि 'स्थानेऽन्तरतमः' इति वक्ष्यमाणान्तरतम्यविचारे तेषामुपयोगसत्त्वान्न वैयर्थ्यम्। इह तत्प्रपञ्चनं तुल्यास्यसूत्रे आभ्यन्तरत्वविशेषणव्यावर्त्यत्वेनोपस्थितत्वात्प्रासङ्गिकमिति भावः। उदात्तादियत्नत्रयस्य तु अज्धर्मत्वस्य प्रसिद्धत्वादिह न तद्व्यवस्थोक्ता। अथ स्पृष्टं प्रयतनं स्पर्शानामित्यादिसंदर्भे उपन्यस्तान् स्पर्शादिशब्दान् व्याचष्टे—**कादय इत्यादिना**। कः आदिः येषां ते कादयः। मः अवसाने येषां ते मावसानाः। इदं च लोकप्रसिद्धपाठापेक्षम्। **इति स्थानयत्नविवेक इति**। स्थानयत्नविवेचनं समाप्तमित्यर्थः। स्थानप्रयत्नेति प्रशब्दपाठस्तु चिन्त्यः, अविवक्षितार्थो वा प्रशब्दः।

---

त्यर्थः **अल्पेति**। अल्पासवोऽल्पप्राणाः, 'पुंस भूम्न्यसवः प्राणाः' इत्यमरः। **अनुपयुक्ता इति**। अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः। **आन्तरतम्यपरीक्षायामिति**। परीक्षा च—अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः, घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थ इत्यादिना मूले एव स्फुटं भविष्यति। **कादय इति**। लोकप्रसिद्धपाठापेक्षमिदम्। चतुर्दशसूत्र्यां

---

१ इदानीं मध्यलघुकौमुद्योस्तु 'खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च' इति लभ्यते।

रविसर्गौ। इति स्थानयत्नविवेकः। 'ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्' (वा १२०)। अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्ऌकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते—१३ **नाज्झलौ**। (१-१-१०) आकारसहितोऽच् आच्, स च हल्

---

ऋऌवर्णयोर्मूर्धदन्तात्मकभिन्नस्थानकत्वात् सवर्णसंज्ञायामप्राप्तायाम् 'ऋकारऌकारयोः सवर्णविधिः' इति तद्विधायकं वार्तिकम् अर्थतः संगृह्य पठति—**ऋऌवर्णयोर्मिथः**। ॠ च ॠ च रलौ, ऋशब्दस्य ऌशब्दस्य च ॠ इति प्रथमैकवचनम्। ऋ ऌ औ इति स्थिते ऌकारस्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः अकारः, 'उरण्रपरः' इति लपरत्वम्, ऋकारस्य यणादेशो रेफः। रलौ च तौ वर्णौ च ऋऌवर्णौ। तयोर्मिथः परस्परं सावर्ण्यं सवर्णत्वं वक्तव्यम्। तुल्यास्यसूत्रेण तदलाभादिति सूत्रकारः शिक्ष्यते। उक्तानुक्तदुरुक्तचिन्तनात्मकं हि वार्तिकम्[1]। **अकारहकारयोरिति**। उभयोः कण्ठस्थानविवृतप्रयत्नसाम्यात्सावर्ण्यं प्राप्तम्। अकारस्य कवर्गेण तु न सावर्ण्यप्रसक्तिः। कण्ठस्थानसाम्ये सत्यपि विवृतस्पृष्टप्रयत्नभेदात्। विसर्जनीयस्य तु अकारोपरि शर्षु च पाठस्योपसङ्ख्यातत्वेन विवृतत्वेऽपि तेन अकारस्य न सवर्णसंज्ञा, प्रयोजनाभावात्। ततश्च अकारस्य हकारेण सावर्ण्यं परिशिष्यत इति भावः। **इकारशकारयोरिति**। तालुस्थानविवृतप्रयत्नसाम्याद् उभयोः सावर्ण्यं प्राप्तम्। इकारस्य चवर्गेण यकारेण च न सावर्ण्यप्रसक्तिः, इकारस्य विवृतत्वात्, चवर्गस्य स्पृष्टत्वात्, यकारस्य ईषत्स्पृष्टत्वाच्च। अत इकारस्य शकारेण सावर्ण्यं परिशिष्यत इति भावः। **ऋकारषकारयोरिति**। मूर्धस्थानविवृतयत्नसाम्याद् उभयोः सावर्ण्यं प्राप्तम्। ऋकारस्य टवर्गेण रेफेण च न सावर्ण्यप्रसक्तिः, ऋकारस्य विवृतत्वात्, टवर्गस्य स्पृष्टत्वात्, रेफस्य ईषत्स्पृष्टत्वाच्च। अतः ऋकारषकारयोः सावर्ण्यं परिशिष्यत इति भावः। **ऌकारसकारयोरिति**। दन्तस्थानविवृतप्रयत्नसाम्यादुभयोः सावर्ण्यं प्राप्तम्। ऌकारस्य तवर्गेण लकारेण च न सावर्ण्यप्रसक्तिः, ऌकारस्य विवृतत्वात्, तवर्गस्य स्पृष्टत्वात्, लकारस्य ईषत्स्पृष्टत्वाच्च। अतः ऌकारस्य सकारेण सावर्ण्यं परिशिष्यते।

---

भावसानत्वायोगात्। **कपाभ्यां प्रागिति**। एतच्चोपलक्षणम्। खफाभ्यां प्रागित्यपि बोध्यम्। **अर्धविसर्गेति**। सादृश्यमुच्चारणे लेखने च बोध्यम्। **ऋऌवर्णयोरिति**। 'ऋत्यकः' इति प्रकृतिभावः। विग्रहस्तु—ॠ च ऌवर्णश्च ऋऌवर्णौ तयोरित्येके। मनोरमायां तु—ॠ च ॠ च रलौ, तौ च तौ वर्णौ चेत्यादि स्थितम्। **नाऽऽज्झलौ**। **आकारसहित इति**। 'कालसमयवेलासु'

---

[1] उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः॥ पाराशरोपपुराणे।

चेत्येतौ मिथः सवर्णौ न स्तः। तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतषु परेषु यणादिकं न। अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात्। तथा हि—**१४ अणुदित्सवर्णस्य चाप्रत्ययः।** (१-१-६९) प्रतीयते विधीयत इति प्रत्ययः, अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्राण् परेण

---

एवं प्राप्ते प्रतिषेधति—**नाज्झलौ**। आसहितः अच् आच्। शाकपार्थिवादित्वात्सहित-शब्दस्य लोपः। स च हल्च आज्झलौ। तुल्यास्यसूत्रात्सवर्णमित्यनुवर्तते। तच्च पुँल्लिङ्गद्विवचनान्ततया विपरिणम्यते। तदाह—**आकारसहितोऽजित्यादिना।** ननु किमर्थोऽयं प्रतिषेध इत्यत आह—**तेनेत्यादि यणादिकं नेत्यन्तम्।** तेन प्रतिषेधेन। आदिना सवर्णदीर्घसंग्रहः। दधीति इकारस्य हकारे षकारे सकारे च परे 'इको यणचि' इति यणादेशः, शीतलमित्यत्र शकारे परे सवर्णदीर्घश्च न भवतीत्यर्थः। नन्वस्तु अकारहकारयोः इकारशकारयोः ऋकारषकारयोः लृकारसकारयोश्च सावर्ण्यम्। तथापि दधि षष्ठमित्यादौ यणादिकं न प्रसक्तम्, अच्परकत्वाभावादित्यत आह—**अन्यथेत्यादिना।** अन्यथा–तेषां सावर्ण्याभ्युपगमे, दीर्घादीनामिव हकारादीनाम-प्यच्त्वं स्यादित्यन्वयः। ननु वर्णसमाम्नाये हकारादीनामकारचकारमध्यगत्वाभावात् कथमच्त्वमित्यत आह—**ग्रहणकशास्त्रबलादिति।** गृह्णन्त्यकारादयः स्वसवर्णान् येन तद् ग्रहणकम्। करणे ल्युट्, स्वार्थे कः। अणुदित्सूत्रादित्यर्थः। यद्यप्यच्छब्द-वाच्यत्वं वार्णसमाम्नायिकानामेव वर्णानाम्, तथापि इको यणचीत्यादौ अच्शब्देन अकारादिषूपस्थितेषु तैः अणुदित्सूत्रबलेन स्वस्वसवर्णानामाकारादीनामुपस्थितिरस्ति। ततश्चात्राच्पदवाच्याकारादिवाच्यत्वादाकारादीनामिव हकारादीनामपि लक्षणया अच्छब्देन ग्रहणं स्यादित्यर्थः। न च इको यणचीत्यादौ शक्यार्थमादायैवोपपत्तेर्न लक्षणासंभवः, अणुदित्सूत्रं तु अस्य च्वावित्यादौ सावकाशमिति वाच्यम्। ल्वादिभ्य इत्यादिनिर्देश-बलेन प्रत्याहाराणां स्ववाच्यवाच्येषु लक्षणावश्यंभावात्। तथा च अच्त्वं स्यादित्यस्य। अच्पदबोध्यत्वं स्यादित्यर्थः।

---

इत्यादिनिर्देशा आकारप्रश्लेषे लिङ्गम्। **यणादिकमिति।** ब्दे सवर्णदीर्घं आदिशब्दार्थः। इह असेधदित्यादौ 'हो ढः' इति ढत्वं नेत्यपि सुवचम्। इण इति सस्य षत्वमपि नेति तु न सुवचम्, ढत्वं प्रति तस्यासिद्धत्वादिति दिक्॥— **अन्थेति।** 'नाज्झलौ' इत्यस्यानारम्भे। **ग्रहणकशास्त्रबलादिति।** अयं भावः—दीर्घादीनामिव हकारादीनामप्यकारवाच्यत्वेऽभ्युपगते ह्यच्त्वं स्यात्, प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति। **अविधीयमानोऽणिति।** तेन 'इदम इश्' इत इत्यत्र त्रिमात्र ईकारो न भवति। **उदिच्चेति।** इह

णकारेण । कु चु टु तु पु एते उदितः । तदेवम् अ इत्यष्टादशानां संज्ञा । तथे-कारोकारौ । ऋकारस्त्रिंशतः । एवम् लृकारोऽपि । एचो द्वादशानाम् । एदैतोरोदौ-तोश्च न मिथः सावर्ण्यम् । 'ऐऔच्' इति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्वि-

---

किं तद्ग्रहणकशास्त्रमित्याकाङ्क्षायां तदुपपादनं प्रतिजानीते—**तथा हीति** । **अणुदित्सवर्णस्य** । प्रत्ययशब्दस्य अणादिप्रत्ययपरत्वे 'त्यदादीनामः' 'इदम इश्' इत्यादीनां पर्युदासो न स्यादित्यतो व्याचष्टे—**प्रतीयत इति** । उत् इत् यस्य स उदित्, कु चु टु तु पु इत्यादिः । चकारास्त्वं रूपमित्यतः स्वमित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । तदाह—**अविधीयमान इत्यादिना** । अणिति पूर्वेण परेण वा प्रत्याहार इति संशये निर्धारयति—**अत्रेति** । अस्मिन्नेव सूत्रे अण् परेण णकारेण । इतरत्र तु 'अणोऽप्रगृह्यस्य' इत्यादौ पूर्वेणैवेत्यर्थः । अत्र च आचार्य-पारंपर्योपदेशरूपं व्याख्यानमेव शरणम् । एवं चाणुदित्सूत्रेणानेन अकारादि-भिश्चतुर्भिर्दीर्घप्लुतानामिव सवर्णभूतहकारादीनामपि ग्रहणादच्त्वात्तेषु परेषु इकारस्य यणादिकं स्यादिति नाज्झलाविति प्रतिषेध आवश्यक इति स्थितम् । अणुदित्सूत्रस्य फलमाह—**तदेवमिति** । तत्–अणुदित्सूत्रम्, एवम्–वक्ष्यमाणप्रकारेण, फलतीत्यर्थः । **त्रिंशत इति** । ऋलृवर्णयोर्मिथः सवर्णतया ऋकारेण स्वाष्टादशभेदानाम् लृकारीय-द्वादशभेदानां च ग्रहणादिति भावः । **लृकारोऽपीति** । ऋकारस्यापि लृकारसवर्ण-त्वादिति भावः । ननु एकारेण ऐकारप्रपञ्चोऽपि गृह्येत, ऐकारेण एकारप्रपञ्चश्च । तथा ओकारेण औकारप्रपञ्चो गृह्येत, औकारेण ओकारप्रपञ्चश्च । ततश्च एचश्चतुर्विंशतेः संज्ञाः स्युरित्येवं वक्तव्यम् । न तु द्वादशानामित्यत आह—**एदैतोरिति** । कुतो न सावर्ण्यमित्यत आह—**ऐऔजिति** । यदि ह्येदैतोः ओदौतोश्च परस्परं सावर्ण्यं स्यात्, तर्हि एकारेण ऐकारप्रपञ्चस्य ओकारेण औकारप्रपञ्चस्य च आकारादिभिर्दीर्घ-प्लुतानामिव ग्रहणसम्भवाद् 'ऐऔच्' इति सूत्रं नारभ्येत । आरभ्यते च । अतः

---

अविधीयमान इति न संबध्यते, उदित्करणसामर्थ्यात् । तेन विधीयमानोऽप्युदि-त्सवर्णान्गृह्णात्येव । 'कुहोश्चुः' जगाद जगदे । **परेण णकारेणेति** । व्याख्यानतो विशेषप्रतिपत्तेः । 'उपसर्गादृति' 'ऋत उत्' इत्यादौ तपरकरणाल्लिङ्गाच्च । यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात्, ऋकारस्यानण्त्वेन सवर्णाग्राहकत्वात् । एवं च 'तपरत्वाद्दीर्घे न, उप ऋकारीयति' इत्यादिवक्ष्यमाणग्रन्थोऽपि संगच्छते । **एवं लृकारोऽपीति** । त्रिंशतः संज्ञेत्यनुषज्यते । एतच्च न्यायसाम्यादुक्तम् । वस्तुत लृकारस्य ऋकारग्राहकत्वं न कुत्राप्युपलभ्यते । **सूत्रारम्भसामर्थ्यादिति** । सति तु सावर्ण्ये एकारेण ऐकारग्रहणादोकारेण चौकारग्रहणात् 'ऐऔच्' इति सूत्रारम्भो

णतः संज्ञाः स्युरिति नापादनीयम्। 'नाज्झलौ' (सू १३) इति सावर्ण्यनिषेधो

एदैतोरोदौतोश्च न परस्परं सावर्ण्यमिति विज्ञायत इत्यर्थः। अच् इच् एच् इत्यादि-प्रत्याहारास्तु ङकारेणैव निर्वाह्याः। न च 'एचोऽयवायावः' इत्यत्र यथासंख्यार्थमैऔजिति सूत्रमस्त्विति वाच्यम्। तत्र 'स्थानेऽन्तरतमः' इति सूत्रेणैव निर्वाहस्य वक्ष्यमाणत्वादिति भावः। वस्तुतस्तु, 'ऐऔच्' इति सूत्राभावे 'वृद्धिरादैच्' 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' 'प्लुतावैच इदुतौ' इत्यादौ एङ्ग्रहणापत्तौ एदोतोरपि ग्रहणे प्रसक्ते तन्निवृत्त्यर्थमैच्प्रत्याहार आवश्यक इति तदर्थमैऔजित्यारम्भणीयमेव। अत ऐऔजिति सूत्रारम्भस्य चरितार्थत्वाद् एदैतोरोदौतोश्च मिथः सावर्ण्याभावसाधकत्वकथनमनुपपन्नमेव। एदैतोरोदौतोश्च मिथः सावर्ण्याभावस्तु वृद्धिरादैजित्यादौ क्वचिदैज्ग्रहणात् 'अदेङ्गुणः' इत्यादौ क्वचिदेङ्ग्रहणाच्च सुनिर्वाहः। अन्यथा सर्वत्र एङ्ग्रहणमेव ऐज्ग्रहणमेव वा कुर्यात्। तावतैव चतुर्णां ग्रहणसम्भवात्। अत एच् एङिति प्रत्याहारद्वयग्रहणसामर्थ्यादेदैतोरोदौतोश्च न मिथः सावर्ण्यम्। 'प्लुतावैच इदुतौ' 'एचोऽप्रगृह्यस्य' इति प्रत्याहारद्वयग्रहणवैयर्थ्याच्चेति शब्देन्दुशेखरे प्रपञ्चितम्। **तेनेति**। एदैतोरोदौतोश्च मिथस्सावर्ण्याभावेनेत्यर्थः। **नापादनीयमिति**। नाशङ्कनीयमित्यर्थः। एवं च एकारेण सह वर्तत इति सैः, हे सैरित्यत्र 'एङ् ह्रस्वात्' इति संबुद्धिलोपो न। ग्लावं ग्लाव इत्यत्र 'औतोऽम्शसोः' इत्यात्वं च न।

वृथा स्यादिति भावः। **नापादनीयमिति**। तेन ग्लावं ग्लाव इत्यत्र 'औतोम्शसोः' इति न प्रवर्तत इति मूल एव स्फुटीभविष्यति। **यद्यपीति**। ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः। एतच्च 'अकः सवर्णे दीर्घः' इत्यत्र व्युत्पादयिष्यामः। **आक्षरेति**। अक्षराणां समाम्नाय उपदेशसूत्राणि, तत्र भवा आक्षरसमाम्नायिकाः। 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञ्। **हो ढ इति ढत्वं न भवतीति**। यद्याप्याकारप्रश्लेषाभावे संयोगान्तलोप एव प्राप्नोति, न तु ढत्वम्, तस्यासिद्धत्वात्, अतोऽत्र संयोगान्तलोपो न भवतीति वक्तुमुचितम्, तथापि 'कार्यकालं संज्ञापरिभाषम्' इति पक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः प्रवृत्तेरन्तरङ्गे ढत्वे कर्तव्ये बहिरङ्गः संयोगान्तलोपोऽसिद्ध इति मत्वेदमुक्तमित्येके। अन्ये तु 'संज्ञापूर्वको विधिरनित्यः' इति लोपस्य वारणं कथंचित्कर्तुं शक्यमित्याशयेन ढत्वं नेत्युक्तमित्याहुः। विश्वपाभिरित्यत्रेत्युपलक्षणम्। विश्वपाः विश्वपाभ्यामित्यादावपि न भवति। 'हो ढः' इत्युपलक्षणम्। पृथगायुरित्यादौ 'झयो हः-' इत्याकारस्य घकारो नेति दिक्। यदि तु 'विवृतमूष्मणाम्' इत्यत्र 'ईषत्स्पृष्टम्' इत्यत ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य ईषद्विवृतमूष्मणां विवृतं स्वराणामिति प्रयत्नभेदो व्याख्यायते, तदा 'नाज्झलौ' इति

यद्यप्याक्षरसमाम्नायिकानामेव, तथापि हकारस्याऽऽकारो न सवर्णः । तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन 'विश्वपाभिः' इत्यत्र 'हो ढः' ( सू ३२४ ) इति ढत्वं न भवति । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञाः ।

---

स्यादेतत् । हकारस्य आकारस्य च सवर्णसंज्ञा स्यात्, स्थानप्रयत्नसाम्यात्, अज्झलामेव सावर्ण्यनिषेधाद् वार्णसमाम्नायिकानामेव वर्णानाम् अज्झल्शब्दवाच्यत्वाद्, आकारप्रश्लेषे च प्रमाणाभावात् । न चाकारस्याच्त्वात् तेन आकारस्यापि अणुदित्सूत्रेण ग्रहणादाकारहकारयोर्न सावर्ण्यमिति वाच्यम् । ग्रहणकसूत्रं हि लब्धात्मकमेव सद् 'अस्य च्वौ' इत्यादौ प्रवृत्तिमर्हति । नाज्झलाविति प्रवृत्तिदशायां च ग्रहणकशास्त्रं न लब्धात्मकम् । तद्धि सवर्णपदघटितं सवर्णपदार्थावगमोत्तरमेव लब्धात्मकम् । सवर्णसंज्ञाविधायकं च तुल्यास्यसूत्रं सामान्यतः स्वार्थं बोधयदपि नाज्झलावित्यपवादविषयं परिहृत्य तदन्यत्रैव पर्यवसन्नं स्वकार्यक्षमम् । तदुक्तम्—'प्रकल्प्यापवादविषयमुत्सर्गोऽभिनिविशते' इति । उक्तं च भाष्ये—'वर्णानामुपदेशस्तावत् । उपदेशोत्तरकाला इत्संज्ञा । इत्संज्ञोत्तरकालः आदिरन्त्येनेति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । तदुत्तरकालमणुदित्सूत्रमित्येतेन समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति' इति । अन्यत्र 'अस्य च्वौ' इत्यादावित्यर्थः । अत्र भाष्ये प्रत्याहारोत्तरकाला सवर्णसंज्ञेत्यनेन नाज्झलाविति निषेधसहितः सावर्ण्यविधिर्विवक्षितः, केवलसावर्ण्यविधेः प्रत्याहारानपेक्षत्वेन प्रत्याहारोत्तरकालिकत्वनियमासम्भात् । तथा चाणुदित्सूत्रस्य नाज्झलाविति निषेधसहिततुल्यास्यसूत्रप्रवृत्तेः प्रागलब्धात्मकत्वात् तेन नाज्झलावित्यत्र अज्ग्रहणेन सवर्णानां ग्रहणाभावात् सावर्ण्यविधिनिषेधाभावाद् आकारहकारयोः सावर्ण्यं स्यादिति शङ्कते—**नाज्झलाविति सावर्ण्येत्यादिना** । यद्यपीति सम्भावनायाम् । अक्षरसमाम्नायश्चतुर्दशसूत्री । तत्र भवा आक्षरसमाम्नायिकाः । 'बह्वचोऽन्तोदात्तात्' इति ठञ् । न च नाज्झलाविति प्रवृत्तिदशायामणुदित्सूत्रप्रवृत्त्यभावेऽपि तत्र अजित्यनेन लक्षणया दीर्घप्लुतानां ग्रहणमस्तु । प्रत्याहाराणां स्ववाच्यवाच्येषु लक्षणाया अनुपदमेव प्रपञ्चितत्वादिति वाच्यम् । स्ववाच्यवाच्येषु हि प्रत्याहाराणां लक्षणा । न चात्राच्छब्दवाच्याकारादिवाच्यता दीर्घप्लुतानामस्ति । अणुदित्सूत्रस्येदानीमप्रवृत्तेरिति भावः । परिहरति—**तथापीति** । वार्णसमाम्नायिकानामेव नाज्झलाविति निषेध

---

सूत्रं व्यक्तुं शक्यमित्याकरे स्थितम् । **अननुनासिकास्ते इति** । ये त्वाक्षरसमाम्नायिका अणस्त एव सवर्णानां संज्ञा भवन्तीति भावः । एवं च रेफो हकारश्च अण्प्रत्याहारान्तर्गतोऽपि न कस्यचित्संज्ञा, तत्सवर्णस्यान्यस्याभावादित्यवगन्तव्यम् ॥

---

१ 'तत्राप्याकारस्य' ( ख )।

**१५ तपरस्तत्कालस्य** । (१-१-७०) तः परो यस्मात्स तात्परश्चोच्चार्यमाण-समकालस्यैव संज्ञा स्यात्। तेन 'अत्' 'इत्' इत्यादयः षण्णां षण्णां संज्ञाः। 'ऋत्' इति द्वादशानाम्। **१६ वृद्धिरादैच्।** ( १-१-१ ) आदैच्च वृद्धिसंज्ञः स्यात्।

---

इत्यभ्युपगमेऽपि हकारस्य आकारो न सवर्ण इत्यर्थः। कुत इत्यत आह—**तत्राकारस्यापीति**। अपिशब्दो व्युत्क्रमः। तत्र—नाज्झलाविति सूत्रे, आसहितः अच् आच् इत्याकारस्यापि सवर्णदीर्घेण प्रश्लिष्टत्वादित्यर्थः। नन्वस्तु हकारस्य आकारस्य च सावर्ण्यम्, किं तत्प्रतिषेधार्थेन आकारप्रश्लेषेणेत्यत आह—**तेनेति**। तेन—हकारस्य आकारस्य च सावर्ण्यप्रतिषेधेन, हकारेण आकारस्य ग्रहणाभावाद् विश्वपाभिरित्यत्र 'हो ढः' इति हकारस्य विधीयमानं ढत्वं पकारादाकारस्य न भवति। आकारप्रश्लेषाभावे तु तस्य हकारस्य च सावर्ण्यसत्त्वाद् हकारेण आकारस्य च ग्रहणात् तस्य ढत्वं स्यादित्यर्थः। अत्र ढत्वस्यासिद्धत्वात् संयोगान्तलोप एवापादनीय इति नवीनाः। 'कालसमयवेलासु तुमुन्' इति सूत्रे वेलास्विति लकारादाकारस्य निर्देशो नाज्झलावित्यत्र आकारप्रश्लेषे प्रमाणम्। अन्यथा तत्र ढत्वस्य संयोगान्तलोपस्य वा आपत्तौ आकारो न श्रूयेतेत्यलम्। ननु ग्रहणकसूत्रे अज्ग्रहणमेव क्रियताम्। अणुदित्सवर्णस्येति किमण्ग्रहणेन, हयवरलानां सवर्णाभावेन तेषु ग्रहणकशास्त्रस्य व्यर्थत्वादित्यत आह—**अनुनासिकेति**। **तेनेति**। उक्तद्वैविध्येन सवर्णत्वाद् अननुनासिकास्ते यवलाः प्रत्येकं द्वयोर्द्वयोः संज्ञाः। अनुनासिकास्तु यवला अननुनासिकानामपि न संज्ञाः, भेदका गुणा इत्याश्रयणाद् वर्णसमाम्नाये अननुनासिकानामेव तेषां पाठाच्च। एवं च यवलसंग्रहार्थं ग्रहणकसूत्रे अज्ग्रहणमपहाय अण्ग्रहणमिति भावः।

---

**स च तात्परश्चेति**। तन्त्रादिना उभयं विवक्षितमिति भावः। **वृद्धिरादैच्**। आच्च ऐचेति इतरेतरयोगद्वन्द्वः, 'सुपां सुलुक्–' इति औङः सुलुग्वा। यद्वा समाहारद्वन्द्वः। नचैवं 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच् स्यादिति वाच्यम्। समासान्तविधेरनित्यत्वात्। तत्र च प्रमाणं समासेषु वक्ष्यामः। अथवा 'आद्' इत्यसमस्तमेवास्तु। वृद्धिशब्दस्तन्त्रेणावृत्त्या वा योजनीयः। अयस्मयादित्वेन भत्वाच्चोः कुर्न। ऐजिह द्विमात्र एव, तात्परत्वात्, तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न। वृद्धिप्रदेशाः 'वृद्धिरेचि' इत्यादयः। **अदेङ् गुणः**। तपरकरणमिह सर्वार्थम्। तेन गङ्गोदकमित्यत्र त्रिमात्रो न। तरतीत्यत्र त्वकार एव, नतु कदाचिदाकारः। नच प्रमाणात आन्तर्येण नियमसिद्धिः। रपरत्वे कृते एकस्याध्यर्धमात्रत्वाद् अपरस्यार्धतृतीयमात्रत्वात्। गुणप्रदेशास्तु 'आद्गुणः', 'अतो गुणे' इत्यादयः। **भूवादय इति**। भूश्च वाश्च भूवाविति द्वन्द्वः, आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः, आदिश्च

ग्रहणकसूत्रे अण् सवर्णानां ग्राहक इति स्थितम् । एवं सति अत् इत् उत् इत्यादितपराणामप्यणां स्वस्वसर्वसवर्णग्राहकत्वे प्राप्ते इदमारभ्यते—**तपरस्तत्कालस्य** । तपर इत्यावर्तते । प्रथमतपरशब्दः तः परः यस्मादिति बहुव्रीहिः । द्वितीयस्तु तात् पर इति पञ्चमीसमासः । ग्रहणकसूत्रादणित्यनुवर्तते । तस्य तपरत्वेन उच्चार्यमाणवर्णस्य काल इव कालो यस्येति बहुव्रीहिः । ऊकालः, उष्ट्रमुख इत्यादिवत् समासः । एवं च 'अत्' 'इत्' इत्याद्यात्मकः अण् तपरत्वेन उच्चार्यमाणः स्वीयकालसदृशकालस्य संज्ञा स्यादित्यर्थः । तत्र अत् इत् उत् ऋत् इत्येतेषां तपराणां ह्रस्वाकारादीनामणां तत्तत्कालाः तत्तद्ध्रस्वप्रपञ्चाः । एत्, ऐत्, ओत्, औत् इत्येतेषां तु तपराणामेकारादीनां तत्कालाः तत्तद्दीर्घप्रपञ्चाः । तत्र ह्रस्वाकारादीनां तपराणां तत्तद्ध्रस्वप्रपञ्चवाचकत्वस्य, एकारादीनां च दीर्घाणां तपराणां स्वस्वदीर्घप्रपञ्चवाचकत्वस्य लोकसिद्धत्वात् 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन सूत्रमिदं नियमार्थं सम्पद्यते । अण् तपरश्चेत् तत्कालस्यैव सवर्णस्य ग्राहकः । न त्वतत्कालस्येति । एवं च अतत्कालनिवृत्त्यात्मकपरिसंख्यार्थमिदं सूत्रम् । वैयाकरणास्तु परिसंख्याविधिमेव नियमविधिरिति व्यवहरन्ति । तदिदं सर्वमभिप्रेत्य व्याचष्टे—**तः परो यस्मादित्यादिना** । नियमविधानस्य फलमाह—**तेनेत्यादिना** । तेन-नियमविधानेन । आदिना लृत् इत्यादिसंग्रहः । अत्, इत्, उत्, लृत्, एत्, ऐत्, ओत्, औत्, इत्येते अष्टौ तपराः अणः स्वस्वसमानकालानां षण्णां षण्णामेव संज्ञाः, न त्वतत्कालानामित्यर्थः । **ऋदिति द्वादशानामिति** । ऋलृवर्णयोरिति सावर्ण्यविधानादिति भावः । नन्वेवं लृदित्यपि द्वादशानां ग्रहणं स्यात् । तथा च 'पुषादिद्युताद्यॢदितः' इत्यादिविधय ऋदित्स्वपि प्रवर्तेरन्निति चेन्न, ऋदित्यनेन लृप्रपञ्चस्य ग्रहणेऽपि क्वचित् लृदिद्ग्रहणबलेन लृ इत्यनेन ऋप्रपञ्चस्य ग्रहणाभावात् । अन्यथा ऋतो ङीन्यादौ क्वचिद् ऋद्ग्रहणस्य पुषादिद्युताद्यॢदित इत्यादौ क्वचिद् लृदिद्ग्रहणस्य च वैयर्थ्यापत्तेः, प्रथमातिक्रमणे कारणाभावेन सर्वत्र ऋदिद्ग्रहणस्यैव कर्तुं शक्यत्वात् । इदमेवाभिप्रेत्य ग्रहणकसूत्रे ऋदिति द्वादशानामित्येवोक्तम्, नतु लृदपीति । अत्र च तः परो यस्मादिति बहुव्रीहेः अत्, इत्, उत् इत्याद्युदाहरणम् । तात्पर इति पञ्चमीसमासस्य तु वृद्धिरादैजित्यैकार उदाहरणम् । आत् ईत्, ऊत् इत्यादि तु न तपरसूत्रस्योदाहरणम् । आकारादिषु हि तपरसूत्रमपूर्वविधानार्थम्, उत नियमार्थम्? नाद्यः, तपरसूत्रे ग्रहणकसूत्रादणित्यनुवृत्तेः । तत्र

१—ह्रस्वाकारादीनामणां कालास्तत्कालाः । इति (क)

**१७ अदेङ् गुणः।** (१-१-२) अदेङ् च गुणसंज्ञः स्यात्। **१८ भूवादयो धातवः।** (१-३-१) क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः। **१९ प्राग्रीश्वरान्निपाताः**

---

अणित्यस्य उक्तरीत्या वर्णसमाम्नायपठितवर्णमात्रपरत्वात् । तपरसूत्रे अण्ग्रहणानुवृत्त्यभावेऽपि जातिपक्षे आकारादिभिर्दीर्घैः स्वस्वसमानकालिकप्रपञ्चस्य ग्राह्यतया लोकत एव सिद्धत्वेन तेषु तपरसूत्रप्रवृत्तेर्व्यर्थत्वात् । न द्वितीयः । उक्तरीत्या ग्रहणकसूत्रस्य वार्णसमाम्नायिकवर्णमात्रविषयतया आकारादिषु तस्य प्रवृत्त्यसम्भवेन तपरसूत्रस्य तेष्वतत्कालव्यावृत्तिफलकतन्नियमनार्थत्वानुपपत्तेः, सिद्धे सत्यारम्भस्यैव नियमार्थत्वात्। एवं च आत्, ईत् इत्यादि तपरकरणमसन्देहार्थमेवेत्यास्तां तावत्। तदेवं वृत्तः प्रत्याहारप्रपञ्चः, ग्रहणकशास्त्रप्रपञ्चश्च ।

इदानीं संज्ञान्तराणि विधास्यन् वृद्धिसंज्ञां तावदाह—**वृद्धिरादैच्** । यद्यपि पाणिनीयाष्टाध्याय्यामिदमादिमं सूत्रम्, तथापि नेदमादावुपन्यस्तम्, अस्य सूत्र-

---

आदिश्च आदी, भूवौ आदी येषामिति विग्रहः, भूप्रभृतयो वासदृशाः, सादृश्यं च क्रियावाचित्वेनेत्यभिप्रेत्याह—**क्रियावाचिन इति** । क्रियावाचिन इति किम्, याः पश्यसीत्यादौ धातुत्वं मा भूत्। सति हि तस्मिन् 'आतो धातोः' इत्याकारलोपः स्यादिति स्थितं मनोरमायाम्। भ्वादयः किम्, हिरुक् पृथग् इत्याद्यव्ययानां शिश्ये इति भावार्थतिङन्तस्य च मा भूत्। स्तन्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते। चुलुम्पादीनां 'बहुलमेतन्निदर्शनम्' इति गणसूत्रेण संग्रहः । **प्राग्रीश्वरात्**—। रेफविशिष्टग्रहणं किम्, ईश्वरे तोसुन्कसुनौ' इत्यस्य व्याप्तिन्यायेनावधित्वं मा भूत्। यदि तु प्रत्यासत्त्यैव 'अधिरीश्वरे' इत्यस्यावधित्वसिद्धिरित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्तु । **चादयः** । अद्रव्यार्थाः किम्, पशुः । लिङ्गसंख्यान्वितं द्रव्यम् । इह तु स्यादेव—'लोधं नयन्ति पशु मन्यमानाः' । पशु इति सम्यगर्थे । **गतिश्च** । उपसर्गसंज्ञाया समावेशार्थश्चकारः । अन्यथा 'आ कडारात्—' इति पर्यायः स्यात्। तत्फलं तु प्रणेयमित्यादौ 'उपसर्गादसमासेऽपि—' इति णत्वम्, 'गतिकारक—' इति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेति दिक् ॥—**निस्निर्दुस्दुर् इति** । 'उपसर्गस्यायतौ' इति निर्दुरोर्लत्वम्, निलयते, दुलयते। निसो दुसश्च रुत्वस्यासिद्धत्वाल्लत्वाभावः, निरयते, दुरयते । **न वेति विभाषा** । नेति प्रतिषेधो वेति विकल्पस्तदाह—**निषेधविकल्पयोरिति** । 'विभाषा श्वेः' इत्यादिषु प्रतिषेधविकल्पावुपतिष्ठेते, तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते। शुशाव शिश्वायेत्यत्राप्राप्तौ विकल्पः, शुशुवतुः शिश्वियतुरित्यादौ तु 'वचिस्वपि—' इति नित्यप्राप्ताविति विवेकः ॥ अत्रेदं बोध्यम्—इतिशब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यते, स च पदार्थविपर्यासकृत्, तेन निषेधो

स्य तपरकरणेन प्रत्याहारगर्भितत्वेन च ग्रहणकशास्त्र-नियमार्थतपरसूत्र-प्रत्याहारसूत्र-प्रवृत्त्युत्तरप्रवृत्तिकतया प्रत्याहारशास्त्रग्रहणकशास्त्रप्रपञ्चनिरूपणात् प्रागुपन्यासानर्हत्वात्। न च सूत्रकृता अयमेव पाठक्रमः कुतो नाद्रियत इति वाच्यम्। स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात्। आच्च ऐचेति समाहारद्वन्द्वः। 'द्वन्द्वाच्चुदषहान्तात्' इति समासान्तस्तु न, अत एव निर्देशात् समासान्तविधेरनित्यत्वात्। 'चोः कुः' इति पदान्ते विहितं कुत्वमपि न, 'अयस्मयादीनि च्छन्दसि' इति भत्वात्। वृद्धिरादजदङ् इति संहितापाठपक्षे चकारस्य 'झलां जशोऽन्ते' इति पदान्ते विहितं जश्त्वं तु भवत्येव, 'उभयसंज्ञान्यपि च्छन्दसि दृश्यन्ते' इति वचनात् 'छन्दोवत्सूत्राणि भवन्ति' इति छान्दसविधीनां सूत्रेष्वपि प्रवृत्तेः। न चैवमपि पदत्वात् कुत्वं भत्वाद् जश्त्वाभावश्च कुतो न स्यादिति वाच्यम्, छन्द-

---

विकल्पश्च नवाशब्दार्थः संज्ञीति विभाषाशब्दार्थौ विकल्पः संज्ञा। उभयत्र विभाषार्थं चेदं सूत्रम्। प्राप्तविभाषायामप्राप्तविभाषायां च नास्योपयोगः। प्राप्तविभाषायां भावांशस्य सिद्धत्वेन विभाषाश्रुत्या पक्षे भवतीति भावांशमनूद्य पक्षे न भवतीत्यभावांशमात्रकरणात्, अप्राप्तविभाषायां तु अभावांशस्य सिद्धत्वेन पक्षे न भवतीत्यभावांशमनूद्य पक्षे भवतीति भावांशमात्रकरणात्। 'विभाषा श्वेः' इत्युभयत्र विभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव संप्रसारणविकल्पः स्यात्, कित्सु तु यजादित्वाद् 'वचिस्वपि–' इति नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः स्यात्, नतु पित्सु। नच पित्सु विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विवति वाच्यम्, वैरूप्यलक्षणवाक्यभेदप्रसङ्गात्। संज्ञाकरणे तु श्रुतक्रमानुरोधेन नेति प्रतिषेधः प्रथमं कित्सु प्रवर्तते, ततः किदकिद्रूपे सर्वस्मिन् लिटि एकरूपं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव प्रवर्तते। इतीति किम्, घुसंज्ञावत् 'स्वं रूपम्–' इति वचनाच्छब्दस्य संज्ञा मा भूत्। तथाहि सति 'विभाषा श्वेः' इत्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात्। इतिशब्दे तु सति अर्थः संज्ञीति लभ्यते। तथाहि—लोके ह्यर्थप्रधानः शब्दः, 'गौरित्ययमाह' इत्यादौ तु शब्दस्वरूपपरः संपद्यते। व्याकरणे तु 'स्वं रूपम्–' इति परिभाषणात्स्वरूपपरत्वमौत्सर्गिकम्। इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः॥ इदमेवेतिशब्दस्य पदार्थविपर्यासकत्वं नाम। संज्ञात्वमर्थस्यैव नतु विभाषाशब्दस्येति व्याख्यानस्य 'हृक्रोरन्यतरस्याम्' इत्यादौ वैरूप्योद्धारः फलम्। उभयत्रविभाषा हि तत्सूत्रम्, अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाच्च 'गतिबुद्धि–' इत्यादिना अणौ

नि दृष्टानुविधिः' इति वचनादित्यलम्। आच्च ऐच्चेतीतरेतरयोगद्वन्द्वो वा। तथा सति सौत्रमेकवचनम्। आचार्यपारंपर्योपदेशसिद्धसंज्ञाधिकारात् संज्ञेति लभ्यते। तदेतदाह-**आदैच्चेत्यादिना**। **अदेङ् गुणः**। संज्ञाप्रस्तावात् संज्ञेति लभ्यते, अच्च एङ् चेति समाहारद्वन्द्वः। तदाह—**अदेङ् चेत्यादिना**।

**भूवादयो धातवः**। भूश्च वाश्च भूवौ। आदिश्च आदिश्च आदी। प्रथम-आदिशब्दः प्रभृतिवचनः, द्वितीयस्तु प्रकारवचनः। भूवौ आदी येषां ते भूवादयः। भूप्रभृतयो वासदृशाश्च ये, ते धातुसंज्ञका इत्यर्थः। वाधातुसादृश्यं च क्रियावाच-कत्वेन। तदाह—**क्रियावाचिन इत्यादिना**। क्रियावाचिनः किम्। धातुपाठे या इत्यस्य पाठात् याः पश्यन्तीत्यत्र टाबन्तयच्छब्दस्य धातुत्वं मा भूत्। धातुत्वे हि 'आतो धातोः' इत्याल्लोपः स्यात्। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया टाब-न्तयच्छब्दस्यात्र न ग्रहणप्रसक्तिः। क्रियावाचिन इति तु वाशब्दस्य विकल्पार्थस्य निपातस्य धातुत्वनिवृत्त्यर्थम्, धातुपाठे वा इत्यस्य पाठात्। 'वा गतिगन्धनयोः', 'या प्रापणे' इत्यर्थनिर्देशस्याधुनिकत्वात्। क्रियावाचिन इत्युक्तौ तु न दोषः। वा-र्थस्य विकल्पस्य, वा भविष्यति इति वा अभवदित्येवं भूतभविष्यत्कालसंबन्धाभावेन क्रियात्वाभावादिति शब्देन्दुशेखरे स्थितम्। भ्वादयः किम्। वर्जनक्रियावाचिनो हिरुक् इत्यस्य धातुत्वं मा भूत्।

**प्राग्रीश्वरान्निपाताः**। प्रथमस्य चतुर्थपादे 'तत्प्रयोजको हेतुश्च' इत्यनन्तर-मिदं सूत्रम्। रीश्वरशब्दः 'अधिरीश्वरे' इति सूत्रैकदेशस्य अनुकरणम्। अनुक-रणत्वाद् नापशब्दः। अत एव प्रत्यक्षोपजीव्यत्वादिति चिन्तामणिवाक्यस्य प्रत्यक्ष-वितीति प्रतीकग्रहणं तद्व्याख्याने दृश्यते। इतः प्रभृति अधिरीश्वर इति एतत्पादीयो-परितनसूत्रे रीश्वरशब्दात् प्राक् निपातसंज्ञकाः प्रत्येतव्या इत्यर्थः। निपातपदमनुवर्तत इति यावत्। रेफविशिष्टग्रहणं किम्। 'ईश्वरे तोसुन्कसुनौ' इति तृतीयाध्यायस्थस्याव-धित्वं मा भूत्। यदि तु प्रथमातिक्रमणे कारणाभावाद् अधिरीश्वर इत्यस्यैवावधित्वम्, तदा सरेफग्रहणं स्पष्टार्थम्। **चादयोऽसत्त्वे**। चः आदिः येषां ते चादयः गणपाठ-सिद्धाः। निपाता इत्यधिकृतम्। सत्त्वशब्देन द्रव्यमुच्यते, 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः। लिङ्गसङ्ख्याकारकान्वितं द्रव्यम्। चाद्यर्थाः समुच्चयादयः यदा चादि-भिर्गम्यन्ते, तदा लिङ्गाद्यन्विता न भवन्ति। यदा समुच्चयादिशब्दगम्याः, तदा लिङ्गा-द्यन्विताः, शब्दस्वाभाव्यात्। न सत्त्वम् असत्त्वम् अद्रव्यम्, तत्र वाचकतया विद्य-

कर्तुर्णौ कर्मत्वे प्राप्ते अर्थान्तरे चाप्राप्ते तदारम्भात्। उदाहृतं च भाष्ये 'प्राप्ते तावद्–अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान्,

( १-४-५६ ) इत्यधिकृत्य। **२० चादयोऽसत्त्वे**। ( १-४-५७ ) अद्रव्यार्था-श्चादयो निपातसंज्ञाः स्युः। **२१ प्रादयः**। ( १-४-५८ ) अद्रव्यार्था प्रादयस्तथा। **२२ उपसर्गाः क्रियायोगे**। ( १-४-५९ ) **२३ गतिश्च**। ( १-४-६० ) प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः। प्र परा अप सम् अनु अव निस् निर् दुस दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप— एते प्रादयः। **२४ न वेति विभाषा**। (१-१-४४) निषेधविकल्पयोर्विभाषा संज्ञा

---

मानाश्चादयः निपातसंज्ञकाः स्युरित्यर्थः। तदाह—**अद्रव्यार्था इति**। असत्त्वे किम्—छागः[1] पशुः। चादौ पठितस्यापि पशुशब्दस्य अत्र द्रव्यवाचित्वान्न निपातत्वम्। इह तु स्यादेव 'पुष्टं पशु मन्यते'। इह पशु इति सम्यगर्थे। **प्रादयः**। असत्व इत्यनुवर्तते, निपाता इति च। तदाह—**अद्रव्येति**। **तथेति**। निपातसंज्ञका इत्यर्थः। **उपसर्गाः। गतिश्च**। सूत्रद्वयमिदं व्याख्यासौकर्यात् सहोपात्तम्। प्रादय इत्यनुवर्तते। गतिरिति बहुत्वे एकवचनमार्षम्। तदाह—**प्रादय इत्यादिना॥ क्रियायोग इति**। क्रियया अन्वये सतीत्यर्थः। निपाता इत्यप्यत्रानुवर्तते, प्राग्रीश्वरात्तदधिकारात्। ततश्च प्रादयो निपातसंज्ञका एव सन्तो गत्युपसर्गसंज्ञका भवन्ति। आकडारादिति च बाध्यते। गत्युपसर्गसंज्ञयोस्तु गतिश्चेति चकारादेव समावेशः सिध्यति। ततश्च प्रणेय-मित्यादौ उपसर्गकार्यम् 'उपसर्गादसमासेऽपि' इत्यादि सिध्यति। गतिकारकेत्यादि कार्यं च। निपातस्यानर्थकस्येत्यादि च। अथ प्रादीन् पठति—**प्र परेत्यादि**। परा इत्या-कारान्तम्। अयधातौ 'उपसर्गस्यायतौ' इति निर्दुरोर्लत्वम्—निलयते दुलयते। निसो दुसश्च 'ससजुषो रुः' इति रुत्वस्यासिद्धत्वान्न लत्वम्। निरयते दुरयते। एतदर्थमेव निस्दुसोर्निर्दुरोश्च पृथक्पाठः।

**न वेति विभाषा**। 'मेध्यः पशुरनड्वान्विभाषितः' इत्यादियाज्ञिकप्रयोगे विभाषाशब्दः केवलविकल्पे दृष्टः। इह तु शास्त्रे निषेधो विकल्पश्चेति द्वयं मिलितं विभाषाशब्दार्थ इति बोधयितुमिदमारभ्यते। इतिशब्दाभावे, स्वं रूपं शब्दस्येति नवाशब्दयोः स्वरूपपरत्वान्नवाशब्दयोर्विभाषासंज्ञेत्यर्थः स्यात्। ततश्च 'विभाषा श्वेः' इत्यादौ नवाशब्दावादेशौ स्याताम्। इतिकरणे तु नायं दोषः। इतिर्हि प्रत्येकं संबध्यते। ततश्च 'न' इति शब्देन योऽर्थो गम्यते निषेधः, 'वा' इति शब्देन योऽर्थो गम्यते विकल्पः, तदुभयस्य मिलितस्य विभाषा संज्ञा स्यादित्यर्थः फलति। एवं च नवाशब्दार्थ-

---

विकारयति सैन्धवैः। अप्राप्ते तु—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन। करोति कटं देवदत्तः, कारयति कटं देवदत्तम्,

---

१ 'छागः पशुरिति चादौ पठितस्यापि' क।

स्यात्। २५ स्वं रूपं शब्दस्याशब्द संज्ञा। ( १-१-६८ ) शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना। २६ येन विधिस्तदन्तस्य। (१-१-७२)

---

योरेव संज्ञित्वं लभ्यते, न तु नवाशब्दस्वरूपयोरिति नोक्तदोषः। तदाह—**निषेध-विकल्पयोरित्यादि**। उभयत्र विभाषार्थमिदं सूत्रम्। तथाहि—प्राप्तविभाषा, अप्राप्त-विभाषा, उभयत्र विभाषेति त्रिविधा विभाषा। प्राप्तविभाषा यथा—विभाषा जसीति। वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यत्र द्वन्द्वे चेति नित्यतया सर्वनामसंज्ञानिषेधे प्राप्ते विभाषे-यम्। अप्राप्तविभाषा यथा—तीयस्य ङित्सु विभाषेति। द्वितीयस्मै द्वितीयायेत्यादौ तीयप्रत्ययस्य सर्वादिगणे पाठाभावाद् अप्राप्तायां सर्वनामसंज्ञायां विभाषेयम्। उभयत्र

---

कारयति कटं देवदत्तेन' इति दिक्। **स्वं रूपं शब्दस्य**। 'अग्नेर्ढक्' आग्नेयम्। 'आङो यमहनः' आयच्छते, आहते। इह अग्नि, आङ्, यम्, हन्, एत एव संज्ञिनः। नन्वग्न्यादिवाच्यादङ्गारादेर्ढगादिप्रत्ययो न संभवतीति स्वरूपादेव स्यात्, 'प्रातिपदिकात्—' इत्याद्यधिकाराच्च। किमनेन सूत्रेणेति चेत्। सत्यम्। अग्न्यादिशब्दपर्यायेभ्यो वह्न्यादिभ्यो मा भूदिति सूत्रस्यारम्भः। नन्वत्र रूपग्रहणं विनापि स्वशब्देन रूपमेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वा-न्नियतोपस्थितिकत्वाच्च। अर्थो हि प्रतीतौ संबन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायना-त्साधारणः, पदज्ञानजन्यबोधविषयत्वाद्बहिरङ्गः, अनुकरणदशायामप्रतीतेरनियतो-पस्थितिकश्चेति किमनेन रूपग्रहणेन। उच्यते—इह शास्त्रे अर्थोऽपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणम्। तेन 'अर्थवद्ग्रहणे नानर्थकस्य' इत्युपपन्नं भवति। तत्रोक्तज्ञापकादर्थो ग्राह्यः, स्वमिति वचनात्स्वंरूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम्। तेन काशे कुशे इत्यत्र 'शे' इत्ययं प्रगृह्यसंज्ञो न भवति। 'प्रादूहोढ—' इत्यत्र तु 'ऊढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः' इत्यन्यत्र विस्तरः। अशब्दसंज्ञेति किम्। 'उपसर्गे घोः किः' दाधाभ्यो यथा स्यात्, घुधातोः शब्दार्थ-कान्मा भूत्। न च 'दाधा घु—' इति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यम्। 'घुमास्था—' इत्यादिना आत ईत्वविधौ संज्ञाकरणस्यावश्यकतया सामर्थ्योपक्षयात्। इह शब्दस्य संज्ञा शब्दसंज्ञेति न षष्ठीसमासः, 'कर्म करणम्' इत्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः। किं तु शब्दः-शब्दशास्त्रं तत्र संज्ञा शब्दसंज्ञेति सप्तमीसमासस्तदाह—**शब्दशास्त्रे या संज्ञेति**। **येन विधिः**। विधिरित्यत्र 'उपसर्गे घोः किः' इति कर्मणि किः प्रत्ययः। येनेति करणे तृतीया, न तु कर्तरि। तस्याः कृद्योगषष्ठ्या बाधात्। न च 'उभयप्राप्तौ कर्मणि' इति नियमेन निर्वाहः, कर्मण उक्तत्वेनोभयप्राप्त्यभावात्। तथा चात्र करणे तृतीयैव। करणं च परतन्त्रम्,

विभाषा यथा—विभाषा श्वेरिति, श्वयतेर्लिटि यङि च संप्रसारणं[1] विभाषेयम् । तत्र लिटि शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः, इत्याद्युदाहरणम् । यङि तु शोशूयते इति । अत्र यङंशे अप्राप्तविभाषैवेयम् । लिटि तु द्विवचनबहुवचनेष्वपित्सु 'वचिस्वपियजादीनां किति' इति नित्यतया सम्प्रसारणं प्राप्तम् । पित्सु त्वेकवचनेषु सम्प्रसारणं न प्राप्तमेव । 'असंयोगाल्लिट् कित्' इति कित्वस्य अपित्स्वेव प्रवृत्तेः । एवं च प्राप्तेऽप्राप्ते च आरम्भात् 'विभाषा श्वेः' इत्युभयत्र विभाषेति स्थितिः । तत्र यदि 'नवेति विभाषा' इति सूत्रं नारभ्येत, तर्हि 'अनड्वान्विभाषितः' इत्यादियाज्ञिकप्रयोग इव विभाषा श्वेरित्यत्रापि केवलविकल्पः प्रतीयेत । भावः अभावश्चेति द्वयं तावद्विकल्पः । ततश्च विभाषाश्रुतौ प्रवृत्तिस्तदभावश्चेति द्वयमपि विधेयमिति लभ्यते । तत्र यदि 'विभाषा श्वेः' इति विकल्पो विधिमुखः—लिटि श्वयतेः सम्प्रसारणं भवति न भवतीति, तर्हि[2] पित्स्वेव विकल्पस्य प्रवृत्तिः स्यात् । तत्र हि सम्प्रसारणस्य वचिस्वपीति किति विहितस्य अप्राप्तत्वेन प्रथमं भवनांशो विधेयः, तस्य पाक्षिकत्वाय न भवतीत्यपि विधेयम् । कित्सु तु प्रवृत्तिर्न स्यात् । तेषु हि वचिस्वपियजादीनां कितीति प्राप्तत्वात् प्रथमं भवनांशो न विधेयः । न भवतीत्यंश एव विधेयः । एवं च उभयांशविधेयत्वालाभात्तत्र विकल्पविधिरयं न प्रवर्तेत, तत्र नित्यमेव सम्प्रसारणं स्यात् । यदि तु विकल्पो निषेधमुखः—लिटि श्वयतेः सम्प्रसारणं न[3] भवति भवतीति, तर्हि कित्स्वेव प्रवृत्तिः स्यात् । तत्र हि वचिस्वपीति प्राप्तत्वान्न

---

कर्त्रधिष्ठितस्यैव करणत्वात् । एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते । न च 'एरच्' इत्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति, किं तु वैवक्षिकम् । तेन विशेषणमप्रधानम् । तच्चात्मान्तस्य फलितं तदेतदाह—**विशेषणं तदन्तस्येति** । **स्वस्य चेति** । 'स्वं रूपम्' इत्यनुवृत्तेरेतल्लभ्यते ।'एरच्' इकारान्तादिकाररूपाच्च धातोरच् । चयः, जयः, अयः । **समासप्रत्ययविधाविति** । कृष्णं श्रितः कृष्णश्रितः, ( 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा तत्पुरुषः ) । नेह—कृष्णमुपश्रितः । 'नडादिभ्यः फक्' नडस्य गोत्रापत्यं नाडायनः । नेह—सूत्रनडस्यापत्यं सौत्रनाडिः । अनुशतिकादित्वादुभयपदवृद्धिः । **उगिद्वर्णेति** । उगिद्वर्णग्रहणं वर्जयित्वा उगिद्वर्णग्रहणवर्जम्, 'द्वितीयायां च' इति णमुल् । महान्तमतिक्रान्ता अतिमहती, महच्छब्दस्य गौरादित्वेऽप्युपसर्जने 'षिद्गौर—' इति ङीषोऽप्रवृत्तेः 'उगितश्च' इत्युगिदन्ताद् ङीप् । 'अत इञ्' दाक्षिः । न चेह

---

१ ' संप्रसारणम्, विभाषेयम् ' क । २ ' तर्हि ' इति नास्ति क । ३ ' न भवतीति ' क ।

भवतीति प्रथमं विधेयम् । अभवनस्य पाक्षिकत्वलाभाय भवतीत्यपि विधेयम् । पित्सु तु प्रवृत्तिर्न स्यात् । तत्र सम्प्रसारणस्य अप्राप्ततया न भवतीत्यंशस्य प्रथमं विध्यनर्हत्वात् । न च पित्सु विधिमुखः किन्तु निषेधमुखः—इत्युभयथापि प्रवृत्तिरिति वाच्यम् । सकृच्छ्रुतस्य विभाषाशब्दस्य क्वचिद्विधिमुखविकल्पबोधने क्वचिन्निषेधमुखविकल्पबोधने च असामर्थ्यात् । आवृत्त्या तद्बोधने तु स एव दोषः । नवेति विभाषेत्यारम्भे तु श्रुतक्रमानुरोधेन बोधाद् नेत्यंशेन किन्तु पूर्वं निषेधः प्रवर्तते । ततः किदकिद्रूपे सर्वस्मिन् लिटि निःसम्प्रसारणतया ऐकरूप्यं प्रापिते सति, भवति न भवतीत्येकरूपेण विधिमुख एव विकल्पः प्रवर्तते । तदेवमुभयत्र विभाषार्थमिदं सूत्रम् ।

प्राप्तविभाषायां तु नास्योपयोगः, तत्र भवनांशस्य प्राप्तत्वेन विध्यनर्हत्वात् । अप्राप्तविभाषायामपि न तस्योपयोगः, तत्र अभवनांशस्य सिद्धत्वेन विध्यनर्हत्वात् । नचैवमपि 'उणादयो बहुलम्' 'हृक्रोरन्यतरस्याम्' 'छन्दस्युभयथा' 'अनुपसर्गाद्वा' इत्यादिविधिषु विभाषाशब्दाभावात् केवलविकल्पविधौ वैरूप्यं दुर्वारमिति वाच्यम्, विभाषाशब्दस्यात्र सूत्रे विकल्पवाचकशब्दोपलक्षणत्वात् । एवं च लोके ये विकल्पपर्यायाः शब्दाः, ते सर्वे अस्मिन् शास्त्रे निषेधविकल्पयोः प्रत्यायका इति सूत्रार्थपर्यवसानं बोध्यम् । भाष्ये तु विभाषादिशब्दानां लोकवदेव केवलविकल्पपरत्वेऽपि लक्ष्यानुरोधेनैव क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन विकल्पस्य प्रवृत्त्युपपत्तेरेतत्सूत्रं प्रत्याख्यातमित्यलं बहुना ।

'अग्नेर्ढक्' 'वाय्वृतुपित्रुषसो यत्' 'राज्ञो यत्' इत्यादौ लौकिकव्युत्पत्त्या उपस्थितानां वह्निवातादीनामर्थानां ढगादिप्रत्ययैः पौर्वापर्यासम्भवात् प्रातिपदिकादित्यनेनान्वयासंभवाच्च तत्तदर्थकपर्यायशब्दानां ग्रहणापत्तौ तन्नियमार्थमिदं सूत्रमारभ्यते—**स्वं रूपम्** । अग्नेर्ढगित्यादौ अग्न्यादिशब्दस्य यत् स्वरूपं श्रुतं तदेव अग्न्यादिशब्दैः प्रत्येतव्यम्, न तु तदन्यः तत्तत्पर्यायोऽपि। शब्दशास्त्रे संकेतिता वृद्धिगुणादिसंज्ञा, तत्र नायं नियम इत्यर्थः । तदाह—**शब्दस्य स्वं रूपं संज्ञीति** । बोध्यमित्यर्थः । न च 'वृद्धिः' 'गुणः' इत्यादिसंज्ञाविधिबलादेव तत्र तदर्थग्रहणं भविष्यतीति किमशब्दसंज्ञेत्यनेनेति वाच्यम् । 'उपसर्गे घोः किः' इत्यत्र 'घु शब्दे' इति घुधातुनिवृत्त्यर्थत्वात् । 'दाधाघ्वदाप्' इति संज्ञाकरणस्य 'घुमास्थागापाजहातिसां हलि' इत्यादौ आवश्यकतया सामर्थ्योपक्षयादित्यन्यत्र विस्तरः । इदं सूत्रं भाष्ये प्रत्याख्यातम् ।

यत् शब्दस्वरूपम् उपादाय यो विधिरारभ्यते, स तस्य तदन्तस्य च भवतीत्येतद्वक्तुमाह—**येन विधिः** । विधीयत इति विधिः, 'उपसर्गे घोः किः' इति दधातेः भावे किप्रत्ययः । येनेति करणे तृतीया । शास्त्रकृद् विधाने कर्ता । धातोरित्य-

**विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य । समासप्रत्ययविधौ प्रतिषेधः । उगिद्वर्णग्रहणवर्जम् । २७ विरामोऽवसानम् । ( १-४-११० )** वर्णानाम-

धिकृत्य एरजिति इकारेण करणेन धातोरच्प्रत्ययं विधत्ते पाणिनिः । करणं च व्यापारवत् । एरजित्यत्र विशेषणस्य इकारस्य पाणिनिकर्तृकविधानक्रियायां करणस्य इतरव्यावर्तनमेव व्यापारः । ततश्च विशेषणमेवात्र येनेति तृतीयान्तेनोच्यते । स्वं रूपमित्यतः **स्वमित्यनुवर्तते**, षष्ठ्यन्ततया च विपरिणम्यते । एवं च विशेषणसमर्पकः शब्दः तदन्तस्य स्वस्य च प्रत्यायक इति फलति । तदाह—**विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य चेति** । विशेषणसमर्पकः शब्दस्तदन्तस्य शब्दस्य विशेषणसमर्पकशब्दस्य च बोधकः स्यादिति यावत् । ततश्च एरजित्यत्र इकारान्ताद्धातोरच्प्रत्ययः स्यात्, इकाररूपाद्धातोश्चेति फलति । यथा—चयः, अयः । केचित्तु करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणपरत्वं यच्छब्दस्य लभ्यत इत्याहुः । तत्तु शब्देन्दुशेखरे दूषितम् । **समासेति** । वार्तिकमेतत् । समासविधौ प्रत्ययविधौ च तदन्तविधेः प्रतिषेधो वाच्य इत्यर्थः । तेन कृष्णं परमश्रित इत्यत्र 'द्वितीया श्रिते'ति समासो न भवति । सूत्रनडस्य गोत्रापत्यं सौत्रनाडिः । 'अत इञ्' अनुशतिकादीनां चेत्युभयपदवृद्धिः । अत्र 'नडादिभ्यः फक्' इति न भवति । नन्वेवं सति पचन्तमतिक्रान्ता अतिपचन्तीत्यत्र 'उगितश्च' इति उगिदन्तात्प्रातिपदिकाद् विहितो ङीप् न स्यात्, प्रत्ययविधौ तदन्तविधेः प्रतिषेधात् । तथा दाक्षिरित्यत्र 'अत इञ्' इति इञ् न स्यात् । अस्यापत्यं इरित्यत्रैव इञ् स्यादित्यत आह—**उगिदिति** । इदमपि वार्तिकम् । द्वितीयायां चेति वर्जयतेर्णमुल् । उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा समासप्रत्ययविधावित्युक्तः प्रतिषेधो भवति । उगिद्वर्णग्रहणे तु येन विधिरिति तदन्तविधिरस्त्येव । ततश्च अतिपचन्तीत्यत्र उगिदन्तप्रातिपदिकान्ताद् उगितश्चेति ङीप् । दाक्षिरित्यत्र अवर्णान्तादिञ् च सिध्यति ।

**विरामोऽवसानम्** । विरम्यते अस्मिन्निति विरामः, सामीपिकेऽधिकरणे घञ् । विरमणं क्रियाया अभावः, स च शब्दशास्त्रप्रस्तावाद् वर्णानामुच्चारणाभावात्मक इति लभ्यते । तथा च यस्मिन् वर्णे उच्चारिते सति अव्यवहितोत्तरकाले वर्णान्तराणा-

सामर्थ्यात्तदन्तविधिः, अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात् । न चैवमिञो ञित्त्वं व्यर्थमिति वाच्यम् । 'बाह्वादिभ्यश्च' इत्यत्र यथायथं वृद्ध्याद्युदात्ताभ्यां चरितार्थत्वात् । नन्वेवमपि औपगविरित्यादावेव 'अत इञ्' स्यात्, न तु दाक्षिरित्यादौ, अकारस्येहानर्थकत्वादिति चेन्न । वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः । **विरामोऽ**

१ 'विशेषणेन' क ।

भावोऽवसानसंज्ञः स्यात् । **२८ परः सन्निकर्षः संहिता ।** ( १-४-१०९ ) वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् । **२९ सुप्तिङन्तं पदम् ।** ( १-४-१४ ) सुबन्तं तिङन्तं च पदसंज्ञं स्यात् । **३० हलोऽनन्तराः संयोगः ।**

---

मुच्चारणाभावः, सः अन्त्यवर्णः अवसानसंज्ञक इत्यर्थः फलति, तदभिप्रेत्य व्याचष्टे—**वर्णानामित्यादिना** । यस्मिन्नुच्चारिते सति वर्णान्तराणाम् उच्चारणाभावः स अन्त्य-वर्णः अवसानसंज्ञक इत्यध्याहारेण विवरणं योज्यम् । यद्वा वर्णानामुच्चारणाभावः विरामः । भावे घञ् । स च किंचिद्वर्णोच्चारणोत्तरकालिक एव गृह्यते, व्याख्यानात् । अस्मिन् पक्षे किंचिद्वर्णोच्चारणोत्तरं वर्णान्तराणामुच्चारणाभावः अवसानमिति विवरण-योजना । तत्र प्रथमपक्षे खरवसानयोरित्यत्र खरि परतः रेफस्य विसर्गः, अवसाने तु रेफे स्थानिनीति योज्यम् । खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते । द्वितीय-पक्षे तु अभावस्यापि बुद्धिकृतं परत्वं बोध्यम् । **परः संनिकर्षः** । परः अतिशयितः 'दूरानात्मोत्तमाः पराः' इत्यमरः । सन्निकर्षः सामीप्यम्—अर्धमात्राधिककालव्यवधाना-भावः, अर्धमात्राकालव्यवधानस्य अवर्जनीयत्वात् । तदेतदभिप्रेत्याह—**अतिशयित इत्यादिना । सुप्तिङन्तं पदम्** । सुप् इति स्वौजसमौडिति सूत्रे सु इत्यारभ्य सुपः पकारेण प्रत्याहारः । न तु सप्तमीबहुवचनस्यैवात्र ग्रहणम्, व्याख्यानात् । सुप् च तिङ् च सुप्तिङौ, तौ अन्ते यस्य तत् सुप्तिङन्तं शब्दरूपमिति शब्दशास्त्रप्रस्तावाल्लभ्यते, अन्तशब्दश्च प्रत्येकं संबध्यते, तदाह—**सुबन्तमित्यादिना । हलोऽनन्तराः संयोगः** । अन्तरशब्दोऽत्र व्यवधाने वर्तते । 'अन्तरमवकाशावधिपरिधानान्तर्धि-भेदतादर्थ्ये' इत्यमरः । व्यवधानं च विजातीयेनैव । अविद्यमानम् अन्तरं व्यवधानं येषामिति विग्रहः । नञोऽस्त्यर्थानामिति विद्यमानपदस्य लोपः । तदाह—**अज्भिरि-त्यादिना** । तत्र हलौ च हलश्च हल इत्येकशेषः । तेन द्वयोरपि संयोगसंज्ञा लभ्यते । ततश्च शिक्षेत्यत्र 'गुरोश्च हलः' इत्यप्रत्ययः सिध्यति[1] । अत्र च समुदायस्यैव संयोग-

---

**वसानम्** । विरमणं विरामः, भावे घञ् । शब्दानुशासनप्रस्तावादाह—**वर्णाना-मिति** । संज्ञाप्रदेशाः 'वावसाने' इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव, यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम् । यद्वा विरम्यतेऽनेनेति विरामः, बाहुलकात्करणे घञ् । यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते, सोऽन्त्यवर्णः अवसानसंज्ञ इत्यर्थः । अस्मिंस्तु पक्षे 'खरवसानयोः' इत्येकापि सप्तमी विषयभेदाद्भिद्यते—खरि परे रेफस्य विसर्गः, अवसाने च ( परे ) रेफे स्थानिनीति । **सुप्तिङन्तं पदम्** । अत्रान्तग्रहणम् 'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनार्थम् ।

---

१ 'सिध्येत' क ।

**स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। इति यणः स्थानिवद्भावे प्राप्ते।**

संनिहितम्—स्थानी, आदेशः, परनिमित्तं चेति[1]। तत्र स्थानी तावन्नावधिर्भवितुमर्हति, तस्यादेशेनापहारात्। नाप्यादेशः, नापि परनिमित्तम्, वैयाकरण इत्यत्र इकारस्थानिकयणादेशात् तत्परनिमित्तादाकाराच्च पूर्वस्य न य्वाभ्यामित्यैकारस्य आयादेशे कर्तव्ये यणादेशस्य स्थानिवद्भावेनाच्त्वापत्तेः। तथापि स्थान्यपेक्षयैवात्र पूर्वत्वं विवक्षितम्, स्थानिन आदेशेनापहृतत्वेऽपि भूतपूर्वगत्या तत्पूर्वत्वस्य सम्भवात्। तदेतदाह—**स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्य इति**। अत्र[2] स्थानिनि सति यद्भवति तदादेशेऽपि भवति, यन्न भवति तदादेशेऽपि न भवतीत्येवमशास्त्रीयस्यापि कार्याभावस्य अतिदेशो भवति। तत्राद्ये वव्रश्चेत्युदाहृतमेव, तत्र न सम्प्रसारणे सम्प्रसारणमिति निषेधकार्यस्य शास्त्रीयत्वात्। द्वितीये तु गणयतीत्युदाहरणम्। गण संख्यान इति चुरादौ अदन्तधातुः, तस्माण्णिच्, 'अतो लोपः', तिप्, शप्, रोर्गुणः, अयादेशः, गणयतीति रूपम्। अत्र णिचि परत उपधाभूतस्य गकाराद-कारस्य 'अत उपधायाः' इति न भवति, प्रकृतसूत्रेणाल्लोपस्य स्थानिवद्भावात्। अकारे स्थानिनि सति गकारादकारस्य उपधात्वभङ्गादुपधावृद्धिर्न प्रवृत्तिमर्हति। वृद्ध्यभावस्याशास्त्रीयत्वेऽपि अल्लोपे अतिदेशात्। न चात्र गकारादकारस्य स्थान्यकारान्न पूर्वत्वम्, णकारेण व्यवधानादिति वाच्यम्, पूर्वत्वं ह्यत्र व्यवहिताव्यवहितसाधारणम्, उत्तरसूत्रे स्वरे निषेधाल्लिङ्गात्। तच्च तत्रैव स्पष्टीभविष्यतीत्यलम्।

---

पञ्चमीसमासपक्षो मूले नोक्तः, तथापि 'पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाय इत्येवात्र णत्वम्' इति 'पद्दन्—' आदिप्रघट्टके स्वीकृतः सः। **अल्विध्यर्थमिदमिति**। तेन वव्रश्चेत्यत्र वस्य संप्रसारणं न, उरदत्त्वस्य स्थानिवत्त्वेन संप्रसारणतया 'न संप्रसारणे—' इति निषेधात्। न चोरदत्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात्। पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षस्य तु प्रयोजनम्—तन्वन्ति, तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। अत्र हि तनित्यङ्गं निमित्तम्, तच्च स्थानिभूतादुकारात्पूर्वमिति। नन्विदं न प्रयोजनम्, बहिरङ्गस्य यणोऽसिद्धत्वादिडागमस्यात्राप्रसक्तेः। न च 'नाजानन्तर्ये—' इति निषेधः। यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यमिति हरदत्तादिमते निषेधप्रवृत्तावपि 'उत्तरकार्ये यत्राच आनन्तर्यमाश्रितं तत्र बहिष्ट्वप्रक्लृप्तिर्न' इति कैयटमते तदभावात्। न चैवमपीपचन्निति प्रयोजनं भवत्येव, इह हि अन्तेरकारस्य चङ्कारस्य च 'अतो गुणे' इति पररूपे तस्य च परादिवद्भावाज्झिग्रहणेन ग्रहणे सति 'सिजभ्यस्त—' इति जुस् प्राप्नोति,

---

१ 'निमित्तं चेति' इति युक्तः पाठः। २ 'तत्र' क।

**५१ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु।** (१-१-५८) पदस्य चरमावयवो द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्।

---

**इति यण इति।** अनेन सूत्रेण सुध् य् इत्यत्र धकारस्य द्वित्वनिषेधे कर्तव्ये ईकारस्थानिकस्य यकारस्य स्थानिद्भावे प्राप्ते तत्प्रतिषेधसूत्रमारभ्यत इत्यर्थः। **न पदान्तद्विर्वचन।** 'स्थानिवदादेशः' इति 'अचः परस्मिन्' इति चानुवर्तते। परनिमित्तकोऽजादेशो न स्थानिवदित्यन्वयः। पदान्तश्च द्विर्वचनं च वरे च यलोपश्च स्वरश्च सवर्णश्च अनुस्वारश्च दीर्घश्च जश्च चर्चेति द्वन्द्वः। तेषां विधयः विधानानि। कर्मणि षष्ठ्या समासः। ततश्च पदान्तादिषु विधेयेषु इति लभ्यते। वर इत्यनेन वरे योऽजादेशः स विवक्षितः। आर्षो द्वन्द्वः। सप्तम्या अलुक्च। विधिशब्दः प्रत्येकमन्वेति—पदान्तविधौ द्विर्वचनविधावित्यादि। पदस्यान्तः चरमावयवः। पदान्तस्य विधाने पदान्तकर्मके विधाने पदस्य चरमावयवे कार्ये द्विर्वचनादौ च कार्ये इति यावत्। तदाह—**पदस्य चरमेत्यादिना।** पदान्तस्य स्थाने विधाविति तु न व्याख्यातम्, तथा सति एषो यन् हसतीत्यसिद्धेः। तथाहि—एषः यन् इति च्छेदः। इण्धातोर्लटः शतरि शपि लुकि इकारस्य 'इणो यण्' इति यण्। अत्र एतत्तदोरिति सुलोपो न भवति, तस्य हलि परतो विधानात्, इह च तस्मिन् कर्तव्ये इकारस्थानिकस्य यकारस्य स्थानिवद्भावेनाच्त्वात्। न च न पदान्तेति निषेधः शङ्क्यः, यो विधीयमानः पदस्य चरमावयवः संपद्यते, तत्रैव तन्निषेधात्, इह च विधेयस्य सुलोपस्य

---

णिलोपस्य एकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यम्। वेत्तेर्हि लङ्येवानन्तरोक्तिः संभवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचा साहचर्याद् लुङ एव ग्रहणमस्त्विति शङ्क्यम्। 'विप्रतिषेधे परम्–' इति परसाहचर्यस्य बलीयस्त्वात्। न चैवमपि 'अदभ्यस्तात्' इत्यादादेशस्य निवारणाय पञ्चमीसमासपक्ष आवश्यक इति वाच्यम्। चङ्कारस्य अन्तेरकारस्य च 'अतो गुणे' इति पररूपे कृते झस्याभावाददादेशाप्रसक्तेः। अत्र त्वेकादेशस्य परादिवद्भावाज्झग्रहणेन ग्रहणं न भवति, अल्विधौ अन्तादिवद्भावाप्रवृत्तेः। अन्यथा अयजे इन्द्रमित्यादौ सवर्णदीर्घो दुर्वार एवं स्यात्। अस्तु वा परादिवद्भावः, तथापि झकारस्य अत्स्यादित्यदादेशे कर्तव्येऽन्तादेशो न स्थानिवत्, अल्विधित्वात्। तस्मात् पञ्चमीसमासपक्षो निरर्थक एवेति चेदत्राहुः—पञ्चमीसमासप्रयोजनतया अपीपचन्नित्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया संमतम्। 'द्विस्त्रिश्चतुर्–' इति सूत्रे कृत्वोर्थग्रहणाज्ज्ञापकात् साहचर्यं न सर्वत्राश्रीयते। एवं च भवतेर्यङ्लुकि अभ्यस्ताश्रयस्य जुसः प्रवृत्त्या अबोभूवुरिति रूपं सिध्यति, 'आतः' इति नियमस्य सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तन्मात्रपरतया

पदानवयवत्वात्। पदान्तस्य स्थाने विधाविति व्याख्याने तु इह यकारस्य स्थानिवद्भावो न सिध्येत्, लोपस्य[1] पदान्तसकारस्य स्थाने विधानात्। अत्र 'हशि च' इत्युत्वे तु कर्तव्ये यकारो न स्थानिवद्भवति, उकारस्य विधीयमानस्य पदचरमावयवत्वात्। एवं च पदान्तविधावित्यस्य एषो यन् इत्येतदुत्वविषये उदाहरणम्, सुलोपविषये तु प्रत्युदाहरणमिति भाष्ये स्पष्टम्। भाष्यप्रदीपोद्द्योते स्पष्टतरमेतत्।

पदान्तविधौ कानि सन्तीत्याद्युदाहरणमनुपदमेव मूले स्पष्टीभविष्यति। द्विर्वचने सुध् य् इत्युदाहरणम्। न चेह द्वित्वे कर्तव्ये यकारस्य स्थानिवद्भावविरहेऽपि तन्निषेधे स्थानिवद्भावः स्यादेवेति वाच्यम्, अनचि चेति द्वित्वस्यानैमित्तिकतया तद्विषये यकारस्थानिवद्भावस्यानपेक्षितत्वेन[2] तत्र तन्निषेधस्य वैयर्थ्यापत्त्या द्विर्वचनशब्देनात्र अचि नेति द्वित्वनिषेधस्यैव विवक्षितत्वादिति भावः। वरे यथा—यायावरः। 'यश्च यङः' इति याधातोर्यङन्ताद्वरच्। सन्यङोरिति द्वित्वम्। यायाय वरः—इति स्थिते 'अतो लोपः' इति यङोऽकारस्य लोपः। लोपो व्योरिति यकारलोपः। अत्र अजाद्यार्धधातुकमाश्रित्य 'आतो लोप इटि च' इत्याकारलोपे कर्तव्ये अल्लोपो न स्थानिवत्। यलोपे यथा–यातिः। याधातोर्यङि द्वित्वम्, क्तिच्, यायाय ति इति स्थिते 'अतो लोपः', लोपो व्योरिति यलोपः, अल्लोपस्य स्थानिवत्त्वादातो लोपः, लोपो व्योरिति

---

माधवादिभिर्व्याख्यानत्वात्। अत एव 'अभ्यस्ताश्रयो जुस्, नित्यत्वाद् वुक्, अबोभूवुः', इति मूले यङ्लुगन्तेपूक्तम्। तथा चापीपचन्नित्यतोसिद्धये पञ्चमीसमासपक्ष आश्रयणीय इति। अन्ये त्वाहुः—पञ्चमीसमासपदप्रयोजनतया भाष्ये 'बेभिदिता, माथितिकः, इत्यस्याप्युदाहृतत्वान्न तस्य वैयर्थ्यशङ्का कार्या। यद्यपि यङोऽकारलोपस्य स्थानिवद्भावं विनापि 'एकाच उपदेशेऽनुदात्तात्' इत्यत्र विहितविशेषणाश्रयणादेव इण्निषेधाप्रवृत्तौ भिदेर्यङन्तात्तृचि बेभिदितेति रूपं सुसाधम्, तथापि माथितिक इत्यादिसिद्ध्यर्थं स पक्षोऽभ्युपगन्तव्यः। न च मथितं पण्यमस्य माथितिक इत्यत्रापि 'तदस्य पण्यम्' इति ठकि इकादेशे च कृते 'यस्येति च' इति लोपाद् 'इसुसुक्तान्तात्—' इति इकः स्थाने प्रसज्यमानो यः कादेशः सोऽप्यल्लोपस्य स्थानिवद्भावं विनैव सुपरिहरः, 'ठस्येकः' इत्यत्र 'स्थान्यादेशयोरकार उच्चारणार्थः' इत्यभ्युपगमे अल्विधित्वेन स्थानिवद्भावाप्रवृत्त्या ठस्थानिक इकादेशष्ठो न भवतीति कादेशाप्रसक्तेर्माथितिक इति रूपसिद्धौ किमनेन पञ्चमीसमासपक्षाश्रयणेनेति वाच्यम्। मथितयतेः क्विपि टिलोपणिलोपयोर्वेरपृक्तलोपे च मथित्, तेन चरति माथितिक इत्यत्र 'चरति' इति ठकि तस्येकादेशसिद्धये तत्पक्षस्यावश्यकत्वात्। न ह्यत्र स्थानिवद्भावं विनापि इकादेशापवादः कादेशः

---

१ 'सुलोपस्य' क। २ 'यकारस्य स्थानि—' क।

यलोपः, यातिरिति रूपम् । अत्र अल्लोपो यलोपे कर्तव्ये न स्थानिवत् । न च वाय्वो-रित्यत्रापि लोपो व्योरिति यलोपे कर्तव्ये उकारादेशस्य वकारस्य स्थानिवत्त्वनिषेधः स्यादिति वाच्यम्, स्वरदीर्घयलोपेषु लोप एवाजादेशो न स्थानिवदिति वार्तिके परि-गणनात्, इह च वकारस्य लोपरूपत्वाभावात् । स्वरविधौ यथा—चिकीर्षकः । चिकीर्ष इति सन्नन्ताद् ण्वुल् । अकादेशः । सनोऽकारस्य अतो लोपः । अत्र ईकारस्य लितीत्युदात्तत्वे कर्तव्ये अल्लोपो न स्थानिवत् । यद्यपि ईकारः अल्लोपस्थानिभूतादका-रान्नाव्यवहितपूर्व इति स्थानिवद्भावस्य प्राप्तिरिह नास्ति, तथाप्यस्मादेव ज्ञापकात् पूर्व-सूत्रे पूर्वत्वं व्यवहिताव्यवहितसाधारणम् । तत्प्रयोजनं तु पूर्वसूत्र एवोक्तम् ।

सवर्णविधौ यथा—शिण्ड्ढि । शिष् इति धातो रौधादिकाल्लोट्, मध्यमपुरुषैकवचनं सिप्, श्नम् । शिनष् सि । हित्वम्, धित्वम्, ष्टुत्वम्, षस्य जश्त्वं डकारः । शिनड् ढि । 'श्नसोरल्लोपः' । नश्चापदान्तस्येत्यनुस्वारः । अनुस्वारस्य ययीति तस्य परसवर्णो णकारः, शिण्ड्ढि इति रूपम् । अत्र परसवर्णे कर्तव्ये अल्लोपो न स्थानिवत् । वस्तुतस्तु सवर्णविधौ नेदमुदाहरणम् । श्नमकारस्य लोपोऽत्र अजादेशः, तत्स्थानिभूतः श्नमकार एव, तस्मिन् सति नकारस्यानुस्वारप्रसक्तिरेव नास्ति । तथा चानुस्वारस्य स्थानिभूतादचः पूर्वत्वेन कदाप्यदृष्टत्वात्तस्यं परसवर्णे कर्तव्ये अचः परस्मिन्नित्यल्लोपस्य स्थानिवत्त्वं न प्रसक्तमिति किं तत्प्रतिषेधेन । यत्तु तत्त्वबोधिन्याम् अनुस्वारस्य स्थानिभूतो नकारः श्नमकारात् पूर्वत्वेन दृष्ट इति तत्स्थानिकानुस्वारस्यापि तत्पूर्वत्वेन दृष्टत्वम्, स्थानिद्वारापि पूर्वत्वाभ्युपगमादित्युक्तम् । एवं सति तितउमाचष्टे तितापयतीत्यत्र पुगागमो न स्यात् । 'तत्करोति तदाचष्टे' इति णिच् । इष्ठवद्भावादु-

---

सुपरिहरः, नाप्येतादृशकल्पनायां मानाभावः शङ्क्यः, माथितिक इति भाष्योदाहरण-स्यैव मानत्वादिति । स्यादेतत् । पूर्वत्वस्य सावधित्वेन संनिहितस्यैवावधित्वमुचितम्, संनिहितं चेह त्रयं स्थानी आदेशो निमित्तं च, तत्र तावत् स्थानी न अवधिः । तस्या-देशेनापहारात् । नाप्यादेशनिमित्ते । वैयाकरण इत्यत्रैकारस्यायादेशापत्तेरित्याशङ्क्याह—**अचः पूर्वत्वेन दृष्टस्येति** । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः । **न पदान्त** । अत्र पदान्तादीनां चरन्तानां द्वन्द्वः, ततो विधिशब्देन कर्मषष्ठ्यन्तस्य समासः । विधिशब्दश्च भावसाधनो विधानं विधिरिति, स द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं संबध्यते । **पदस्य चरमावयव इति** । वृक्षं वेतीति वृक्षवीः, वृक्षं वातीति वृक्षवाः । तमाचष्टे वृक्षवयति, ततो विच् वृक्षव् । इह 'लोपो व्योर्वलि' इति वलोपो न, टिलोपस्य णिलो-पस्य वा स्थानिवत्त्वात् । न च सुबन्तारिणजिति हरदत्तादिमते अन्तर्वर्तिसुपा पदत्वात् 'न पदान्त–' इति निषेधः शङ्क्यः । विधेयस्य लोपस्य पदानवयवत्वात् । पदान्तस्य स्थाने

कारस्य टेरिति लोपः। अचो ञ्णितीति तकारादकारस्य वृद्धिः आकारः, पुगागमः। तितापीत्यस्माल् लट्, तिप्, शप्, गुणः, अयादेशः, तितापयतीति रूपम्। अत्र अचो ञ्णितीति वृद्ध्या लब्धस्य आकारस्य पुगागमे कर्तव्ये उकारलोपस्य स्थानिवद्भावे सति उकारेण व्यवधानेन णिपरकत्वाभावात् पुगागमो न स्यात्। आकारस्य लोप-स्थानिभूतादुकारात् पूर्वत्वस्य स्वतः अभावेऽपि स्थानिद्वारा सत्त्वादिति सिद्धान्तरत्नाकरे दूषितम्। प्रौढमनोरमाव्याख्याने तु शब्दरत्ने पादमाचष्टे पादयति, ततः क्विप्, पाद् हसतीत्यादौ 'झयो हः' इति पूर्वसवर्णे कर्तव्ये पूर्वस्मात्परस्य विधिरिति पञ्चमीसमास-प्राप्तस्थानिवद्भावनिषेधार्थमिह सूत्रे सवर्णग्रहणमिति प्रपञ्चितम्।

अनुस्वारविधौ यथा—शिंषन्ति। शिष्धातोर्लटि झिः। 'झोऽन्तः'। 'श्नसोरल्लोपः'। नश्चापदान्तस्येत्यनुस्वारः। शिंषन्ति। इह तु न परसवर्णः। षकारस्य यय्त्वाभावात्। अत्र अनुस्वारे कर्तव्ये अल्लोपो न स्थानिवत्। अत्र दीर्घ-विधौ यथा—प्रतिदीव्ना। हलि चेति दकारदिकारस्य दीर्घे कर्तव्ये अल्लोपो न स्थानिवत्। जश्विधौ यथा—सग्धिश्च मे। अद् भक्षणे क्तिन्। बहुलं छन्दसीति घस्लादेशः। 'घसिभसोर्हलि च' इत्युपधालोपः। 'झलो झलि' इति सलोपः।

---

विधौ नेति व्याख्याने तु 'न पदान्त–' इति स्थानिवत्त्वनिषेधाद्वलोपः स्यादेवेत्यादि मनोरमायां स्थितम्। **द्विर्वचनादौ चेति**। यलोपादय आदिशब्दार्थः, वरे इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्, सहविवक्षाभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च। अथोदाहरणानि—**पदान्ते**—कानि सन्ति, कौ स्तः। इह यणावादे-शयोः कर्तव्ययोः श्नसोरल्लोपो न स्थानिवत्। न चेकारौकारयोः स्थानिभूतादचः पूर्व-त्वविरहादेवाल्लोपो न स्थानिवदिति वाच्यम्। 'वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते' इति पक्षे स्थानिभूतादचः पूर्वत्वस्य सत्त्वात्। यद्वा गोचः गोचेत्यादावोकारस्यावादि कर्तव्ये 'अचः–' इत्यल्लोपो न स्थानिवदिति उदाहार्यम्। अत्र हि लोपस्थान्यकारात्पूर्वत्वेन दृष्टत्वादोकारस्य। **द्विर्वचने**—सुद्ध्युपास्यः। 'नाजानन्तर्ये' इति निषेधाद्बहिरङ्गपरिभा-षात्र न प्रवर्तते, स्थानिवद्भावनिषेधसामर्थ्याच्च। एवं क्वचिदन्यत्राप्यूह्यम्। **वरे**—यायावरः। यातेर्यङन्ताद् 'यश्च यङः' इति वरच्। 'अतो लोपः' स च 'आतो लोप इटि च' इत्यालोपे कर्तव्ये न स्थानिवत्। **यलोपे**—यातिः। यातेर्यङन्तात् क्तिच्, अतो लोपः, यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः यलोपः। न पुनरालोपः शङ्क्यः। चिणोलुग्न्यायेन आलोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। ननु यदि यलोपविधिं प्रति स्थानिवत्त्वनिषेधस्तर्हि कथं वाय्वोरिति। उच्यते—'असिद्धं बहिरङ्गम्–' इति यणोऽसिद्धत्वान्न यलोपः। न च 'नाजानन्तर्ये' इति निषेधः, अन्तरङ्गकार्ये अच आन-

। (८-४-५२

झषस्तथोरिति तकारस्य धत्वम् । 'झलाञ्जश् झशि' इति जश्त्वेन घकारस्य गकारः । समाना ग्धिः—अदनं सग्धिः । समानस्य छन्दसीति सभावः । अत्र जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत् । चर्विधौ यथा—जक्षतुः । घसेर्लिटि अतुस् , द्वित्वम् , 'हलादिश्शेषः' 'कुहोश्चुः' इति झकारः, 'अभ्यासे चर्च' इति जश्त्वम् । 'गमहन—' इत्युपधालोपः । 'खरि च' इति चर्त्वम्—ककारः । 'शासिवसि—' इति षः । अत्र चर्त्वे कार्ये उपधालोपो न स्थानिवत् । भाष्ये तु पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य द्विर्वचन-सवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । किं च[1] 'दीर्घादाचार्याणाम्' इत्युत्तरम् 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य' 'तोर्लि' 'उदस्थास्तम्भोः पूर्वस्य' 'झयो होऽन्यतरस्याम्' 'शश्छोऽटि' इति षट्सूत्रीपाठोत्तरम् 'झलाञ्जश् झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रीपाठ इति 'हलो यमां यमि' इति सूत्रस्थभाष्यसंमतः सूत्रक्रमः । एवं च शिण्ड्ढीत्यत्र न परसवर्ण-प्रसक्तिः । परसवर्णे कर्तव्ये षकारस्थानिकस्य जश्त्वस्यासिद्धत्वेन यय्परकत्वाभावा-दिति सर्वथापि[2] सवर्णविधौ शिण्ड्ढीति नोदाहरणमित्यास्तां तावत् ।

**इति स्थानीति** । अनेन सूत्रेण सुध् य् इत्यत्र द्वित्वनिषेधे कर्तव्ये यकार-स्य स्थानिवत्त्वनिषेध इत्यर्थः । एवं चाच्परकत्वाभावेन अनचि चेति निषेधाभावाद् धकारस्य द्वित्वं निर्बाधमिति भावः। तथा च सुध् ध् य् इति स्थितम् । **झलाञ्जश्**

---

न्तर्यं यत्र तत्रैव तदभ्युपगमात् । किं चात्र 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति वार्तिकमस्ति । तेनान्यः स्थानिवदेव भवतीति न दोषः । **स्वरे**—चिकी-र्षकः । ईकारस्य 'लिति' इत्युदात्तत्वे कर्तव्ये सनोऽतो लोपो न स्थानिवत् । न च 'लिति'इत्यारम्भसामर्थ्यम् ,कारक इत्यादौ सावकाशत्वात्। **सवर्णानुस्वारयोः**—शिण्ढि। श्नसोरल्लोपो न स्थानिवत् । यद्यप्यनुस्वारो न स्थानिभूतादचः पूर्वं इति तस्य परसवर्णे कर्तव्ये अल्लोपस्य स्थानिवत्त्वप्रसङ्ग एव नास्ति, तथापि स्थानिद्वारानुस्वारोऽपि दृष्ट इत्य-स्त्येव तत्प्रसङ्ग इत्याहुः । ननु सवर्णग्रहणमात्रेणानुस्वारोऽप्याक्षेप्तुं शक्यत इति किमनेन पृथगनुस्वारग्रहणेन । सत्यम् । पृथग्ग्रहणाभावे यत्र परसवर्णस्तत्रैवेति संभा-व्येत । तथा च यत्र न परसवर्णप्रसङ्गः शिंषन्तीत्यादौ तत्र स्थानिवद्भावं निषेद्धुमनु-स्वारग्रहणम् । एवं यत्र वरे अजादेशस्य प्रसङ्गो नास्ति यातिरित्यादौ तत्र यलोपे

---

१ अयं पङ्क्तिसप्तकपाठः 'प्रौढमनोरमाव्याख्याने तु शब्दरत्ने' इत्यतः प्राक्स्थितो लेखकप्रमादादिना इहागत इति प्रतिभाति । 'क' पुस्तकपाठमनुसृत्य तु कथञ्चिद् इहापि समर्थनीयः । २ 'तथापि' क ।

स्पष्टम्। इति धकारस्य दकारः। ५३ **अदर्शनं लोपः।** ( १-१-६० ) प्रसक्त-

---

**झशि। स्पष्टमिति।** झलां स्थाने जश् स्यात् झशि परत इति स्पष्टार्थकम्। तत्र न किञ्चिद् व्याख्यातव्यमस्ति, पदान्तरस्यानुवृत्त्यभावादित्यर्थः। **इति धकारस्येति।** प्रथमधकारस्येत्यर्थः। **दकार इति।** स्थानत आन्तर्यादिति भावः। सुद् ध् य् इत्यत्र यकारस्य संयोगान्तलोपं शङ्कितुं लोपसंज्ञासूत्रमाह—**अदर्शनं लोपः।** शब्दानुशासनप्रस्तावाच्छब्दविषयकं श्रवणमिह दर्शनं विवक्षितम्। दर्शनस्याभावः अदर्शनम्। अर्थाभावेऽव्ययीभावः। 'स्थानेऽन्तरतमः' इत्यतः स्थान इत्यनुवर्तते। स्थानं प्रसङ्ग इत्युक्तम्। शास्त्रतः शब्दस्य कस्यचिच्छ्रवणप्रसङ्गे सति यदश्रवणम्, तत् लोपसंज्ञं भवतीत्यर्थः। तदाह—**प्रसक्तस्येति।** तत्र श्रवणाभावात्मके लोपे विहिते श्रवणार्थमुच्चारणमपि नास्तीत्यर्थाल्लभ्यते। प्रसक्तस्य किम्, दधि इत्यादौ क्विपः अश्रवणात्मकलोपस्य प्रत्ययलक्षणमाश्रित्य ह्रस्वस्य पिति कृति तुक्

---

स्थानिवद्भावं निषेद्धुं वरेग्रहणात्पृथग्यलोपग्रहणं कृतमिति ज्ञेयम्। **दीर्घे**—प्रतिदीव्ना, प्रतिदीव्ने। 'हलि च' इति दीर्घे कर्तव्ये अल्लोपो न स्थानिवत्। यणादेशस्तु स्थानिवद्भवत्येव। लोपाजादेश एव न स्थानिवद्, इत्युक्तत्वात्। तेन 'हलि च' 'उपधायां च' इति दीर्घाप्रवृत्त्या किर्योः, गिर्योः, विव्यतुरित्यादि सिद्धम्। **जशि**—सग्धिश्च मे। अदनं ग्धिः। तत्र अदेः क्तिनि 'बहुलं छन्दसि' इति घस्लादेशः, 'घसिभसोर्हलि–' इत्युपधालोपः, 'झलो झलि' इति सलोपः। 'झषस्तथोः–' इति धत्वम्, घस्य 'झलां जश् झशि' इति जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत्। 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सः। समाना ग्धिः सग्धिः। न चात्र सलोपे धत्वे च कर्तव्ये पूर्वस्मादपीति स्थानिवद्भावात्सग्धिरिति रूपं न स्यादिति शङ्क्यम्। पञ्चमीसमासपक्षस्यानित्यत्वात्। तत्र 'निष्ठायां सेटि' इति लिङ्गात्। तथाहि। तत्र 'सेटि' इति पदं न तावदनिड्व्यावृत्त्यर्थम्, णिजन्तात्तदसंभवात्। ननु संज्ञपितः पशुरित्यत्र 'यस्य विभाषा' इति इण्निषेधे संभवत्येवानिट्त्वम्, 'सनीवन्त–' इति विकल्पितेट्त्वादिति चेन्न। 'यस्य विभाषा' इत्यत्र 'एकाचः' इत्यनुवृत्तेः। अन्यथा दरिद्रित इति इण् न स्यात्, तत्र 'तनिपतिदरिद्रातिभ्यः–' इति वार्तिकेन सनो विकल्पितेट्त्वात्। तस्मात्कालावधारणार्थं सेड्ग्रहणम्। इटि कृते णिलोपः, न तु ततः प्रागिति। अन्यथा कारितमित्यादौ णिलोपे कृते 'एकाच उपदेशे–' इति इण्निषेधः स्यादिति। यदि तु पूर्वस्माद्विधौ स्थानिवत्त्वं तर्हि णिचा व्यवधानान्निषेधप्राप्तिरेव नास्तीति 'सेटि' इत्यनर्थकं सत्तस्यानित्यतां ज्ञापयति इति स्थितम्। ननु जश्त्वविधौ यदि स्थानिवत्त्वनिषेधस्तर्हि पटयतीत्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं स्यात्। मैवम्। 'इष्ठवत्' इत्यतिदिष्टया भसंज्ञया पदसंज्ञाया

स्यादर्शनं लोपसंज्ञं स्यात्। **५४ संयोगान्तस्य लोपः ।** ( ८-२-२३ ) संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्। इति यलोपे प्राप्ते। 'यणः प्रतिषेधो वाच्यः' ( वा ४८०६ )। 'यणो मयो द्वे वाच्ये' ( वा ५०१८ )। 'मय इति

---

मा भूत्। **संयोगान्तस्य लोपः**। पदस्येत्यधिकृतम्। संयोगः अन्तो यस्येति विग्रहः। संयोगान्तस्य पदस्य लोप इत्यन्वयः। न च कृत्स्नपदस्य लोपः, किन्तु अलोऽन्त्यस्येति परिभाषया तदन्तस्यैव। तदाह—**संयोगान्तमित्यादिना**। अत्र अन्तग्रहणं स्पष्टार्थमेव। संयोगस्य पदविशेषणतया येन विधिरित्येव तदन्तलाभात्। यत्तु संयोगावन्तौ यस्येति विग्रहलाभार्थमन्तग्रहणम्, अन्यथा सुदृषत्प्रासाद इत्यत्र पकारात् पूर्वतकारस्य लोपः स्यादिति। तन्न, संयोगसंज्ञाया व्यासज्यवृत्तित्वात्, प्रत्येकवृत्तित्वमभ्युपगम्य अन्तग्रहणप्रयोजनवर्णनस्य व्यर्थत्वादिति शब्दरत्ने विस्तरः।

**इति यलोपे इति**। सुध् य् इति यकारस्य अनेन सूत्रेण लोपे प्राप्ते तत्प्रतिषेध आरभ्यते **'यणः प्रतिषेधो वाच्यः'**। यणः संयोगान्तलोपप्रतिषेधो वक्तव्य इत्यर्थः। अनेन वार्तिकेन यकारस्य संयोगान्तलोपो न भवतीति शेषः। इदं वार्तिकम् आकरे प्रत्याख्यातम्[1]। अथात्र यकारस्य अचः परत्वाभावादच्परकत्वाच्च अनाचि चेति द्वित्वाप्राप्तौ द्वित्वविधिमाह—**यणो मयो द्वे वाच्ये**। अनेन वार्तिकेन यकारस्य द्वित्वमित्यन्वयः। ननु यदि यण इति पञ्चमी मय इति षष्ठी, तर्हि यणः परस्य मयो द्वित्वमिति लभ्यते। प्रकृते च यकारो न यणः परः, नापि मय्। अतः कथमनेन वार्तिकेन तस्य द्वित्वमित्यत आह—**मय इतीति**। पक्षे इत्यनेन उभयथा व्याख्यानमिष्टमिति सूचितम्। विनिगमनाविरहादिति भावः। अत्रापि वार्तिके यरोऽ

---

बाधाजश्त्वाप्रवृत्तेः। **चरि**—जक्षतुः, जक्षुः। घसेर्लिटि अतुस् उस् च, 'गमहन–' इत्युपधालोपः, 'खरि च' इति चर्त्वं प्रति न स्थानिवत्। भाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः। तद्रीत्या तु सलोपे षत्वे च कर्तव्ये स्थानिवद्भावशङ्कैव नास्तीति बोध्यम्। **अदर्शनं लोपः**। अत्र दृशिर्ज्ञानसामान्यवचनः, दर्शनं ज्ञानम्, तदिह शब्दानुशासनप्रस्तावाच्छब्दविषयकं सत् श्रवणं संपद्यते। तच्च श्रोतृव्यापारस्तन्निषेधोऽश्रवणम्। नन्वेवं 'लोपो व्योर्वलि' इत्यादौ वकारयकारौ न श्रोतव्याविति श्रोतृव्यापार एव निषिध्येत, प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात्। अत्राहुः। असति च श्रवणे उच्चारणमनर्थकमेवेति सामर्थ्याच्छ्रवणनिषेधे तद्धेतुभूतमुच्चारणमपि निषिद्धं भवतीति। **प्रसक्तस्येति**। इह 'स्थाने'

---

१ इह 'झलो झलि' इत्यतो झल्ग्रहणमपकृष्य संयोगान्तझलो लोपविधानात्' इत्यादिपाठस्त्रुटित इत्यनुमीयते।

नुनासिक इत्यतो वाग्रहणमनुवर्तते। ततश्च फलितमाह—**तदिहेति**। तदित्यव्ययम्। इयता संदर्भेण यत् प्रपञ्चितं तेन इह सुध् य् इत्यत्र यकारधकारयोः द्वित्वविकल्पाच्चत्वारि रूपाणि सम्पद्यन्ते इत्यर्थः । **एकधमेकयमिति**। एको धकारो यस्य तद् एकधम्, एवम् एकयमित्यपि। धकारयकारयोरुभयोरपि द्वित्वाभावे एकधकारमेक-

---

इत्यनुवर्तनादेतल्लभ्यते। प्रसक्तस्येति किम्, दधिमध्वित्यादौ तुगागमो मा भूत्। अस्ति हि तत्र क्विपोऽदर्शनम्, तच्च लोपे इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति दिक्। **संयोगान्तस्य**। **तदन्तस्येति**। 'अलोऽन्त्यस्य' इति परिभाषयेति भावः। यद्यपि विशेषणेन तदन्तविधिलाभात् 'संयोगस्य' इत्येव सूत्रयितुमुचितम्, तथापि 'प्रत्येकं संयोगसंज्ञा' इति पक्षे 'दृषत्करोति' इत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणमिति मनोरमायां स्थितम्। 'संयोग' इति महासंज्ञाकरणसामर्थ्यादेकस्य संयोगसंज्ञा न भविष्यतीति अन्तग्रहणमिह त्यक्तुं शक्यम्। **यणः प्रतिषेध इति**। वाचनिकमिदम्। यद्वा वाच्यो व्याख्येयः। व्याख्या च द्वेधा 'झलो झलि' इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा। न च षाष्ठी परिभाषा त्रैपादिकमन्तरङ्गलोपं न पश्यतीति वाच्यम्। कार्यकालपक्षाभ्युपगमात्। न च 'नाजानन्तर्ये' इति निषेधः। उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावात्। तदुक्तम्—'संयोगान्तलोपे यणः प्रतिषेधः, न वा झलो लोपात्, बहिरङ्गलक्षणत्वाद्वा' इति। **चत्वारि रूपाणीति**। इह धकारस्य द्वित्वे जश्त्वे च कृते 'पूर्वत्रासिद्धीयमद्वित्वे' इति जशोऽसिद्धत्वाभावेन लक्ष्यभेदात्पुनर्दकारे द्वित्वप्रवृत्तौ रूपाधिक्यमस्ति । अत्र केचिदाहुः—उकारात्परस्य यरो द्वित्वे कृते पुनरुकारात्परस्य यरो द्वित्वं न भवति, निमित्तभेदाभावादित्याशयेनेदमुक्तम्, इति। तेषां मते तु तुदादिगणे व्रश्चेत्यत्र उरदत्वस्य, 'अचः परस्मिन्–' इति स्थानिवद्भावात् 'न संप्रसारणे–' इति वस्योत्वं न' इति समाधानग्रन्थो मूलस्थो विरुध्येत, तन्निमित्तस्य लिटो भेदाभावादिति दिक्। अन्ये तु धकारस्य जश्त्वे कृते 'पूर्वत्रासिद्धीयमद्वित्वे' इति जशोऽसिद्धत्वाभावाद्दकारे पुनर्द्वित्वं भवत्येव, व्यक्तिभेदात्। अत एव सँय्यँन्तेत्यादौ परसवर्णद्वित्वं भाष्यकृता उदाहृतम्। षट् सन्त इत्यत्र सकारद्वित्वसिद्धये 'पूर्वत्रासिद्धीयमद्वित्वे' इति मनोरमायामप्युक्तम्। एव यकारेऽपि द्वित्वस्य पुनः प्रवृत्तौ क्षत्यभावः। आष्टमिकद्विर्वचनस्य स्थानेद्विर्वचनरूपत्वात्स्थान्यादेशव्यक्त्योश्च भेदात्। यत्तूक्तं मनोरमायाम् 'एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्तते' इति 'एकः पूर्वपरयोः' इति सूत्रे भाष्ये सिद्धान्तितत्वात्कथं पुनर्द्वित्वप्रवृत्तिः। अन्यथा द्वित्वानन्त्यापत्तेरित्यादि। तदनवधाननिबन्धनम्, तत्राधानादिशास्त्रदृष्टान्तेन क्वचिदेवैकस्मिन्प्रयोगे गुणादिशास्त्र-

पञ्चमी यण इति षष्ठी' इति पक्षे यकारस्यापि द्वित्वम्। तदिह धकारयकारयोर्द्वित्व-विकल्पाच्चत्वारि रूपाणि। एकधमेकयम्। द्विधं द्वियम्। द्विधमेकयम्। एकधं द्वियम्। सुद्ध्युपास्यः। मद्ध्वरिः। धात्त्रंशः। लाकृतिः। ५५ नादिन्याक्रोशे

यकारं च प्रथमं रूपमित्यर्थः। **द्धिधं द्वियमिति**। द्वौ धकारौ यस्य द्विधम्। एवं द्वियमित्यपि। धकारयकारयोरुभयोरपि द्वित्वे द्वियकारं द्विधकारं च द्वितीयं रूपमित्यर्थः। **द्विधमेकयमिति**। धकारस्य द्वित्वे यकारस्य द्वित्वाभावे द्विधमेकयं च तृतीयं रूपमित्यर्थः। **एकधं द्वियमिति**। धकारस्य द्वित्वाभावे[1] यकारस्य द्वित्वे एकधं द्वियं च चतुर्थं रूपमित्यर्थः। **सुद्ध्युपास्य इति**। इह 'न भूसुधियोः' इति निषेधस्तु न भवति, तस्य अजादौ सुपि विधानात्। 'इकोऽसवर्णे' इत्यपि न, ' न समासे ' इति तन्निषेधात्।

**मद्ध्वरिरिति**। मधुर्नाम असुरविशेषः। तस्यारिश्शत्रुः मद्ध्वरिः, हरिरित्यर्थः। अत्र धकारादुकारस्य स्थानत आन्तर्याद् यथासंख्यपरिभाषया वा वकारः। न चात्र वकारस्य दन्तस्थानाधिक्याद् न स्थानसाम्यमिति वाच्यम्। यावत्स्थानसाम्यस्य सावर्ण्यप्रयोजकत्वेऽपि आन्तरतम्ये यत्किञ्चित्स्थानसाम्यस्यापि प्रयोजकत्वात्। अन्यथा चेता स्तोतेत्यादौ इकारादेः एकाराद्यनापत्तेः। **धात्त्रंश इति**। अत्र तकारस्यैव द्वित्वम्, न तु रेफस्येत्यनुपदमेव वक्ष्यते अचोरहाभ्यामित्यत्र। **लाकृतिरिति**। लृवर्णस्य आकृतिरिव आकृतिर्यस्येति विग्रहः। अत्र आकारे परे लृवर्णस्य दन्तस्थान-साम्यात् प्रथमातिक्रमे कारणाभावाच्च तस्य वकार एवास्तु। आन्तरतम्ये यत्किंचि-त्स्थानसाम्यस्य प्रयोजकताया मद्ध्वरिरित्यत्रोक्तत्वादिति वाच्यम्, अत्र हि चत्वारो यणो यवरला विधेयाः। तत्र वकारविधिरुकारे ओष्ठस्थानसाम्याद् निस्सपत्नः साव-काशः, तत्र लकारस्य दन्तरूपस्थानभेदादप्राप्तेः। लाकृतिरित्यत्र लृवर्णे तु वकारो लकारश्चेत्युभयमपि प्राप्तम्। अत्र शब्दपरविप्रतिषेधमाश्रित्य लकारविधिः परत्वाद् अपवादत्वाच्च वकारविधिं बाधते। यदि हि प्रथमातिक्रमे कारणाभावादत्रापि वकार एव स्यात्, तर्हि लकारविधिर्निरवकाश एव स्यात्। अतोऽत्र लृवर्णस्य लकार एवे-

स्यानुष्ठापकत्वं स्यान्न प्रयोगान्तर इत्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रयोगान्तरेऽपि गुणादिशास्त्रप्रवृत्तेरेव सिद्धान्तिततत्वात्। न तु सकृच्छास्त्रप्रवृत्तेः। आनन्त्यापत्तिरपि प्रकृते न दोषः। सा हि अनन्तकार्यसहितप्रयोगस्याशक्यत्वात्तच्छास्त्रकर्तव्यस्य परिनि-ष्ठितप्रयोगस्याभावात्तच्छास्त्रस्याननुष्ठापकत्वापत्त्या दोषः। प्रकृते तु नास्ति, द्वित्वस्य वैकल्पि-कत्वेन यावच्छक्ति द्वित्वप्रयोगसहितस्य परिनिष्ठितत्वेन तेनैव शास्त्रस्य कृतार्थत्वात्।

१ 'द्वित्वाभावे च' क।

**पुत्रस्य ।** ( ८-४-४८ ) पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । 'आक्रोशे' किम् । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी । ' तत्परे च ' ( वा २०२१ )। पुत्रपुत्रादिनी त्वमसि पापे । ' वा हतजग्धयोः ' ( वा २०२२ )। पुत्त्रहती-पुत्रहती । पुत्त्रजग्धी-पुत्रजग्धी । **५६ त्रिप्रभृतिषु शाकटायनस्य ।** ( ८-४-५० ) त्र्यादिषु वर्णेषु संयुक्तेषु वा

स्यात्तां तावत् ।

**नादिन्याक्रोशे** । द्वे इत्य नुवर्तते । यर इति च । आक्रोशो निन्दा । आदिनीति ङ्यन्तं लुप्तसप्तमीकम् । आदिनीशब्दे परे पुत्रशब्दस्यावयवो यः यर् तकारः, तस्य न द्वित्वम् । आक्रोशे गम्ये इत्यर्थः । तदाह—**पुत्रशब्दस्येत्यादिना** । पुत्रशब्दस्यावयवस्येत्यर्थः । **पुत्रादिनी त्वमसि पापे इति** । पुत्रानत्तुं शीलमस्याः पुत्रादिनी । 'सुप्यजातौ' इति णिनिः । ऋन्नेभ्य इति ङीप् । हे पापे ! त्वं पुत्रादिनीत्यन्वयः । पुत्रघातिनीत्यर्थः । ईदृशाक्रोशस्य प्रायेण स्त्रीष्वेव सम्भवात् सूत्रे आदिनीति ङ्यन्तमेव विवक्षितमिति हरदत्तः । माधवोऽप्येवम् । अत्र उकारात् परस्य तकारस्य अनचि चेति प्राप्ते द्वित्वं निषिध्यते । रेफस्य तु न क्वापि द्वित्वप्रसक्तिरित्यनुपदमेव वक्ष्यते । **आक्रोशे किमिति** । आक्रोश इत्यस्य किं प्रयोजनमित्यर्थः । 'किं पृच्छायां जुगुप्सने' इत्यव्ययवर्गे अमरः । एवमुत्तरत्राप्येवञ्जातीयकेषु द्रष्टव्यम् । **तत्त्वकथन इति** । यस्याः पुत्राः स्वयमेव म्रियन्ते तां प्रति पुत्त्रादिनीति वस्तुस्थितिकथने तु न द्वित्वनिषेध तत्र निन्दाया अप्रतीतेरित्यर्थः । **तत्परे च** । वार्तिकमेतत् । स आदिनीशब्दः परो यस्मात् स तत्परः, आदिनीशब्दपरके पुत्रशब्दे च परे पुत्रशब्दावयवस्य यरो न द्वित्वमित्यर्थः । **पुत्रपुत्रादिनी त्वमिति** । पुत्रस्य पुत्रानत्तीति विग्रहः । अत्र पूर्वस्य पुत्रशब्दस्य आदिनीशब्दः परो न भवति, द्वितीयपुत्रशब्देन व्यवधानात् । अतः पूर्वसूत्रेण अप्राप्ते द्वित्वनिषेधे इदमारब्धम् । **वा हतजग्धयोः** । हतशब्दे जग्धशब्दे च परे पुत्रशब्दावयवस्य यरो द्वित्वं वा स्यादित्यर्थः । **पुत्त्रहतीति** । तकारद्वित्वे रूपम् । पुत्रो हतो ययेति विग्रहः । 'अस्वाङ्गपूर्वपदात्' इति ङीष् इति केचित् । वस्तुतस्तु जातिपूर्वादित्यस्य तत्रानुवृत्तेः गौरादित्वाद् ङीषिति युक्तम् । पुत्रघातसाहसस्य स्त्रीष्वेव सम्भवात् स्त्रीलिङ्गमेवोदाहृतम् । **पुत्रहतीति** । द्वित्वाभावे रूपम् । एवं पुत्त्रजग्धीति । अनचि चेति द्वित्वविकल्पे सिद्धे पुत्रशब्दस्य

---

१ अत्र सर्पिणीति मूले पाठो न टीकाकर्तुः संमत इति प्रतिभाति । युक्तस्तु स इति, पुस्तकान्तरे सर्वत्रोपलम्भाच्चेहापि निवेशितः ।

द्वित्वम् । इन्न्द्रः-इन्द्रः । राष्ट्ट्रम्-राष्ट्रम् । **५७ सर्वत्र शाकल्यस्य ।** (८-४-५१) द्वित्वं न । अर्कः । ब्रह्मा । **५८ दीर्घादाचार्याणाम् ।** (८-४-५२) द्वित्वं न । दात्रम् । पात्रम् । **५९ अचो रहाभ्यां द्वे ।** (८-४-४६) अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । नह्य्यस्ति । **६० हलो यमां यमि लोपः ।** (८-४-६४) हलः परस्य यमो लोपः स्याद्वा यमि।

---

क्रान्ते चेत् हतजग्धयोरेव आक्रोशे एवेति नियमार्थमिदं वार्तिकमित्याहुः । **त्रिप्रभृतिषु शाकटायनस्य ।** त्रिचतुरादिषु हल्षु संयुक्तेषु आद्यस्य अचः परस्य यरः द्वित्वं शाकटायनमते । मतान्तरे तु नेत्यर्थः । इन्द्र इति नकारस्य द्वित्वविकल्पः । राष्ट्रमित्यत्र षकारस्य द्वित्वविकल्पः । **सर्वत्र शाकल्यस्य ।** नेत्यनुवर्तते । यत्र यत्र द्वित्वं विहितं तत्र तत्र शाकल्यस्य ऋषेर्मते द्वित्वं न भवतीत्यर्थः । **दीर्घादाचार्याणाम् ।** नेत्यनुवर्तते । दीर्घात् परस्य यरो द्वित्वं केषाञ्चिदाचार्याणां मते न भवति । मतान्तरे तु भवति । 'अनचि च' इत्यत्र वाग्रहणमनुवर्तत इति नाज्झलाविति सूत्रे कैयटः । एवं च 'अनचि च' इत्येव द्वित्वविकल्पसिद्धौ त्रिप्रभृतिष्वित्यादिसूत्रत्रयं नारम्भणीयमिति प्रौढमनोरमायां स्थितम् । एतत्सूत्रत्रयविरोधाद् 'अनचि च' इत्यत्र वाग्रहणं नानुवर्त्यमिति युक्तं प्रतिभाति ॥

**अचो रहाभ्यां द्वे ।** 'यरोऽनुनासिकः' इत्यतो यर इति षष्ठ्यन्तं वेति चानुवर्तते । अच इति दिग्योगे पञ्चमी । पराभ्यामिति शेषः । रहाभ्यामित्यपि पञ्चमी । परस्येति शेषः । तदाह—**अचः पराभ्यामित्यादिना । हर्य्यनुभव इति ।** हरेरनुभव इति विग्रहः । हरि अनुभव इति स्थिते रेफादिकारस्य यण् । तस्य द्वित्वम् । अथ हकारात् परस्योदाहरति—**न ह्य्यस्तीति ।** नहि अस्तीति स्थिते हकारादिकारस्य यण् तस्य द्वित्वम् । इहोभयत्र यकारस्य अचः परत्वाभावादच्परकत्वाद्[2] 'यणः प्रतिषेधः' इति निषेधाच्च द्वित्वमप्राप्तं विधीयते । अत्र अनचि चेति रेफहकारयोर्द्वित्वं न भवति । द्वित्वप्रकरणे रहाभ्यामिति रेफत्वेन हकारत्वेन च साक्षाच्छ्रुतेन निमित्तभावेन तयोः यर्शब्दबोधितकार्यभाक्त्वबाधात्, श्रुतानुमितयोः श्रुतं बलीय इति न्यायात् । हर् य् य् अनुभवः । नह् य् य् अस्ति इति स्थिते । उभयत्रापि प्रथमयकारस्य लोपविधिमाह—**हलो यमां यमि लोपः ।** 'झयो होऽन्यतरस्याम्' इत्यतोऽन्तरस्यामित्यनुवर्तते । तच्च विभक्तिप्रतिरूपकमव्ययं वार्थे वर्तते । यमामिति बहुत्वं प्रयोगबहुत्वापेक्षम् । एकैकस्मिन् प्रयोगे बहूनां यमामसम्भवात् । 'हलः' इति दिग्योगे पञ्चमी । परस्येति शेषः । **तदाह—हलः परस्य यम इत्यादिना ।** अनेन सूत्रेण उदाहरणद्वयेऽपि प्रथम-

---

१ 'मध्ये अचः परस्य' इति 'क' । २ 'अच्परकत्वाच्च द्वित्वमप्राप्तम्' इत्येव 'ख' ।

इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु ' आदित्यो

यकारस्य लोपे सति एकयकाररूपं संपद्यते । लोपाभावपक्षे तु द्वियकाररूपं संपद्यते । ननु हलो यमामिति सूत्रमेतदर्थं नारम्भणीयम् , अचो रहाभ्यामिति यकारद्वित्वस्य वैकल्पिकतया द्वित्वे सति द्वियकाररूपस्य, द्वित्वाभावे एकयकाररूपस्य च सिद्धेरित्याशङ्कय नास्य सूत्रस्यात्र प्रयोजनमित्याह—**इति लोपेति** । तर्हि किमस्य सूत्रस्य फलमित्यत आह—**लोपारम्भेति** । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इत्यादित्यशब्दात् शेषार्थण्यान्ताद् देवतार्थे ण्यः । आदित्य य इति स्थिते, 'यस्येति च' इति यकारादकारस्य लोपे तकाराद्यकारस्य अनेन सूत्रेण लोपः । तस्मिन् सत्येव आदित्यमित्येकयकारं रूपं सिध्यति, नान्यथा । अतः सूत्रारम्भो न विफल इति भावः । अत्र 'आपत्यस्य च तद्धितेऽनाति' इति लोपस्तु न, जाताद्यर्थकत्वेन आपत्यत्वाभावात् । अत्र त्वेतत् सूत्रं न्याय्यत्वादुपन्यस्तमिति भावः । नन्वेवमपि महात्मनो भाव इत्यर्थे 'गुणवचनब्राह्मणादिभ्यः ' इति ष्यञि टिलोपे आदिवृद्धौ माहात्म्यमित्यत्रापि तकारान्मकारस्य

'लिटि धातोः—' इति द्वित्वस्य तु नित्यत्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां लाघवात्प्रथमप्रवृत्तावेव विश्रान्तिकल्पनादनभ्यासग्रहणं प्रत्याख्यातम् । अत एव 'सर्वस्य द्वे' इत्यस्यापि न पुनः प्रवृत्तिरित्याहुः । नन्वत्र 'इकोऽसवर्णे—' इति शाकल्यमतेन रूपान्तरमस्त्विवति चेन्मैवम् , समासे तन्निषेधात् । न च नित्यसमास एव तन्निषेध इति वाच्यम् । 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इति वार्तिकस्थनित्यग्रहणस्य भाष्ये प्रत्याख्यातत्वात् । मनोरमायां तु जश्त्वेन दकारे कृते तस्य द्वित्वं नेत्याद्याशयेन सकारद्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेत्युक्तम् । **द्धिध्यमिति** । यद्यपि धस्य जश्त्वेन दकारे धद्वयं नास्ति, तथापि भूतपूर्वगतिमाश्रित्यैवमुक्तम् । **सुध्युपास्य इति** । 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः । नन्विह यणेव दुर्लभः, सुधीशब्दस्य ध्यायतेः संप्रसारणेन निष्पन्नत्वेन 'संप्रसारणाच्च' इति पूर्वरूपापत्तेरिति चेन्मैवम् । 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणम्' इति वार्तिकोक्तेः । न चैवमपि 'न भूसुधियोः' इति यणिनिषेधः शङ्क्यः । आङ्गत्वेन प्रत्यये परत एव तन्निषेधस्य प्रवृत्तेः । 'सुपि' इत्यनुवर्त्य सुपि परत एव यणिनषेधाच्च । **धात्रंश इति** । अत्र रेफस्य द्वित्वं न, द्वित्वप्रकरणे 'रहाभ्याम्' इति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधनात् । सुध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिको न बाध्यते ' तस्मादित्युत्तरस्य' 'वाय्वृतुपित्रुषसः—' इत्यादिनिर्देशाद् ज्ञापकात् । तकारस्य तु द्वित्वं भवत्येव । तच्च वेत्यतो रूपद्वयम् । **नादिन्या** । स्त्रीष्वाक्रोशः प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति—**पुत्रादिनीति** । इह 'सुप्यजातौ' इति णिनिः । **तत्परे चेति** । आदिनि यः पुत्रशब्दस्तस्मिन् परेऽपि पुत्रशब्दस्य न

देवता अस्येत्यादित्यं हविः ' इत्यादौ । ' यमां यमि ' इति यथासंख्यविज्ञानान्नेह। माहात्म्यम् । तादात्म्यम् । ६१ **एचोऽयवायावः** । (६-१-७८) एचः क्रमादय्

---

लोपः स्यात्, तस्य यम्त्वाद् यकाररूपयम्परकत्वाच्चेत्यत आह—**यमामिति । यथासंख्यविज्ञानादिति** । विज्ञायते अनेनेति विज्ञानं सूत्रम् । 'विज्ञानं शिल्पशास्त्रयोः' इत्यमरः । यथासंख्यसूत्रादित्यर्थः । तथा च मकारस्य मकारे परत एव लोपलाभाद् यकारे परे न लोप इत्यर्थः ।

**एचोऽयवायावः** । अय् च अव् च आय् च आव् चेति विग्रहः । इको यणचीत्यतोऽचीत्यनुवर्तते । यथासंख्यपरिभाषया एकारस्य अय्, ओकारस्य अव्, ऐकारस्य आय्, औकारस्य आव्, इति लभ्यते । तदाह—**एचः क्रमादिति** । यथासंख्यसूत्रभाष्यरीत्या तु अन्तरतमपरिभाषयैवात्र व्यवस्था ज्ञेया । इह इचोऽचि यणयवायाव इत्येव सूत्रयितुमुचितम् । एतेष्वादेशेषु यकारवकारयोर्हलन्त्यमिति इत्सं-

---

द्वे स्त इत्यर्थः । **वा हतेति** । द्वित्वस्य वैकल्पिकत्वे वार्तिकमिदं नारम्भणीयमित्येके । अन्ये तु हतजग्धयोः परतः पुत्रशब्दस्यैव 'अनचि च' इति द्वित्वं नान्येषामित्यादि नियमसंभवात् तदर्थमारम्भणीयमेवेदमित्याहुः । **पुत्रहतीति** । पुत्रो हतो यया सा । 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष् । एवं पुत्रो जग्धो यया सा पुत्रजग्धी । **अचो रहाभ्याम्** । अचः किम्, ह्नुते इत्यादौ नकारस्य माभूत् । **हलो यमां यमि** । हलः किम्, न्याय्यम् । इह यकारादीनां यकारादौ परे यथासंभवमुदाहरणान्युच्यन्ते । सुध्युपास्यः, मध्वरिः । अत्र यणो मय इति मयः परस्य यस्य वस्य च द्वित्वे कृते अनेन लोपः । दुर्लभः । दुर्न्नुड्डुवे । कुर्मः । अत्र तु 'अचो रहाभ्याम्—' इति लस्य नस्य मस्य च द्वित्वे कृते लोपः । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । अत्र 'अनचि च' इति ङमो द्वित्वे सत्यनेन ङकारणकारनकाराणां लोपः । **लोपः स्याद्वेति** । 'झयो हः—' इति सूत्रादन्यतरस्यामित्यनुवर्तत इति भावः । **लोपारम्भफलं तु-आदित्यो-देवतेति** । आदित्यशब्दाद् 'दित्यदित्या—' इति ण्यप्रत्यये 'यस्येति च' इत्यकारलोपे अनेन च यलोपे आदित्यमित्येकयकारकं रूपं सिध्यति, नान्यथेति भावः । न च 'आपत्यस्य च तद्धितेऽनाति' इत्यनेन यलोपे कृते एकयकारकं सिध्यतीति वाच्यम् । अदितौ जात आदित्य इत्यादिविवक्षायां तस्याप्रवृत्तेः । **यथासंख्यविज्ञानादिति** । उक्तोदाहरणेषु लोपारम्भफलाभावाद्रेफस्य रेफे परत उदाहरणाभावाच्च यथासंख्यसूत्रमिह नोपन्यस्तम् । **माहात्म्यमिति** । अत्र मलोपो नेत्यर्थः । 'हलो यरां यरि सवर्णे लोपः' इति तु न सूत्रितम् । मूर्ध्नः, शार्ङ्गमित्यादौ रेफात्परस्य लोपापत्तेः । **एचः क्रमादिति** । नन्वत्रैव यथासंख्यसूत्रं वक्तुमुचितम् । प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये

अव् आय् आव् एते स्युरचि । ६२ **तस्य लोपः** । (१-३-९) तस्येतो लोपः स्यात् । इति यवयोर्लोपो न । उच्चारणसामर्थ्यात् । एवं च इत्संज्ञापीह न भवति। हरये । विष्णवे । नायकः । पावकः । ६३ **वान्तो यि प्रत्यये** । (६-१-७९) यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गोर्विकारो गव्यम् । 'गोपय-

ज्ञायां लोपमाशङ्कितुमाह—**तस्य लोपः** । इत्संज्ञाप्रकरणान्ते इदं सूत्रम् । तत्र तच्छब्दः सन्निहितम् इतं परामृशति । तदाह—**तस्येत इति** । इत्यनेन सूत्रेण यवयोर्लोपो न शङ्कनीय इत्यर्थः । कुत इत्यत आह—**उच्चारणेति** । यद्यत्र यवयोर्लोपः स्यात्, तर्हि तयोः सूत्रे अनुच्चारणमेव स्यात्, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति भावः । तर्हि किमनयोरित्संज्ञयेत्यत आह—**एवं चेति** । उक्तप्रकारेण लोपाभावे सति इत्संज्ञापि इह यकारे वकारे च न भवति, फलाभावादित्यर्थः । क्रमेणो-दाहरति—**हरय इत्यादिना** । हरे ए, विष्णो ए, नै अकः, पौ अक इति स्थितेषु एकारादीनां क्रमादयादयः ।

**वान्तो यि प्रत्यये** । यि इति सप्तम्यन्तम् । तेन यकारादाविति लभ्यते, **यस्मिन्विधिस्तदादावल्ग्रहणे**[1] इति **वार्तिकात्** । तत्र यस्मिन्निति सप्तम्यन्तं विवक्षितम् । अलिति वर्णपर्यायः । सप्तम्यन्ते वर्णग्रहणे यो विधिः स तद्वर्णादौ ज्ञेय इति तदर्थः । येन विधिरित्यस्यायमपवादः । वकारः अन्ते यस्य स वान्तः । पूर्वसूत्रोपात्तः अवा-देश आवादेशश्च विवक्षितः । तौ च कयोर्भवत इत्याकाङ्क्षायां ओदौतोरित्यर्थाल्लभ्यते, पूर्वसूत्रे तयोरेव तदुभयस्थानित्वेन क्लृप्तत्वात् । तदाह—**यकारादावित्यादिना** । **गव्यमिति** । गो य इति स्थिते, ओकारस्य अच्परकत्वाभावाद् एचोऽयवायाव इत्य-

निरूढलक्षणाभ्युपगमेऽपि लक्ष्यार्थबोधात्पूर्वभावि शक्यार्थज्ञानमादाय यथासंख्यत्वस्या-वश्यं वक्तव्यत्वात् । अन्यथा एचां क्रमेणायवायावो न सिध्येरन् । मैवम् । अन्तरतम-त्वेनापि तत्सिद्धेः । तथा हि । एचः संध्यक्षराणि । ततश्च संवृताकारतालव्यस्य एकारस्य संवृताकारतालव्योऽय्, संवृताकारोष्ठ्यस्य ओकारस्य तादृश एव अव्, ऐचोश्चोत्तरभू-यस्त्वादैकारे इकारः अध्यर्धमात्रः, अकारस्त्वर्धमात्र एव । एवमौकारेऽप्युकारोऽध्यर्ध-मात्रः, अकारस्त्वर्धमात्रः, एवं च विवृताकारतालव्यस्य ऐकारस्य विवृताकारतालव्य आय् । विवृताकारौष्ठ्यस्य औकारस्य विवृताकारौष्ठ्य आव् । **वान्तो यि प्रत्यय इति** । यीति किम्, गोभ्याम् । नौभ्याम् । प्रत्यये किम्, गोयानम् । **यकारादा-विति** । 'येन विधिः—' इति सूत्रस्यापवादभूतेन 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्तिकेनायमर्थो लभ्यते । **ओदौतोरिति** । उपस्थितानुपस्थितयोरुपस्थितं बलीयः ।

[1] वार्तिककृदुक्ता वाचनिकी परिभाषेयमिति शब्देन्दुशेखरे ।

सोर्यत्' ( सू १२३८ ) नावा तार्यं नाव्यम्। 'नौवयोधर्म' ( सू १६४३ ) इत्यादिना यत्। 'गोर्यूतौ छन्दस्युपसंख्यानम्' ( वा ३५४३ ) 'अध्वपरिमाणे च' ( वा ३५४४ ) गव्यूतिः। 'ऊतियूति-' ( सू ३२७४ ) इत्यादिना यूति-

प्राप्ते अवादेशोऽत्र विधीयते। अस्ति चात्र य इत्यस्य प्रत्ययत्वमित्याह—**गोपयसो-र्यदिति**। अनेन सूत्रेण गोशब्दाद् विकारार्थे यत्प्रत्यय इति शेषः। **नाव्यमिति**। नौ य इति स्थिते, औकारस्य अच्परकत्वाऽभावाद् एचोऽयवायाव इति अप्राप्ते वचन-मिदम्। अस्ति चात्र य इत्यस्य प्रत्ययत्वमित्याह—**नौ वय इति**। गव्यं नाव्य-मित्यत्र लोपः शाकल्यस्येति हलि सर्वेषामिति च वकारस्य लोपो न भवति, तयोः पदा-न्तविषयत्वात्, इह च भत्वेन पदत्वबाधात्। **गोर्यूतौ छन्दस्युपसंख्यानम्**। छन्दसि वेदे यूतिशब्दे परे गोशब्दावयवस्य ओकारस्य स्थाने अव् इति वान्तादेशो भवतीति उपसंख्यानम् अधिकवचनं कर्तव्यमिति सूत्रकारः शिक्ष्यते। 'आ नो मित्रा-वरुणा घृतैर्गव्यूतिमुक्षतम्' इत्युदाहरणम्। गव्यूतिः—गोप्रचरभूमिः। गावो यूयन्ते-मिश्र्यन्तेऽस्यामित्यधिकरणे युधातोः क्तिन्निति वेदभाष्ये भट्टभास्करः। अत्र यूति-शब्दस्य प्रत्ययत्वाभावात्तस्मिन् परतः 'वान्तो यि प्रत्यये' इत्यप्राप्तौ वचनमिदम्। **अध्व-परिमाणे च**। मार्गपरिमाणविशेषे गम्येऽपि यूतिशब्दे परे गोशब्दावयवस्य ओका-रस्य अव् इति वान्तादेशस्य उपसंख्यानं कर्तव्यमित्यर्थः। लोकेऽपि प्राप्त्यर्थमिदम्। यद्यपि पूर्ववार्तिकं वैदिकप्रक्रियायामेव उपन्यसनीयम्, तथापि अनुवृत्तिबोधसौकर्या-र्थमिह तदुपन्यासः। **गव्यूतिरिति**। यावति गोशब्दः यूयते—मिश्र्यते—श्रूयते, तावानध्वा गव्यूतिः, क्रोशयुगम्। 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः। युधातोरधि-करणे क्तिन्। कथमिह युधातोर्दीर्घ इत्यत आह—**ऊतियूतीति**। निपातनादेव दीर्घ इति भावः। सिद्धप्रक्रियस्य निर्देशो निपातनम्।

ननु गव्यं नाव्यमित्यत्र भत्वेन पदत्वबाधाद् 'लोपः शाकल्यस्य' इति 'हलि सर्वेषाम्' इति च वलोपाभावेऽपि गव्यूतिरित्यत्र लोपः स्यात्, अन्तवर्तिनीं विभक्ति-माश्रित्य पदत्वात्, यूतिशब्दस्य यजादिस्वादिप्रत्ययत्वाभावेन तस्मिन् परतो भत्वा-

पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादिति भावः। **अध्वेति**। भाषार्थ-मिदम्। गोर्यूतौ लोकेऽपि वान्तादेशः स्यात्समुदायेनाध्वनः परिमाणं गम्यते चेदित्यर्थः। 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः। **निपातित इति**। क्तिन्नन्तत्वेनेत्यर्थः। ननु गव्यं नाव्यमित्यत्र भत्वेनापदत्वाद्वलोपाभावेऽपि गव्यूतिरित्यत्र 'हलि सर्वेषाम्' इति, 'लोपः शाकल्यस्य' इति वा लोपः स्यादत आह—**वान्त इत्यत्रेति**। **वकारो न लुप्यत इति**। एवं च 'हलि सर्वेषाम्' इति सूत्रे 'व्योः' इत्यनुवृत्तावपि वकारं परित्य-

शब्दो निपातितः। 'वान्तः' इत्यत्र वकारात् 'गोर्यूतौ' इत्यत्र छकाराद्वा पूर्वभागे 'लोपो व्योः' (सू० ८७३) इति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्यत इति यावत्। **६४ धातोस्तन्निमित्तस्यैव।** (६-१-८०) यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि

---

भा ेत्यत आह—**वान्त इत्यत्रेत्यादि।** 'वान्तो यि प्रत्यये' इत्यत्र वकाराद् 'गोर्यूतौ' इत्यत्र छकाराद्वा पूर्वभागे वकारः प्रश्लिष्यत इत्यन्वयः। तर्हि व् वान्त इति, व् छन्दसीति च वकारः कुतो न श्रूयत इत्यत आह—**लोपो व्योरिति लोपेनेति।** अन्तर्हित इति शेषः। ननु प्रश्लेषे सति किमायातमित्यत आह—**तेनेति।** वान्तो यीति सूत्रे वकारात् प्राग् व् इति प्रश्लिष्यमाणं वान्तस्य विशेषणम्, विशेषणत्वाच्च तदन्तविधौ सति वकारान्त इति लभ्यते। तत्र वान्तस्य पुनर्वान्तत्ववचनसामर्थ्यात् श्रूयमाणवकारवान् वान्त आदेशः स्यादिति लभ्यते। गोर्यूताविलत्र च इदमेव वान्तग्रहणमनुवर्तत इति तत्रापि श्रूयमाणवकारवान् वान्तादेश इति लभ्यते। गोर्यूतावित्यत्र छकारात् प्राग् व् इति प्रश्लिष्यमाणमपि पूर्वसूत्रादनुवृत्तस्य वान्त इत्यस्य विशेषणमिति तदन्तविधिना वान्तत्वलाभे वान्तस्य पुनर्वान्तत्ववचनसामर्थ्यात् श्रूयमाणवकारवान् इति लभ्यत इत्यर्थः। नन्वेतावता गव्यूतिरित्यत्र अवादेशे वकारस्य श्रूयमाणत्वलाभेऽपि लोपशङ्का न परिहृतेत्यत आह—**वकारो न लुप्यत इति यावदिति।** वकारस्य श्रूयमाणत्ववचनं वकारो न लुप्यत इत्यर्थे पर्यवसन्नमित्यर्थः, अश्रवणस्यैव लोपशब्दार्थत्वादिति भावः। यद्यपि वान्तो यीति सूत्रे वकारप्रश्लेषस्य तदुदाहरणे गव्यं नाव्यमित्यत्र प्रयोजनं नास्ति, तत्र भत्वेन पदत्वस्य बाधेन उक्तलोपस्याप्राप्तेः। लव्यमित्यादौ स्वत एव पदत्वाभावाल्लोपस्याप्राप्तिः। गामिच्छति गव्यतीत्यत्र क्यजन्तेऽपि वकारस्य न लोपप्रसक्तिः, 'नः क्ये' इति नियमेन तत्र पदत्वाभावात्। तथापि गोर्यूताविति वार्तिके तदनुवृत्तौ गव्यूतिरित्यत्र प्रयोजनमस्त्येव। एवं च वार्तिक एव तत्प्रश्लेष उचितः। एतस्मादेवास्वरसात् छकाराद्वेत्युक्तम्। वस्तुतस्तु वकारप्रश्लेषोऽनुपपन्नः, तथा सति सूत्रे वार्तिके च प्रश्लिष्टस्य श्रवणप्रसङ्गात्। न च लोपो व्योरिति लोपात्तदश्रवणमिति वाच्यम्, वकारलोपस्य उदाहरणाभावाद्वकारग्रहणं न कर्तव्यमिति लोपो व्योरिति सूत्रस्थभाष्यविरोधात्। अतोऽत्र प्रश्लिष्टवकारस्य छान्दस एव लोपो वर्णनीयः। प्रक्रियाप्रकाशे तु 'संज्ञापूर्वको विधिरनित्यः' इति वचनाद् गव्यूतिरित्यत्र

---

ज्य यस्य लोपः स्यादिति व्याख्यास्यमानं संगच्छते। एतच्च तत्रैव स्फुटीकरिष्यते। **धातोस्तन्निमित्तस्यैव।** पूर्वेण सिद्धे नियमार्थमिदम्। अत्र पूर्वसूत्रमनुवर्तते, एच इति च। तच्छब्देन यादिप्रत्ययः परामृश्यते योग्यत्वाद्, न तु संनिहितोऽपि धातुः। **न हि**

तन्निमित्तस्यैव। लव्यम्। अवश्यलाव्यम्। 'तन्निमित्तस्यैव' इति किम्। ओयते। औयत। ६५ क्षय्यजय्यौ शक्यार्थे। ( ६-१-८१ ) यान्तादेशनिपातनार्थ-

---

न वकारलोप इत्युक्तम्। अन्ये तु 'इको गुणवृद्धी' इति सूत्रे 'अतो ल्रान्तस्य' इत्यत्र लुप्तनिर्दिष्टो वकार इति भाष्यप्रामाण्यात् क्वचिदस्ति वकारलोप इत्याहुः।

ननु ओयते औयत इत्यत्रापि ओकारस्य औकारस्य च 'वान्तो यि' इति वान्तादेशः स्यादित्याशङ्क्य वान्तो यीति सूत्रं नियमयति—**धातोस्तन्निमित्तस्यैव।** एच इति, वन्तो यि प्रत्यये, इति चानुवर्तते। सः–यादिप्रत्ययो निमित्तं यस्य स तन्निमित्तः। यादिप्रत्यये परे धातोरेचो भवन् वान्तादेशः यादिप्रत्ययनिमित्तकस्यैव एचो भवति नान्यस्येत्यर्थः। तदाह—**यादौ प्रत्यय इत्यादिना। लव्यमिति।** लूञ् छेदने, अचो यत्। सार्वधातुकार्धधातुकयोरित्यूकारस्य गुण ओकारः। तस्य धात्ववयवत्वाद् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशः। **अवश्यलाव्यमिति।** 'ओरावश्यके' इति लूञो ण्यत्। 'अचो ञ्णिति' इत्यूकारस्य वृद्धिः–औकारः। अवश्यमित्यव्ययम्। मयूरव्यंसकादित्वात्समासः। 'लुम्पेदवश्यमः कृत्ये' इति मलोपः। अत्र औकारस्य धात्ववयवत्वाद् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशः। ननु लव्यमवश्यलाव्यमित्यत्र 'वान्तो यि' इत्येव वान्तादेशः सिद्धः, अतस्तन्निमित्तस्यैवेति नियमार्थमिदं सूत्रमिति स्थितिः। तन्नियमविधेः किं प्रयोजनमिति पृच्छति—**तन्निमित्तस्यैवेति किमिति।** नियमस्य किं प्रयोजनमित्यर्थः। **ओयते इति।** वेञ् तन्तुसन्ताने, कर्मणि लट्, 'भावकर्मणोः' इत्यात्मनेपदम्, यक्, 'वचिस्वपियजादीनाम्' इति वकारस्य संप्रसारणम् उकारः, पूर्वरूपम्, अकृत्सार्वधातुकयोरित्युकारस्य दीर्घः। आङा सह उकारस्य 'आद्गुणः' इति गुण ओकारः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावाद् न वान्तादेशः। नन्वत्र न धातुलोपसूत्रस्थभाष्यरीत्या 'आद्गुणः' इति गुणस्य ओकारस्य पदद्वयापेक्षत्वेन बहिरङ्गतया वान्तादेशे कर्तव्ये असिद्धत्वादोकाराभावान्न वान्तादेशप्रसक्तिरित्यस्वरसादाह—**औयतेति।** वेञः केवलात् कर्मणि

---

स्वावयवस्यैचः स्वयं निमित्तं भवति। एवकारस्त्विष्टतोऽवधारणार्थः। अन्यथा हि तन्निमित्तस्यैचो यदि भवति तर्हि धातोरेवेति विपरीतनियमः संभाव्येत। ततश्च बाभ्रव्य इत्यत्र न स्यात्। धातोस्त्वतन्निमित्तस्यापि स्यादोयते इत्यादौ, तदेतत्सकलमभिप्रेत्याह—**यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेश** इत्यादि। **लव्यमिति।** लुनातेरचो यत्, 'सार्वधातुकार्धधातुकयोः' इति गुणः। **अवश्यलाव्यमिति।**

---

१ 'लुम्पेदवश्यमः कृत्ये तुं–काममनसोरपि। समो वा हिततततयोर्मासस्य पचि–युङ्घञोः।' इति प्राचीनवैयाकरणसिद्धा कारिका।

मिदम्। चेतुं शक्यं क्षय्यम्। जेतुं शक्यं जय्यम्। 'शक्यार्थे' किम्। चेतुं जेतुं

लङ्। आत्मनेपदादि पूर्ववत्। 'आडजादीनाम्' इत्याट्। 'आटश्च' इति वृद्धिः औकारः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावान्न वान्तादेशः। नात्र वृद्धेर्बहिरङ्गत्वम्, पदद्वयापेक्षत्वाभावात्। 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन नियमविधिसिद्धेः तन्निमित्तस्यैवेत्येवकारस्तु विपरीतनियमव्यावृत्त्यर्थः। एवकाराभावे हि यादिप्रत्ययनिमित्तकस्य चेदेचो वान्तादेशः, तर्हि धातोरेवैच इत्यपि नियमः प्रतीयेत। तथा च बाभ्रव्य इत्यत्र वान्तादेशो न स्यात्। बभ्रोरपत्यं बाभ्रव्यः, 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति यञ्। 'ओर्गुणः' इत्युकारस्य गुण ओकारः। तस्य यादिप्रत्ययनिमित्तकस्य धात्ववयवत्वाभावाद् वान्तादेशो न स्यात्। अत इष्टनियमावधारणार्थं तन्निमित्तस्यैवेत्येवकारः।

**क्षय्यजय्यौ शक्यार्थे।** शक्यार्थे क्षय्यजय्यशब्दौ वाचकतया वर्तेते इत्यर्थः। ननु किमपि कार्यं विधेयमत्र न दृश्यत इत्यत आह—**यान्तेति**। प्रातिस्विकविधिं विना सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशो निपातनम्। ततश्च शक्यार्थके यादौ प्रत्यये परे 'क्षि क्षये' 'जि जये' इति धात्वोरेचः अय् इति यान्तादेशः स्यादिति विधानमत्र फलति। शक्यार्थे क्षिज्योर्यान्त इति प्रातिस्विकविधौ गौरवादेवं निपातनमिति भावः। **क्षय्यमिति।** कृत्या इत्यधिकारे क्षिधातोरचो यदिति यत्प्रत्ययः। स च 'शकि लिङ् च' इति शक्यार्थः। शक्यार्थे लिङ् स्यात्, चात् कृत्या इति तदर्थः। सार्वधातुकार्धधातुकयोरिति इकारस्य गुण एकारः। तस्याच्परकत्वाभावादप्राप्तः अयादेशः अत्र निपात्यते। जय्यमित्यपि पूर्ववत्। **शक्यार्थे किमिति।** शक्यार्थे इत्यस्य किं प्रयोजनमिति प्रश्नः। **क्षेतुमित्यादि।** क्षेतुं योग्यं क्षेयं पापम्, जेतुं योग्यं जेयं मन इत्यन्वयः। अर्हे कृत्यतृचश्चेति यत्। स च न शक्यार्थक इति नात्र यान्तादेश इत्यर्थः। **क्रय्यस्तदर्थे।** इदमपि यान्तादेशनिपातनार्थम्। तदर्थ-

'ओरावश्यके' इति ण्यत्। 'मयूरव्यंसकादयश्च' इति समासः। 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः। लव्यमित्यादौ पूर्वसूत्रेणैव सिद्धे नियमसूत्रमिदं व्यर्थमित्याक्षिपति—**तन्निमित्तस्यैवेति किमिति।** एकदेशाक्षेपेऽपि सूत्रस्यैवायमाक्षेपः पर्यवसन्नः। **ओयत इति।** आङ्पूर्वाद् वेञः कर्मणि लट्; यगात्मनेपदे, यजादित्वात्संप्रसारणम्। पूर्वरूपम्। 'अकृत्—' इति दीर्घः। आद्गुणस्य परादिवद्भावेन धातोरेच्त्वेऽपि यादिप्रत्ययनिमित्तकत्वं नास्तीति भावः। **औयत इति।** वेञः कर्मणि लङ्, यगादि प्राग्वत्। 'आडजादीनाम्' 'आटश्च' इति वृद्धिः। **क्षय्यमिति।** 'शकि लिङ् च' इति

१ 'नियमार्थम्' इति 'क'।

योग्यं जेयं पापं जेयं मनः । ६६ क्रय्यस्तदर्थे । (६-१-८२) तस्मै प्रकृत्यर्थायेदं तदर्थम् । क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः । ६७ लोपः शाकल्यस्य । (८-३-१९) अवर्णपूर्वयोः पदा-

---

शब्दं व्याचष्टे—तस्मा इति । क्रय्यशब्दे यः क्रीञ्धातुः यत्प्रत्ययप्रकृतिभूतः, तस्य योऽर्थः अभिधेयः—द्रव्यविनिमयरूपः क्रयः, स प्रकृत्यर्थः तच्छब्देन विवक्षितः। तस्मै इदं तदर्थं क्रयार्थं वस्तु । तथा च क्रयार्थे वस्तुनि गम्ये क्रीञ्धातोर्यादौ प्रत्यये परे इति फलति । यान्तः क्रीञस्तदर्थे इति विधौ गौरवाच्चिपातनमाश्रितम् । क्रयार्थत्वं चात्र फलोपधायकं विवक्षितमित्याह—क्रेतार इत्यादि क्रय्यमित्यन्तम् । योग्यतामात्रग्रहणे तु तदर्थे इत्यव्यावर्तकं स्यादिति भावः । क्रीञः कर्मणि 'अचो यत्' इति यत् । सार्वधातुकेति गुण एकारः । अत्र एकारस्य अच्परकत्वाभावादनेन अयादेशविधिः । क्रेयमन्यदिति । गृहादौ भोजनाद्यर्थं संगृहीतं धान्यादीत्यर्थः । 'अर्हे कृत्यतृचश्च' इति यत्, अत्र अयादेशो न भवति, फलोपधानस्य क्रयार्थत्वस्य तत्राभावादित्यर्थः ।

हरे एहि, विष्णो इह, श्रियै उद्यतः, गुरौ उत्कः इत्यत्र एचां क्रमेण अयवायावादेशेषु कृतेषु यकारवकारयोर्वैकल्पिकं लोपं विधत्ते—लोपः शाकल्यस्य । 'भो भगो' इत्यतः अपूर्वस्येति अशीति चानुवर्तते । 'व्योर्लघुप्रयत्न' इत्यतो व्योरित्यनुवर्तते । वकारयकारयोरित्यर्थः । अपूर्वस्येति च व्योरित्यस्य विशेषणम् । अवर्णः पूर्वः यस्मात् सः अपूर्वः । अपूर्वस्य वस्य यस्य चेति प्रत्येकमन्वयाभिप्रायमेकवचनम् । पदस्येत्यधिकृतम् अवर्णपूर्वकाभ्यां यकारवकाराभ्यां विशेष्यते । विशेषणत्वाच्च व्योरिति तदन्तता लभ्यते । ततश्च अवर्णपूर्वो यः वकारो यकारश्च तदन्तपदस्य लोपः स्याद् अशि परत इत्यर्थः । अलोऽन्त्यपरिभाषया तादृशपदान्तस्येति लभ्यते । शाकल्यग्रहणान्मतान्तरे न भवतीति गम्यते । ततश्च फलितमाह—अवर्णपूर्वयोरित्यादिना । व्योरित्यनुक्रान्तावपि वर्णसमाम्नाये यकारस्य प्राथम्याद् यवयोरित्युक्तम् । न च शाकल्यवंश्यानामेव पुरुषाणामेतल्लोपानुसरणं नान्येषामिति पुरुषभेदेन व्यवस्थार्थमेव शाकल्यग्रहणं कुतो न स्यादिति वाच्यम्, 'न वेति विभाषा' इति सूत्रभाष्ये आचार्यदेशशीलने[1] च तद्विषयतेति प्रस्तुत्य 'इको ह्रस्वो ङ्यो गालवस्य' 'प्राचामवृद्धात्' इत्यादौ गालवाद्याचार्यग्रहणं प्राचामुदीचामित्यादिदेशविशेषग्रहणं च अविशे-

---

यत्, चात्कृत्याः । क्रेयमिति । 'अर्हे कृत्यतृचश्च' इति यत् । प्रकृत्यर्थायेति । प्रकृत्यर्थो द्रव्यविनिमयः । लोपः शाकल्यस्य । अवर्णपूर्वयोः किम्, दध्यत्र ।

---

1 'शीलेन' इति 'क'

न्तयोर्वयोर्वा लोपोऽशि परे । 'पूर्वत्रासिद्धम्' ( सू० १२ ) इति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः । हर एहि–हरयेहि । विष्ण इह–विष्णविह । श्रिया उद्यतः–श्रियायुद्यतः । गुरा उत्कः–गुरावुत्कः । 'कानि सन्ति' 'कौ स्तः' इत्यत्रास्तेरल्लोपस्य स्थानिवद्भावेन यणावादेशौ प्राप्तौ 'न पदान्त' ( सू. ४१ )

---

षेण विकल्पार्थमेव, न तु तत्तदुद्देश्यतत्तद्देशभेदेन प्रयोगव्यवस्थार्थमिति सिद्धान्तितत्वात् । ननु हरे एहीत्यत्र अयादेशे यकारस्य लोपे सति 'ओमाङोश्च' इति पररूपं स्यात्, विष्णो इह, श्रियै उद्यतः, गुरौ उत्कः इत्यत्र अवायावादेशेषु वकारयकारलोपे 'आद्गुणः' इति गुणः स्यादित्यत आह—**पूर्वत्रेति** । वकारयकारयोर्लोपस्यासिद्धत्वेन ताभ्यां व्यवहिततया अच्परकत्वाभावादाशङ्कितः अच्सन्धिर्न भवतीत्यर्थः ।

तदेवमिक्सन्धिरेच्सन्धिश्च निरूपितः । तदुभयत्रातिप्रसङ्गमाशङ्क्य समाधत्ते—**कानीत्यादिना** । यद्यपि तथापीत्यध्याहार्यम् । कानि सन्ति, कौ स्तः—इत्यत्र यद्यपि यणावादेशौ प्राप्तौ, तथापि न भवत इत्यन्वयः । नन्वत्र इकारौकारयोः सकारपरकत्वादच्परकत्वाभावात् कथं यणावोः प्राप्तिरित्यत आह—**अस्तेरल्लोपस्य स्थानिवद्भावेनेति** । अस्धातोरादादिकाल्लटि प्रथमपुरुषबहुवचने सन्तीति रूपम् । प्रथमपुरुषद्विवचने तु 'स्तः' इति रूपम् । उभयत्रापि 'श्नसोरल्लोपः' इति धात्वादेरकारस्य लोप इति स्थितिः । तत्र अल्लोपस्य स्थानिवत्त्वेनाच्त्वादिकारौकारयोरच्परकत्वाद्यणावादेशौ प्राप्नुत इत्यर्थः । न च 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावोऽत्र न सम्भवति, अल्लोपस्य स्थानिभूतो यः अकारः तं परं निमित्तत्वेनाश्रित्य प्रवर्तमानयोर्यणावादेशविध्योः स्थान्यलाश्रयत्वादिति वाच्यम्, 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावोपपत्तेः । अल्लोपस्य क्ङिति परे विधीयमानस्य परनिमित्तकाजादेशतया तत्स्थानीभूतादकारात्[1] पूर्वत्वेन दृष्टयोरिकारौकारयोर्यणावादेशविधौ 'अचः परस्मिन्–' इति प्रवृत्तेरिति भावः । तर्हि कुतोऽत्र यणावादेशौ न भवत इत्यत

---

मध्वत्र । **अशि पर इति** । एतच्च 'भोभगो—' इति सूत्रादनुवर्तते । अशि किम्, वृक्षव् करोति । अत्र लोपो मा भूत् । न चात्र टिलोपस्य स्थानिवद्भावेन निर्वाहः । 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यभ्युपगमात् । न चैवमपि 'हलि सर्वेषाम्' इति नित्यं लोपः स्यादिति शङ्क्यम् । तत्र 'अशि' इत्यनुवर्त्य अशा हलो विशेषणात् । 'लोपो व्योर्वलि' इति लोपस्तु न शङ्कनीय एव । स्थानिवत्त्वान्नेति 'न पदान्त—' इति सूत्र एवोक्तत्वात् । **हर एहीति** । 'ओमाङोश्च' इति पररूपं प्राप्तम् । **तन्निषेधादिति** । न च स्थानिवत्त्वनिषेधेऽपि 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यल्लोपस्यासिद्धत्वाद्यणावादेशौ

---

१ 'परनिमित्तत्वेन' इति 'क' 'ख' । २ वाक्यसंस्कारपक्षे—इति शेषो योज्यः ।

इति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः। ६८ एकः पूर्वपरयोः। (६-१-८४) इत्यधिकृत्य। ६९ आद् गुणः। (६-१-८७) अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्संहितायाम्। उपेन्द्रः। रमेशः। गङ्गोदकम्। ७० उरण् रपरः। (१-१-५१) 'ऋ इति त्रिंशतः संज्ञा' इत्युक्तम्, तत्स्थाने योऽण् स रपरः

---

आह—**न पदान्तेति सूत्रेण पदान्तविधौ तन्निषेधादिति**। पदान्तभूतकारौकारयोः स्थाने भवतोर्यणावादेशयोः पदचरमावयवतया तयोः कर्तव्ययोः परनिमित्तकस्याजादेशस्याल्लोपस्य स्थानिवत्त्वनिषेधादित्यर्थः।

अथ एकादेशसन्धिं निरूपयितुमाह—**एकः पूर्वपरयोः। इत्यधिकृत्येति**। पदद्वयात्मकमिदं सूत्रम् उत्तरत्रानुवृत्त्यर्थं पठित्वा कतिपयसन्धयो विधास्यन्त इत्यर्थः। **आद् गुणः**। आदिति पञ्चमी, न तु तपरकरणम्। एकः पूर्वपरयोरित्यधिकृतम्। तदाह—**अवर्णादचीत्यादिना**। **उपेन्द्र इति**। उप इन्द्र इति स्थिते पकाराद् अकारस्य तस्मादिकारस्य च पूर्वपरयोः कण्ठतालुस्थानकयोः तथाविध एको गुण एकारः, आन्तरतम्यात्। अथ प्रत्याहारेषु स्ववाच्यवाच्येषूक्तां लक्षणां स्मारयितुं दीर्घविषयोदाहरणमाह—**रमेश इति**। रमा ईश इति स्थिते, आकारस्य ईकारस्य च स्थाने पूर्ववदेको गुण एकारः। **गङ्गोदकमिति**। गङ्गा उदकमिति स्थिते, आकारस्य उकारस्य च कण्ठोष्ठस्थानकयोः तथाविध एको गुण ओकारः। कृष्णर्द्धिरित्यत्र कृष्ण ऋद्धिरिति स्थिते, आद् गुण इति प्राप्तम्। अत्र अकार ऋकारश्चेति द्वौ स्थानिनौ, तयोः अकार एकार ओकारश्चेति त्रयोऽपि गुणाः प्रसक्ताः, अकारेण स्थानिना त्रयाणामपि कण्ठस्थानसाम्याविशेषात्। ऋकारेण स्थानिना तु न कस्यापि स्थानसाम्यम्, तस्य मूर्धस्थानकत्वात्, एतेषां च तदभावात्। एवं तव ऌकार इति स्थिते त्रयो गुणाः प्रसक्ताः, अकारेण तेषां कण्ठस्थानसाम्याविशेषात्। ऌकारेण तु स्थानिना न कस्यापि स्थानसाम्यम्, तत्र कतमो गुणो भवतीत्याकाङ्क्षायामिदमारभ्यते—**उरण् रपरः**। **इत्युक्तमिति**। अणुदित्सूत्र इति शेषः। उः इति ऋ इत्यस्य षष्ठ्येकवचनम्। 'षष्ठी स्थाने' इति परिभाषया स्थाने इति लभ्यते। अनुवादे तत्परिभाषानुपस्थितावपि स्था-

---

स्त एवेति वाच्यम्। पदद्वयाश्रयत्वेन तयोरेव बहिरङ्गत्वात्। 'नाजानन्तर्ये' इति निषेधाच्च। **उरण् रपरः**। अनुवादे 'षष्ठी स्थानेयोगा' इति परिभाषाया अनुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्तत इत्याशयेनाह—**तत्स्थाने योऽणिति**। 'स्थानेऽन्तरतमः' इत्यतोऽपि स्थानेग्रहणमिहानुवर्तते। तेन प्रसङ्गावस्थायामेवाण् रपरो भवति। तदेतद्व्याचष्टे—**रपरः सन्नेव प्रवर्तत इति**। उः किम्, 'ईद्यति' गेयम्, देयम्। अण् किम्। रीङादीनां रपत्वं मा भूत्। 'रीङृतः' मात्रीयति। रिङ् क्रियते।

सर्वत्र प्रवर्तते। तत्रान्तरतम्यात् 'कृष्णर्द्धिः' इत्यत्र अर्। 'तवल्कारः' इत्यत्र अल्। अचो रहाभ्याम्-(सू ५१) इति पक्षे द्वित्वम्। **७१ झरो झरि सवर्णे।** (८-४-६५) हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि। द्वित्वाभावे लोपे

---

नेग्रहणं तनोऽनुवर्तते। तदाह—**तत्स्थाने योऽणिति**। 'स्थानेऽन्तरतमः' इत्यतोऽपि स्थानेग्रहणमनुवर्तते। स्थानं प्रसङ्ग इत्युक्तम्। प्रसङ्गावस्थायामित्यर्थो विवक्षितः। तदाह—**रपरः सर्वत्र प्रवर्तत इति**। अत्र र इति प्रत्याहारो विवक्षितः। ततश्च रेफशिरस्को लकारशिरस्कश्च प्रवर्तत इति लभ्यते। तयोर्व्यवस्थां दर्शयति—**तत्रेति**। रेफलकारशिरस्कयोर्मध्ये कृष्णर्द्धिरित्यत्र अर्, तवल्कार इत्यत्र अलित्यन्वयः। कुत इयं व्यवस्थेत्यत आह—**आन्तरतम्यादिति**। त्रिषु गुणेषु प्रसज्यमानेषु अकारस्य अणो रेफलकारशिरस्कतया तस्य अर्-अल् इत्येवमात्मकस्य अकारांशे स्थानिभूतेन अकारेण, रेफांशे ऋकारेण, लकारांशे लृकारेण च स्थानसाम्यादकारऋकारयोः स्थाने अरेव भवति, अकारलृकारयोः स्थाने अलेव भवति। एकारौकारौ तु गुणौ न भवत एव, तयोः ऋकारेण लृकारेण च स्थानसाम्याभावादित्यर्थः। नच एकार ओकारश्च कथं रपरौ न स्यातामिति वाच्यम्, पूर्वेणैव णकारेण ह्यत्राण् गृह्यते, प्रशास्तॄणामित्यादिनिर्देशादित्यलम्। **पक्षे द्वित्वमिति**। 'ऋध्' धातोः क्तिनि झषस्तथोरिति तकारस्य धत्वे ऋद्धिगिति द्विधकारं रूपं स्वाभाविकम्। तत्र अरादेशे रेफात् परस्य धकारस्य 'अचो रहाभ्याम्' इति कदाचिद् द्वित्वमित्यर्थः। **झरो झरि सवर्णे।** 'झयो होऽन्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवर्तते। 'हलो यमाम्' इत्यतो हल इति, लोप इति चानुवर्तते। तदाह—**हलः परस्येत्यादिना**। तदिह रूपत्रयं संपन्नमित्याह—**द्वित्वाभाव इत्यादिना**। रेफात् परस्य ऋध इति धात्वन्तस्य धकारस्य 'अचो रहाभ्याम्' इति द्वित्वाभावे सति 'झरो झरि' इति लोपे च सति एकधकारं रूपमित्यर्थः। **असतीति**। द्वित्वाभावे इत्यनुकृष्यते। तस्यैव ऋधेर्धकारस्य द्वित्वाभावे लोपे च असति द्विधकारं रूपम्। तथा तस्यैव ऋधेर्धकारस्य द्वित्वे लोपे च सति द्विधकारमेव रूपमित्यर्थः। **सतीति**। तस्यैव ऋधेर्धकारस्य द्वित्वे सति लोपे

---

**आन्तरतम्यादिति**। रेफशिरस्कस्य अरित्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः। **पक्षे द्वित्वमिति**। ऋधेर्धस्येति भावः। **झरो झरि**। 'हलो यमाम्—' इत्यतो हल इत्यनुवर्तते तदाह—**हलः परस्येति**। हलः किम्। प्रत्तम्। झर इति किम्। शार्ङ्गम्। झरीति किम्। प्रियपञ्चाम्। अल्लोपोऽत्र पूर्वत्रासिद्धे स्थानिवन्न भवतीति चकारस्य ञकारे परे लोपः स्यात्। सवर्णे इति किम्। तर्प्ता। सवर्णग्रहणसामर्थ्याद्यथासंख्यमत्र न भवति। तेन शिण्ढीत्यत्र डस्य विकल्पेन लोपः सिध्यतीति

सत्येकधम्। असति लोपे, द्वित्वलोपयोर्वा द्विधम्। सति द्वित्वे लोपे चासति त्रिधम्। कृष्णर्धिः—कृष्णर्द्धिः—कृष्णर्द्द्धिः। 'यण इति पञ्चमी मय इति षष्ठी' इति पक्षे ककारस्य द्वित्वम्। लस्य तु 'अनचि च' ( सू ४८ ) इति। तेन 'तवल्कारः' इत्यत्र रूपचतुष्टयम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्॥

७२ **वृद्धिरेचि**। ( ६-१-८८ ) आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्। ७३ **एत्येध-**

---

च असति त्रिधकारं रूपमित्यर्थः। यद्यपि द्विधपक्षे प्रथमधकारस्य त्रिधपक्षे मध्यमधकारस्य च 'झलाञ्जश् झशि' इति जश्त्वेन दकारो भवति, तथापि प्रक्रियाभिप्रायेण भूतपूर्वगत्या वा द्विधत्वं त्रिधत्वं चेति न दोषः। अथ तवल्कार इत्यत्राह—**यण इति**। यणः परस्य मयो द्वित्वमिति व्याख्याने ककारस्य द्वित्वम्, लकारस्य तु 'अनचि च' इति द्वित्वमित्यर्थः। **तेनेति**। लकारककारयोर्द्वित्वविकल्पेनेत्यर्थः। **द्वित्वं लस्यैवेति**। लकारस्य द्वित्वे ककारस्य द्वित्वाभावे च सति द्विलकारमेकककारं च प्रथमं रूपमित्यर्थः। **कस्यैवेति**। ककारस्य द्वित्वे लकारस्य द्वित्वाभावे द्विककारमेकलकारं च द्वितीयं रूपमित्यर्थः। **नोभयोरिति**। लकारककारयोरुभयोरपि द्वित्वाभावे एकलकारमेकककारं तृतीयं रूपमित्यर्थः। **उभयोरपीति**। लकारककारयोरुभयोरपि द्वित्वे द्विलकारं द्विककारं चतुर्थं रूपमित्यर्थः। **तवल्कारादिष्विति**। आदिना ममल्कारादिसंग्रहः।

**वृद्धिरेचि**। 'आद् गुणः' इत्यत आदिति पञ्चम्यन्तमनुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। तदाह—**आदेचीत्यादिना**। **गुणापवाद इति**। 'आद्गुणः' इति प्राप्तावेतदारम्भादिति भावः।[1] **कृष्णैकत्वमिति**। कृष्णस्य एकत्वमिति षष्ठीसमासः। 'पूरणगुण' इति निषेधस्त्वनित्य इति तत्रैव मूले वक्ष्यते। कृष्णेति

---

दिक्। **लोपो वेति**। 'झयो हः—' इति सूत्रादन्यतरस्यामित्यनुवृत्तेः। **असति लोप इति**। द्वित्वाभावे इत्यनुषज्यते। द्वित्वलोपयोरसतोरित्यर्थः। **त्रिधमिति**। 'यणो मयः' इति लक्षणान्तरेण पुनर्द्वित्वे चतुर्धमिति बोध्यम्। **वृद्धिरेचि**। पूर्वसूत्रादादित्यनुवर्तते तदाह—**आदेचीति**। **कृष्णैकत्वमिति**। कृष्णेति संबोधने पृथक् पदम्। एवं देवेत्यपि। इत्थं चात्र षष्ठीसमासत्वमभ्युपेत्य 'पूरणगुण—' इति निषेधमाशङ्क्य 'संज्ञाप्रमाणत्वात्' इत्यादिनिर्देशेन 'गुणेन निषेधोऽनित्यः' इति केषांचिद् व्या-

---

१ 'आरम्भ इति भावः' इति 'क'।

त्यूठ्सु । ( ६-१-८९ ) अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । 'एजाद्योः' किम्, उपेतः । मा

---

सम्बुद्ध्यन्तं पृथक्पदमित्यन्ये । अत्र अकारस्य एकारस्य च कण्ठतालुस्थानकस्य स्थाने तथाविध ऐकार एकादेशः । गङ्गा ओघ इति स्थिते, आकारस्य ओकारस्य च कण्ठोष्ठ-स्थानकस्य स्थाने तथाविध औकारः । एवं देवैश्वर्यम्, कृष्णौत्कण्ठ्यमित्यत्रापि । वस्तुतस्तु संख्यादिशब्दा न गुणवचना इति तत्रैव वक्ष्यामः । **एत्येधत्यूठ्सु ।** एतिश्च एधतिश्च ऊठ् चेति विग्रहः । एतीति एधतीति च 'इक्श्तिपौ धातुनिर्देशे' इति श्तिपा निर्देशः । 'इण् गतौ' इति, 'एध् वृद्धौ' इति च धातू विवक्षितौ । एची-त्यनुवर्तते । 'यस्मिन्विधिः' इति तदादिग्रहणम्, एजादाविति लभ्यते, तच्च एत्येध-त्योरेव विशेषणम्, न तु ऊठः, असंभवात् । एकः पूर्वपरयोरित्यधिकृतम् । आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते । तदाह—**अवर्णादित्यादिना । उपैतीति ।** इण्धातोर्लट्, तिप्, शप्, लुक्, 'सार्वधातुक—' इति इकारस्य गुण एकारः । उप एतीति स्थिते अनेन वृद्धिः । **उपैधत इति ।** एध्धातोर्लट्, आत्मनेपदं तादेशः, शप् । 'टित आत्मनेपदानाम्—' इत्येत्वम् । उप एधते—इति स्थिते अनेन वृद्धिः । **प्रष्ठौह इति ।** प्रष्ठं वहतीति प्रष्ठवाट् । 'वहश्च' इति ण्विः । 'वेरपृक्तस्य' इति वलोपः । 'अत उपधायाः' इति वृद्धिः । ततः शसि 'वसोः सम्प्रसारणम्' इत्यतः संप्रसारणमित्यनुवृत्तौ 'वाह ऊठ्' इति संप्रसारणसंज्ञकस्य ऊठः सम्प्रसारणाच्चेति पूर्व-रूपम् । प्रष्ठ ऊहः—इति स्थिते, अनेन वृद्धिः—औकारः । नन्वत्र एत्येधतिग्रहणं व्यर्थम्, उपैति उपैधत इत्यत्र 'वृद्धिरेचि' इत्यनेनैव वृद्धिसंभवात् । ऊठ्ग्रहणमपि व्यर्थम्, 'वृद्धिरेचि' इत्येव सिद्धेः । 'वाह ऊठ्' सूत्रे 'ऊठ्ग्रहणानर्थक्यं संप्रसारणेन कृतत्वात् । गुणस्तु प्रत्ययलक्षणत्वात् । एज्ग्रहणाद् वृद्धिः' इति वार्तिककृता तथैवोक्तत्वात् । ऊठ्-ग्रहणं न कर्तव्यम्, 'वाहः' इत्येव सूत्रमस्तु । भस्य वाहः संप्रसारणं स्यादिति संप्र-सारणमेव विधीयताम् । ततश्च वकारस्य उकारे संप्रसारणे पूर्वरूपे सति उह्—इति स्थिते, प्रत्ययलक्षणमाश्रित्य ण्विप्रत्यये परे उकारस्य लघूपधगुणे ओकारे कृते, प्रष्ठ ओह इति स्थिते, 'वृद्धिरेचि' इति वृद्धिरिति वार्तिकार्थः । तस्माद् 'एत्येधत्यूठ्सु' इति सूत्रं व्यर्थमित्यत आह—**पररूपगुणापवाद इति ।** एत्येधत्योः 'एङि पररूपम्' इत्यस्य, ऊठि 'आद्गुणः' इत्यस्यायमपवाद इत्यर्थः । यदि हि वाहः सम्प्रसारणमेव

---

ख्यानं नात्यन्तावश्यकमिति बोध्यम् । **एत्येधत्यूठ्सु ।** अत्र एचीत्यनुवर्तते । तच्च एत्येधत्योर्विशेषणं न तूठः । असंभवात् । 'आद् गुणः' इत्यत आदित्यनुवर्तत एवातो व्याचष्टे—**अवर्णादेजाद्योरिति । प्रष्ठौह इति ।** प्रष्ठं वहतीति प्रष्ठवाट् । **'वहश्च'**

भवान्प्रैदिधत् । पुरस्तादपवादन्यायेनेयं वृद्धिः 'एङि पररूपम्' (सू ७८) इत्यस्यैव

विधीयेत, न तु ऊठ्, तर्हि वस्य संप्रसारणेन उत्वे कृते, पूर्वरूपे सति तस्य लघूपधगुणो न भवति, तस्मिन् कर्तव्ये बहिर्भूतशसन्त्यपेक्षभसंज्ञापेक्षसंप्रसारणाश्रितपूर्वरूपस्य बहिरङ्गतया अत्र असिद्धत्वात् । तथा च गुणाभावे प्रष्ठ उ आह इति स्थिते, पूर्वरूपे प्रष्ठ उह् इति स्थिते, 'आद् गुणः' इति गुणे ओकारे प्रष्ठोह इति स्यात् । संप्रसारणसंज्ञकस्य ऊठो विधौ तु 'प्रष्ठ ऊ आह' इति स्थिते पूर्वरूपे लघूपधगुणस्याप्रसक्ततया ओकारस्याभावादूकारस्यैव सत्त्वाद् 'वृद्धिरेचि' इत्यस्याप्रसक्तेः 'आद् गुणः' इति प्राप्ते 'एत्येधत्यूठ्सु' इति वृद्धौ, प्रष्ठौह इति सिध्यतीत्यूठ्ग्रहणमावश्यकमिति 'वाह ऊठ्' सूत्रे समुदाहृतंवार्तिकं भाष्ये दूषितमित्यास्तां तावत् ।

**उपेति इति** । इण्धातोर्लट्, तस्, शप्, लुक् । 'सार्वधातुकमपित्' इति तसो ङित्त्वात् तस्मिन् परत इकारस्य न गुणः । अत्र इण्धातोरेजादित्वाभावात्तस्मिन् परतो न वृद्धिः । **मा भवान्प्रेदिधदिति** । एध्धातोर्णिच्, लुङ्, तिप् । 'इतश्च' इति इकारलोपः । 'णिश्रिद्रुस्रुभ्यः' इति चङ् । 'णौ चङ्युपधाया ह्रस्वः' । 'चङि' इत्यजादेर्द्वितीयस्य धिशब्दस्य द्वित्वम् । 'अभ्यासे चर्च' इति जश्त्वम् । न माङ्योगे' इत्याडभावः । भवच्छब्दयोगात् प्रथमपुरुषः । तच्च तिङन्ताधिकारे स्पष्टीभविष्यति । प्र इदिधदिति स्थिते, 'एत्येधति' इति न वृद्धिः । एध्धातोरेजादित्वाभावात् । तत्र एजादित्वविशेषणाभावे तु इहापि वृद्धिः स्यात् । न च 'णौ चङि' इत्येकारस्य ह्रस्वेन इकारे सति नायमेधधातुरिति वाच्यम्, एकदेशविकृतस्यानन्यत्वात् । अत्र माङं विहाय प्रेदिधदिति न प्रत्युदाहृतम् । तथा सति 'आडजादीनाम्' इत्याडागमे 'आटश्च' इति वृद्धौ प्र[1] ऐदिधदिति स्यात् । तत्र एधतेरेजादित्वाद् वृद्धिरिष्टैव । भवच्छब्दस्तु चिन्त्यप्रयोजनः । ननु आ इहि 'आद्गुणः' एहि, अव एहीति स्थिते एकादेशस्य गुणस्य एकारस्य 'अन्तादिवच्च' इति परादिवद्भावेन, 'आद्यन्तवदेकस्मिन्' इति व्यपदेशिवद्भावेन च, इण्धातोरजादित्वात्तस्मिन् परे 'एङि पररूपम्' इति पररूपं बाधित्वा 'एत्येधत्यूठ्सु' इति वृद्धौ अवैहीति स्यात्, अवेहीति इष्टं न स्यात् । न च 'ओमाङोश्च' इति पररूपेण तन्निर्वाहः शङ्क्यः, 'एत्येधति' इति वृद्धिर्हि यथा 'एङि पररूपम्' इत्यस्यापवादः, तथा 'ओमाङ्' इत्यस्याप्यपवादः । येन नाप्राप्तिन्यायसाम्यात्, इत्यत आह—**पुरस्तादिति** । 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति

इति शिवः । ततः शसि 'वाह ऊठ्' । गुणापवादतया अनेन वृद्धिः । **प्रेदिधदिति** । प्रपूर्वस्यैधतेर्ण्यन्तस्य लुङि रूपम्, 'न माङ्योगे' इत्याडागमाभावः । **पुरस्तादिति** ।

1 'प्र' इति नास्ति 'ख' ।

बाधिका, न तु 'ओमाङोश्च' (सू ८०) इत्यस्य । तेन 'अवैहि' इति वृद्धिरसाधुरेव । 'अक्षादूहिन्यामुपसंख्यानम्' ( वा ३६०४ ) । अक्षौहिणी सेना । 'स्वादीरेरिणोः'

---

न्यायः । पूर्वपठिता अपवादा अव्यवहितानेवोत्तरान् विधीन् बाधन्ते, न तु व्यवहितानित्यर्थः । प्रकृते च 'एत्येधत्यूठ्सु' इत्युत्तरं कानिचित् सूत्राणि पठित्वा, 'एङि पररूपम्' इति पठित्वा, पुनः कतिपयसूत्राणि पठित्वा, 'ओमाङोश्च' इति पठितम्, ततश्च उक्तन्यायेन 'एत्येधति' इति वृद्ध्या 'एङि पररूपम्' इत्येव बाध्यते, न तु 'ओमाङोश्च' इति पररूपमपीति भावः । वस्तुतस्तु 'एत्येधति' इति वृद्धिः 'ओमाङोश्च' इत्यस्यापवाद एव न भवति, उपैति-इत्यादौ अप्राप्तेऽपि तस्मिन् 'एत्येधति' इति वृद्धेरारम्भात् । अतः 'पुरस्तादपवादा' इति न्यायस्य नायं विषयः । ततश्च अव एहीत्यत्र 'एत्येधति' इति बाधित्वा परत्वाद् 'ओमाङोश्च' इति पररूपं न्याय्यमित्येव वक्तुमुचितम् । अत एव भाष्ये—नाप्राप्ते एङि पररूपे एत्येधतीति वृद्धिरारभ्यमाणा भवति तस्यापवादः । आङि पररूपे तु प्राप्ते चाप्राप्ते च आरभ्यमाणा वृद्धिर्न तदपवादः,—इति स्पष्टमेवोक्तम् । यत्तु भाष्ये पक्षान्तरमुक्तम्—'अथवा पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते' इत्येवम् 'एत्येधति' इति वृद्धिः 'एङि पररूपम्' एव बाधते, न तु 'ओमाङोश्च' इति पररूपमपि-इति । तत्तु 'एत्येधति' इति वृद्धिः 'एङि पररूपम्' 'ओमाङोश्च' इति सूत्रद्वयापवादत्वाभ्युपगमवादमात्रमाश्रित्य बाध्यसामान्यचिन्तामाश्रित्य वेत्यलं बहुना ।

**अक्षादूहिन्यामुपसंख्यानम्** । आदिति, अचीति, वृद्धिरिति चानुवर्तते । 'एकः पूर्वपरयोः' इति च । ऊह् वितर्के । ऊहनमूहः, सोऽस्या अस्तीत्यूहिनी । अक्षशब्दादूहिनीशब्दे परे पूर्वपरयोरचोः वृद्धिरेकादेशः स्यादित्यर्थः । अक्षौहिणीति मत्वर्थीय इनिः । नान्तत्वान्ङीप् । अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा[1] सेना अक्षौहिणी । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् । अक्ष ऊहिनीति स्थिते, गुणे प्राप्ते अनेन वार्तिकेन वृद्धिः । **स्वादीरेरिणोः** । स्वशब्दादीरशब्दे ईरिन्शब्दे च परे पूर्व-

---

'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' इति न्यायेनेत्यर्थः । **अक्षादिति** । आदित्यनुवर्तते अचीति च । तेन पूर्वपरयोर्वर्णयोरेव भवति । एवमन्यत्राप्यूह्यम् । **अक्षौहिणीति** । ऊहः समूहः, सोऽस्त्यस्याः सा ऊहिनी । अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी । 'पूर्वपदात्संज्ञायाम्—' इति णत्वम् । अक्षा-

---

१ अक्षौहिण्यः सप्ततिरष्टशतान्येकविंशतिसहस्रम् ।
द्विरदास्तथा रथास्तत्त्रिपञ्चगुणकास्तुरङ्गनराः ॥

२१८७० रथाः, गजाश्च तावन्तः । ६५६१० अश्वाः । १०९३५० पदातयः—इत्येका अक्षौहिणी ।

(वा ३६०६)। स्वैरः। स्वेनेरितुं शीलमस्येति स्वैरी। स्वैरिणी। 'प्रादूहोढोढ्येषैष्येषु' (वा ३६०९)। प्रौहः। प्रौढः। 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' (प १५) 'अक्ष—'(सू २६४) इति सूत्रे राजेः पृथगग्राजिग्रहणाज्ज्ञापकात्। तेनोढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः प्रोढवान्। प्रौढिः। 'इष इच्छायाम्' तुदादिः, 'इष गतौ' दिवादिः, 'इष आभीक्ष्ण्ये' क्र्यादिः, तेषां घञि ण्यति च 'एषः' 'एष्यः' इति रूपे, तत्र पररूपे प्राप्ते अनेन वृद्धिः। प्रैषः। प्रैष्यः। यस्तु 'ईष

---

परयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। **स्वैर इति**। ईर् गतौ, भावे घञ्। स्वेन च्छन्देन ईर इति विग्रहः। 'कर्तृकरणे कृता बहुलम्' इति समासः। स्व ईर इति स्थिते गुणे प्राप्ते अनेन वार्तिकेन वृद्धिः। **स्वेनेरितुमिति**। स्वेन छन्देन ईरितुं संचरितु शीलमस्येत्यर्थे 'सुप्यजातौ' इति णिनिः। स्वच्छन्दचारीत्यर्थः। उपपदसमासः। स्व ईरिन् इति स्थिते गुणे प्राप्ते अनेन वृद्धिः। **प्रादूहोढोढ्येषैष्येषु**। प्र इत्युपसर्गात् ऊह, ऊढ, ऊढि, एष, एष्य, एतेषु पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। **प्रौह इति**। ऊह वितर्के, भावे घञ्। गतिसमासः। प्र ऊह इति स्थिते अनेन वार्तिकेन वृद्धिः। **प्रौढ इति**। 'वह् प्रापणे', क्तः। 'वचिस्वपि' इति सम्प्रसारणम्। पूर्वरूपम्। 'हो ढः' इति ढत्वम्। 'झषस्तथोः' इति धत्वम्। ष्टुत्वम्। 'ढो ढे लोपः'। 'ढ्रलोपः—' इति दीर्घः। प्र ऊढ इति स्थिते गुणे प्राप्ते अनेन वृद्धिः। ननु प्रोढवानित्यत्रापि वह्धातोः क्तवतुप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु प्र ऊढवदिति स्थिते 'प्रादूहोढ' इति वृद्धिः स्यात्। तत्रापि ऊढशब्दस्य परत्वेन श्रवणादित्यत आह—**अर्थवदिति**। अर्थवतः

---

णामित्यस्य ऊहशब्देन समासे नत इनौ तु अक्षौहिणीत्येव भवति। न तु तत्र वृद्धिः। अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेरूहिनीशब्देन समासे चरितार्थत्वात्। यथोक्तं प्राक् 'यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यते' इति। **स्वादीरेरिणोः**। 'ईरेरिणयोः' इति क्वचित्कोऽपपाठः। स्वैरीति णिन्यन्तस्य अत्रियां वृद्ध्यभावप्रसङ्गात्। ईरिन्ग्रहणस्य फलमाह—**स्वेनेरितुमिति**। यदा त्वीरणमीर इति घञन्तेन स्वशब्दस्य समासे 'स्वादीरे—' इति वृद्धौ कृतायां मत्वर्थीय इनिः, यदा वा मत्वर्थीयेनिप्रत्ययान्तेन ईरिन्शब्देन स्वशब्दस्य समासः, तदापि तदेकदेश ईरशब्दोऽस्त्येवेति पृथगीरिन्ग्रहणं व्यर्थं स्यादिति भावः। **स्वैरीति**। 'सुप्यजातौ—' इति णिनिः। उपपदसमासः। **स्वैरिणीति**। ङीपः प्राग्भागमीरिन्शब्दमादाय वृद्धिः। केचित्तु लिङ्गविशिष्टपरिभाषयात्र वृद्धिरित्याहुः। तन्निष्फलमिति भावः। **नानर्थकस्येति**। उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागायोगादिति भावः। **प्रैष्य इति**। एषसाहचर्यादेष्योऽप्यनव्ययं गृह्यते; तेन ण्यन्तादिषेः क्त्वो ल्यपि

उञ्छे' यश्च 'ईष गतिहिंसादर्शनेषु' तयोर्दीर्घोपधत्वाद् ईषः, ईष्यः। तत्राद्गुणे प्रेषः प्रेष्यः। 'ऋते च तृतीयासमासे' (वा ३६०७) सुखेन ऋतः सुखार्तः। 'तृतीया' इति किम्। परमर्तः। 'प्रवत्सतरकम्बलवसनदशार्णानामृणे'[1] (वा ३६०८-९)। प्रार्णम्। वत्सतरार्णमित्यादि। 'ऋणस्यापनयनाय यदन्यद् ऋणं क्रियते तद् ऋणार्णम्।

---

शब्दस्य ग्रहणसम्भवे अनर्थकस्य शब्दस्य ग्रहणं न भवतीत्यर्थः। इयं परिभाषा 'स्वं-रूपम्' इत्यत्र रूपग्रहणात् सिद्धेति तत्रैव सूत्रे भाष्ये स्पष्टम्। **तेनेति** । अर्थवत एव ग्रहणनियमेनेत्यर्थः। **क्तान्तमेवेति** । क्तप्रत्ययस्तावदर्थवान्, भावकर्मणोस्तद्विधानात्। क्तवतुप्रत्ययस्तु कर्तरि विहितः। अतस्तदेकदेशस्य क्तस्यानर्थकत्वात् 'प्रादूहोढ' इत्यत्र ऊढग्रहणेन ग्रहणं न भवति। अतस्तस्मिन् परे वृद्धिर्न भवति, किन्तु गुण एवेत्यर्थः। **प्रौढिरिति** । वह्धातोः क्तिन्, ढत्वधत्वष्टुत्वढलोपदीर्घाः। प्र ऊढिः इति स्थिते, गुणं बाधित्वा अनेन वृद्धिः। **इष इच्छायामित्यादि** । गणत्रयेऽपि ह्रस्वोपधा एव एते धातवः। तेषामिति निर्धारणे षष्ठी। तेषां मध्ये अन्यतमाद् घञि ण्यति च सति लघूपधगुणे कृते एष एष्य इति च रूपे सिद्धे। प्र एषः, प्र एष्य इति स्थिते 'एङि पररूपम्' बाधित्वा अनेन वृद्धिः। एतेन 'वृद्धिरेचि' इत्यनेन एषैष्यग्रहणयोर्गतार्थत्वं निरस्तम्। नन्वेवं सति प्रेष इति प्रेष्य इति च कथं प्रयोग इत्यत आह—**यस्त्विति** । तयोर्दीर्घोपधत्वेन लघूपधगुणाभावे ईष ईष्य इति च सिध्यति। तयोस्तु एतद्वार्तिके ग्रहणाभावात् तयोः परतो वृद्ध्यभावे 'आद्गुणः' इति गुणे प्रेषः प्रेष्य इत्यपि रूपद्वयमस्तीत्यर्थः। एषशब्दसाहचर्याद् एष्यशब्दोऽपि कृदन्त एव गृह्यते। तेन तिङन्ते च न वृद्धिः—अग्नये प्रेष्य दूतम्, प्रेष्य गतः।

**ऋते च तृतीयासमासे** । तृतीयासमासे अकाराद् ऋतशब्दे परे पूर्वपरयोरचोर्वृद्धिः स्यादित्यर्थः। सुखेन ऋत इति विग्रहप्रदर्शनम्। ऋ गतौ, 'गत्यर्थाकर्मक'

---

पररूपमेव, न तु वृद्धिः। प्रेष्य गतः। लघूपधगुणमाशङ्क्याह—**तयोर्दीर्घोपधत्वादिति** । **प्रवत्सतरेति** । इह केचिद्वत्सशब्दं वत्सरशब्दं च प्रक्षिपन्ति तद्भाष्यादावदृष्टत्वादुपेक्ष्यम्। **वत्सतरार्णमिति** । तकारमकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि। रेफात्परस्य तु 'अचो रहाभ्याम्–' इति द्वित्वे 'यणो मयः–' इति वचनान्तरेण पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश। 'खयः शरः' इति सकारद्वित्वे चतुर्विंशतिः। न चेह 'शरोऽचि' इति द्वित्वनिषेधः शङ्क्यः। तस्य सौत्रद्वित्वमात्रविषयत्वात्। अतएव 'खयः शरः' इति वार्तिकस्य 'वत्सरः' 'अप्सराः' इत्युदाहरणं भाष्ये दत्तम्। न च

---

१ अन्यत्र तु 'वसनार्णदशानामृणे' इति पाठ उपलभ्यते, उदाहरणानुरोधेनापि स एव युक्तः प्रतिभाति। परमेतट्टीकानुरोधेनायं पाठः स्थापितः।

दशार्णो देशः। नदी च दशार्णा। ऋणशब्दो दुर्गभूमौ जले च। ७४ उपसर्गादृति धातौ। (६-१-९१) अवर्णान्तादुपसर्गाद् ऋकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। उपार्च्छति। प्रार्च्छति। ७५ अन्तादिवच्च। (६-१-८५) यो-

---

इति कर्तरि क्तः। प्रकृत्यादित्वात् तृतीया। 'सुप्सुपा' इति समासः। सुख ऋत इति स्थिते, गुणे प्राप्ते अनेन वृद्धिः—आकारः, रपरत्वे सुखार्त इति रूपम्। समासग्रहणस्य उदाहृतविग्रहवाक्येनैव प्रत्युदाहरणं दर्शितप्रायमिति तृतीयेत्यंशस्य प्रयोजनं पृच्छति—**तृतीयेति किमिति। परमर्त इति।** परमश्चासौ ऋतश्चेति कर्मधारयः। 'आद् गुणः'। **प्रवत्सतर।** पञ्चम्यर्थे षष्ठी। प्र, वत्सतर, कम्बल, वसन, दश, ऋण, एतेषाम् ऋणशब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। **प्रार्णमिति।** प्रगतमृणमिति विग्रहे 'प्रादयो गताद्यर्थे प्रथमया' इति गतिसमासः। प्र ऋणम् इति स्थिते गुणं बाधित्वा अनेन वार्तिकेन वृद्धिः—आकारः, रपरत्वम्। वत्सतरः शिशुवत्सः, तस्य ऋणमिति विग्रहः। वत्सतरमधिकृत्य वा तद्ग्रहणार्थं वा यद् ऋणं गृह्यते तद् वत्सतरार्णम्। एवमग्रेऽपि द्रष्टव्यम्। आदिशब्देन कम्बलार्णम्, वसनार्णम्, दशार्णम्, ऋणार्णमिति च गृह्यते। सर्वत्र षष्ठीसमासः। ऋणशब्दस्य ऋणशब्दे परे कथमन्वय इत्यत आह। **ऋणस्येति।** देशनदीविशेषयोः कथं दशार्णशब्दप्रवृत्तिरित्यत आह—**ऋणशब्द इति।** तथा च दश ऋणानि दुर्गभूमयः यस्मिन् देशे स दशार्णः देशविशेषः। दशविधानि ऋणानि जलानि यस्यां नद्यां सा दशार्णेति विग्रहः। **उपसर्गादृति।** आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते। तच्च उपसर्गविशेषणम्, अतस्तदन्तविधिः—अकारान्तादिति लभ्यते। ऋतीति धातोर्विशेषणम्। यस्मिन्विधिरिति तदादिविधिः। ऋकारादाविति लभ्यते। 'वृद्धिरेचि' इत्यतो वृद्धिरिति चानुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। तदाह—**अवर्णान्तादित्यादिना। एकादेश इति।** पूर्वपरयोरचोरिति शेषः। अन्यथा उपसर्गस्य धातोश्च सर्वादेशः स्यात्। **उपार्च्छति—प्रार्च्छतीति।** उप ऋच्छति, प्र ऋच्छति इति स्थिते गुणे प्राप्ते अनेन वृद्धिः रपरत्वम्।

अथ तस्य रेफस्य पदान्ते विहितं विसर्गमाशङ्कितुं तस्य पदान्तत्वसाधनायाह—**अन्तादिवच्च।** 'एकः पूर्वपरयोः' इति सूत्रमनुवर्तते। यथासंख्यपरिभाषया अन्ता-

---

वदेः सरप्रत्यये परतश्चर्त्वे कृते तस्यासिद्धत्वात्सस्य खयः परत्वं नेति शङ्क्यम्। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः। अतएव मनोरमायां 'षट् सन्तः' इत्यत्र टकारात्परस्य सस्य द्वित्वं स्वीकृतमिति दिक्॥ **उपसर्गादृति।** उपसर्गात्किम्, खट्वर्च्छति। ऋति किम्, उपेतः। तपरकरणमुत्तरार्थम्। इह दीर्घकारादेर्धातोरसंभवेन व्यावर्त्यालाभात्।

ऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् । इति रेफस्य पदान्तत्वे । ७९

दिवदित्यस्य क्रमेणान्वयः । ततश्च पूर्वपरयोर्भवन् एक आदेशः पूर्वस्यान्तवत्परस्यादिवदिति लभ्यते । यद्यपि एकादेशस्य द्वौ वर्णौ स्थानिनौ—पूर्वः परश्च, तयोश्च वर्णयोः प्रत्येकमेकत्वादखण्डत्वात्तदपेक्षया एकादेशस्य अन्तादिवत्त्वकथनमसंगतम्, तथापि पूर्वपरवर्णयोर्भवन्नेकादेशः प्रथमस्थानिघटितसमुदायस्य पूर्वस्य यः अन्तः प्रथमस्थानी तत्कार्यकारी भवति । द्वितीयस्थानिघटितसमुदायस्य उत्तरस्य य आदिः द्वितीयस्थानी, तत्कार्यकारी भवतीत्यर्थो विवक्षितः । तत्र पूर्वान्तवत्त्वे यथा—क्षीरपेण । क्षीरप इन इति स्थिते 'आद्गुणः' इत्येकादेश एकारः । तत्र पूर्वान्तवत्त्वेन 'पे' इत्युत्तरपदस्य एकाच्त्वाद् 'एकाजुत्तरपदे णः' इति णत्वं भवति । अत्र एकादेशे स्थानिवत्सूत्रं तु न प्रवर्तते, एकादेशस्थानिभूतं पकारादकारमालम्ब्य पे इत्यस्य एकाजुत्तरपदत्वाश्रयेण प्रवर्तमानस्य णत्वस्य स्थान्यलाश्रयत्वात् । यद्यपि एकाजुत्तरपदत्वमेव प्राधान्येन णत्वविधिराश्रयति, पकारादकारं स्थान्यलं तु तद्विशेषणीभूताच्त्वेनाश्रयति, तथापि 'अनल्विधौ' इति निषेधोऽत्र भवत्येव, यथाकथञ्चित् स्थान्यलाश्रयणस्यैव तत्र विवक्षितत्वात् । अन्यथा प्रतिदीव्येत्यत्र क्त्वादेशं ल्यपं स्थानिगतवलाद्यार्धधातुकत्वेनाश्रित्य इडागमे कर्तव्ये अनल्विधाविति निषेधानुपपत्तेः, तत्र वलः प्राधान्येनाश्रयणाभावात् । एतेन स्थानिवत्सूत्रेण गतार्थमिदं सूत्रमिति निरस्तम् । परादिवत्त्वे यथा—खट्वा । अत्र खट्वशब्दाद् 'अजाद्यतष्टाप्', सवर्णदीर्घ आकारः । तस्य परादिवत्त्वेन टाप्त्वात्ततः परस्य सोर्हल्ङ्यादिलोपः । इदमपि स्थानिवद्भावेन अनिर्वाह्यम् । हल्ङ्यादिलोपस्यात्र स्थान्यलाश्रयताया मूलकृतैव वक्ष्यमाणत्वात् । नचैवं सति यजेर्लङि उत्तमपुरुषैकवचने इटि, शपि, 'आद् गुणे' अडागमे अयजे इन्द्रमित्यत्र गुणस्य एकादेशस्य परादिवत्त्वेन इकारत्वात्तत्र इकारे परे सवर्णदीर्घः स्यादिति वाच्यम्, इह हि अल्समुदायधर्मा एव प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयः अतिदिश्यन्ते, न तु वर्णमात्रधर्मा अत्वह्रस्वत्वादयः । उक्तं च भाष्ये—'न वा अताद्रूप्यातिदेशाद्' इति । अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशाद् अयज इन्द्रमित्येवंजातीयकेषु सवर्णदीर्घादिकं न भवतीत्यर्थ इत्यलमतिविस्तरेण । **इति रेफस्येति** । उपार्च्छतीत्यत्र आर् इत्येकादेशस्य पूर्वान्तवत्त्वेन

धातौ किम्, उपर्कारः । नन्वत्र उपेत्युपसर्ग एव न भवति, क्रियायोग एवोपसर्गत्वात्, उपगत ऋकार इति विगृह्य क्रियायोगत्वसंपादनेऽपि 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव

१ पूर्वस्य परस्य च समुदायस्य अन्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः—प्रातिपदिकत्व—पदत्व—सुबन्तत्वादयः—ते कृतैकादेशस्यापि भवन्ति—इति प्रस्फुटोऽर्थः ।

**खरवसानयोर्विसर्जनीयः**। (८-३-१५) खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते। इति विसर्गे प्राप्ते। अन्तवद्भावेन पदान्तरेफस्य न विसर्गः। 'उभयथर्क्षु' ( सू ३६३० ), 'कर्तरि चर्षिदेवतयोः' ( सू ३१६७ ) इत्यादिनिर्देशात्। उपसर्गेणैव धातोराक्षेपे सिद्धे 'धातौ' इति योगविभागेन पुनर्वृद्धिविधा-

---

रेफस्य पदान्तत्वे सति विसर्गे प्राप्ते इत्युत्तरेणान्वयः। कथं विसर्गप्राप्तिरित्यत आह—**खरवसानयोः**। रो रीत्यतो र इति षष्ठ्यन्तमनुवर्तते। तच्च पदस्येत्यधिकृतस्य विशेषणम्। 'येन विधिः' इति रेफान्तस्येति लभ्यते। खरि अवसाने च परतः रेफान्तस्य पदस्य विसर्जनीयः स्यादित्यर्थः। अलोऽन्त्यस्येत्यन्त्यस्य भवति। अभावरूपस्य चावसानस्य बुद्धिकृतं परत्वम्। फलितमाह—**खरि अवसाने चेति। पदान्त इति**। विद्यमानस्येति शेषः। यदि तु अन्त्यवर्णस्य अवसानसंज्ञा, तदा अवसान इत्यत्र योजना 'विरामोऽवसानम्' इत्यत्रोक्ता। **इति विसर्ग इति**। उपार्च्छतीत्यादौ अनेन विसर्गे प्राप्ते तत्परिहार उच्यत इत्यर्थः। **अन्तवदिति**। अन्तवत्त्वेन पदान्तत्वं प्राप्तस्य रेफस्य विसर्गो न भवतीत्यर्थः। कुत इत्यत आह—**उभयथर्क्ष्विति**। अन्यथा तत्रापि विसर्गनिर्देशः स्यादिति भावः।

नन्वत्र धाताविति व्यर्थम्, उपसर्गग्रहणादेव धातावित्यस्य सिद्धेः, क्रियायोगे सत्येव उपसर्गसंज्ञाविधानात्। न च उपगत ऋकार उपर्कार इत्यत्र क्रियायोगस्य सत्त्वादुपसर्गत्वाच्च वृद्धिप्राप्तौ तन्निवृत्त्यर्थमिह धातुग्रहणमिति वाच्यम्, 'यत्क्रियायुक्ताः प्रादयः, तं प्रत्येव गत्युपसर्गसंज्ञाः' इति परिभाषया गम्यमानगमनक्रियां प्रत्येव उपसर्गत्वात्, प्रकृते च ऋकारादिनिमित्तकोपसर्गत्वस्यैव विवक्षितत्वादित्याशङ्क्याह—**उपसर्गेणैवेत्यादिना**। उपसर्गग्रहणेनैव धातोः आक्षेपे-अन्यथानुपपत्तिरूपार्थापत्तितो लाभे सति, पुनः धाताविति वचनं पुनर्विधानार्थमित्यन्वयः। कथं पुनर्विधानलाभ इत्यत आह—**योगविभागेनेति**। योगशब्दः सूत्रशब्दपर्यायः। 'उपसर्गादृति' इति 'धातौ' इति च, सूत्रं विभज्यते। तत्र 'उपसर्गादृति' इति पूर्वसूत्रे 'धातौ' इत्यर्थाल्लभ्यमादाय उक्तार्थलाभः। 'धातौ' इत्युत्तरसूत्रेऽपि 'उपसर्गादृति' इति पूर्वसूत्रमनुवर्तते।

---

गत्युपसर्गसंज्ञाः' इति ऋकारं प्रति अनुपसर्ग एव, तथा चाकृतेऽपि धातुग्रहणे ऋकारादिधातावेव वृद्धिर्भविष्यति, उपसर्गेण धातोराक्षेपाद्, न त्वन्यत्रेति चेत्सत्यम्। अतएव योगविभागेन पुनर्विधानार्थमित्यनुपदं वक्ष्यतीति न काप्यनुपपत्तिः। **अन्तादिवच्च**। इह 'एकः पूर्वपरयोः' इत्यनुवर्तते यथासंख्यं चाश्रीयत इत्यभिप्रेत्याह—**पूर्वस्यान्तवदिति**। स्थानिवत्सूत्रेणैव गतार्थमिदम्। न चाल्विध्यर्थमिदमस्त्विति शङ्क्यम्। अस्याप्यल्विधावनिष्टत्वात्। अन्यथा अयजे इन्द्रमित्यत्र सवर्णदीर्घापत्तेः। **न विसर्ग**

नार्थम्। तेन 'ऋत्यकः' ( सू ६२ ) इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति। **७७ वा सुप्यापिशलेः।** (६-१-९२) अवर्णान्तादुपसर्गाद् ऋकारादौ सुब्धातौ परे वृद्धिरेकादेशो वा स्यात्। आपिशलिग्रहणं पूजार्थम्। प्रार्षभीयति। प्रर्षभीयति। सावर्ण्याद् लृवर्णस्य ग्रहणम्, उपाल्कारीयति उपल्कारीयति। तपरत्वाद्दीर्घे न, उप ॠकारीयति-उपर्कारीयति। **७८ एङि पररूपम्।** (६-१-९४) अवर्णान्ता-

---

तथा च पूर्वसूत्रसमानार्थकमेतत्सूत्रं संपद्यत इति पुनर्विधानलाभ इत्यर्थः। किमर्थमिदं पुनर्विधानमित्यत आह—**तेनेति**। पुनर्विधानेनेत्यर्थः। **न भवतीति**। परोऽपि प्रकृतिभावः पुनर्विधानसामर्थ्याद् बाध्यत इत्यर्थः। **वा सुपि**। 'उपसर्गादृति धातौ' इति पूर्वसूत्रमनुवर्तते। 'आद् गुणः' इत्यतः 'वृद्धिरेचि' इत्यतश्च आदिति वृद्धिरिति चानुवर्तते। आदित्यनेन उपसर्गादिति विशेष्यत इति तदन्तविधिः। प्रत्ययग्रहणपरिभाषया सुप्शब्देन सुबन्तप्रकृतिको धातुर्विवक्षितः। 'एकः पूर्वपरयोः' इति चाधिकृतम्। तदाह—**अवर्णान्तादित्यादिना। सुब्धाताविति**। सुबन्तप्रकृतिकधातौ परत इत्यर्थः, सुबन्तस्य धातोरसंभवात्। **एकादेश इति**। पूर्वपरयोरचोरिति शेषः। यद्यपि ऋच्छ गतावित्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि तुल्यास्यसूत्रभाष्ये उपार्कारीयतीत्यादेरेतदुदाहरणत्वेन भाष्ये उक्तत्वात् सुबन्तप्रकृतिके इत्येव व्याख्यानमुचितम्। ननु वाग्रहणादेव सिद्धे आपिशलिग्रहणं व्यर्थमित्यत आह—**आपिशलिग्रहणमिति**। आपिशलेराचार्यस्याप्ययमर्थः संमत इत्यादरलाभार्थमित्यर्थः। **प्रार्षभीयतीति**। ऋषभमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' 'सनाद्यन्ताः' इति धातुत्वम्। 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुक्; 'क्यचि च' इति ईत्वम्। लट्, तिप्, शप्, पररूपम्। प्र ऋषभीयति इति स्थिते अनेन वृद्धिः—आकारः, रपरत्वम्। **प्रर्षभीयतीति**। वृद्ध्यभावपक्षे 'आद् गुणः', रपरत्वम्। **सावर्ण्यादिति**। 'ऋलृवर्णयोः' इति सावर्ण्यादितीत्यनेन लृतोऽपि ग्रहणमित्यर्थः। **उपाल्कारीयतीति**। लृकारमात्मान इच्छतीत्यर्थे क्यजादि पूर्ववत्। लपरत्वं विशेषः। **उपल्कारीयतीति**। वृद्ध्यभावपक्षे गुणः, लपरत्वम्। **तपरत्वादिति**। ऋतीति तपरकरणेन तत्कालस्यैव ग्रहणाद् दीर्घॠकारे परे वृद्धिविकल्पोऽयं न भवति, किं तु गुण एवेत्यर्थः। **ॠकारीयतीति**। ॠकारमात्मन इच्छतीत्यर्थे क्यजादि पूर्ववत्। वृद्ध्यभावादत्र गुण एव।

**एङि पररूपम्**। उपसर्गादिति धाताविति चानुवर्तते। आदित्यनुवृत्तमुपस-

---

**इति**। एतच्च सुखार्त इत्यादावपि बोध्यम्। **सुब्धाताविति**। सुबन्तावयवके इत्यर्थः। सुबन्तस्य धातोरसंभवात्। यद्यपि 'ऋज् गतौ' इत्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि न तादृशेषु तपरत्वव्यावर्त्यत्वं प्रसिद्धं नामधातुष्वेव तत्संभवतीति त

दुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति । इह 'वा सुपि' इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेनेङादौ सुब्धातौ वा, उपेडकीयति, उपैडकीयति । प्रोघीयति,प्रौघीयति । 'एवे चानियोगे' (वा ३६३१) नियोगोऽवधारणम् । क्वेव भोक्ष्यसे । अनवक्लृप्तावेवशब्दः । 'अनियोगे' किम्-तवैव ।

---

र्गादित्यस्य विशेषणमिति तदन्तविधिः । 'यस्मिन् विधिः' इति परिभाषया तदादिग्रहणम् । 'एकः पूर्वपरयोः' इति चाधिकृतम् । तदाह—**अवर्णान्तादित्यादिना** । **एकादेश इति** । पूर्वपरयोरिति शेषः । **प्रेजत इति** । एजृ दीप्तौ । प्र एजते इति स्थिते 'वृद्धिरेचि' इति वृद्धिं बाधित्वा अनेन पररूपम् एकारः । एजृ कम्पने इति तु परस्मैपदी । **उपोषतीति** । उष् दाहे, लट्, तिप्, शप्, लघूपधगुणः । उप ओषतीति स्थिते वृद्धिं बाधित्वा अनेन ओकारः । ननु एडको मेषः, तमात्मन इच्छति—एडकीयति, उप एडकीयतीति स्थिते अनेन नित्यमेव पररूपं स्यात् । इष्यते तु वृद्धिरपि—उपैडकीयति उपेडकीयतीति । तत्राह—**इहेति** । 'एङि पररूपम्' इत्यत्र वा सुपीत्यनुवर्तते । तच्च नैकवाक्यतया संबध्यते । तथा सति अवर्णान्तादुपसर्गादेङादौ सुब्धातौ परे पररूपमेकादेशो वा स्यादित्येवार्थः स्यात् । एवं सति प्रेजते उपोषतीत्यत्र नित्यं पररूपं न स्यात् । अतो वाक्यभेदेन व्याख्येयम् । एङि पररूपमिति प्रथमं वाक्यम् । अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यादिति तदर्थः । वा सुपीति द्वितीयं वाक्यम् । तत्र एङि पररूपमित्यनुवर्तते । धातौ उपसर्गादित्यादि च । ततश्च उक्तपररूपविषये सुब्धातौ परे पररूपं वा स्यादिति लभ्यते । तदाह—**तेनेति** । उक्तरीत्या वाक्यभेदाश्रयणेन एङादौ सुब्धातौ पररूपं पाक्षिकं भवति, तदितरधातौ तु नित्यमित्यर्थः । **एवे चानियोगे** । नियोगशब्दं व्याचष्टे—**नियोगोऽवधारणमिति** । अवधारणम् अन्ययोगव्यवच्छेदः । तदन्यस्मिन्नर्थे य एवशब्दः तस्मिन्नकारात् परे पूर्वपरयोः पररूपमेकादेशः स्यादित्यर्थः । **क्वेव भोक्ष्यस इति** । अत्रेति न निश्चिनुम इत्यर्थः । क्व एव इति स्थिते वृद्धिं बाधित्वा अनेन वार्तिकेन पररूपमेकारः । **अनवक्लृप्ताविति** । अनवधारण इत्यर्थः । **तवैवेति** । नान्यस्येत्यर्थः । अत्र एवशब्दस्य अवधारणार्थत्वाद् न तस्मिन् परे पररूपम् ।

---

एवेह गृह्यन्त इति भावः । **प्रार्षभीयतीति** । 'शरोऽचि' इति वक्ष्यमाणेन द्वित्वनिषेधः । **एङि पररूपम्** । 'एङ्येङ्' इत्येव सिद्धे परग्रहणमुत्तरार्थम् । रूपग्रहणं तु स्पष्टार्थम्, अमि पूर्ववद् एङि परः, इत्येव सिद्धेः । **प्रेजत इति** । 'एजृ दीप्तौ' कम्पनार्थस्तु परस्मैपदी । प्रेजति । **नियोगोऽवधारणमिति** । निर्धारणमित्यर्थः । **तदुक्तम्**—'नावक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः । एवस्तु विषयो वृद्धेर्नियमेऽयं

७६ अचोऽन्त्यादि टि। (१-१-६४) अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टि-संज्ञं स्यात्। 'शकन्ध्वादिषु पररूपं वाच्यम्' (वा ३६३२)। तच्च टेः। शकन्धुः। कर्कन्धुः। कुलटा। 'सीमन्तः केशवेशे' (वा ३६३३) सीमान्तोऽन्यः। मनीषा।

---

अथ क्वचित् टेः पररूपं विधातुं टिसंज्ञामाह—**अचोऽन्त्यादि टि**। अच इति निर्धारणे षष्ठी। जातावेकवचनम्। अन्ते भवः अन्त्यः, अन्त्यः आदिः यस्य तद् अन्त्यादीनि विग्रहः। फलितमाह—**अचां मध्य इत्यादिना। शकन्ध्वादिष्विति**। शकन्ध्वादिषु विषये तत्सिद्ध्यर्थं पूर्वपरयोः पररूपं वक्तव्यमित्यर्थः। ततश्च शकादिशब्दानां टेरचि परे टेश्च परस्याचश्च स्थाने पररूपमेकादेश इत्यर्थाल्लभ्यते। आदित्वनुवृत्तौ शकन्ध्वादिगणे सीमन्त इत्यादिकतिपयरूपाणामसिद्धेः। तदाह—**तच्च टेरिति**। शकन्ध्वादिगणं पठति—**शकन्धुरित्यादिना**। शकानां देशविशेषाणाम् अन्धुः कूप इति विग्रहः। शक अन्धुः इति स्थिते, सवर्णदीर्घे प्राप्ते अनेन पररूपम्। अत्र शकशब्दे द्वावचौ। तत्र अन्त्यः अच् ककारादकारः, तदादिः अकार एव, 'आद्यन्तवदेकस्मिन्' इति वचनात्। एवमग्रेऽपि द्रष्टव्यम्। **कर्कन्धुरिति**। कर्काणाम् राज्ञाम् अन्धुरिति विग्रहः। कर्क अन्धुः इति स्थिते पररूपम्। **कुलटेति**। अट गतौ। पचाद्यच्। टाप्। कुलानाम् अटेति विग्रहः। भिक्षार्थं व्यभिचारार्थं वा या गृहानटति सा कुलटा। कुलान्यटतीति विग्रहे तु कर्मण्यणि 'टिड्ढाणञ्' इति ङीप् स्यात्। कुल अटेति स्थिते पररूपम्। **सीमन्तः केशवेशे इति**। गणान्तर्गतवार्तिकमेतत्। केशानां वेशः सन्निवेशविशेषः। तस्मिन् गम्ये सीमन्शब्दस्य टेरन् इत्यस्य अन्तशब्दस्यावर्णस्य च स्थाने पररूपमित्यर्थः। आ-

---

यदा भवेत्।' इति। अस्यार्थः—अनवक्लृप्तौ अनिश्चये यदा एवकारो दृष्टः, स पररूपस्य विषयः। यस्तु नियमे निर्धारणे यदा दृष्टः स वृद्धिविषय इति। ये तु नियोगे त्वद्यैव गच्छेति प्राचो ग्रन्थे स्थितस्य प्रत्युदाहरणस्यानुगुणतया नियोजनं नियोगो व्यापार इति व्याचक्षते तेषां 'यदैव पूर्वं ज्वलने शरीरम्' 'ममैव जन्मान्तरपातकानाम्' इति लौकिकप्रयोगाः, 'तपस्तपःकर्मकस्यैव' 'लङः शाकटायनस्यैव' इत्यादिसौत्रप्रयोगाश्च न सिद्ध्येयुः। उदाहृतवृत्तिश्लोकविरोधश्च स्यात्। अवधारणमिति व्याकुर्वतां तु सर्वेष्टसिद्धिः। **अचोऽन्त्यादि टि**। अच इति निर्धारणे षष्ठी। जातावेकवचनं तदाह—**अचां मध्य इति। शकन्ध्वादिष्विति**। शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः। अतएवाह—**तच्च टेरिति**। यदि तु आदित्यधिकारादकारस्यैवेष्येत तर्हि मनीषा पतञ्जलिरिति न सिध्येत्। केचित्तु मनःपतच्छब्दयोः पृषोदरा-

---

१ 'परस्याचस्स्थाने' इति क।

हलीषा । लाङ्गलीषा । पतञ्जलिः । 'सारङ्गः पशुपक्षिणोः' (ग १३६) । साराङ्गोऽन्यः । आकृतिगणोऽयम् । मार्तण्डः । 'ओत्वोष्ठयोः समासे वा' (वा ३६३४) । स्थूलोतुः, स्थूलौतुः । बिम्बोष्ठः, बिम्बौष्ठः । 'समासे' किम् । तवौष्ठः । ८० ओ-

---

दित्यनुवृत्तौ तु इदं न सिध्येत् । **सीमान्तोऽन्य इति** । ग्रामान्तप्रदेश इत्यर्थः । **मनीषेति** । मनस ईषेति विग्रहः । अत्र अस् इति टेः ईकारस्य च स्थाने पररूपमीकारः । इष गतौ । 'गुरोश्च हलः' इत्यप्रत्ययः । टाप् । 'बुद्धिर्मनीषा' इत्यमरः । **हलीषेति** । 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः हलस्य ईषेति विग्रहः । करिकलभ इतिवत् पुनरुक्तिः समाधेया । अत्र गुणे प्राप्ते पररूपम् । एवं लाङ्गलीषेत्यत्रापि । **पतञ्जलिरिति** । पतन् अञ्जलिर्यस्मिन्नमस्कार्यत्वादिति विग्रहः । अत्र अन् इति टेः । अकारस्य च स्थाने पररूपमकारः । केचित्तु गोनर्दीख्यदेशे कस्यचिदृषेः सन्ध्योपासनसमये अञ्जलेर्निर्गद इत्यैतिह्याद् अञ्जलेः पतन्निति विगृह्णन्ति । मयूरव्यंसकादित्वात् समासः । **सारङ्गः पशुपक्षिणोरिति** । इदमपि गणान्तर्गतं वार्तिकम् । भाष्ये तु न दृश्यते । सारशब्द उत्कृष्टे । 'सारो बले स्थिरांशे च न्याय्ये क्लीबेऽम्बरे त्रिषु' इत्यमरः । साराणि अङ्गानि यस्येति विग्रहः । सार अङ्ग इति स्थिते सवर्णदीर्घे प्राप्ते अनेन पररूपम् । 'चातके हरिणे पुंसि सारङ्गशबले त्रिषु' इत्यमरः । **आकृतिगणोऽयमिति** । आकृत्या एवंजातीयकतया निर्णेतव्योऽयं गण इत्यर्थः । लोकप्रयोगानुसारेण एवंजातीयकाः शब्दा अस्मिन् गणे निवेशनीया इति यावत् । तत्फलमाह—**मार्तण्ड इति** । मृतम् अण्डं यस्य सः मृतण्डः कश्चिदृषिः । मृत अण्ड इति स्थिते सवर्णदीर्घं बाधित्वा अनेन पररूपम् । ततः अपत्ये अणि मार्तण्डः । 'परामार्ताण्डमास्यत्' इति सवर्णदीर्घस्तु च्छान्दसः । **ओत्वोष्ठयोः** । अवर्णाद् ओतुशब्दे ओष्ठशब्दे च परे पूर्वपरयोरचोः पररूपं वक्तव्यमित्यर्थः । **स्थूलोतुरिति** । 'ओतुर्बिडालो मार्जारः' इत्यमरः । स्थूल ओतुः इति स्थिते, वृद्धिं बाधित्वा पाक्षिकं पररूपम् । **बिम्बोष्ठ इति** । बिम्बफलवत् रक्तवर्णौ ओष्ठौ यस्येति विग्रहः ।

---

दित्वादन्त्यलोपे अकारस्यैव पररूपमाहुः । शकानां देशविशेषाणामन्धुः कूपः शकन्धुः । कर्कीणां राजविशेषाणामन्धुः कर्कन्धुः । अटतीत्यटा, पचाद्यचि टाप् । कुलस्य अटा कुलटा । यदि तु कुलम् अटतीति विगृह्यते तदा कर्मण्यणि ङीपि कुलाटीति स्यात् । 'ईष उञ्छे' । ईष गत्यादिषु' । आभ्यां 'गुरोश्च हलः' इत्यप्रत्यये ईषा । मनस ईषा मनीषा । हलस्य ईषा हलीषा । ईषा लाङ्गलदण्डः । पतन्तः अञ्जलयोऽस्मिन्नमस्कार्यत्वादिति पतञ्जलिः । **मार्तण्ड इति** । पररूपेणानेन मृतण्ड इति सिद्धे ततः अण्यादि वृः । 'परा मार्ताण्डमास्यत्' 'पुनर्मार्ताण्डमाभरत्' इत्यादिषु तु दीर्घश्छान्दस इति

**माङोश्च।** (६-१-९५) ओमि आङि च आत्परे पररूपमेकादेशः स्यात्। शिवायों नमः। शिव एहि—शिवेहि। **८१ अव्यक्तानुकरणस्यात इतौ।** (६-१-९८) ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात्। पटत् इति पटिति। 'एकाचो न' (वा ३६३७)। श्रदिति। **८२ नाम्रेडितस्या-**

---

**ओमाङोश्च।** ओम् च आङ् चेति विग्रहः। आदिति पररूपमिति चानुवर्तते, 'एकः पूर्वपरयोः' इति च तदाह—**ओमीत्यादिना। शिवायोंनम इति।** अत्र वृद्धिं बाधित्वा पररूपम्। **शिवेहीति।** आ इहीति स्थिते गुणे एहीति रूपम्। ततः शिव एहि इति स्थिते वृद्धिं बाधित्वा पररूपमेकारः। नच शिव आ इहीति स्थिते सवर्णदीर्घे कृते पश्चाद् गुणे शिवेहीति रूपसिद्धेराङ्ग्रहणं व्यर्थमिति वाच्यम्, 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति न्यायेन प्रथमम् 'आद् गुणः' इति गुणे कृते शिव एहीति स्थिते, वृद्धौ प्राप्तायां तन्निवृत्त्यर्थत्वात्। भाष्ये तु आ ऋश्यात्, गुणः, अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादित्यत्र सवर्णदीर्घनिवृत्त्यर्थम् आङ्ग्रहणमिति स्थितम्। **अव्यक्तानुकरणस्य।** पररूपमित्यनुवर्तते। अव्यक्तः—अस्फुटवर्णविभागः वृक्षपतनादिजनितध्वनिः। तस्यानुकरणम्—तत्प्रतिपादकस्तत्सदृशः अपरिस्फुटवर्णविभागः शब्दः, तस्यावयवः यः अत्शब्दः, तस्माद् इतिशब्दपरे अत्शब्दस्य इकारस्य च स्थाने पररूपं स्यादित्यर्थः। अत्र इतिशब्दे यः प्रथम इकारः तस्मिन्परे इति व्याख्येयम्। अन्यथा इतिशब्दस्य कृत्स्नस्यादेशप्रसङ्गात्[1]। तदाह—**ध्वनेरित्यादिना।** अत्र 'अलोऽन्त्यस्य' इति न भवति, 'नानर्थकेऽलोऽन्त्यविधिः' इति निषेधात्। पटत् इतीति प्रक्रियावाक्यप्रदर्शनम्, न तु पररूपाभावपक्षे रूपमिति भ्रमितव्यम्, अत्र पररूपस्य नित्यत्वात्। असंहितायां निर्देशो वा। **पटितीति।** उदाहरणमेतत्। वृक्षः पतित इत्याद्यध्याहार्यम्। अत्र अनेकाज्ग्रहणं कर्तव्यमिति वार्तिकमर्थतः संगृह्णाति—**एकाचो नेति।** एकः अच् यस्य स एकाच्, तथाभूतस्यानुकरणस्य उक्तं पररूपं नेत्यर्थः। **श्रदितीति।** अत्र एकाच्त्वाद् न पररूपम्।

---

भावः। केचिदत्र सवर्णदीर्घमेवाहुः, पूर्वोक्तवैदिकप्रयोगास्तेषामनुकूलाः। **ओत्वोष्ठयोरिति।** अकारस्य ओत्वोष्ठयोश्च एकत्र समासे स्थितौ सत्यामिदं प्रवर्तते। तेनेह न। वृषलसुतौष्ठत्रणस्त इति। **शिवेहीति।** ननु शिव आ इहीत्यत्र सवर्णदीर्घे कृते पश्चादाद्गुणे च सिद्धमिष्टं तत्किमाङ्ग्रहणेन। सत्यम्। 'पूर्वं धातुरुपसर्गेण युज्यते' इति दर्शनेन धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं गुणे कृते वृद्धिः स्यात्, **तस्मा भूदि-**

---

१ 'कृत्स्नादेश' इति क।

**न्त्यस्य तु वा।** (६-१-६६) आम्रेडितस्य प्रागुक्तं न स्यात्। अन्त्यस्य तु तकारमात्रस्य वा स्यात्। 'डाचि बहुलं द्वे भवतः' (वा ४६६७) । इति बहुलग्रहणाद् द्वित्वम्। **८३ तस्य परमाम्रेडितम्।** (८-१-२) द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात्। पटत्पटेति। **८४ झलां जशोऽन्ते।** (८-२-३६) पदान्ते झलां जशः स्युः। पटत्पटदिति। **८५ अकः सवर्णे दीर्घः** ( ६-१-१०१ ) अकः सवर्णे-

---

ननु पटत्पटत् इति इत्यत्र पटत्पटेति रूपमिष्यते। तत्र 'अव्यक्तानुकरणस्य' इति पररूपे पटत्पटिति इत्येव स्यात्। तत्राह—**नाम्रेडितस्य।** 'अव्यक्तानुकरणस्यात इतौ' इति 'पररूपम्' इति 'एकः पूर्वपरयोः' इति चानुवर्तते। आम्रेडितस्य अव्यक्तानुकरणस्य अवयवः यः अत्शब्दः, तस्य इतिशब्दे परे पररूपं न स्यात्। अन्त्यस्य तु वा। तुरवधारणे। अत्शब्दान्त्यस्य तकारस्यैव इकारस्य च पररूपं वा स्यात्। नत्वकारस्यापीत्यर्थः। तदाह—**आम्रेडितस्य प्रागुक्तमित्यादिना।** ननु पटत् पटत् इत्यत्र कथं द्वित्वमित्यत आह—**डाचीति।** 'डाचि बहुलं द्वे भवतः' इति द्वित्वमित्यन्वयः। ननु 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इति डाचः कथमिह संभवः, इतिशब्दे परतस्तत्पर्युदासः स्यादित्यत आह—**बहुलग्रहणादिति** । वेत्यनुक्त्वा बहुलग्रहणमधिकविधानार्थम्, बहूनर्थान् लाति गृह्णातीति तद्व्युत्पत्तेरिति भावः। अभियुक्ताश्चाहुः—"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद् बहुलग्रहे तु" इति। ननु किमाम्रेडितं नाम ? तत्राह—**तस्य परमाम्रेडितम्।** 'सर्वस्य द्वे' इत्यनन्तरमिदं सूत्रं पठ्यते। ततश्च तस्येत्यनेन द्विरुक्तस्येति लभ्यते। अवयववाचिपरशब्दयोगे अत एव ज्ञापकात् षष्ठी। तदाह—**द्विरुक्तस्येत्यादिना। पटत्पटेतीति** । पटत् पटत् इति स्थिते, तकारस्य इकारस्य च पररूपम् इकारः। ततश्च 'आद् गुणः'। अथ पररूपाभावपक्षे पटत्पटत् इतीत्यत्र तकारस्य दकारं विधत्ते—**झलां जशोन्ते।** पदस्येत्यधिकृतम् तदाह—**पदान्त इति। पटत्पटदितीति।** स्थानसाम्यात् तकारस्य दकारो जशिति भावः। अत्र अत्शब्दस्य पररूपनिषेधाभावे तकारमात्रस्य पररूपैकादेशविकल्पविधौ तस्य पररूपाभावपक्षे अत्-शब्दस्य पूर्वसूत्रेण पररूपापत्तौ पटत्पटितीति स्यादिति ध्येयम्।

---

त्याङ्ग्रहणम्। **अव्यक्तानुकरणस्यात इतौ।** यद्यपि 'अतो गुणे' इति पूर्वसूत्रादत इत्यनुवर्त्यातोग्रहणमिह त्यक्तुं शक्यम्, तथापि पूर्वसूत्रे अत इति तपरकरणाद् ह्रस्वाकारस्य ग्रहणम्, इह तु शब्दाधिकारपक्षाश्रयणाद् अच्छब्दस्य ग्रहणमिति व्याख्याने क्लेशः स्यादिति पुनरत्रातोग्रहणं कृतम्। अव्यक्तशब्दं व्याचष्टे—**ध्वनेरिति। अनुकरणस्येति।** परिस्फुटाकारादिवर्णस्येति भावः। तस्य चानुकरणत्वं किंचित्साम्येन बोध्यम्।

ऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । 'अचि' किम् । कुमारी शेते । 'नाज्झलौ' (सू १३) इति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः,

---

**अकः सवर्णे** । अक इति पञ्चमी । 'इको यणचि' इत्यतः अचीत्यनुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । तदाह—**अकः सवर्णेऽचीत्यादिना । दैत्यारिरिति** । दैत्य अरिः इति स्थिते द्वयोरकारयोरेको दीर्घ आकारः, स्थानसाम्यात् । श्री ईशः इति स्थिते ईकारयोरेक ईकारः । विष्णु उदयः इति स्थिते उकारयोरूकारः । अत्राचीत्यनुवृत्तेः किं प्रयोजनमिति पृच्छति—**अचि किमिति । कुमारी शेत इति** । अचीत्यननुवृत्तौ ईकारस्य शकारस्य च तालुस्थानविवृतप्रयत्नसाम्येन सवर्णतया तयोर्दीर्घ ईकार एकादेशः स्यात्, तन्निवृत्त्यर्थमचीत्यनुवर्तनीयमिति भावः । ननु ईकारशकारयोः स्थानप्रयत्नसाम्येऽपि न सावर्ण्यम्, 'नाज्झलौ' इति निषेधात्, अतः कुमारी शेत इत्यत्र 'अकस्सवर्णे–' इत्यस्याप्रसक्तेः अचीत्यनुवृत्तिर्व्यर्थैवेत्यत आह—**नाज्झलाविततीति** । 'नाज्झलौ' इति सावर्ण्यनिषेधो वार्णसमाम्नायिकानामेव, न तु

---

पररूपस्यास्य नित्यत्वेऽपि संहितायामविवक्षितायां तदभावादाह—**पटदितीति । नाज्झलावित्यादि** । अयं भावः—विधेयभेदे वाक्यभेदात्संभवन्त्यामेकवाक्यतायां तदयोगात् 'तुल्यास्यप्रयत्नम्–' इत्यस्य 'नाज्झलौ' इत्यस्य च एकवाक्यत्वलाभाय 'अज्झल्भिन्नं तुल्यास्यप्रयत्नं सवर्णम्' इत्यर्थोऽभ्युपेयते । 'अज्झल्भिन्नम्' इत्यत्र परस्परनिरूपिततुल्यत्वविशिष्टास्यप्रयत्नकौ यावज्झलौ तदुभयभिन्नत्वं विवक्षितम् । तथा च 'यो ह्रस्वदीर्घात्मको वर्णो येन वर्णेन तादृशेन तुल्यास्यप्रयत्नस्तदुभयं मिथः सवर्णं भवति' । तथा 'येन हला तुल्यास्यप्रयत्नकं यद्धल् तदुभयं मिथः सवर्णं स्यात्', 'यश्च दीर्घप्लुतात्मको वर्णो येन हला तुल्यास्यप्रयत्नस्तदुभयमपि मिथः सवर्णम्' इत्यर्थः फलितः । ततश्चानेन सूत्रद्वयेन सवर्णसंज्ञायां सिद्धायां 'अणुदित्सवर्णस्य–' इति ग्राहकशास्त्रं प्रवर्तते, नतु ततः प्राक् । अतो 'नाज्झलौ' इत्यनेन आक्षरसमाम्नायिकानामेव सावर्ण्यं व्युदस्यते, नतु सर्वेषाम् । तेनात्र दीर्घशकारयोः सावर्ण्यमस्त्येवेति तद्वारणाय 'अकः सवर्णे–' इत्यत्राचीत्यनुवर्तनं युक्तमिति । यदा तूष्मणामीषद्विवृतत्वं परिकल्प्य 'नाज्झलौ' इति सूत्रं प्रत्याख्यायते, तदेह सवर्णसूत्रे अचीति नानुवर्तनीयम् । हे पिपासो इत्यादौ 'गुरोरनृतः–' इत्याकारस्य प्लुते कृते ततः परस्य सस्य इणः परत्वेन षत्वं स्यात्, 'नाज्झलौ' इत्यत्राकारप्रश्लेषेण दीर्घहकारयोः सावर्ण्याभावेऽपि प्लुताकारस्य हकारसवर्णत्वेन इणत्वादित्याशङ्क्य तत्समाधानार्थमाश्च आश्चेति द्वन्द्वं कृत्वा सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति क्लिष्टव्याख्यानमपि नाश्रयणीयम् । विश्वपाभिरित्यादौ ढत्वादेरप्यप्रसक्तिः, स्वराणामूष्मणां च प्रयत्नभेदेन सावर्ण्याभा-

ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । 'अकः' किम्—हरये । 'अकोऽकि दीर्घः' इत्येव सुवचम् । 'ऋति सवर्णे ऋ वा' (वा ३६४०) । होतृ-कारः—होतॄकारः । 'ऌति सवर्णे ऌ वा' (वा ३६४१) । होत्ऌकारः । पक्षे ऋकारः

---

दीर्घप्लुतानामपि, 'आदिरन्त्येन सहेता' इत्यनेन वार्णसमाम्नायिकानामेव अच्शब्दवाच्यत्वावगमात् । अत ईकारशकारयोः सावर्ण्यसत्त्वात् कुमारी शेत इत्यत्रातिप्रसङ्गः स्यादित्यचीत्यनुवृत्तिरावश्यकीत्यर्थः । ननु वार्णसमाम्नायिकानामेव अच्शब्दवाच्यत्वेऽपि अच्शब्दोपस्थितैः अकारादिभिः ह्रस्वदीर्घप्लुतानामपि ग्रहणं भवति, अणुदित्सूत्रबलात् । अत ईकारशकारयोर्न सावर्ण्यप्रसक्तिरित्यजनुवृत्तिर्व्यर्थैवेत्यत आह—**ग्रहणकेति** । 'अणुदित्सवर्णस्य' इति ग्रहणकसूत्रं हि लब्धात्मकमेव सत् 'अस्य च्वौ' इत्यादौ प्रवृत्तिमर्हति । 'नाज्झलौ' इति प्रवृत्तिदशायां च ग्रहणकशास्त्रमिदं न लब्धात्मकम् । तद्धि सवर्णपदघटितत्वात् सवर्णपदार्थावगमोत्तरमेव लब्धात्मकम् । सवर्णसंज्ञाविधायकं च 'तुल्यास्य' सूत्रं सामान्यतः स्वार्थं बोधयदपि 'नाज्झलौ' इति अपवादविषयं परिहृत्य तदन्यत्रैव पर्यवसानं लब्ध्वा स्वकार्यक्षमतामश्नुते । उक्तं च—'प्रकल्प्यापवादविषयमुत्सर्गोऽभिनिविशते' इति । एवं च 'अणुदित्' सूत्रस्य 'नाज्झलौ' इति निषेधसहित 'तुल्यास्य' सूत्रप्रवृत्तेः प्रागलब्धात्मकतया 'नाज्झलौ' इत्यत्र अज्ग्रहणेन दीर्घप्लुतानां ग्रहणाभावेन ईकारशकारयोः सावर्ण्यनिषेधाभावेन सावर्ण्यसत्त्वात् कुमारी शेत इत्यत्र 'अकः सवर्णे' इति प्राप्तौ तन्निवृत्त्यर्थमचीत्यनुवृत्तिराश्रयणीयेत्यर्थः । तदेतद् नाज्झलाविति सावर्ण्यनिषेधो यद्यपीति ग्रन्थव्याख्यावसरे प्रपञ्चितम् । **अकोऽकि दीर्घ इत्येव सुवचमिति** । एवं च सवर्णग्रहणं न कर्तव्यमिति लाघवम् । दध्युकार[1] इत्यत्र तु यथासंख्याश्रयणान्नातिप्रसङ्गः । ततश्च अचीत्यनुवृत्तिरपि नाश्रयणीयेति भावः ।

'ऋति ऋ वा' इति वार्तिकम्, 'अकः सवर्णे' इत्यतोऽनुवृत्तसवर्णपदेन योजयित्वा पठति—**ऋति सवर्णे ऋ वा** । अक इत्यनुवर्तते । 'एकः पूर्वपरयोः' इति च । अकः सवर्णे ऋति परे पूर्वपरयोः ऋ इत्येकादेशः स्यादित्यर्थः । **होतृकार इति** ।

---

वदिति सुगमोऽयं पन्थाः । **अकोऽकीत्येवेति** । 'अकोऽकि दीर्घः' इत्येवेत्यर्थः । **सुवचमिति** । यथासंख्यसंबन्धेन दध्यत्रेत्यादावतिप्रसङ्गाभावात् । ऋ इति त्रिंशतः संज्ञेत्युक्तत्वाद् होतृ लृकार इत्यत्र ऋकारस्य ऋकारपरत्वमस्त्येवेत्यप्रसङ्गाभावादीकारशकारयोः सावर्ण्ये सत्यप्यचीत्यनुवर्तनं विनैव समीहितरूपसिद्धेश्चेति भावः । 'ऋति ऋ वा' 'ऌति ऌ वा' इति वार्तिकं सूत्रस्थेन सवर्णपदेन योजयित्वा पठति—**ऋति सवर्ण इत्यादि** । नन्वेवम् 'अकः सवर्णे—' इति सवर्णपदाकारणे वार्तिकयोः सवर्ण-

---

[1] 'दध्यृकार' इति क ।

सावर्ण्यात्। होतॄकारः। 'ऋति ऋ वा' 'ऌति ऌ वा' इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्। आद्यस्य मध्ये द्वौ रेफौ, तयोरेका मात्रा। अभितोऽज्भक्तेरपरा। द्वितीयस्य तु मध्ये द्वौ लकारौ, शेषं प्राग्वत्। इहोभयत्रापि 'ऋत्यकः' (सू ९२) इति पाक्षिकः प्रकृतिभावो वक्ष्यते। ८६ **एङः पदान्तादति।** (६-१-१०९) पदा-

होतृ ऋकार इति स्थिते अनेन द्वयोः ऋकारयोः स्थाने ऋकारविलक्षणो नृसिंहवद्व्यन्तरात्मा ऋकारो रेफद्वयवान् कश्चिद्वर्णो भवति। एतदभावपक्षे रूपं दर्शयति—**होतॄकार इति।** 'अकः सवर्णे' इति दीर्घः। **ऌति सवर्णे ऌ वा।** अकः सवर्णे ऌति परे पूर्वपरयोः ऌ इत्येकादेशो वा स्यादित्यर्थः। **होतॢकार इति।** होतृ ऌकार इति स्थिते ऋकारस्य ऌकारस्य च स्थाने नृसिंहवद् व्यन्तरात्मा ऌकारो द्विलकारवान् कश्चिद्वर्णो भवति। **पक्ष इति।** उक्तव्यन्तरात्मकवर्णाभावपक्षे ऋकारस्य ऌकारस्य च स्थाने 'अकः सवर्णे' इति दीर्घो भवन् ऋॢवर्णयोरिति सावर्ण्यादॄकार एव भवति, ऌकारस्य दीर्घाभावादिति भावः। अत एव होतृ ऌकार इत्यत्र सवर्णदीर्घपक्षे होतॄकार इत्येवोदाहृतं भाष्ये। अथ ऋति ऋ वा, ऌति ऌ वेत्यत्र विधेय[1]वर्णस्वरूपं विविनक्ति—**ऋति ऋ वा, ऌति ऌ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रमिति।** तदेवोपपादयति—**आद्यस्य मध्य इति। एका मात्रेति।** व्यञ्जनानामर्धमात्रतया एकैकस्य रेफस्य अर्धमात्रत्वादिति भावः। **अभितोऽज्भक्तेरिति।** अभित इत्यनन्तरं रेफाविति शेषः। अज्भक्तेरिति सामान्याभिप्रायमेकवचनम्। रेफद्वयस्य पुरस्तादुपरिष्टाच्च विद्यमानयोः ह्रस्वऋकारांशयोरन्या मात्रेत्यर्थः। **द्वितीयस्य त्विति।** विधेयस्येति शेषः। **शेषं प्राग्वदिति।** लकारयोरेका मात्रा, तावभितो विद्यमानयोः ऌकारांशयोरन्या मात्रेत्यर्थः। एतच्च 'तुल्यास्य' सूत्रे भाष्यकैयटयोः स्पष्टम्। एतेन दीर्घे प्राप्ते ह्रस्व ऋकारः ऌकारश्चात्र विधीयत इति प्राचीनग्रन्थः परास्तः। **पाक्षिक इति।** वैकल्पिक इत्यर्थः। **प्रकृतिभाव इति।** निर्विकारस्वरूपेणावस्थानमित्यर्थः। सन्ध्यभाव इति यावत्।

**एङः पदान्तादति।** 'अमि पूर्वः' इत्यतः 'पूर्वः' इत्यनुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। तदाह—**पदान्तादित्यादिना।** हरे अव इति स्थिते अया-

ग्रहणं कर्तव्यम्। सूत्रे तु 'अकोऽकि-' इति कर्तव्यमिति विपरीतगौरवात्कथम् 'अकोऽकीत्येव सुवचम्' इत्युक्तमिति चेदत्राहुः—भाष्यकारैरेतद्वार्तिकद्वयस्य प्रत्याख्यानान्नास्त्येव गौरवमिति। प्रत्याख्याने तूपपत्तिः ऌकारान्तेषु विचारयिष्यते। **वर्णद्वयं द्विमात्रमिति।** एतेन 'दीर्घे प्राप्ते ह्रस्वऋकारो ह्रस्वऌकारश्च विधीयते' इति प्राचो व्याख्यानमाकरविरुद्धमिति ध्वनितम्। **एङः पदान्तादति।** अयवोरपवादः। 'ङसि-

१ 'विधेयं वर्णरूपं' इति क।

न्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव । ८७ **सर्वत्र विभाषा गोः ।** (६-१-१२२) लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । गो अग्रम्, गोऽग्रम् । 'एङन्तस्य' किम्—चित्रग्वग्रम् । 'पदान्ते किम्–गोः । ८८ **अवङ् स्फोटायनस्य ।** (६-१-१२३) 'अति' इति निवृत्तम् । अचि परे

---

देशं बाधित्वा पूर्वरूपमेकारः । विष्णो अवेत्यत्र अवादेशं बाधित्वा पूर्वरूपमोकारः । **सर्वत्र विभाषा ।** पदान्तादित्यनुवर्तते । 'प्रकृत्यान्तःपादम्' इत्यतः प्रकृत्येत्यनुवर्तते । प्रकृत्या स्वभावेन निर्विकारस्वरूपेण अवतिष्ठत इत्यर्थः । 'यजुष्युरः' इत्यतो यजुषीति निवृत्तम् । तत्सूचनाय सर्वत्रेत्युपात्तम् । तेन लोके वेदे चेति लभ्यते । तदाह—**लोक इत्यादि । प्रकृतिभाव इति ।** स्वभावेनावस्थानमित्यर्थः । एवं च पूर्वरूपमवादेशश्च न । गो अग्रमिति प्रकृतिभावे रूपम् । पूर्वरूपे गोऽग्रमिति । अत्र एङ इत्यप्यनुवर्तते । ततश्च 'एकदेशविकृतमनन्यवद्भवति' इति न्यायेन चित्रग्वग्रमित्यत्र नातिप्रसङ्गः । हे चित्रगोऽग्रमित्यत्रापि न प्रकृतिभावः, प्रतिपदोक्तस्यैव एङो ग्रहणात्, प्रकृते च ह्रस्वस्य गुण इत्योकारस्य लाक्षणिकत्वात् । **गोरिति ।** गो अस् इति स्थिते गो इत्योकारस्य पदान्तत्वाभावान्न प्रकृतिभावः । न चैवमपदान्तत्वाद् 'एङः पदान्ताद्' इति पूर्वरूपमपि दुर्लभमिति वाच्यम्, अत एव ङसिङसोश्चेति तत्र पूर्वरूपारम्भात् । **अवङ् स्फोटायनस्य । अतीति निवृत्तमिति ।** एङः पदान्तादित्यत इति शेषः, व्याख्यानादिति

---

ङसोश्च' इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितम् । केचित्तु 'पदान्तात्' इत्येतदिहाप्यावश्यकमेव । अन्यथाऽपदान्तादपि स्यात् । 'ङसिङसोश्च' इति सूत्रं तु 'सुप्संबन्धिन्यति परतः पूर्वरूपं चेन्ङसिङसोरेवाति परे' इति नियमार्थं स्यात् । तत्फलं तु हरयः, गुरवः, इः स्मृतो यैस्ते स्मृतयः, इत्यादौ पूर्वरूपाप्रवृत्तिरित्याहुः । एङः किम्, दध्यत्र । पदान्तात्किम्, चयनम् । लवनम् । अचिनवम् । अति किम्, हरयिह । विष्णविह । तपरः किम्, वायवायाहि । **सर्वत्र विभाषा ।** यद्यपीह 'छन्दसि' इति न प्रकृतम्, तथापि 'यजुष्युरः–' इत्यादिप्रक्रमात् छन्दस्येव संभाव्येत । अतः 'सर्वत्र' इत्युक्तम् । तद्व्याचष्टे—**लोके वेदे चेति ।** इह एङ इत्यनुवर्त्य एङन्तस्य गोरिति व्याख्येयम् । तेनेह न । चित्रग्वग्रम् । **प्रकृतिभाव इति ।** एतच्च 'प्रकृत्यान्तःपादम्' इति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते । 'नान्तःपादम्' इति पाठे तु 'सर्वत्र विभाषा–' इति सूत्रेण पूर्वरूपमेव विभाषा निषिध्यत इत्यवधेयम् । निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेव विकल्प्यत इति मनोरमायां स्थितम् । **अवङ् स्फोटायनस्य ।** स्फोटोऽयनं परायणं यस्य स स्फोटप्रतिपादनपरो वैयाकरणः । तस्य स्फोटायनस्य । अत्रापि

॥ इत्येदन्ताः ॥ २८४ **गोतो णित्**। (७-१-९०) गोशब्दात्परं सर्वनामस्थानं

---

हे से। नन्वेवं सति हे हरे इत्यत्र संबुद्धिलोपो न स्यात्, संबुद्धिं परनिमित्तमाश्रित्य प्रवृत्तस्य गुणस्य संबुद्धिविघातकं सुलोपं प्रति संनिपातपरिभाषया निमित्तत्वायोगात्। न चैवं सत्येङ्ग्रहणवैयर्थ्यं शङ्क्यम्, हे से इत्यत्र चरितार्थत्वादिति चेत्, शृणु—हे हरे इत्यत्र संबुद्धिरूपस्य स्वोपजीव्यगुणविघातत्वमेव नास्ति। सत्यपि तल्लोपे प्रत्ययलक्षणमाश्रित्य संबुद्धिसत्त्वात्, तेन च गुणस्य निर्बाधत्वात्। केचित्तु 'गुणात् संबुद्धेः' इत्यनुक्त्वा 'एङ्ह्रस्वात्–' इत्युक्तेः संनिपातपरिभाषां बाधित्वापि संबुद्धिलोपः प्रवर्तत इत्याहुः। न च जसि सय इति कथम्, अन्तर्वर्तिविभक्त्या से इत्यस्य पदत्वेनायादेशं बाधित्वा 'एङः पदान्तात्–' इति पूर्वरूपापत्तेरिति वाच्यम्, 'उत्तरपदत्वे चापदादिविधौ–' इति प्रतिषेधात्। उत्तरपदस्य तद्धितस्य वा पदत्वे कर्तव्ये अन्तर्वर्तिविभक्तेः प्रत्ययलक्षणं नास्तीति हि तदर्थः। सेनासिवकादिशब्दगतस्य से इत्यस्य अनुकरणं वा अस्तु। तत्र जसि अयादेशस्य निर्बाधत्वात् ॥ इत्येदन्ताः ॥

**अथ ओदन्ता निरूप्यन्ते।** गो स् इति स्थिते। **गोतो णित्**। गोत इति तपरकरणम्। 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तं प्रथमया

---

स्मृता येनेति वा विग्रहः। 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः। **स्मृतय इति।** नन्वत्र पूर्वोक्तरीत्या 'एङः पदान्तादति' इति पूर्वरूपेण भाव्यम्, न त्वयादेशेन, न ह्यत्रानुकरणशब्दत्वकल्पनमौचित्यं लभत इति चेत्। अत्र नव्याः—'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणप्रतिषेधाद् 'एङः पदान्तादति' इत्यस्याप्रवृत्तिः। किं च 'स्वादिष्वसर्वनामस्थाने' 'यचि भम्' इत्यत्र भाष्यकृता स्वादिषु पूर्वं पदसंज्ञं भवतीति व्याख्याय ततोऽसर्वनामस्थाने यचीति छित्त्वा नञं च क्रियया संबध्य यजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति व्याख्यातम्। ततश्चानेन 'सुप्तिङन्तम्–' इति 'स्वादिषु–' इति च द्विविधापि संज्ञा निषिध्यत इति पूर्वान्तत्वप्रयुक्ता पदान्ततेह दुर्लभेति स्मृतय इति रूपं निर्बाधमेव। तथा सय इत्यत्र इना सहेत्यादिव्युत्पत्तिपक्षेऽपि नानुपपत्तिः। न चैकादेशस्य पूर्वान्तत्वेनाव्ययत्वात्सुपो लुक् स्यादिति शङ्क्यम्। अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जने तदभावात्। न चैवमपि सह इ इति स्थिते अन्तरङ्गत्वाद् गुणे कृते सहशब्दस्य सादेश एव न स्यात्, एकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तत्वे तूत्तरपदत्वाभावात्, उभयत आश्रयणे अन्तादिवद्भावनिषेधाच्च। अस्तु वा सहशब्दस्य सभावः, तथापि स इत्यदन्तमेव रूपं स्यात्, न तु से इत्येदन्तमिति

---

१ यद्यपि गुणो न संबुद्धिरूपस्य उपजीव्यः, प्रत्युत उपजीवकः, तदाश्रित्य तत्प्रवृत्तेः, तथापि उपजीव्येत्यत्र ण्यन्ताज्जीवेर्यत्प्रत्ययं मत्वा स्वेन-संबुद्धिरूपेण, उपजीव्यः-जनितात्मलाभः, यो गुणस्तेनेति व्याख्येयम्। स्वं संबुद्धिरूपमुपजीव्यं यस्येति बहुव्रीहिर्वा।

णिद्वत्स्यात् । गौः, गावौ, गावः । २८५ **औतोऽम्शसोः** । ( ६-१-९३ ) 'आ ओतः' इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह-अचिनवम् , असुनवम् । गाम् , गावौ , गाः ।

---

विपरिणम्यते । तदाह—**गोशब्दादित्यादिना** । **णिद्वत्स्यादिति** । णिति परे यत् कार्यं तत्कार्यकारीत्यर्थः । **गौरिति** । णिद्वत्त्वे 'अचो ञ्णिति' इति वृद्धिः औकारः । रुत्वविसर्गाविति भावः । **गावौ, गाव इति** । णिद्वत्त्वे वृद्धिः आवादेशश्चेति भावः । हे गौः । वृद्धौ एङः परत्वाभावाद् न संबुद्धिलोपः । अमि गो अम् इति स्थिते णिद्वत्त्वाद् वृद्धौ प्राप्तायाम् । **औतोऽम्शसोः । छेद इति** । आ ओत इति च्छेदो व्याख्यानादिति भावः । ओत इति तपरकरणम् । ओकारादित्यर्थः । अम् च शस् च अम्शसौ, तयोरिति विग्रहः । अवयवषष्ठ्यन्तमेतत् । 'इको यणचि' इत्यतः अचीत्यनुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । तदाह—**ओकारादित्यादिना** । शस् इह सुबेव गृह्यते, न तु 'बह्वल्पार्थात्–' इति तद्धितः शस् , अचीत्यनुवृत्तेः, तद्धितस्य च शसः अजादित्वासंभवाद् 'लशक्वतद्धिते' इत्यत्र तद्धितपर्युदासात् । ननु 'चिञ् चयने' लङ् , अडागमः, उत्तमपुरुषो मिप् । 'तस्थस्थमिपाम्–' इति तस्य अमादेशः । श्नुर्विकरणः । 'सार्वधातुकार्धधातुकयोः' इति गुण ओकारः । अचिनो अम् इति स्थिते अवादेशं बाधित्वा 'औतोऽम्शसोः' इत्यात्वे 'अचिनाम्' इति स्यादित्यत आह—**शसेति । गामिति** । परापि 'अचो ञ्णिति' इति वृद्धिरिह न भवति, आत्वस्य निरवकाशतया तदपवादत्वादिति भाष्यम् । न हि वृद्धिविषयादन्यत्र आत्वस्य प्रवृत्तिरस्तीति तदाशयः । न च द्योशब्दादमि आत्वं सावकाशम् , 'गोतो णित्' इति णित्त्वस्य तत्राभावे वृद्धेरप्रसक्तेरिति वाच्यम् । अस्मादेव भाष्याद् 'ओतो णित्' इति णित्त्वस्य वक्ष्यमाणत्वेन तस्यापि वृद्धिविषयत्वादिति भावः । **गा इति** । असर्वनामस्थानत्वान्न

---

शङ्क्यम् , 'नेन्द्रस्य परस्य' इत्युत्तरपदवृद्धिप्रतिषेधेन 'पूर्वोत्तरपदयोः प्रथमं कार्यं भवति, तत एकादेशः' इति सामान्यज्ञापनादित्याहुः । **गोतो णित्** । 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते, णिदित्यनेन सामानाधिकरण्यात् , तदाह—**सर्वनामस्थानमिति । णिद्वत्स्यादिति** । णिति परे पूर्वस्य यत्कार्यं तत्करोतीत्यर्थः । **गौरित्यादि** । चित्रगुरित्यत्र तु न भवति, ओत इति वक्ष्यमाणत्वात् । तद्धितो यः शस् स ओकारान्तान्न संभवतीत्याशयेनाह—**शसा साहचर्यादिति** । 'सुपि' इत्यनुवर्तनाच्चेत्यपि काशिकायामुक्तम् । कैयटस्तु तद्धितोऽपि शसस्तीति कथमिह साहचर्यादमः सुप्त्वमित्याशङ्क्य अचीत्यधिकारादजादिः शस् सुबेव संभवति, न तु तद्धित इत्याह—**अचिनवमिति** । चिनोते-

गवा । गवे । गोः—इत्यादि । ओतो णिदिति वाच्यम् । विहितविशेषणं च । तेन सुद्यौः,सुद्यावौ, सुद्यावः । सुद्यामित्यादि । 'ओकारान्ताद्विहितं सर्वनामस्थानम्' इति व्याख्यानान्नेह—हे भानो, हे भानवः । उः—शम्भुः स्मृतो येन स स्मृतौः, स्मृता-

---

णिद्वत्त्वम् । नापि वृद्धिः । 'औतोऽम्शसोः' इत्यात्वमिति भावः । टादावचि अवादेशं मत्वाह—**गवा, गवे इति । गोरिति** । 'ङसिङसोश्च' इति पूर्वरूपमिति भावः । **इत्यादीति** । गवोः, गवाम् , गवि इत्यादिशब्दार्थः । द्योशब्द ओकारान्तः स्त्रीलिंगः। 'सुरलोको द्योदिवौ द्वे स्त्रियाम्' इत्यमरः । सु—शोभना द्यौः यस्येति बहुव्रीहौ पुँल्लिङ्गः । सुद्यो म् इत्यादिसर्वनामस्थाने 'गोतो णित्' इत्यप्राप्ते । **ओतो णिदिति वाच्यम्** । गोत इति गकारमपनीय 'ओतो णित्' इति वाच्यमित्यर्थः । तत्र प्रमाणमनुपदमेवोक्तम् । नन्विदं वार्तिकम् । तत्र ओत् इति तपरकरणम् । ओकारात् सर्वनामस्थानं णिदिति लभ्यते । **विहितेति** । ओकाराद्विहितं सर्वनामस्थानमित्येवमोत इत्येतद्विहितविशेषणमाश्रयणीयमित्यर्थः । **तेनेति** । गोतः इति गकारमपनीय ओत इति वचनेनेत्यर्थः । **सुद्यामित्यादीति** । गोशब्दवद्रूपाणीति भावः । **हे भानो इति** । ओकारात् परं सर्वनामस्थानं णिदिति व्याख्याने तु भानुशब्दात् सम्बुद्धौ 'ह्रस्वस्य गुणः' इति गुणे ओकारे सति, सोः ओकारात् परत्वाद् णिद्वत्त्वे, वृद्धौ औकारे, एङः परत्वाभावात् सुलोपाभावे रुत्वविसर्गयोः हे भानौः इति स्यात् । अतो विहितविशेषणमित्यर्थः । ननु 'एङ्ह्रस्वात् सम्बुद्धेः' इत्यत्र एङ्ग्रहणसामर्थ्यादेव हे भानोः इत्यत्र णित्वं तत्प्रयुक्तवृद्धिश्च न भवति । अन्यथा 'एङ्ह्रस्वात्—' इत्येव ब्रूयात् । अतो विहितविशेषणमनर्थकमित्यस्वारस्यादाह—**हे भानव इति** । तत्र 'जसि च' इति गुणे भानो अस् इति स्थिते ओतः परत्वाण्णिद्वत्त्वे वृद्धौ आवादेशे भानाव इति स्यात् । अतो विहितविशेषणमिति भावः । वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया हे भानो, हे भानव इत्यत्र णिद्वत्त्वाभावोपपत्तेः विहितविशेषणत्वाश्रयणं व्यर्थमेव । **उः शम्भुरिति** । उः इत्यस्य विवरणं शम्भुरिति । उः स्मृतो येनेति विग्रहे बहुव्रीहिः । 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः । आद् गुणः । स्मृतो इति रूपम् । ततः सुबुत्पत्तौ गोशब्दवद्रूपाणि । वस्तुतस्तु 'गोतो णित्' इति सूत्रशेषतया 'द्योश्च वृद्धिर्वक्तव्या' इत्येव वार्तिकं भाष्ये दृश्यते । 'औतोऽम्शसोः' इत्यत्र ओतो णिदिति तु न दृश्यते । अतोऽन्यदोकारान्तं प्रातिपदिकं नास्तीत्याहुः ॥ इत्योदन्ताः ॥

**अथैदन्ता निरूप्यन्ते** । रैशब्दो धनवाची । 'अर्थरैविभवा अपि' इत्यमरः,

---

र्लबादेशस्य मिपः 'तस्थस्थमिपाम्—' इत्यम् । **ओतो णिदिति वाच्यमिति** । गोत इत्यपहाय ओत इति वाच्यमित्यर्थः । एवं च गामित्यत्र परत्वाद् वृद्धिः स्यादिति

वौ, स्मृतावः । स्मृतावम्, स्मृतावौ, स्मृतावः-इत्यादि ॥ इत्योदन्ताः ॥ २८६ **रायो हलि** । ( ७-२-८५ ) रैशब्दस्य आकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । अच्यायादेशः । रायौ, रायः । रायम्, रायौ, रायः । राया, राभ्यामित्यादि ॥ इत्यैदन्ताः ॥ ग्लौः, ग्लावौ, ग्लावः । ग्लावम्, ग्लावौ, ग्लावः-इत्यादि । 'औतोऽम्शसोः' ( सू २८५ ) इतीह न प्रवर्तते । 'ऐऔच्' ( म सू ४ ) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञानात् ॥ इत्यौदन्ताः ॥

इत्यजन्तपुँल्लिङ्गप्रकरणम् ।

---

तस्य हलादिविभक्तिषु विशेषं दर्शयति—**रायो हलि** । राय इति रैशब्दस्य षष्ठ्यन्तम् । 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति चानुवर्तते । हलीत्यनेन विभक्ताविति विशेष्यते । तदादिविधिः । तदाह—**रैशब्दस्येत्यादिना** । हल्ग्रहणादचि आत्वं न, किं तु आयादेश एवेत्यत आह—**अचीति** । राः । आत्वे रुत्वविसर्गौ । अचि आयादेशमुदाहरति—**रायौ, राय इति** । **इत्यादीति** । राभिः । राये, राभ्याम्, राभ्यः । रायः, राभ्याम्, राभ्यः । रायः, रायोः, रायाम् । रायि, रायोः, रासु । रैशब्दः छान्दस इति भाष्यम् । क्यजन्त एव छान्दस इति पक्षान्तरम् ॥ इत्यैदन्ताः ॥

**अथ औदन्ता निरूप्यन्ते** । ग्लौशब्दश्चन्द्रवाची । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । तस्य हलादौ न कश्चिद्विकारः । अचि तु आवादेश इति मत्वाह—**ग्लौः, ग्लावौ, ग्लाव इति** । ग्लावम्, ग्लावौ, ग्लावः । ग्लावा, ग्लौभ्याम्, ग्लौभिः । ग्लावे, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लावोः, ग्लावाम् । ग्लावि, ग्लावोः, ग्लौषु । ननु 'औतोऽम्शसोः' इत्यत्र ओद्ग्रहणेन सावर्ण्यादौकारस्यापि ग्रहणाद् अम्शसोर्ग्लौशब्दस्य आत्वं कुतो न स्यादित्यत आह—**औतोऽम्शसोरितीह न प्रवर्तत इति** । 'ऐऔच्' इत्यादिग्रन्थस्तु संज्ञाप्रकरणे व्याख्यातः । एवं जनानवतीति जनौः । क्विप् । 'ज्वरत्वर-' इत्यूठ् । 'एत्येधति-' इति वृद्धिः । जनावौ । जनाव इत्यादि ॥ इत्यौदन्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां अजन्तपुँल्लिङ्गनिरूपणं समाप्तम् ॥

---

शङ्काया अनवकाशः, निरवकाशतया आत्वेन वृद्धेरेव बाधनात् ॥ इत्योदन्ताः ॥ **रायो हलि** । 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति च वर्तते तदाह—**आकारोऽन्तादेश इति** । 'अर्थरैविभवा अपि' इत्यमरः । 'रायिश्छान्दसः' इति भाष्यम्, तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति 'वान्तो यि-' इति सूत्रे कैयटः । स एव केवलोऽपि छान्दस इति पक्षान्तरमप्याह ॥ इत्यैदन्ताः ॥ **ग्लौ-**

# अथाजन्तस्त्रीलिङ्गप्रकरणम् ।६।

**रमा । २८७ औङ आपः । (७-१-१८)** आबान्तादङ्गात्परस्यौङः शी

---

**अथ अजन्तस्त्रीलिङ्गा निरूप्यन्ते । रमेति** । रमत इति रमा । 'रमु क्रीडायाम्' पचाद्यचि 'अजाद्यतष्टाप्' प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि 'ङ्याप्प्रातिपदिकात्' इति ङ्यापोः पृथग्ग्रहणात्, लिङ्गविशिष्टपरिभाषया वा स्वादयः । 'हल्ङ्याप्–' इति सुलोपः । अथ रमा औ इति स्थिते—**औङ आपः** । आप इति पञ्चमी । प्रत्ययग्रहणपरिभाषया आबन्तं विवक्षितम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। 'औङः' इति षष्ठी । 'जसः शी' इत्यतः शीत्यनुवर्तते । तदाह—**आवन्तादित्यादिना** ।

---

**रिति** । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । एवं जनानवनीति जनौः । 'ज्वरत्वर–' इत्यूठ् । 'एत्येधत्यूठ्सु' इति वृद्धिः । अच्यावादेशः, जनावौ, जनाव इत्यादि । **न प्रवर्तत इति** । हे ग्लौरित्यत्र संबुद्धिलोपः, ग्लाव इत्यत्र 'ङसिङसोश्च' इति पूर्वरूपं च न प्रवर्तत इत्यपि बोध्यम् । **सावर्ण्याभावज्ञापनादिति** । सति तु सावर्ण्ये एचश्चतुर्विंशतेः संज्ञा भवन्तीति 'वृद्धिरादैच्' इत्येतत् 'वृद्धिरादेङ्' इति पठितुं शक्यत्वाद् 'ऐ औच्' इति सूत्रं व्यर्थं सत् सावर्ण्याभावं ज्ञापयति । अत एव 'एदैतोरोदौतोश्च न मिथः सावर्ण्यम्, ऐ औच् इति सूत्रारम्भसामर्थ्यात्' इत्यादि 'अणुदित्सवर्णस्य–' इति सूत्र एवोक्तमिति भावः । ननु 'ऐ औच्' इति सूत्राभावे 'न य्वाभ्याम्–' इति सूत्रे ताभ्यामैजिति प्रत्याहारोऽयं न सिध्येत्, 'पूर्वौ तु ताभ्यामेङ्' इत्युक्ते तु विधीयमानस्य सवर्णग्राहकतया वैयाकरणः सौवश्व इत्यादावेदोतावेवागमौ स्तः, न त्वैदौतौ । ततश्च वैयर्थ्याभावाद् 'ऐ औच्' इति सूत्रं सावर्ण्याभावं न ज्ञापयतीति चेन्मैवम् । 'पूर्वौ तु ताभ्यामै औ' इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात् । स्थितस्य गतिप्रदर्शनमिदम् । वस्तुतस्तु 'एओङ्' इति सूत्रारम्भसामर्थ्यादित्युक्ते तु 'ताभ्यामैच्' इत्यत्रानुपपत्तिर्नास्त्येव । न च 'एओङ्' इति सूत्राभावे 'अदेङ् गुणः' 'एङि पररूपम्', 'एङः पदान्तादति' इत्यादावेङ्प्रत्याहारः कथं सिध्येदिति वाच्यम् । सति तु सावर्ण्ये 'अदेज् गुणः' 'एचि पररूपम्' 'एचः पदान्तादति' इति पठितुं शक्यत्वात्' अतिप्रसङ्गस्य एच्ग्रहणेऽपि तुल्यत्वात् । न चैवमप्येचां चतुर्णां क्रमादयाद्यादेशसिद्ध्यर्थमेव 'एओङ्' 'ऐऔच्' इति सूत्रद्वयमप्यावश्यकमिति वाच्यम् । 'स्थानेऽन्तरतमः' इत्यनेनैव एचां क्रमादयादयः सिध्यन्तीति प्रागेवास्माभिरुपपादितत्वाच्च । यदा हि 'स्वराणामूष्मणां चैव' इत्यादिप्रागुक्तशिक्षावचनानुरोधाद् 'एङौ विवृततरौ, ऐचौ विवृततमौ' इत्यभ्युपगम्यते, तदा त्वेदैतोरोदौतोश्च मिथः सावर्ण्यप्रसक्तिरेव नास्तीति 'ऐऔच्' इति

स्यात्। औङ् इत्यौकारविभक्तेः संज्ञा। रमे। रमाः। **२८८ सम्बुद्धौ च**। (७-३-१०६) आप एकारः स्यात्सम्बुद्धौ। 'एङ्ह्रस्वात्-' (सू १९३) इति सं-

---

औङ्शब्दस्याप्रसिद्धार्थत्वादाह—**औङित्तीति**। **संज्ञेति**। प्राचां शास्त्रे स्थितेति शेषः। **रमे इति**। रमा औ इति स्थिते, शीभावे तस्य स्थानिवत्त्वेन प्रत्ययत्वाद् 'लशक्वतद्धिते' इति शस्येत्संज्ञायां लोपे 'आद् गुणः' इति एकारः। 'यस्येति च' इति लोपस्तु न, अभत्वात्। जसि सवर्णदीर्घं मत्वाह—**रमा इति**। पूर्वसवर्णदीर्घस्तु न भवति, 'दीर्घाज्जसि च' इति निषेधात्। हे रमा स् इति स्थिते—**संबुद्धौ च**। 'बहुवचने झल्येत्' इत्यतः एदिति 'आङि चापः' इत्यत आप इति चानुवर्तते। तदाह—**आप इत्यादिना**। आबन्तस्येत्यर्थः। 'अलोऽन्त्यस्य'। हे रमे स् इति स्थिते प्रक्रियां दर्शयति—**एङ्ह्रस्वादिति**। हल्ङ्यादिलोपस्तु न, परत्वात् प्रतिपदोक्तत्वाच्च एत्वे कृते हल्ङ्यादिलोपस्याप्राप्तेः, 'एङ्ह्रस्वात्-' इति लोपस्यैव परत्वेन न्याय्य-

---

'एओङ्' इति वा सूत्रे नोक्तज्ञापकमिति ज्ञेयम्। केचित्तु विवृततरयोरेङोर्विवृततमत्वाभावेऽपि विवृततरे विवृततमे च विवृतत्वस्य सत्त्वानदादाय तुल्यप्रयत्नत्वमेङोरैचोश्चास्तीति सावर्ण्यप्रसक्तावुक्तज्ञापकाश्रयणं सम्यगेवेत्याहुः। तदपरे न क्षमन्ते, तथा हि सति 'इको गुणवृद्धी' इति सूत्रस्थशब्दकौस्तुभग्रन्थेन सह विरोधप्रसङ्गात्। तत्र हि—'स्वराणामूष्मणां च-' इत्यादिशिक्षानुरोधाच्चेता नेनेत्यादौ गुणप्रवृत्तिः स्याद्विवृततरत्वरूपवैलक्षण्यस्य सत्त्वादिति न शङ्क्यम्, विधेर्निर्विषयत्वापत्तेः। 'जयः करणम्' 'धान्यानां भवने' इत्यादिनिर्देशैरिकारादिषु गुणप्रवृत्त्यनुमानाच्च—इति प्रकारान्तरेण समाहितम्। त्वदुक्तरीत्या तुल्यप्रयत्नवत्त्वे तु चेता नेतेत्यादौ गुणप्रवृत्तिशङ्का निरालम्बनैव स्यात्। तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततरविवृततमभेदेन सावर्ण्याभावोऽत्र सुवच इति दिक्॥ इत्यजन्तपुँल्लिङ्गप्रकरणम्॥

**रमेति**। रमत इति रमा, 'रमु क्रीडायाम्' इत्यस्मात्पचाद्यचि टाप्। लिङ्गविशिष्टपरिभाषया स्वादयः। हल्ङ्यादिलोपः। न चात्राबन्तत्वादेव स्वाद्युत्पत्तिरस्तु, प्रत्ययान्तस्याप्रातिपदिकत्वेऽपि ङ्याप्पोः पृथग्ग्रहणादिति वाच्यम्, ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्प्रत्याख्याततत्वाच्च तद्ग्रहणस्य। **शी स्यादिति**। 'जसः शी' इत्यतः शी इत्यनुवर्तत इति भावः। **संबुद्धौ च**। 'बहुवचने झल्येत्' 'आङि चापः' इत्यत एत् आप इति चानुवर्तते, तदाह—**आप एकारः स्यादिति**। **एङ्ह्रस्वादिति**। न चात्र हल्ङ्यादिनैव सुलोपोऽस्तु प्रत्ययलक्षणन्यायेन 'संबुद्धौ च' इत्येत्त्वस्यापि प्रवृत्तिसंभवादिति शङ्क्यम्। परत्वात्प्रतिपदोक्तत्वाच्च एत्वे कृते हल्-

---

१ 'हल्ङ्यादिलोपस्याप्राप्तौ' क।

वृद्धिलोपः, हे रमे। हे रमे, हे रमाः। रमाम्, रमे, रमाः। स्त्रीत्वान्नत्वाभावः। २८९ आङि चापः। (७-३-१०५) आङि ओसि च परे आबन्तस्याङ्गस्यै-कारः स्यात्। रमया, रमाभ्याम्, रमाभिः। २९० याडापः। (७-३-११३) आपः परस्य ङिद्वचनस्य याडागमः स्यात्। 'वृद्धिरेचि' (सू ७२) रमायै। सवर्णदीर्घः, रमायाः। रमायाः, रमयोः, रमाणाम्। रमायाम्, रमयोः, रमासु। एवं दुर्गादयः।

---

त्वाच्चेति भावः। **रमामिति**। 'अमि पूर्वः' इति पूर्वरूपम्। औङः शीभावे आद् गुणं मत्वाह—**रमे इति**। **स्त्रीत्वादिति**। शसि रमा अस् इति स्थिते, पूर्वसवर्णदीर्घे सति कृतपूर्वसवर्णदीर्घात् परत्वेऽपि 'तस्माच्छसः–' इति नत्वं स्त्रीलिङ्गत्वान्न भवतीत्यर्थः। रमा आ इति स्थिते—**आङि चापः**। 'ओसि च' इत्यनुवर्तते, आप इति षष्ठी। अङ्गस्येत्यधिकृतम्। तदन्तविधिः। 'बहुवचने झल्येत्' इत्यत एदित्यनुवर्तते। तदाह—**आङि ओसि चेत्यादिना**। आङिति टासंज्ञा प्राचामित्युक्तम्। अलोऽन्त्यस्य एत्वे अयादेश इत्याह—**रमयेति**। **रमाभिरिति**। 'अतो भिसः–' इति तपरकरणादैस् न। रमा ए इति स्थिते—**याडापः**। आप इति पञ्चमी। 'घेर्ङिति' इत्यत ङितीत्यनु-वृत्तं षष्ठ्या विपरिणम्यते। तदाह—**आपः परस्येत्यादिना**। टित्वादाद्यवयवः। **वृद्धिरेचीति**। या ए इति स्थिते आकारस्य एकारस्य च स्थाने ऐकार एकादेश इति भावः। **सवर्णेति**। ङसिङसो रमा अस् इति स्थिते, याडागमे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घ इति भावः। यडित्येव सुवचम्। 'अतो गुणे' इति पररूपं तु न, अकारोच्चारणसामर्थ्यात्। **रमयोरिति**। 'आङि चापः' इत्येत्त्वे अयादेश इति भावः **रमाणामिति**। 'ह्रस्वनद्यापः–' इत्यत्राब्ग्रहणान्नुटि पर्जन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्–' इति णत्वमिति भावः। **रमायामिति**। रमा इ इति स्थिते

---

ङ्यादिलोपस्याप्रवृत्तेः स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाभावात्। आआबित्याकारं प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात्। 'एङ्ह्रस्वात्–' इति लोपस्यैव परत्वेन न्याय्यत्वा-च्चेति भावः। **आङि**। चकारेण 'ओसि च' इति प्रकृतं परामृश्यत इत्याह—**ओसि च पर इति**। **रमाभिरिति**। नन्विह एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अतो भिस ऐस्' इत्यैस् प्राप्नोति। न च तपरत्वसामर्थ्यान्नैवमिति वाच्यम्, अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्मैवम्। अल्विधौ 'अन्तादिवच्च' इत्यस्याप्रवृत्तेः। **याडापः**। 'घेर्ङिति' इत्यतोऽनुवृत्तं ङितीति सप्तम्यन्तमाप इति पञ्चम्यनुरोधेन षष्ठ्या विपरिणम्यत इत्याह—**ङिद्वचनस्येति**। अत्र 'सुपि च' इत्यतः सुपीत्यनु-वर्तनात् सुप एव याट्। तेन अपित्सार्वधातुकस्य ङित्त्वेऽपि मालेवाचरतो मालात इत्यादौ तसादेर्न भवति। एतच्च 'अचः परस्मिन्–' इत्यत्र पूर्वस्य विधिः पूर्वविधि-

**२६१ सर्वनाम्नः स्याड्ढ्रस्वश्च । ( ७-३-११४ )** आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः । याटोऽपवादः । सर्वस्यै । सर्वस्याः । सर्वस्याः । एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'आमि सर्वनाम्नः–' ( सू २१७ ) इति सुट्, सर्वासाम् । सर्वस्याम्, सर्वयोः, सर्वासु । एवं विश्वादयोऽप्याबन्ताः । २६२

'ङमान्नाद्यान्नान्द:' इत्य । याडागमे सवर्णदीर्घ इति भावः । 'न विभक्तौ–' इति मस्य नेत्त्वम् । सर्वशब्दाट्टापि सर्वाशब्दः, सोऽपि प्रायेण रमावत्, किन्तु 'याडापः' इति प्राप्ते—**सर्वनाम्नः स्याड्ढ्रस्वश्च** । 'याडापः' इत्यत आप इति पञ्चम्यन्तमनुवृत्तम्, तेन सर्वनाम्न इत्येतद्विशेष्यते, तदन्तविधिः । 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । ततश्च आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादित्यर्थः । टित्त्वादाद्यवयवः । ह्रस्वश्चेति वाक्यान्तरम् । आप इत्यनुवृत्तमावर्तते, षष्ठ्यन्ततया च विपरिणम्यते, तच्च ह्रस्व इत्यत्रान्वेति । आपः स्थाने ह्रस्वो भवतीति तदर्थः । तदाह—**आबन्तादिति । याटोऽपवाद इति** । येन नाप्राप्तिन्यायादिति भावः । **सर्वस्यै इति** । सर्वा ए इति स्थिते स्याट्, वकारादाकारस्य ह्रस्वः, वृद्धिरिति भावः । **सर्वस्या इति** । ङसिङसोः सर्वा अस् इति स्थिते स्याट्, आपो ह्रस्वः, सवर्णदीर्घ इति भावः । ननु आबन्तस्य सर्वाशब्दस्य सर्वादिगणे पाठाभावात् कथं सर्वनामत्वमित्यत आह—**एकादेशस्येति** । वकारादकारस्य आपश्च योऽयमेकादेशः सवर्णदीर्घः, तस्येत्यर्थः । ननु एकादेशनिष्पन्नस्य आकारस्य पूर्वान्तत्वे आप्त्वव्याघाताद् आबन्तत्वं व्याहतम् । न च परादित्वेन आबन्तत्वमपीति वाच्यम् 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादिति चेत्, सत्यम्—लिङ्गविशिष्टपरिभाषया आबन्तस्य सर्वनामत्वम् । आबन्तत्वं तु परादिवद्भावेनेत्याहुः । **सर्वस्यामिति** । ङौ सर्वा इ इति स्थिते 'ङेराम्–' इत्याम्, सुटं बाधित्वा परत्वात् स्याट्, ह्रस्वश्च । सकृद्गतिन्यायान्न पुनः सुट् । **एवमिति** । सर्वादिगणपठितविश्वादय आबन्तत्वं प्राप्ताः सर्वाशब्दवदित्यर्थः ।

रिति षष्ठीसमासपक्षाभ्युपगमेनोक्तम्, पञ्चमीसमासपक्षाभ्युपगमे तु शपः स्थानिवत्त्वेन व्यवधानाद् मालात इत्यादावाटः प्रसङ्ग एव नास्तीत्याहुः । 'यट्' इत्येव वक्तव्ये दीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थम् । न च 'अतो गुणे' इति पररूपापत्तिः, अकारोच्चारणसामर्थ्यादेव तद्भावात् । **वृद्धिरेचीति** । प्राचा तु 'आटश्च' इत्युपन्यस्तम्, तदुपेक्षितम्, याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात् । **सर्वनाम्नः स्याट्** । दीर्घो-

१ 'ततश्च' इत्यारभ्य 'याटोऽपवादः' इत्यतः प्राग् अन्यथैव ग्रन्थो दृश्यते क-पुस्तके–' 'ह्रस्वनद्यापः–' इत्यत आप इत्यनुवृत्तं षष्ठ्यन्तं ह्रस्व इत्यत्रान्वेति । टित्त्वादाद्यवयवः" इति

**विभाषा दिक्समासे बहुव्रीहौ ।** (१-१-२८) अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै, उत्तरपूर्वायै । 'दिङ्नामान्यन्तराले' (सू ८४९) इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह—योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै । बहुव्रीहिग्रहणं स्पष्टार्थम् । अन्तरस्यै शालायै । बाह्यायै इत्यर्थः । 'अपुरि' इत्यु-

---

उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम् उत्तरपूर्वा । 'दिङ्नामान्यन्तराले' इति बहुव्रीहिविशेषोऽयम् । तत्र विशेषं दर्शयितुमाह—**विभाषा दिक्समासे ।** 'सर्वादीनि–' इत्यतः सर्वनामग्रहणमनुवर्तते । तदाह—**अत्रेति ।** दिक्समास इत्यर्थः । 'न बहुव्रीहौ' इत्यलौकिकविग्रहवाक्ये नित्यनिषेधे प्राप्ते विकल्पार्थमिति केचित् । गौणत्वादप्राप्ते विभाषेयमित्यन्ये । सर्वनामत्वपक्षे उदाहरति—**उत्तरपूर्वस्यै इति ।** स्याड्ढ्रस्वौ । **उत्तरपूर्वायै इति ।** सर्वनामत्वाभावपक्षे याट् । उत्तरपूर्वस्याः, उत्तरपूर्वायाः । उत्तरपूर्वासाम्, उत्तरपूर्वाणाम् । उत्तरपूर्वस्याम्, उत्तरपूर्वायाम् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति मात्रग्रहणात् संप्रति असर्वनामत्वेऽपि पूर्वपदस्य पुंवत्त्वम् । ननु उत्तरा दिगिति मतौ मोहवशात् पूर्वा दिग् यस्याः सा उत्तरपूर्वा, 'अनेकमन्यपदार्थे' इति बहुव्रीहिः । अत्रापि दिक्शब्दघटितसमासत्वात् सर्वनामताविकल्पे उत्तरपूर्वस्यै, उत्तरपूर्वायै इति रूपद्वयं स्यात् । स्याडागमस्तु नेष्यते । तत्राह—**दिङ्नामानीति ।** 'दिङ्नामान्यन्तराले' इति बहुव्रीहिः प्रतिपदोक्तो दिक्समासः, दिक्शब्दमुच्चार्य विहितत्वात्, न तु 'अनेकमन्यपदार्थे' इति बहुव्रीहिरपि, ततश्च लक्षणप्रतिपदोक्तपरिभाषया न तस्य ग्रहणमित्यर्थः । **योत्तरेति ।** उत्तराशब्दस्य पूर्वाशब्दस्य च सामानाधिकरण्यं द्योतयितुं यत्तच्छब्दौ, सामानाधिकरण्याभावे 'अनेकमन्यपदार्थे' इति बहुव्रीहेरसंभवात्, 'बहुव्रीहिः समानाधिकरणानां वक्तव्यः' इति वचनात् । **उन्मुग्धाया इति ।** तेन पूर्वोत्तरयोर्विरोधात् कथं सामानाधिकरण्यमिति शङ्का निरस्ता । ननु 'विभाषा दिक्समासे' इत्येवास्तु, बहुव्रीहिग्रहणं न कर्तव्यम्, प्रतिपदोक्तत्वेन 'दिङ्नामानि–' इति बहुव्रीहेरेव ग्रहणसिद्धेरित्यत आह—**बहुव्रीहिग्रहणं स्पष्टार्थमिति । बाह्यायै इत्यर्थ इति ।** 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥' इति कोशात् । अर्थान्तरपरत्वे तु सर्वनामत्वाभावाद् न स्यादिति भावः ।

---

च्चारणं प्राग्वत् स्पष्टप्रतिपत्त्यर्थम् । आबन्तस्य सर्वादिगणे पाठाभावात् सर्वनामत्वं नेत्याशङ्क्याह—**एकादेशस्य पूर्वान्तत्वेनेति । विभाषादिक्समासे ।** गौणत्वादप्राप्ते विभाषेयम्, न तु 'न बहुव्रीहौ' इति निषेधे प्राप्ते इति भ्रमितव्यम् । तस्या-

---

१ 'गत्वा' इति क, ख, पाठः । असंबद्धतया स त्यक्तः ।

क्तेर्नेह-अन्तरायै नगर्यै। २६३ विभाषा द्वितीयातृतीयाभ्याम्। (७-३-११५) आभ्यां ङितः स्याट् स्यादापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम्, तीयस्य ङित्सूपसंख्यानात्। द्वितीयस्यै, द्वितीयायै। द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याम्, द्वितीयायाम्। शेषं रमावत्। एवं तृतीया। 'अम्बार्थनद्योर्ह्रस्वः' (सू २६७) हे अम्ब। हे अक्क। हे अल्ल। 'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न' (वा ४२६२) हे अम्बाडे, हे अम्बाले, हे अम्बिके। जरा।

---

**अपुरीत्युक्तेरिति**। 'अन्तरं बहिर्योग-' इति गणसूत्र इति शेषः। **विभाषा**। 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'याडापः' इत्यत आप इति, 'सर्वनाम्नः स्याड्-' इत्यतः स्याडिति ह्रस्व इति चानुवर्तते। तदाह-**आभ्यामित्यादिना। इदमिति**। 'विभाषा द्वितीयातृतीयाभ्याम्' इति सूत्रं न कर्तव्यमित्यर्थः। कुत इत्यत आह-**तीयस्येति**। विभाषाप्रकरणे तीयप्रत्ययान्तस्य ङित्सु सर्वनामत्वोपसंख्यानादित्यर्थः। न च तीयस्य ङित्सूपसंख्यानमेव त्यज्यतामिति वाच्यम्, पुंनपुंसकार्थं तस्यावश्यकत्वात्। **अम्बार्थेति**। व्याख्यातमिदं पुंसीदन्ताधिकारे। तत्र नदीविषये उदाहृतम्। अम्बार्थानुदाहरति-**हे अम्बेत्यादि**। शेषं रमावत्। अत्र भाष्ये-'डलकवतीनां प्रतिषेधो वक्तव्यः' हे अम्बाडे, हे अम्बाले, हे अम्बिके। तदिदं वार्तिकं न कर्तव्यम्-इत्युक्त्वा 'द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वः' इति स्थितम्। यथाश्रुतवार्तिके तु हे अल्ल इत्यत्राव्याप्तिः स्यादिति तदाशयः। तदत्र फलितमाह-**असंयुक्ता इति**। द्व्यच्कानामम्बार्थानां ह्रस्व इत्यस्याङ्गत्वात्तदन्तविधिः। अतो जगदम्ब इत्यत्र द्व्यच्काम्बान्तत्वाद् भवति ह्रस्वः।

**जरेति**। 'जॄष् वयोहानौ'। 'षिद्भिदादिभ्यः-' इत्यङ्। 'ऋदृशोऽङि-' इति

---

लौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वात्, अस्य च समासविषयत्वात्। **स्पष्टार्थमिति**। प्रतिपदोक्तदिक्समासविधायके 'दिङ्नामानि-' इति सूत्रे 'शेषो बहुव्रीहिः' इत्यतो बहुव्रीहिरित्यधिकारादिति भावः। **त्यक्तुं शक्यमिति**। न चाबन्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तत्वाभावाद् 'विभाषा द्वितीया-' इति सूत्रमावश्यकमिति शङ्क्यम्। एकादेशस्य पूर्वान्तत्वेन ग्रहणादाबन्तस्यापि तीयप्रत्ययान्तत्वात्। 'तीयस्य-' इति पुंनपुंसकार्थमवश्यं वक्तव्येनानेनैव सिद्धौ 'विभाषा द्वितीया-' इति सूत्रं न कर्तव्यमिति भावः। **अम्बार्थनद्योर्ह्रस्वः**। अत्र 'अम्बार्थं द्व्यक्षरं यदि' इति वचनाद् द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भवति, नान्येषामित्याशयेन फलितमाह—**असंयुक्ता ये डलका इत्यादि। जरेति**। 'जॄष् वयोहानौ' इत्यस्मात् 'षिद्भिदादिभ्यः-' इत्यङि 'ऋदृशो-

---

१ 'प्राप्तस्य' इति युक्तं प्रतिभाति।

जरसौ, शीभावात्परत्वाज्जरस्। आमि नुटः परत्वाज्जरस्, जरसामित्यादि। पक्षे हलादौ च रमावत्। इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया

---

गुणः, रपरत्वम्। अदन्तत्वात् टाप्, सुः, हल्ङ्यादिना सुलोप इति भावः। **जरसाविति।** 'जराया जरसन्यतरस्याम्' इति अजादौ जरसादेश इति भावः। ननु शीभावे कृते सति आबन्तसन्निपातमुपजीव्य प्रवृत्तस्य तस्य सन्निपातपरिभाषया आबन्तत्वविघातकजरसादेशनिमित्तत्वासम्भवेन जरसादेशाभावे आद् गुणे जरे इत्येव स्यादित्यत आह—**शीभावादिति।** जरसि कृते तु आबभावान्न शीभाव इति भावः। जरसः। जरसम्, जरसौ, जरसः। टा—जरसा। न चात्र जरा आ इति स्थिते, जरसादेशं बाधित्वा परत्वाद् 'आङि चापः' इत्येत्वे अयादेशे जरयेत्येव युक्तमिति वाच्यम्, एकदेशविकृतन्यायेन कृतेऽप्येत्वे प्रवृत्तस्य[1] जरसादेशस्य नित्यतया तस्यैव प्रवृत्तेः, परान्नित्यस्य बलवत्त्वात्। कृते तु जरसि आबभावादेत्त्वं न। ङे जरसे। न चात्र जरा ए इति स्थिते, जरसादेशं बाधित्वा परत्वाद् याटि, वृद्धौ जरायै इत्येव युक्तमिति वाच्यम्, अन्तरङ्गत्वेन जरसादेशस्यैव प्रवृत्तेः, परादन्तरङ्गस्य बलवत्त्वात्। आपः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङसिङसोः जरसः, अत्रापि पूर्ववद्याट् न। जरसोः, एत्त्वं बाधित्वा नित्यत्वाद् जरस्। आमि—जरसाम्। नन्वामि नुटि कृते अजादिविभक्त्यभावात् कथं जरसादेश इत्यत आह—**आमि नुट इति।** ङौ जरसि, परमपि ङेरामं याटं च नित्यत्वादन्तरङ्गत्वाच्च क्रमेण बाधित्वा जरस्। **पक्षे हलादौ च रमावदिति।** जरसादेशाभावपक्षे हलादावपि, रमावदित्यर्थः।

मतान्तरं दूषयितुमनुवदति—**इह पूर्वेत्यादिना।** इह जराशब्दे जरा औ इति स्थिते शीभावमाश्रित्य जरसी इति केचिदाहुरित्यन्वयः। आश्रित्येत्यनन्तरं 'जरसादेशे कृते' इति शेषः। ननु शीभावं बाधित्वा परत्वाद् जरसादेश एव युक्त इत्यत आह—**पूर्वविप्रतिषेधेनेति।** 'विप्रतिषेधे परम्—' इत्यत्र परशब्दस्य इष्टवाचिता-

---

ऽङि—' इति गुणे कृते टाप्। **शीभावात्परत्वाज्जरसित्यादि।** ननु 'औङ आपः' 'ह्रस्वनद्यापो नुट्' इत्यपेक्षया 'जरायाः—' इति सूत्रस्य परत्वादस्त्वेवम्, परन्तु 'आङि चापः' 'याडापः' 'ङेराम्—' इति विधयो जरसादेशं बाधित्वा परत्वात् स्युरिति चेत्, अत्राहुः—'आङि चापः' इत्येकारादेशे कृतेऽप्येकदेशविकृतन्यायेन 'जरायाः—' इति जरसादेशप्रसक्त्या नित्यत्वादेकारादेशं बाधित्वा जरसादेश एव भवति। न चैकारादेशोऽपि नित्य एव, जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्तत्वाद् 'आङि चापः' इति प्रवृत्तेरिति वाच्यम्, आकाररूपस्यैवापः सर्वत्र ग्रहणाद् इत्यनुपदमेव वक्ष्यमाणत्वात्तदप्रवृत्तेः। 'याडापः' इति याडागमं तु जरसादेशोऽन्तरङ्गत्वाद्बाधते। आकाररूपापः

---

[1] 'प्राप्तस्य' इति युक्तं प्रतिभाति।

**अनित्यतां चाश्रित्य 'जरसी' इति केचिदाहुः, तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य 'औङ आपः' (सू २८७) 'आङि चापः' (सू २८९) 'याडापः' (सू २९०) 'ह्रस्वनद्यापः–' (सू २०८) 'ङेराम्–' (सू २७०) इति च पञ्चापि विधयः प्राप्ताः, एवं नस्निश्प्रृत्सु, तथाप्यनल्विधावित्युक्तेर्न भवन्ति,**

---

नाश्रित्य क्वचित् पूर्वस्य प्रवृत्त्याश्रयणेनेत्यर्थः। ननु आबन्तसंनिपातमुपजीव्य प्रवृत्तस्य शीभावस्य संनिपातपरिभाषया आबन्तसंनिपातविघातकजरसादेशनिमित्तत्वं न संभवतीत्यत आह—**संनिपातपरिभाषाया अनित्यतां चेति। तन्निर्मूलमिति।** पूर्वविप्रतिषेधाश्रयणस्य भाष्यापरिगणितेष्वप्रवृत्तेः, संनिपातपरिभाषायाः सर्वत्रानित्यत्वाश्रयणे प्रमाणाभावाच्चेति भावः।

स्यादेतत्। जरसौ, जरसामित्यत्र 'औङ आपः' 'ह्रस्वनद्यापो नुट्' इत्यपेक्षया परत्वादस्तु जरसादेशः, अस्तु च ङेङसिङस्सु-जरसे, जरस इत्यत्र याटमन्तरङ्गत्वाद् बाधित्वा जरसादेशः, अस्तु च ङौ जरसि इत्यत्र नित्यत्वादाममन्तरङ्गत्वाद्याटं च बाधित्वा जरसादेशः। तथापि तस्य जरसादेशस्य स्थानिवत्त्वेन आबन्तत्वात् तदाश्रित्य एत्त्व-शीभाव-याड्-नुडागमाः कुतो न स्युः। किं च अनेनैव न्यायेन नासिकाशब्दस्य निशाशब्दस्य पुंन्नाशब्दस्य च एत्त्व-शीभाव-याड्-नुडागमान् बाधित्वा 'पद्दन्नो–' इत्यादिना नस्-निश्-पृन्-इत्यादेशेषु क्रमेण कृतेषु तेषां स्थानिवद्भावेन आबन्तत्वमाश्रित्य एत्त्व-शीभाव-याड्-नुडागमाः प्रसज्येरन्–इति शङ्के—**यद्यपीत्यादिना।** परिहरति—**तथापीति।** स्थानीभूतावन्ताश्रयविधय एते एत्त्वादिविधयः। अतस्तेषु कर्तव्येषु जरसाद्यादेशानां स्थानिवत्त्वं न संभवति, अनल्विधाविति तन्निषेधात्। ततश्च जरसाद्यादेशानामाबन्तत्वालाभाद् एत्त्वादिविधयो न भवन्तीत्यर्थः। ननु अल्त्वव्याप्याकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिः, न तु यथाकथञ्चिद् अलाश्रयविधिरपि, रामायेत्यत्र 'सुपि च' इति दीर्घाभावप्रसङ्गात्। तत्र हि दीर्घो यञादिसुपि परतो विधीयते। यादेशस्य च सुप्त्वं स्थानिवत्त्वलभ्यम्। यादेशस्य च एकारः अल् स्थानी। ततश्च दीर्घस्य स्वनिमित्तभूतसुप्त्वांशे तदाश्रयत्वादनल्विधाविति निषेधाद्

---

परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङेराममपि जरसादेशो नित्यत्वाद्बाधते। न चाकाररूपाबन्तात्परस्य ङेरामि कृते संनिपातपरिभाषया जरसादेशस्याप्रवृत्तौ न तस्य नित्यतेति वाच्यम्, रूपमालायां जरसीत्युक्तत्वादिष्टानुरोधेनोक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाभावादिति। **स्वाश्रयमिति।** यञादिसुबाश्रयं तन्निमित्तकमित्यर्थः। यञादिसुप एव याडागमापादनात्स्वशब्देन तत्परामृश्यते। **स्थानिवद्भावेनेति।** न चैवं लाक्षणिकत्वात्कथमिह याट् स्यादिति वाच्यम्। अतिदेशविषये

**'आ आप्' इति प्रश्लिष्याकाररूपस्यैवापः सर्वत्र ग्रहणात्। एवं 'हल्ङ्याप्–' ( सू २५२ ) इति सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषाद् 'अतिखट्वः' 'निष्कौशाम्बिः' इत्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम्। न चैवमपि 'अतिखट्वाय' इत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्,**

---

दीर्घे कर्तव्ये यादेशस्य स्थानिवत्त्वाभावेन सुप्त्वाभावात् तस्मिन् परतो दीर्घो न स्यात्। अल्त्वव्याप्याकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिरित्याश्रयणे तु न दोषः। दीर्घो हि यादेशस्थानिभूतमेकारमेकारत्वेन नाश्रयति, किं तु सुप्त्वेनैव। सुप्त्वं चाल्त्वव्याप्यं न भवति, स्यामादावपि सत्त्वात्। ततश्च दीर्घस्यानल्विधित्वात् तस्मिन् कर्तव्ये यादेशस्य स्थानिवत्त्वेन सुप्त्वसंभवाद् दीर्घो निर्बाधः। प्रकृते च एत्त्वादिविधयो जरसादेशस्थानीभूताबन्तत्वपुरस्कारेण संभवत्प्रवृत्तिकाः। आप्त्वं च समुदायस्य[1] धर्मः, नत्वाकारमात्रस्य। ततश्च एत्त्वादिविधीनामनल्विधित्वात्तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वेनाबन्तत्वं दुर्वारमित्याशङ्क्याह—**आ आवित्यादिना।** 'आङि चापः' इत्यादिषु सवर्णदीर्घेण 'आप्' इति प्रश्लिष्य आकाररूपाबन्ताश्रयणेन एत्त्वादयो विधीयन्ते। ततश्च ते आकारत्वेरूपेणाप्यापमाश्रयन्तीति[2] तेषामल्विधित्वात् तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वादाबन्तत्वं न संभवति। ततश्च एत्त्वादिविधयोऽत्र न भवन्तीत्यर्थः। प्रसङ्गादाह—**एवमिति।** यथा—'आङि चापः' इत्यादिषु 'आ आप्' इति प्रश्लेषः। एवं 'हल्ङ्याब्भ्यः–' इत्यत्र 'ङी ई' 'आ आप्' इति सवर्णदीर्घेण प्रश्लेषाद् दीर्घग्रहणं प्रत्याख्येयमित्यन्वयः ननु तत्र दीर्घग्रहणाभावे अतिखट्वः, निष्कौशाम्बिरित्यत्रापि सुलोपः स्यात्, तथा हि–खट्वाशब्दष्टाबन्तः, खट्वामतिक्रान्तः अतिखट्वः, 'अत्यादयः क्रान्ताद्यर्थे–' इति समासः। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी, 'तेन निर्वृत्तम्' इत्यण्, 'टिड्ढाणञ्' इति ङीप्, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। उभयत्रापि 'गोस्त्रियोः–' इति आपो ङीपश्च ह्रस्वः, ततः सुबुत्पत्तिरिति स्थितिः। अत्र स्थानिवत्त्वेनाकाररूपाबन्तत्वस्य ईकाररूपङ्यन्तत्वस्य चानपायात् सोर्हल्ङ्यादिलोपे प्राप्ते तन्निवृत्त्यर्थं दीर्घग्रहणमावश्यकमेवेत्यत आह—**अतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेरिति।** अयमाशयः–ङी ई, आ आप्–इति प्रश्लेषे सति आत्वरूपेण ईत्वरूपेण च ङ्यापावाश्रित्य सुलोपप्रवृत्तिर्वक्तव्या, ईत्वात्वयोश्च अल्त्वव्याप्यधर्मत्वात् तत्पुरस्कारेण प्रवर्तमानलोपविधेरल्विधित्वान्न स्थानिवत्त्वेन ङ्याबन्तत्वमस्तीति न सुलोप इति[3]। एवं च दीर्घग्रहणप्रयोजनस्य प्रश्लेषेणैव सिद्धत्वाद् हल्ङ्यादिसूत्रे दीर्घग्रहणं न कर्तव्यमित्यन्यत्र विस्तरः।

---

१ 'समुदायधर्मः' क। २ 'आकाररूपेणा–' क। ३ फलितम्–इत्यधिकं क पुस्तके।

**आबन्तं यदङ्गं ततः परस्य याड्विधानात् , उपसर्जनस्त्रीप्रत्यये तदादिनियमात् ।**

---

स्यादेतत् । 'याडापः' इत्यत्र 'आ आप्' इति प्रश्लेषे सत्यपि अतिखट्वायेत्यत्र याट् दुर्वारः । खट्वामतिक्रान्तः अतिखट्वः, 'अत्यादयः—' इति समासे 'गोस्त्रियोः—' इति ह्रस्वत्वे रूपम् । ततो ङेर्यादेशे 'सुपि च' इति दीर्घे अतिखट्वायेति रूपम् । तत्र 'याडापः' इति याट् स्यात् । दीर्घे सति स्थानिवत्त्वेनाकाररूपाप्त्वस्य सत्त्वात् । न चाकारत्वस्य अल्त्व-व्याप्यधर्मत्वात् तत्पुरस्कारेण प्रवर्तमानयाड्विधेरल्विधित्वाद् न दीर्घस्य स्थानिवत्त्वेना-कारत्वावच्छिन्नत्वमिति वाच्यम् , याड्विधिर्हि आकाररूपाबाश्रयः, तत्र आकाररूपत्वं दीर्घस्य स्वत एव सिद्धमिति न तत् स्थानिवत्त्वलभ्यम् , किं तु आप्त्वमेव स्थानिवत्त्व-लभ्यम् । आप्त्वं च समुदायधर्म एव, न त्वल्त्वव्याप्यधर्मः । तेन रूपेण स्थान्यला-श्रयत्वेऽपि अल्विधित्वाभावाद्याड्विधौ स्थानिवत्त्वं दुर्वारमिति शङ्कामुद्भाव्य परिहरति—**न चेति । एवमपीति ।** 'याडापः' इत्यत्र आकारप्रश्लेषे सत्यपीत्यर्थः । **स्वाश्रय-मिति ।** स्वः—आकार आश्रयो यस्याकारत्वस्य तत्स्वाश्रयम् , स्वतःसिद्धमिति यावत् । एवमपीत्यारभ्य याट् स्यादित्यन्तः संदर्भः शङ्कापरः, इति च न वाच्यमित्यन्वयः । कुत इत्यत आह—**आबन्तं यदङ्गमिति ।** 'याडापः' इत्यत्र हि आब्ग्रहणेन प्रत्ययग्रहण-परिभाषया आबन्तं गृह्यते, अङ्गस्येति तद्विशेषणं भवति, ततश्चाबन्तादङ्गात् परस्य ङितो याड् विधीयते । यस्मात् शब्दाद् यः प्रत्ययो विहितः तादृशप्रकृतिभूतशब्दरूपा-द्यवयवकस्य तत्प्रत्ययरूपान्तावयवकस्य समुदायस्य ग्रहणमिति परिभाषार्थः, प्रत्ययग्रहणे प्रकृतिप्रत्ययसमुदायस्य ग्रहणमिति पर्यवसन्नार्थः । प्रकृते चातिखट्वायेत्यत्र खट्व-शब्दाददन्तात् टाब्विधानात् खट्वा इत्येव टाबन्तम् , तत्तु ङितं विभक्तिं प्रति नाङ्गम् , अतिखट्वशब्दादेव ङितो विधानात् । यत्त्वङ्गमतिखट्वेति, न तट्टाबन्तम् । अतः स्थानिवत्त्वेन आप्त्वे सत्यपि न याडिति भावः । ननु 'ष्यङः सम्प्रसारणम्—' इत्यत्र भाष्ये स्त्रीप्रत्यये वाचनिकस्तदादिनियमप्रतिषेधः पठितः, तत् कथमत्र तत्प्राप्तिरित्यत आह—**उपसर्जनेति ।** तत्र भाष्ये 'स्त्रीप्रत्यये चानुपसर्जने न' इति उपसर्जनादन्य-

---

लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तौ अतिदेशस्य वैयर्थ्यापत्तेः । अतो व्याचष्टे—**आबन्तं यदङ्गमिति ।** 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणम्' इति नियमाद-तिखट्वेति यदङ्गं तदाबन्तं न भवति, यच्चाबन्तं खट्वेति तदङ्गं न भवतीति नात्र याडा-गमप्रसक्तिरिति भावः । अत्र नव्याः—'प्रत्ययग्रहणे तदन्तग्रहणम्' इत्याब्ग्रहणेनाबन्तं गृह्यते । आबन्तस्याङ्गविशेषणे त्वाबन्तान्तग्रहणादतिखट्वायेत्यत्रोक्तदोषतादवस्थ्यमिति यद्युच्यते, तर्ह्यङ्गेनाबन्तं विशेष्यताम्—अङ्गसंज्ञकं यदाबन्तमिति, तथा च नोक्तातिप्रसङ्ग-शङ्कालेश इत्याहुः । स्त्रीप्रत्यये तदादिनियमो नेत्याशङ्क्याह—**उपसर्जनेति ।** अयं

'पद्दन्नो–' (सू २२८) इति नासिकाया नस् , नसः, नसा। नोभ्यामित्यादि। पक्षे सुटि च रमावत्। निशाया निश् , निशः । निशा । २९४ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। (८-२-३६) व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। षस्य जश्त्वेन डः। निड्भ्याम्। निड्भिः। सुपि 'डः सि धुट्' (सू १३१) इति पक्षे धुट् , चर्त्वम् , तस्यासिद्ध-

त्रैव तदादिनियमनिषेधस्य उक्ततया प्रकृते स्त्रीप्रत्यये उपसर्जने तदादिनियमस्य निर्बाधत्वादिति भावः। नन्वेवमप्याब्ग्रहणेन प्रत्ययग्रहणपरिभाषया तदन्ते गृहीते तेनाङ्गस्य विशेषणाद् आबन्तान्तं यदङ्गमित्यर्थाद् अतिखट्वायेत्यत्र स दोषस्तदवस्थ इति वाच्यम्, अङ्गस्य विशेषणत्वाश्रयणात्। अत एव 'ङ्याब्ग्रहणे अदीर्घ आदेशो न स्थानिवद्' इति वार्तिककारमतं हस्वे फलाभावेन स्थानिवद्भावाप्रसक्त्या कथं तत्स्थानिके दीर्घे तल्लाभ इति भाष्यकारेण दूषितम्।

अथ नासिकाशब्दे विशेषमाह—**पद्दन्निति**। शसि नसः। टा नसा। **नोभ्यामित्यादीति**। नस् भ्यामित्यत्र 'स्वादिषु–' इति पदत्वे 'ससजुषो रुः' इति रुत्वे 'हशि च' इत्युत्वे गुणे नोभ्याम्, नोभिः इत्यादि रूपमित्यर्थः। नस्तु। **पक्ष इति**। शसादौ नसादेशाभावपक्षे इत्यर्थः। अथ निशाशब्दे विशेषं दर्शयति—**निशाया निशिति**। शसादौ 'पद्दन्नो–' इत्यनेनेति शेषः। निश् भ्यामिति स्थिते-**व्रश्चभ्रस्ज**। व्रश्चादयः सप्त धातवः, छशौ वर्णौ, ताभ्यां शब्दरूपविशेष्यमादाय तदन्तविधिः। 'झलो झलि–' इत्यतो झलीत्यनुवर्तते। पदस्य' इत्यधिकृतम्। 'स्कोः संयोगाद्योरन्ते च' इत्यतः अन्ते इत्यनुवर्तते। तदाह—**व्रश्चादीनामिति**। अन्तादेश इत्यलोऽन्त्यसूत्रलभ्यम्। **षस्य जश्त्वेन ड इति**। प्रकृतसूत्रेण शस्य षत्वे तस्य षकारस्य 'स्वादिषु–' इति पदत्वाद् 'झलाञ्जशोऽन्ते' इति जश्त्वेन स्थानसम्याड्डकारे निड्भ्यामित्यादि रूपमित्यर्थः। **सुपीति**। निश् सु इति स्थिते 'व्रश्च–' इति षत्वे, तस्य जश्त्वेन डकारे 'डस्सि धुट्' इति कदाचिद् धुडागमः। **चर्त्वमिति**। डधयोः इति

भावः—'स्त्रीप्रत्यये चानुपसर्जने न' इत्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमप्रतिषेधो वक्ष्यते न तूपसर्जनेऽपि। अत एव परमकारीषगन्धीपुत्रवदतिकारीषगन्ध्यापुत्र इत्यत्र 'ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे' इति संप्रसारणं न भवति। अतिकारीषगन्ध्यस्य हि ष्यङन्तत्वाभावात्। न च बहुश्रेयसीत्यत्र श्रेयसीत्युत्तरभागस्य ङ्यन्तत्वाद्यथा हल्ङ्यादिलोपः प्रवर्तते तथा तत्राप्युत्तरभागस्य ष्यङन्तत्वात्संप्रसारणं स्यादेवेति शङ्क्यम्, पूर्वपदस्य ष्यङन्तस्य पुत्रपत्योरुत्तरपदयोः संप्रसारणमिति 'ष्यङः संप्रसारणम्' इत्यत्रैव

१ 'चर्त्वस्य' इति नास्ति क।

त्वात् 'चयो द्वितीयाः-' (वा २०२३) इति ठतयोष्ठथौ न। 'न पदान्ताट्टोः-' (सू० ११४) इति ष्टुत्वं न। निट्स्सु-निट्सु। २६५ षढोः कः सि (८-२-४१) षस्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति, जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु व्रश्चादिसूत्रे 'दादेर्धातोः-' (सू ३२५) इति सूत्राद् 'धातोः' इत्यनुवर्तयन्ति, तन्मते जश्त्वेन जकारे, निज्भ्याम्, निज्भिः। 'चोः कुः' (सू ३७८) इति कुत्वं तु न भवति। जश्त्वस्यासिद्धत्वात्। जश्त्वम्, श्चुत्वम्, चर्त्वम्-निच्शु, निच्छु। 'मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा' (वा

---

शेषः। स्थानसाम्याद् डस्य टः, धस्य तः। **तस्येति**। चर्त्वस्येत्यर्थः। **ठथौ नेति**। धुडभावपक्षे टस्य ठो न, धुट्पक्षे तस्य थो नेत्यर्थः। 'नादिन्याक्रोशे-' इति सूत्रस्थभाष्ये 'चयो द्वितीयाः-' इत्यस्य पाठदर्शनात् तदपेक्षया चर्त्वस्य[1] परत्वम्। अथ तकारस्य ष्टुत्वेन टकारमाशङ्क्य आह—**न पदान्तादिति**। स्वादिषु इति पदत्वं बोध्यम्। **निट्त्सु इति**। धुट्पक्षे रूपम्, तदभावपक्षे तु निट्सु। तत्र धुडभावपक्षे निश् सु इति स्थिते 'व्रश्च-' इति षत्वे, तस्य षकारस्य जश्त्वात् प्राक् ककारमाशङ्कितुमाह—**षढोः कः सि**। षश्च ढ् चेति द्वन्द्वः, सि इति सप्तमी, तदाह—**षस्येत्यादिना**। **इति तु न भवतीति**। षकारस्य ककारो न भवतीत्यर्थः। **जश्त्वं प्रत्यसिद्धत्वादिति**। 'झलाञ्जशोऽन्ते' इत्यपेक्षया 'षढोः कः सि' इत्यस्य परत्वादिति भावः। शसादिषु निशादेशाभावपक्षे सुटि च समानम्। व्रश्चादि-सूत्रे [illegible]रस्माह—**केचित्त्विति**। 'एकाचो बशः-' इत्युत्तरसूत्रे धातोरित्यस्यानुवृत्त्या मध्येऽपि तदनुवृत्तेरौचित्यादिति भावः। अनुवृत्तं च धातोरित्येतत् छशयोरेव विशेषणम्, व्रश्चादिषु धातुत्वाव्यभिचारात्। **जश्त्वेनेति**। निश् भ्यामित्यादौ निश् इत्यस्य धातुत्वाभावात् षत्वाभावे 'झलाञ्जशोऽन्ते' इति जश्त्वेन शकारस्य स्थानसाम्याद् जकार इत्यर्थः। निज् भ्यामित्यत्र कुत्वमाशङ्क्याह—**कुत्वं तु नेति**। **जश्त्वस्यासिद्धत्वादिति**। कुत्वं प्रतीति शेषः। **निच्शु इति**। निश् सु इति स्थिते शस्य जश्त्वेन जः, सस्य श्चुत्वेन शः, जस्य चर्त्वेन चः, शस्य छत्वविकल्पः। **मांसपृतना**। मांस, पृतना, सानु इत्येतेषां मांस्, पृत्, स्नु, इत्यादेशा वाच्या इत्यर्थः। 'पद्दन्नो-' इति सूत्रे वार्तिकमेतत्। अत एवाह—**शसादौ वेति**। पद्दन्निति सूत्रस्य शसादौ विकल्पेन प्रवृत्तेरिति भावः। मांससानुशब्दयोरस्त्रीलिङ्गत्वात् पृतनाशब्दस्यैव शसादौ

---

वक्ष्यमाणत्वात्। **टतयोष्ठथौ नेति**। धुडभावे टस्य ठो न, धुट्पक्षे तु तस्य थो नेति विवेकः। **न भवतीति**। जश्त्वात्प्राक् षस्य कत्वं न भवतीत्यर्थः। **केचित्त्विति**। परिशिष्टकारादयः। **निच्शु इति**। अत्र 'शश्छोऽटि' इति पक्षे छत्वं बोध्यम्।

---

1 'चर्त्वस्य' इति नास्ति क।

३४९६ ) । पृतः । पृता । पृद्भयाम् । पक्षे सुटि च रमावत् । गोपा विश्वपावत् ।
॥ इत्यादन्ताः ॥ मतिशब्दः प्रायेण हरिवत् । स्त्रीत्वान्नत्वाभावः, मतीः । नात्वं न,
मत्या । २९६ ङिति ह्रस्वश्च (१-४-६) इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्य-

---

पृदादेशमुदाहरति—**पृत इति । पक्षे इति** । पृदादेशाभावपक्ष इत्यर्थः । **गोपा विश्वपावदिति** । आबन्तत्वाभावाद् न सुलोप इत्यर्थः ॥ इत्यादन्ताः ॥

**अथ इदन्ता निरूप्यन्ते । मतिशब्दः प्रायेण हरिवदिति** । प्रायशब्दो बहुलपर्यायः । 'प्रायो भूम्नि' इत्यमरः । इह तु ईषदूनत्वे वर्तते । प्रकृत्यादित्वातृतीया । मतिशब्द ईषदूनहरिशब्दवत् प्रत्येतव्य इत्यर्थः । शसि विशेषमाह—**स्त्रीत्वान्नत्वाभाव इति** । 'तस्माच्छसो नः पुंसि' इति नत्वस्य पुंस्त्वे विधानादिति भावः । तृतीयैकवचने घित्वान्नाभावमाशङ्क्याह—**नात्वं नेति** । 'आङो नाऽस्त्रियाम्' इति नात्वविधौ अस्त्रियामिति पर्युदासादिति भावः । इदन्तत्वाद् 'यू स्त्र्याख्यौ–' इति नदीत्वे अप्राप्ते किन्तु तद्विकल्पं दर्शयितुमाह—**ङिति ह्रस्वश्च** । अत्र चकाराद्वाक्यद्वयमिदम् । तथा हि–'यू स्त्र्याख्यौ नदी' इत्यनुवर्तते, ईश्च ऊश्च यू, 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधाभावश्छान्दसः, स्त्रियमेवाचक्षाते स्त्र्याख्यौ, नित्यस्त्रीलिङ्गाविति यावत् । 'नेयङुवङ्स्थानावस्त्री' इति सूत्रं नञ्वर्जमनुवर्तते, इयङुवङोः स्थानं स्थितिर्ययोस्ताविति विग्रहः, इयङुवङ्प्राप्तियोग्याविलर्थः । 'वामि' इत्यतो वेत्यनुवर्तते । ततश्च इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तो ङिति परे इति वाक्यमेकं संपद्यते । पुनरपि यू इत्यनुवर्तते, इश्च उश्च यू । ह्रस्व इति तत्र प्रत्येकमन्वेति । स्त्र्याख्याविति चानुवर्तते, स्त्रीलिङ्गावित्येतावदेव विवक्षितम् । न तु नित्यस्त्रीलिङ्गाविति, व्याख्यानात् । 'वामि' इत्यतो वेति चानुवर्तते । ततश्च स्त्रीलिङ्गौ ह्रस्वौ चेवर्णोवर्णौ नदीसंज्ञौ वा स्तो ङिति परे–इति वाक्यान्तरं संपद्यते । तदाह—**इयङुवङ्स्थानावित्यादिना** । द्वितीयवाक्येऽपि स्त्रीलिङ्गे नित्यत्वविशेषणे तु इष्वशन्यरणिप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां त्रिलिङ्गानां च ङिति नदीत्वविकल्पो न

---

**मांसपृतनेति** । पृतना सेना । **नात्वं नेति** । 'अस्त्रियाम्' इति पर्युदासादिति भावः । **ङिति ह्रस्वश्च** । 'वामि' इति सूत्राद् वेत्यनुवर्तते । अप्राप्तविभाषेयम् । ह्रस्वयोरप्राप्तावितरयोस्तु 'नेयङुवङ्स्थानौ–' इति निषेधप्राप्तावारम्भसामर्थ्यात् । इहेयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि ईदूतोर्विशेषणानि, ह्रस्वयोस्तु स्त्रियामित्येव विशेषणम्, नतु नित्यस्त्रीत्वपर्यन्तम् । अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां सर्वलिङ्गानां च स्त्रीत्वेऽपि नदीत्वं न स्यात् । कैयटमते हि तेषां नित्यस्त्रीत्वाभावात्, मतान्तरेऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्याभावाच्च । अतएवाख्याग्रहणं विहाय

**स्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे । 'आण् नद्याः'** (सू २६८) । मत्यै, मतये । मत्याः, मतेः । नदीत्वपक्षे 'औत्' (सू २४६) इति ङेरौत्त्वे प्राप्ते । **२६७ इदुद्भ्याम् ।** (७-३-११७) नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात् । पक्षे 'अच्च घेः' ( सू २४७ ) । मत्याम्, मतौ । एवं श्रुत्या-दयः । **२६८ त्रिचतुरोः स्त्रियां तिसृचतसृ ।** (७-२-९९) स्त्रीलिङ्गयोरेतावादेशौ स्तो विभक्तौ परतः । **२६९ अचि र ऋतः** (७-२-१००) तिसृ चतसृ एतयोर्ऋ-कारस्य रेफादेशः स्यादचि । गुणदीर्घोत्त्वानामपवादः । तिस्रः । तिस्रः । तिसृभिः ।

स्यादिति बोध्यम् । तत्र ह्रस्वयोरप्राप्ते, दीर्घयोस्तु 'नेयङुवङ्स्थानौ-' इति निषेधादप्राप्ते नदीत्वे विधेयम् । नदीत्वपक्षे आह—**आण् नद्या इति ।** मति ए इति स्थिते—आटि वृद्धौ यणि च सिद्धं रूपमाह—**मत्यै इति । मतये इति ।** नदीत्वाभावपक्षे 'शेषो घ्यसखि' इति घित्वाद् 'घेर्ङिति' इति गुणे अयादेशे हरिशब्दवद्रूपम् । नदीत्वपक्षे ङसिङसोराटि वृद्धिराकारः, यण्—मत्याः । नदीत्वाभावे मतेः । आमि नदीत्वाभावेऽपि ह्रस्वान्तत्वान्नुटि दीर्घः—मतीनाम् । ङौ विशेषमाह—**नदीत्वपक्षे इति ।** नदीत्वपक्षे घित्वाभावाद् 'अच्च घेः' इति अत्त्वसंनियोगशिष्टमौत्त्वं न भवति, किं तु 'ङेराम्-' इति प्राप्तम्, तद् बाधित्वा 'औत्' इति केवलमौत्त्वे परत्वात् प्राप्ते सतीत्यर्थः । **इदुद्भ्याम् ।** 'ङेराम्-' इति सूत्रान्नदीग्रहणं 'ङेराम्' इति चानुवर्तते । तदाह—**नदीसंज्ञकाभ्या-मित्यादिना । पक्षे इति ।** नदीत्वाभावपक्षे 'अच्च घेः' इत्यत्त्वसंनियोगशिष्टमौत्त्व-मित्यर्थः । **मत्याम्, मताविति ।** नदीत्वे तदभावे च रूपम् । मत्यामित्यत्र संनिपात-परिभाषाया अनित्यत्वाद् यण् । **एवं श्रुत्यादय इति ।** आदिना स्मृत्यादिसंग्रहः ।

**त्रिचतुरोः । एतयोरेताविति ।** त्रिचतुरोः तिसृ चतसृ इत्येतावित्यर्थः । **विभक्ताविति ।** 'अष्टन आ विभक्तौ' इत्यतस्तदनुवृत्तेरिति भावः । जश्शसोः तिसृ अस् इति स्थिते—**अचि र ऋतः ।** पूर्वसूत्रात् 'तिसृचतसृ' इत्यनुवर्तते । तच्चेह लुप्तषष्ठीकमाश्रीयते । तदाह—**तिसृ इत्यादिना ।** ननु 'इको यणचि' इत्येव सिद्ध-मित्यत आह—**गुणदीर्घोत्त्वानामपवाद इति ।** 'ऋतो ङि-' इति गुणस्य 'प्रथ-

---

स्त्रीशब्दमात्रं निष्कृष्य संबध्यते, तदेतदाह—**ह्रस्वौ चेवर्णोवर्णौ स्त्रियामिति । औत्वे प्राप्त इति ।** 'ङेराम्-' इत्यपेक्षया परत्वादिति भावः । प्राञ्चा तु 'औत्' इति सूत्रे 'इदुद्भ्याम्' 'अच्च घेः' इति पूर्वोत्तरसूत्रद्वयबललभ्यार्थमुपादाय घिनदीसंज्ञावर्जि-ताभ्यामिति व्याख्यातम्, 'इदुद्भ्याम्' इति सूत्रं च नोपन्यस्तमित्यसमञ्जसमेतत् । **त्रिचतुरोः ।** 'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तनादाह—**विभक्तौ परत इति ।** विभक्तौ किम्, त्रिभार्यः, चतुर्भार्य इति केचित् । तन्मन्दम्, 'स्त्रियाः पुंवद्-' इति

तिसृभ्यः। तिसृभ्यः। आमि 'नुमचिर–' (वा ४३७४) इति नुट्। ३०० **न तिसृचतसृ** ( ६–४–४ ) तिसृ चतसृ एतयोर्नामि दीर्घो न स्यात् । तिसृणाम्। तिसृषु । 'स्त्रियाम्' इति त्रिचतुरोर्विशेषणान्नेह—प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः, मतिशब्दवत् । आमि तु 'प्रियत्रयाणाम्' इति विशेषः । 'प्रियास्तिस्रो

---

मयोः–' इति पूर्वसवर्णदीर्घस्य 'ऋत उत्' इत्युत्वस्य च रत्वमपवाद इत्यर्थः । **तिस्र इति ।** जश्शसो रूपम् । तत्र जसि 'ऋतो ङि–' इति गुणस्य रत्वमपवादः। शसि तु 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य रत्वमपवादः । **आमिति ।** तिसृ आम्, इति स्थिते नुटं बाधित्वा 'अचि र ऋतः' इति रत्वे तिस्रामिति प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति रत्वं बाधित्वा नुडित्यर्थः । तिसृ नाम् इति स्थिते 'नामि' इति दीर्घे प्राप्ते—**न तिसृचतसृ ।** तिसृचतसृ इति लुप्तषष्ठीकं पदम् । 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते । 'नामि' इति सूत्रं चानुवर्तते । तदाह—**तिसृ इत्यादिना । तिसृणामिति ।** 'ऋवर्णान्नस्य–' इति णत्वम् । ननु 'अचि र–' इति रत्वम् 'ऋत उत्' इति उत्वस्य कथमपवादः स्यात् , उत्वस्य ङसिङसोरेव प्राप्तेः, त्रिचतुर्शब्दयोश्च नित्यं बहुवचनान्तत्वेन ङसिङसोरभावादिति चेन्न, प्रियतिस्रः–इत्यादिबहुव्रीहौ तत्सत्त्वात् । तच्चानुपदमेव वक्ष्यते । ननु प्रियाः त्रयः त्रीणि वा यस्याः सा प्रियत्रिः, इति बहुव्रीहावपि तिस्रादेशः कुतो न स्यादित्यत आह—**स्त्रियामित्यादि ।** प्रियत्रिशब्दो हि स्त्रीलिङ्गः, न तु त्रिशब्दः । स्त्रियामिति त्रिचतुरोर्विशेषणम् , न तु तदन्तयोः, प्रमाणाभावात् । न चाङ्गत्वात्तदन्तलाभ इति वाच्यम् , एवमपि त्रिचतुरोरेव प्रत्यक्षश्रुतत्वेन स्त्रियामित्यस्य तद्विशेषणताया एवोचितत्वदिति भावः । 'ङिति ह्रस्वश्च' इति नदीत्वविकल्पं मत्वाह—**मतिशब्दवदिति । आमि त्विति ।** षष्ठीबहुवचने 'त्रेस्त्रयः' इति त्रयादेशस्य आङ्गत्वेन तदन्तेऽपि प्रवृत्तेरिति भावः । एवं च स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे प्रियत्रिशब्दे पुंनपुंसकलिङ्गत्रिशब्दगर्भबहुव्रीहौ तिव्याप्तिः स्यादिति त्रिचतुरोरेव स्त्रियामिति विशेषणमिति स्थितम् । य स्त्रीलिङ्गत्रिशब्दगर्भबहुव्रीहौ अव्याप्तिनिरासार्थमपि स्त्रियामिति त्रिचतुव विशेषणम् , न तु तदन्तयोरिति मत्वाह—**प्रियास्तिस्र इत्यादि । प्रियतिति ।** समासे सति अन्तर्वर्तिविभक्तेर्लुका लुप्तत्वात् तिस्रादेशनिवृत्तौ प्रियत्रिशब्दात्

---

द्भावेनापीष्टसिद्धेः । किं तु प्रियादौ परतः पुंवद्भावो नेति त्रिप्रिय इत्याद्युदाहर्तव्यते नव्याः । **गुणदीर्घोत्वानामिति ।** तिस्रस्तिष्ठन्तीत्यत्र 'ऋतो ङि–' इति गुणस्य रत्वमपवादः, तिस्रः पश्येत्यत्र तु 'प्रथमयोः–' इति पूर्वसवर्णदीर्घस्यापवादः, प्रियतिस्र आगतः, प्रियतिस्रः स्वमित्यत्र 'ऋत उत्' इत्युत्वस्येति विवेकः। यद्यपि मध्येऽपवादन्या-

**यस्य सः' इति विग्रहे तु प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः। प्रियतिस्रमित्यादि।**

सः। अत्र प्रियत्रिशब्दस्य पुंलिङ्गत्वेऽपि त्रिशब्दस्य स्त्रीलिङ्गत्वात्तिस्रादेशः। 'ऋदुशनस्–' इत्यनङ्। 'सर्वनामस्थाने च–' इति दीर्घः। नलोपः। स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे त्वत्र तदप्राप्तिः स्यादिति भावः। ननु त्रिचतुरन्ताङ्गविशेषणत्वेऽपि नात्राप्राप्तिः, 'प्रियतिस्रौ' इत्यत्र विग्रहवाक्ये प्रवृत्तस्य तिस्रादेशस्य समासेऽप्यनुवृत्तिसंभवाद् इति चेन्नैवम्। लौकिकवाक्यं हि परिनिष्ठितत्वात् समासस्य न प्रकृतिः, किं तु अलौकिकमेव प्रक्रियावाक्यम्। ततश्च प्रिया अम् त्रि अम्–इत्यलौकिकप्रक्रियावाक्ये समासप्रवृत्तौ 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया तिस्रादेशं बाधित्वा विभक्तिलुकि प्रियत्रिशब्दात् समासात् सुबुत्पत्तौ 'त्रिचतुरोः–' इत्यस्याङ्गत्वात् तदन्तविधावपि 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया त्रिशब्दस्य तिस्रादेशः। स च स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे सति न स्यात्, प्रियत्रिशब्दस्याङ्गस्य पुंलिङ्गत्वात्। सति चात्र तिस्रादेशे 'नद्यृतश्च' इति कप् तु न। स हि समासान्तत्वात् समासवदलौकिकविग्रहवाक्ये प्रवृत्तिमर्हति। तदानीं च उत्तरपदस्य त्रिशब्दस्य ऋदन्तत्वाभावाच्च कप्। अन्तर्वर्तिविभक्तेर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावाच्च जस्निमित्तकतिस्रादेशस्याभावात्। न चाकृते समासान्ते कपि प्रियत्रिशब्दात् सुबुत्पत्तौ तिस्रादेशे सति कप् शङ्क्यः। अकृते कपि समासान्ते समासत्वस्यैवानिष्पत्त्या ततः सुबुत्पत्तेरसंभवादित्यलं तावत्। **प्रियतिस्राविति**। गुणं बाधित्वा रत्वम्। **प्रियतिस्रा इति**। जसि पूर्वसवर्णदीर्घं बाधित्वा रत्वम्। **प्रियतिस्रमिति**। अमि पूर्वरूपं गुणं च बाधित्वा रत्वम्। 'गुणदीर्घोत्वानामपवादः' इति पूर्वरूपस्याप्युपलक्षणम्। **इत्यादीति**। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिस्रा। प्रियतिस्रे। ङसिङसोः

---

येन दीर्घोत्वयोरेव रत्वमपवादः स्यान्न तु 'ऋतो ङि–' इति गुणस्य, तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वमेवेह बाध्यत इति भावः। **त्रिचतुरोर्विशेषणादिति**। श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं नाङ्गस्येति भावः। **प्रियतिसेति**। प्रिया जस्–त्रि जस् इति स्थिते 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्यकृत एव तिस्रादेशे सुपो लुकि कृते समासाद् या विभक्तिस्तस्यां परतः तिस्रादेशः। 'स्त्रियाः पुंवत्–' इति प्रियाशब्दस्य पुंवद्भावः। 'ऋदुशन–' इत्यनङ्। यद्यपि इह जहत्स्वार्थवृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाच्यित्वं दुर्लभम्, तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या। उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्य-

---

१ जसनिमित्तकेत्यादिर्वाक्यशेषो नास्ति क। २ अभाव इति पाठस्तूचितः। ३ वस्तुतस्त्विदं चिन्त्यम्, पूर्वरूपस्य गुणेनैव बाधितत्वात्, अन्यथा क्रोष्टारमित्यादि न सिध्येत्।

**प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि । स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । 'न लुमता–' ( सू २६३ ) इति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ । रत्वात् पूर्वविप्रतिषेधेन नुम् (वा ४०३६), प्रियतिसृणी, प्रियतिसृणि । तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्रभावौ, प्रियतिसृणा, प्रियतिस्रा**

प्रियतिस्रः–इत्येव, 'ऋत उत्' इत्युत्वं बाधित्वा रत्वम् । प्रियतिस्रोः । आमि त्रयादेशं बाधित्वा परत्वात्तिस्रादेशे सति रत्वं बाधित्वा 'नुमचिर–' इति नुट्, प्रियतिसृणाम् । प्रियतिस्रि, 'ऋतो ङि–' इति गुणापवादो रत्वम् । प्रियतिस्रोः । ननु प्रियास्तिस्रो यस्य तत् कुलं प्रियत्रि इति कथम्, त्रिशब्दस्य स्त्रीलिङ्गत्वेन तिसृभावप्राप्तेः–इत्यत आह— **स्वमोर्लुकेति** । 'स्वमोर्नपुंसकात्' इति स्वमोर्लुका लुप्तत्वेन 'न लुमता–' इति प्रत्ययलक्षणाभावाद् विभक्तिपरकत्वाभावान्न तिसृभाव इत्यर्थः । **अनित्यत्वादिति** । 'न लुमता–' इत्यस्यानित्यत्वम् 'इकोऽचि विभक्तौ' इत्यज्ग्रहणाद् इति नपुंसकाधिकारे वक्ष्यते । अजादिविभक्तौ 'नपुंसकस्य झलचः' इति नुमपेक्षया परत्वाद् 'अचि र ऋतः' इति रत्वमाशङ्कयाह—**रत्वादिति** । ल्यब्लोपे पञ्चमी, पूर्वविप्रतिषेधेन रत्वं बाधित्वा नुमित्यर्थः **प्रियतिसृणी इति** । रत्वं बाधित्वा नुमि णत्वम् । **प्रियतिसृणीति** । जश्शसोश्शिः, रत्वं बाधित्वा नुम्, शेः सर्वनामस्थानत्वान्नान्तलक्षणदीर्घः, णत्वम् । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे प्रियतिसृणी, प्रियतिसृणि–इति भाष्योदाहरणात् पूर्वविप्रतिषेधमाश्रित्य नुमा रत्वबाध इति बोध्यम् । **प्रियतिसृणेति** । टायां पुंवत्त्वाभावपक्षे नुमि रूपम् । **प्रियतिस्रेति** । पुंवत्त्वे नुमभावाद् रत्वम् ।

त्वात् । अजहत्स्वार्था वृत्तिरिति पक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः, तेन प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिरित्यत्र प्रियत्रिशब्दस्य स्त्रियां वृत्तित्वेऽपि न तिस्रादेशप्रसङ्गः 'प्रत्ययोत्तरपदयोश्च' इत्येतत्सूत्रगतभाष्यग्रन्थसंदर्भश्चोक्तव्याख्याने प्रमाणम् । **अनित्यत्वादिति** । 'इकोऽचि–' इत्यज्ग्रहणमिह लिङ्गम् । तथा हि–भ्यांभिसादिषु सत्यपि नुमि 'नलोपः प्रातिपदिकान्तस्य' इति तल्लोपसंभवादचीति व्यर्थम् । न च 'न ङिसंबुद्धयोः' इति निषेधात् संबुद्धौ लोपो न संभवतीति तत्रानिष्टवारणायाचीत्यावश्यकमिति वाच्यम्, संबुद्धिश्च लुका लुप्तेति नुमः प्राप्तेरेव तत्र दुर्लभत्वात्, 'न लुमता–' इति निषेधस्यानित्यतां विना तत्र प्रत्ययलक्षणाप्रवृत्तेः । नाप्युत्तरार्थं तदिति वाच्यम्, उत्तरत्रैव कर्तव्ये तत्राचीति करणस्य वैयर्थ्यात् । 'न लुमता–' इति निषेधस्यानित्यत्वे तु संबुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुं तदिति भवत्येवाज्ग्रहणं लिङ्गम् । न चेदमनित्यत्वं संबुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यम्, लक्ष्यानुरोधेनान्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात् । अत एव प्रियतिसृ प्रियत्रीति

१ 'रादेशात्पूर्व–' इत्यादिपाठः कौमुदीपुस्तकेष्वन्यत्र दृश्यते ।

इत्यादि। द्वेरत्वे सत्याप्, द्वे। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः। ॥ इति इदन्ताः ॥ गौरी, गौर्यौ। गौर्यः, नदीकार्यम्, हे गौरि। गौर्यै इत्यादि। एवं वाणीनद्यादयः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि णिद्वद्भावे च प्राप्ते 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' (प०), सखी, सख्यौ, सख्यः- इत्यादि गौरीवत्। अङ्यन्तत्वान्न सुलोपः, लक्ष्मीः। शेषं गौरीवत्। एवं तरी-

---

**इत्यादीति**। आदिना प्रियतिस्त्रे, प्रियतिसृणे इत्यादि बोध्यम्। **द्वेरत्वे इति**। द्विशब्दाद्विभक्तौ सत्यां त्यदाद्यत्वे 'अजाद्यतः-' इति टाबित्यर्थः। **द्वे इत्यादि**। टापि सति सवर्णदीर्घे द्वाशब्दस्य रमावद्रूपाणीति भावः ॥ इति इदन्ताः ॥

**अथ ईदन्ता निरूप्यन्ते। गौरीति**। गौरशब्दाद् गौरादिलक्षणङीषि 'यस्येति च' इत्यकारलोपे गौरीशब्दः। तस्मात् सुः, हल्ङ्यादिलोप इति भावः। **गौर्याविति**। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यणिति भावः। **गौर्य इति**। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यणिति भावः। **नदीकार्यमिति**। 'अम्बार्थनद्योर्ह्रस्वः' 'आण् नद्याः' 'ह्रस्वनद्यापो नुट्' 'ङेराम्नद्याम्नीभ्यः' इति विहितमित्यर्थः। 'यू स्त्र्याख्यौ-' इति नदीत्वम्। बहुश्रेयसीवत्। **एवं वाणीनद्यादय इति**। 'वण शब्दे' वण्यते शब्द्यत इति वाणी। 'इञ् वपादिभ्यः' इति इञ्। 'कृदिकारादक्तिनः' इति ङीष्। 'नदट्' इति पचादौ पठितात् टित्त्वाद् ङीप्। आदिना कर्त्री, दण्डिनी इत्यादिसंग्रहः। 'सख्यशिश्वीति भाषायाम्' इति सखिशब्दाद् ङीषि 'यस्येति च' इति इकारलोपे सखीशब्दः, तस्य 'अनङ् सौ' इत्यनङ्म्[1]। 'सख्युरसम्बुद्धौ' इति णिद्वत्त्वं चाशङ्क्ये-**प्रातिपदिकेति**। **'विभक्तौ लिङ्गविशिष्टाग्रहणम्'**। 'युवोरनाकौ' इत्यत्र 'ङ्याप्प्रातिपदिकात्' इत्यत्र च भाष्ये इयं परिभाषा पठिता, विभक्तिनिमित्तके कार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं नास्तीत्यर्थः, तथा च अनङ्, णिद्वत्त्वं च न भवतीति भावः। **सखीति**। ङ्यन्तत्वात् सुलोपः। **सख्य इत्यादीति**। गौरीवदेव रूपाणीत्यर्थः। 'लक्षेर्मुट् च' इति लक्षधातोरीप्रत्यये मुडागमे लक्ष्मीशब्दः, तस्य विशेषमाह—**अङ्यन्तत्वादिति**। 'कृदिकारादक्तिनः' इति ङीषि तु सुलोपो भवत्येव। **शेषं गौरीवदिति**। अम्बार्थेत्यादिकार्यमित्यर्थः। **एवं**

---

रूपद्वयमपि कैयटेन स्वीकृतम्। **रादशादिति**[2]। अत्र 'प्रियतिसृणी, प्रियतिसृि इति भाष्यं मानम्। **इत्यादीति**। प्रियतिस्रे, प्रियतिसृणे। प्रियतिस्रः, प्रियतिसृणः आमि रादेशं बाधित्वा पूर्वविप्रतिषेधेन नुम्, तं च बाधित्वा पूर्वविप्रतिषेधेन नुट्। प्रियतिसृणाम्। **द्वेरत्वे सत्याविति**। विभक्तिसंनिपातकृतमपि त्यदाद्यत्वं टापो निमित्तम्,

---

१ 'इत्यनङ्' इति क। नपुंसकत्वेन तदुपपाद्यम्। २ रत्वादिति' मूलपाठस्तु बालमनोरमानुरोधेन।

तन्त्र्यादयः । स्त्री । हे स्त्रि । ३०१ स्त्रियाः । ( ६-४-७९ ) स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ, स्त्रियः । ३०२ वाऽम्शसोः । (६-४-८०) अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् , स्त्रीम् । स्त्रियौ । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । स्त्रियोः । परत्वान्नुट् , स्त्रीणाम् । स्त्रियाम् , स्त्रियोः, स्त्रीषु । स्त्रियमतिक्रान्तोऽतिस्त्रिः, अतिस्त्रियौ ।

---

**तरीनन्त्र्यादय इति** । 'अवितृस्तृतन्त्रिभ्य ईः' इति ईप्रत्यये तरीः, स्तरीः, तन्त्रीः इत्यादि । अत्राङ्यन्तत्वान्न सुलोपः । 'कृदिकारात्–' इति ङीषि तु सुलोपः । शेषं गौरीवत् । **स्त्री इति** । 'स्त्यै शब्दसंघातयोः' । स्त्यायतः–संगते भवतः अस्यां शुक्रशोणिते इति स्त्री, स्त्यायतेः ड्रट् , डकारेत्, डित्त्वसामर्थ्यादभस्यापि टेर्लोपः, 'लोपो व्योः–' इति यलोपः, टित्त्वाद् ङीप् । हल्ङ्यादिलोप इति भावः । **हे स्त्रि इति** । 'अम्बार्थ–' इति ह्रस्वः । स्त्री औ इति स्थिते, अधात्विकारत्वाद् 'अचि श्नुधातु–' इति इयङ्प्राप्ते—**स्त्रियाः** । 'अचि श्नुधातु–' इत्यतः अचीति इयङिति चानुवर्तते । तदाह—**स्त्रीशब्दस्येत्यादिना** । **स्त्रियौ, स्त्रिय इति** । औजसो रूपम् । अमि शसि च स्त्रियम् , स्त्रिय इति नित्यमियङि प्राप्ते—**वाऽम्शसोः** । वा अम्शसोः इति च्छेदः, स्त्रिया इति इयङिति चानुवर्तते । तदाह—**अमि शसि चेत्यादिना** । **स्त्रियमिति** । इयङि रूपम् । **स्त्रीमिति** । इयङभावे 'अमि पूर्वः' । **स्त्रियौ इति** । औटि रूपम् । **स्त्रियः, स्त्रीः इति** । शसि 'वाम्शसोः' इति इयङि तदभावे च रूपम् । **स्त्रियेति** । इयङ् । **स्त्रियै इति** । 'आण् नद्याः' इत्याट् , वृद्धिः, इयङ् । **स्त्रिया इति** । ङसिङसोराट् वृद्धिः-इयङ् । **स्त्रियोरिति** । ओसि इयङ् । **परत्वान्नुडिति** । आमि 'स्त्रियाः' इति इयङं बाधित्वा परत्वान्नुट् । **स्त्रीणामिति** । कृते नुटि अजादिविभक्त्यभावान्नेयङ् । **स्त्रियामिति** । ङेराम् , इयङ् ।

अथ प्रसङ्गात् पुंसि नपुंसके च स्त्रीशब्दस्य विशेषं दर्शयति—**स्त्रियमतिक्रान्तोऽतिस्त्रिरिति** । 'अत्यादयः क्रान्ताद्यर्थे–' इति समासः, 'गोस्त्रियोः–' इति ह्रस्वत्वम् । दीर्घङ्यन्तत्वाभावाद् ईकाररूपङ्यन्तत्वाभावाद्वा हल्ङ्यादिलोपो न भवति । **अतिस्त्रियाविति** । 'स्त्रियाः' इत्यस्याङ्गत्वात्तदन्तेऽपि एकदेशविकृतन्यायेन प्रवृत्ते-

---

'न यासयोः' इति निर्देशेन संनिपातपरिभाषाया अनित्यत्वादिति भावः । **अङ्यन्तत्वादिति** । केचिदिह 'कृदिकारात्–' इति पाक्षिकं ङीषमिच्छन्ति, तन्मते तु सुलोपः पक्षे स्यादेव । अत एव 'वातप्रमी श्री लक्ष्मीतिपक्षे ङ्यन्ताः सुसाधवः' इति रक्षितः । 'लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशश्च । **स्त्री इति** । स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री । 'स्त्यायतेर्ड्रट्' , 'लोपो व्योः–' इति यलोपः, टित्त्वाद् ङीप् । ङ्यन्त-

गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥

'जसि च' (सू २४१) अतिस्त्रयः, हे अतिस्त्रे, हे अतिस्त्रियौ । हे अतिस्त्रयः । 'वाऽम्शसोः' (सू० ३०२) अतिस्त्रियम्-अतिस्त्रिम्, अतिस्त्रियौ, अतिस्त्रियः-अतिस्त्रीन् । अतिस्त्रिणा । 'घेर्ङिति' (सू २४५), अतिस्त्रये । अतिस्त्रेः । अतिस्त्रेः, अतिस्त्रियोः, अतिस्त्रीणाम् । 'अच्च घेः' (सू २४७) अतिस्त्रौ, अतिस्त्रियोः ।

ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥

रियङिति भावः । अथ जस्, टा, ङे, ङसि, ङस्, आम्, ङि इत्येतेषु अतिस्त्री-शब्दस्य इयङ् नेत्येतत् श्लोकेन संगृह्णाति—गुणनाभावेत्यादिना । पुंसि गुणनाभावौत्वनुड्भिः, क्लीबे नुमा च परत्वात् स्त्रीशब्दस्य इयङ् बाध्यते, इत्यवधार्यताम्-इत्यन्वयः । 'जसि च' इति 'घेर्ङिति' इति च गुणः, 'आङो नाऽस्त्रियाम्' इति नात्वम्, 'अच्च घेः' इत्यौत्वम्, 'ह्रस्वनद्यापः-' इति नुट्, 'इकोऽचि विभक्तौ' इति नुम्, एते-षामियङपेक्षया परत्वादित्यर्थः । 'जसि च' इत्यनन्तरम् 'इति गुणः' इति शेषः । **अतिस्त्रय इति** । इयङं बाधित्वा गुणे अयादेशे रूपम् । **हे अतिस्त्रे इति** । 'ह्रस्वस्य गुणः' इति गुणे 'एङ्ह्रस्वात्-' इति सम्बुद्धिलोपः । 'वाम्शसोः' इत्यनन्तरम् इयङ्विकल्प इति शेषः । **अतिस्त्रियमिति** । अमि इयङ्पक्षे रूपम् । **अतिस्त्रि-मिति** । इयङभावपक्षे 'अमि पूर्वः' । **अतिस्त्रिय इति** । 'वाम्शसोः-' इति इयङ् । **अतिस्त्रीनिति** । इयङभावे पूर्वसवर्णदीर्घे 'तस्माच्छसः-' इति नत्वम् । टा-अति-स्त्रिणा, इयङं बाधित्वा परत्वाद् 'आङो नाऽस्त्रियाम्' इति नात्वम् । भ्यामादिष्व-विकृतम् । ङे-अतिस्त्रये, इयङं बाधित्वा परत्वात् 'घेर्ङिति' इति गुणे अयादेशः । ङसिङसोः—अतिस्त्रेः, परत्वाद् 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपम् । अतिस्त्रियोः-इयङ् । आमि इयङं बाधित्वा परत्वान्नुटि 'नामि' इति दीर्घे णत्वम्, अतिस्त्रीणाम् । इयङं बाधित्वा परत्वाद् 'अच्च घेः' अतिस्त्रौ, अतिस्त्रियोः, अति-स्त्रिषु । अथ पुंसि पूर्वश्लोकसिद्धमेवार्थं बालबोधाय लघुतरोपायेन संगृह्णाति । **ओ-स्यौकारे चेत्यादिना** । उपसर्जनत्वदशायां पुंसि विद्यमानस्य स्त्रीशब्दस्य अचि य इयादेशः 'स्त्रियाः' इति सूत्रविहितः, स ओसि-षष्ठी सप्तमीद्विवचने, औकारे

---

त्वात्सुलोपः । **परत्वादिति** । 'स्त्रियाः' इति इयङपेक्षया । **इयादेशोऽचि नान्यत्रेति** । अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य ओसादिषु

क्लीबे तु नुम्। अतिस्त्रि, अतिस्त्रिणी, अतिस्त्रीणि। अतिस्त्रिणा। अतिस्त्रिणे। ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम्, अतिस्त्रये, अतिस्त्रिणे। अतिस्त्रेः, अतिस्त्रिणः। अतिस्त्रेः, अतिस्त्रिणः। अतिस्त्रियोः, अतिस्त्रिणोः—इत्यादि। स्त्रियां तु प्रायेण पुंवत्। शसि अतिस्त्रीः। अतिस्त्रिया। 'ङिति ह्रस्वश्च' (सू २९६) इति ह्रस्वान्तत्वप्रयुक्तो विकल्पः। 'अस्त्री' इति

---

च-प्रथमाद्विर्नीयाद्विवचने च नित्यं स्यात्। अम्शसोस्तु विभाषया विकल्पेन स्यात्। उक्तचतुर्भ्योऽन्यत्र तु अचि सर्वत्र इयादेशो न स्यादिति योजना।

**क्लीबे तु नुमिति।** इयङं बाधत इति शेषः। **अतिस्त्रि इति।** स्त्रियमतिक्रान्तं कुलम् अतिस्त्रि, 'स्वमोर्नपुंसकात्' इति सुलुक्। **अतिस्त्रिणी इति।** अतिस्त्रि औ इति स्थिते 'नपुंसकाच्च' इत्यौङः शीभावः, इयङं बाधित्वा परत्वाद् 'इकोऽचि विभक्तौ' इति नुम्, असर्वनामस्थानत्वान्न दीर्घः, णत्वम्। **अतिस्त्रीणीति।** 'जश्शसोः शिः', 'स्त्रियाः' इति इयङं 'जसि च' इति गुणं च बाधित्वा नुम्, 'शि सर्वनामस्थानम्' इति सर्वनामस्थानत्वाद् दीर्घः, णत्वम्। टा-अतिस्त्रिणा, इयङं नुमं च बाधित्वा नाभावः। **ङेप्रभृतावजादाविति।** ङे, ङसि, ङस्, आम्, ङि, ओस् इत्येतेषु 'तृतीयादिषु भाषित-' इति पुंवद्भावस्य वक्ष्यमाणत्वात् पुंवद्भावपक्षे पुँल्लिङ्गातिस्त्रिशब्दवद्रूपम्, पुंवत्त्वाभावपक्षे नुमि वारिवद्रूपमित्यर्थः। टायां तु पुंवत्त्वे तदभावे च नात्वे रूपे विशेषाभावाद् ङेप्रभृतावित्युक्तम्। **अतिस्त्रये इति।** पुंवत्त्वे 'घेर्ङिति' इति गुणः, अयादेशः। **अतिस्त्रिणे इति।** पुंवत्त्वाभावे नुमि रूपम्। इहोभयत्रापि गुणेन नुमा च इयङ् बाध्यते। **अतिस्त्रेरिति।** ङसिङसोः पुंवत्त्वपक्षे 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपम्। **अतिस्त्रिण इति।** ङसिङसोः पुंवत्त्वाभावपक्षे नुमि रूपम्। इहाप्युभयत्र गुणनुम्भ्यामियङ् बाध्यते। **अतिस्त्रियोः, अतिस्त्रिणोः इति।** पुंवत्त्वाभावे नुम्, पुंवत्त्वे इयङ्। **इत्यादीति।** आमि पुंवत्त्वे तदभावे च इयङं बाधित्वा नुडेव, न तु नुम्, 'नुमचिर-' इति वचनात्। 'नामि' इति दीर्घः, अतिस्त्रीणाम्। अतिस्त्रौ, अतिस्त्रिणि। अतिस्त्रियोः, अतिस्त्रिणोः।

तदेवमुपसर्जनस्त्रीशब्दस्य पुंनपुंसकविषये रूपाणि प्रदर्श्य प्रकृतमनुसरति—**स्त्रियां त्विति।** स्त्रियमतिक्रान्तेति विग्रहे 'अत्यादयः-' इति समासे 'गोस्त्रियोः-' इति ह्रस्वत्वे सति अतिस्त्रिशब्दः, तस्य प्रायेण उदाहृतपुँल्लिङ्गातिस्त्रिशब्दवद्रूपाणीत्यर्थः। **शसि अतिस्त्रीरिति।** 'वाम्शसोः' इति इयङभावे पूर्वसवर्णदीर्घे सत्यपि स्त्रीलिङ्गत्वात् 'तस्माच्छसः-' इति नत्वं नेति भावः। **अतिस्त्रियेति।** स्त्रीलिङ्गत्वान्नात्वाभावे इयङ्। **ह्रस्वान्तत्वेति।** 'ङिति ह्रस्वश्च' इत्यत्र इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्य-

तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः, तत्संबद्धस्यैवानुवृत्तेः। दीर्घस्यायं निषेधः, न तु ह्रस्वस्य। अतिस्त्रियै, अतिस्त्रये। अतिस्त्रियाः, अतिस्त्रेः। अतिस्त्रियाः, अतिस्त्रेः। अतिस्त्रीणाम्। अतिस्त्रियाम्, अतिस्त्रौ। श्रीः, श्रियौ, श्रियः।

**३०३ नेयङुवङ्स्थानावस्त्री (१-४-४)।** इयङुवङोः स्थितिर्ययोस्तावीदूतौ

---

स्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तः—इति प्रथमं वाक्यम्। ह्रस्वाविवर्णोवर्णौ स्त्रियां नदीसंज्ञौ वा स्तः—इति द्वितीयं वाक्यम्। तत्र द्वितीयवाक्याद् अतिस्त्रिशब्दस्य ङित्सु नदीत्वविकल्प इत्यर्थः। ननु 'नेयङुवङ्स्थानावस्त्री' इत्यतः अस्त्रीत्यस्यानुवृत्तेः कथमिह नदीत्वविकल्प इत्यत आह—**अस्त्री इति त्विति**। इयङुवङ्स्थानावित्यादिप्रथमवाक्यविहितनदीत्वस्यैवास्त्रीति पर्युदासः, न तु ह्रस्वावित्यादिद्वितीयवाक्यविहितनदीत्वस्यापीत्यर्थः। कुत इत्यत आह—**तत्संबद्धस्यैवानुवृत्तेरिति**। 'नेयङुवङ्स्थानौ–' इत्यतः अस्त्रीत्यस्यानुवृत्तिर्वक्तव्या, ततश्च इयङुवङ्स्थानाविति यत्रान्वेति, तत्रैव तत्संबद्धस्य अस्त्रीत्यस्यानुवृत्तिरुचिता। एवं च ह्रस्वादिवाक्ये इयङुवङ्स्थानावित्यस्य अनुवृत्त्यभावाद् अस्त्रीत्यस्यापि तत्र नानुवृत्तिरिति भावः। **अतिस्त्रियै इति**। नदीत्वपक्षे आट्, वृद्धिः। **अतिस्त्रये इति**। नदीत्वाभावे घित्वाद् 'घेर्ङिति' इति गुणे अयादेशः। **अतिस्त्रियाः, अतिस्त्रेरिति**। नदीत्वे आट्। तदभावे गुणः, 'ङसिङसोश्च' इति पूर्वरूपम्। **अतिस्त्रियामिति**। नदीत्वपक्षे ङेराम्, आट्। **अतिस्त्राविति**। नदीत्वाभावपक्षे 'अच्च घेः'।

**श्रीरिति**॥ श्रयन्त्येतामिति श्रीः, 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च' इति क्विप्, प्रकृतेर्दीर्घश्च। श्रीशब्दात् सुः, अङ्यन्तत्वान्न सुलोपः। **श्रियौ, श्रिय इति**। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे 'इको यणचि' इति यणि प्राप्ते धात्ववयवेवर्णान्तत्वाद् 'अचि श्नुधातु–' इतीयङ्, एकाच्त्वात् संयोगपूर्वकत्वाच्च यण् न। 'यू स्त्र्याख्यौ–' इति नदीत्वाद् 'अम्बार्थ–' इति ह्रस्वे प्राप्ते—**नेयङुवङ्**। 'यू स्त्र्याख्यौ नदी' इत्यतो यू नदीत्यनुवर्तते, स्थानशब्दो भावे ल्युडन्तः, इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः, इयङुवङ्योग्याविति यावत्।

---

चतुर्ष्वेव, न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः। **इयङुवङ्स्थानावित्यस्यैवेति**। 'यू स्त्र्याख्यौ–' इत्यनुवर्तनादियङुवङ्स्थानाविति ईदूतोर्विशेषणम्। तेन इयङुवङ्स्थानावीदूतावेवास्त्रीति पर्युदस्तौ, न तु ह्रस्वाविति भावः। **श्रीरिति**। 'क्विब्वचिप्रच्छि–' इत्यादिना क्विब्दीर्घौ, ङ्यन्तत्वाभावान्न सुलोपः। **नेयङुवङ्स्था-**

---

१ ख पुस्तके तु 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च' इत्युणादिसूत्रमिहोपन्यस्तम्।

नदीसंज्ञौ न स्तः, न तु स्त्री। हे श्रीः। श्रियम्, श्रियौ, श्रियः। श्रियै, श्रिये। श्रियाः, श्रियः। ३०४ वाऽऽमि। (१-४-५)। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, न तु स्त्री। श्रीणाम्, श्रियाम्। श्रियाम्, श्रियि। प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम्, 'पदान्तरं विनापि स्त्रियां

---

तदाह—इयङुवङोरित्यादिना। हे श्रीरिति। अजादिविभक्त्योरभावाद् नदीत्वनिषेधाद् 'अम्बार्थनद्योः—' इति ह्रस्वो नेति भावः। श्रियमिति। अमि पूर्वरूपं बाधित्वा इयङ्। श्रियौ, श्रिय इति। औड्जसोः पूर्ववत्। टा–श्रिया। श्रियै इति। 'ङिति ह्रस्वश्च' इति ङिति नदीत्वपक्षे आट्, वृद्धिः। श्रिये इति। नदीत्वाभावे इयङ्। श्रिया इति। ङसिङसोः नदीत्वे आट्, वृद्धिः। श्रियः इति। नदीत्वाभावपक्षे इयङेव। ङित्त्वाभावाद् आमि 'ङिति ह्रस्वश्च' इति अप्राप्ते—वामि। 'यू स्त्र्याख्यौ नदी' इत्यनुवर्तते, 'नेयङुवङ्स्थानावस्त्री' इति नञ्वर्जमनुवर्तते। वा आमि— इति छेदः, आमि नदीत्वस्याभावात्। तदाह—इयङुवङ्स्थानावित्यादिना। श्रीणामिति। नदीत्वपक्षे 'ह्रस्वनद्यापः—' इति नुट्। श्रियामिति। नदीत्वाभावे इयङ्। श्रियाम्, श्रियीति। नदीत्वे ङेराम्, आट्, इयङ्। नुट् तु न, 'आटा नुड् बाध्यते' इत्युक्तत्वात्। नदीत्वाभावे तु इयङेव। श्रियोः। श्रीषु।

**प्रधीशब्दस्य त्विति।** प्रध्यायतीत्यर्थे 'ध्यायतेः संप्रसारणं च' इति क्विपि, यकारस्य संप्रसारणे इकारे 'संप्रसारणाच्च' इति पूर्वरूपे 'हलः' इति दीर्घे निष्पन्नस्य प्रधीशब्दस्य वृत्तिकारहरदत्तादिमते लक्ष्मीवद्रूपाणि। तत्र 'एरनेकाचः—' इति यणा इयङो बाधितत्वेन इयङ्स्थानत्वाभावाद् 'नेयङुवङ्स्थानौ—' इति नदीत्वनिषेधाभावाद् 'यू स्त्र्याख्यौ—' इति नित्यनदीत्वे सति 'अम्बार्थ—' इत्यादिनदीकार्यप्रवृत्तेरिति भावः। तत्र अमि शसि च पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यणेवेति विशेषः। ननु प्रध्यायतेः क्विपि निष्पन्नस्य प्रधीशब्दस्य प्रकर्षेण ध्यातृत्वप्रवृत्तिनिमित्तकस्य लिङ्गत्रयसाधारणत्वाद् नित्यस्त्रीलिङ्गत्वाभावाद् नदीत्वाभावात् कथं नदीकार्याणीत्यत आह—**पदान्तरं विनापीति।** पदान्तरसमभिव्याहाराभावेऽपि यः शब्दः स्त्रीरूपार्थबोधकः[1], स नित्य-

---

स्त्री। तिष्ठतो ययोरिति स्थानौ, अधिकरणे ल्युट्, इयङुवङोः स्थानाविति षष्ठीसमासः। तथा च फलितार्थमाह—**इयङुवङोः स्थितिर्ययोरिति।** स्थानग्रहणं किम्, प्रकृष्टा धीः प्रधीः, हे प्रधि। अत्र 'एरनेकाच—' इति यणा इयङो बाधनाद् 'नेयङुवङ्स्थानौ—' इति निषेधो न प्रवर्तते। यत्रेयङुवङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः, यत्र त्वपवादेन बाध्येते तत्र न निषेध इत्येतदर्थं हि स्थानग्रहणं

---

1 स्त्रीलिङ्गत्वबोधकः—इति क।

वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात्। 'लिङ्गान्तरानभिधायकत्वं तत्' इति कैयटमते तु पुंवद्रूपम्। 'प्रकृष्टा धीः' इति विग्रहे तु लक्ष्मीवत्। अमि शसि च प्रध्यम्, प्रध्यः-इति विशेषः। **सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे**

---

स्त्रीलिङ्ग इति विवेचितः। अत एव ब्राह्मण्याम् आधीशब्दस्य आध्यै इति रूपमास्थितं भाष्ये। स्त्रियामेव यो वर्तते, स एव नित्यस्त्रीलिङ्ग इत्यभ्युपगमे तु तदसङ्गतिः स्पष्टैव। आधीशब्दस्य क्रियाशब्दतया त्रिलिङ्गत्वात्। अतः पदान्तरं विनापि स्त्रियां वर्तमानत्वमेव नित्यस्त्रीत्वम्। इदं तु प्रधीशब्दस्य संभवत्येव, प्रकर्षेण ध्यातृत्वं निमित्ती-कृत्य स्त्रियां वृत्तिसम्भवात्। परं तु प्रधीरित्युक्ते पुंसः स्त्रियाश्च प्रतीतिप्रसक्तौ अन्य-तरव्यवच्छेदाय ब्राह्मणः, ब्राह्मणी-इत्यादिपदान्तरसमभिव्याहारापेक्षा। नैतावतास्य पदान्तरसमभिव्याहाराभावे स्त्रियां वृत्तिरपैति। अतः प्रधीशब्दस्य नित्यस्त्रीलिङ्गत्वाद् नदीकार्यं निर्बाधमिति भावः। **लिङ्गान्तरेति**। 'स्त्रीलिङ्गान्यलिङ्गानभिधायकत्वमेव नित्यस्त्रीत्वम्' इति कैयटमतम्। 'स्त्रीविषयावेव यौ यू तयोरेव नदीसंज्ञा' इति 'यू स्त्र्याख्यौ-' इत्यत्र भाष्यादिति तदाशयः। **पुंवद्रूपमिति**। उदाहृतप्रधीशब्दस्य त्रिलिङ्गतया नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि अनदीत्वादिति भावः। **प्रकृष्टेति**। प्रकृष्टा धीरिति विग्रहे प्रादिसमासे प्रधीशब्दस्य मतद्वयरीत्यापि नित्यस्त्रीलिङ्गत्वाद् लक्ष्मीवद्रूपमित्यर्थः। **अमि शसि चेति**। प्रध्यायतीति, प्रकृष्टा धीरिति च विग्रहे प्रधी-शब्दाद् अमि शसि च पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा 'एरनेकाचः-' इति यण्-इत्येतावान् विशेषो लक्ष्मीशब्दापेक्षयेत्यर्थः। कैयटमते ब्राह्मण्याम् 'आध्यै' इति भाष्यप्रयोगस्तु बहुव्रीह्यभिप्रायेण नेयः। अत एव भाष्याद् 'नद्यृतश्च' इति 'कप्' नेत्याहुः।

**सुष्ठु धीर्यस्या इति**। सुष्ठु धीर्यस्या इति सुष्ठु ध्यायति इति उभयविध-

---

कृतम्। अन्यथा 'नेयङुवङोः' इत्येव ब्रूयात्, इयङुवङोर्निमित्तभूतौ यू नदीसंज्ञकौ नेत्य-र्थलाभात्। अस्त्रीति किम्, हे स्त्रि। **वामि**। 'यू स्त्र्याख्यौ नदी' 'नेयङुवङ्स्थाना-वस्त्री' इत्यनुवर्तनादाह—**इयङुवङ्स्थानावित्यादिना**। यद्यपि नेति प्रकृतो निषे-धोऽनेन विकल्प्यते, तथापि निषेधविकल्पे विधिविकल्प एव फलतीति स एव सूत्रार्थ उचित इत्याशयेनाह—**वा नदीसंज्ञौ स्त इति**। 'ङिति ह्रस्वश्च' इति सूत्रेऽप्येव-

---

इत्याशयेन व्याचष्टे—**लक्ष्मीवद्रूपमिति**। अमि शसि च विशेष इत्यनुपदमेव वक्ष्यति। **पुंवद्रूपमिति**। अयं च मतभेदः—प्रकृष्टा धीर्यस्याः प्रकर्षेण वा ध्यायतीति विग्रहे बोध्यः। **लक्ष्मीवदिति**। मतद्वयेऽपीति शेषः। **सुष्ठु धीर्यस्या इति**।

वृत्तिकारमते सुधीः श्रीवत्। मतान्तरे तु पुंवत्। सुष्ठु धीः इति विग्रहे तु श्रीवदेव। ग्रामणीः पुंवत्। ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विनापि स्त्रियामप्रवृत्तेः। एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम्॥ इति ईदन्ताः॥ धेनुर्मतिवत्। **३०५ स्त्रियां च। (७-१-९६)** स्त्रीवाची क्रोष्टुशब्दस्तृजन्त-

---

विग्रहेऽपि पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वृत्तिकारादिमते सुधीशब्दस्य नित्यस्त्रीलिङ्गत्वेन 'नेयङुवङ्स्थानावस्त्री' इति नदीत्वनिषेधात् 'ङिति ह्रस्वश्च' इति 'वामि' इति च श्रीशब्दवद्रूपाणि प्रत्येतव्यानि। 'न भूसुधियोः' इति यणिनषेधे इयङ् एव प्रवृत्तेरिति भावः। **मतान्तरे तु पुंवदिति।** लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटमते तु त्रिलिङ्गतया नदीत्वाभावात् पुंवदेव रूपमित्यर्थः। ननु सुधीशब्दे बहुव्रीहिप्रवृत्तेः प्राग् धीशब्दस्य नित्यस्त्रीलिङ्गत्वात् 'प्रथमलिङ्गग्रहणं च' इति नदीत्वं दुर्वारमिति चेत्, सत्यम्—यस्य वृत्तेः प्राग् नदीत्वं दृष्टम्, तस्य उपसर्जनत्वेऽपि नदीत्वमतिदिश्यते। इह च वृत्तेः प्राग् धीशब्दस्य केवलस्य एकाच्त्वाद्यणभावे इयङ्योग्यतया 'नेयङुवङ्स्थानौ–' इति नदीत्वनिषेधाद् वृत्तावपि न तदतिदेश इत्यास्तां तावत्। **सुष्ठु धीरिति विग्रहे तु श्रीवदेवेति।** मतद्वयेऽपि नित्यस्त्रीलिङ्गत्वादिति भावः। **ग्रामणीः पुंवदिति।** स्त्रियामिति शेषः। ननु ग्रामं नयति नियमयतीति ग्रामणीशब्दस्य प्रधीशब्दवत् पदान्तरं विनापि स्त्रियां वर्तमानत्वाद् नित्यस्त्रीलिङ्गत्वान्नदीकार्यसत्त्वात् पुंवदिति कथमित्यत आह—**ग्रामनयनस्येति।** ग्रामनयनस्य लोके उत्सर्गतः—सामान्यतः पुंधर्मतया ब्राह्मणीत्यादिपदान्तरसमभिव्याहारं विना स्त्रीलिङ्गाप्रतीतेः वृत्तिकारादिमतेऽपि नित्यस्त्रीलिङ्गत्वाभावान्नदीत्वं नेत्यर्थः। **एवमिति।** खलपवनकटप्रवणादिक्रियाणामपि पुरुषकर्तव्यत्वम् औत्सर्गिकं सामान्यतः सिद्धम्। अतः खलपूः, कटप्रूः इत्यादिशब्दानामपि स्त्रियां वृत्तिकारादिमतेऽपि नित्यस्त्रीत्वं न। अतः पुंवदेव रूपमित्यर्थः॥ इति ईदन्ताः॥

**अथ उदन्ता निरूप्यन्ते। धेनुर्मतिवदिति।** उकारस्य ओकारो गुणः, अवादेशः—इत्यादिविशेषस्तु सुगम इति भावः। अथ क्रोष्टुशब्दस्य स्त्रियां विशेषमाह—**स्त्रियां च।** 'तृज्वत्क्रोष्टुः' इत्यनुवर्तते रूपातिदेशोऽयमित्युक्तम्। तदाह—**स्त्रीवाचीत्यादिना।** तथा च स्त्रियामुदन्तः क्रोष्टुशब्दो नास्त्येव, किन्तु क्रोष्टृ इति ऋद-

---

ननु अस्मिन् विग्रहे कैयटमते सुधीशब्दस्य नित्यस्त्रीत्वाभावेऽपि धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च' इति सुधीशब्दः श्रीवदेव भवति, न तु पुंवदिति चेत्। अत्राहुः—'नेयङुवङ्स्थानावस्त्री' इति धीशब्दे नदीसंज्ञानिषेधात् सुधीशब्दे 'प्रथमलिङ्गग्रहणं च' इत्यस्याप्रवृत्तिः, तथा च वृत्तिमत इति ग्रन्थः स्वरसतः संगच्छते इति।

वद्रूपं लभते। ३०९ **ऋन्नेभ्यो ङीप्।** ( ४-१-५ ) ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्। क्रोष्ट्री, क्रोष्ट्र्यौ, क्रोष्ट्र्यः॥ इत्युदन्ताः॥ वधूर्गौरीवत्। भ्रूः श्रीवत्। हे सुभ्रूः। कथं तर्हि 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः। प्रमाद

न्न एवेति कल्पितम्। **ऋन्नेभ्यो ङीप्।** ऋतश्च नश्चेति द्वन्द्वः, स्त्रियामित्यधिकृतम्, 'ङ्याप्प्रातिपदिकात्' इत्यतः प्रातिपदिकग्रहणमनुवृत्तम्, ऋन्नकारैर्विशिष्यते। तदन्तविधिः। तदाह—**ऋदन्तेभ्य इत्यादिना।** ङ्याविति। क्रोष्टृ ई इति स्थिते, यणि क्रोष्ट्रीशब्दात् सुबुत्पत्तिः। गौरीवद्रूपाण्याह—**क्रोष्ट्री इत्यादि।** इत्युदन्ताः।

**अथ ऊदन्ता निरूप्यन्ते। वधूर्गौरीवदिति।** 'वहो धश्च' इत्यूप्रत्ययः, हस्य धश्च। धात्ववयवोवर्णाभावाद् नोवङ्। ऊकारस्य यणा वकार इत्यादिविशेषस्तु सुगम इति भावः। **भ्रूः श्रीवदिति।** 'भ्रमेश्च डूः' इति डूप्रत्ययान्तोऽयम्। 'अचि श्नुधातुभ्रुवाम्–' इत्युवङ् इत्यादिविशेषस्तु सुगम इति भावः। सु शोभना भ्रूर्यस्याः सा सुभ्रूः। अस्त्रीप्रत्ययान्तत्वाद् 'गोस्त्रियोः–' इति ह्रस्वो न भवति। 'नेयङुवङ्स्थानावस्त्री' इति भ्रूशब्दस्य तदन्तस्य च निषेधाद् नदीत्वं न। ततश्च 'अम्बार्थ–' इत्यादि नदीकार्यं नेत्यभिप्रेत्याह—**हे सुभ्रूरिति। कथं तर्हीति।** यदि सुभ्रूशब्दे नदीकार्यं न स्यात्, तदा 'हापितः क्वासि हे सुभ्रु' इति कथं भट्टिराहेत्यर्थः। रावणेन सीतापहारोत्तरं रामविलापोऽयम्। हे सुभ्रु त्वया अहं हापितोऽस्मि विधिनेत्यर्थः। हापित इत्यस्य त्याजित

---

**मतान्तर इति।** 'लिङ्गान्तरानभिधायकत्वं तत्' इति कैयटमत इत्यर्थः। **श्रीवदेवेति।** बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वान्मतद्वयेऽपि श्रीवदेवेत्यर्थः। **स्त्रियां च।** असर्वनामस्थानार्थमयमारम्भः। तृज्वत्क्रोष्टुरिति वर्तते तद्वदेवात्रापि रूपातिदेशः स्त्रियामित्यर्थग्रहणं तदाह—**स्त्रीवाची क्रोष्टुशब्द इत्यादि।** एवं च पञ्चभिः क्रोष्ट्रीभिः क्रीतैः रथैः पञ्चक्रोष्ट्रीरथैरित्यत्रापि तृज्वद्भावः सिध्यति। ये तु स्त्रियामिति स्त्रीप्रत्यय इति व्याचक्षते, ङीपर्थं च क्रोष्टुशब्दं गौरादिषु पठन्ति तेषामिह तृज्वद्भावो न सिध्येत्, 'तेन क्रीतम्' इति ठकः 'अध्यर्धपूर्व–' इति लुका लुप्तत्वाद् 'लुक्तद्धितलुकि' इति ङीषो लुकि स्त्रीप्रत्ययपरत्वाभावात्। **ऋन्नेभ्यो।** ऋत्–ऋकारः, नो नकारः। प्रयोगापेक्षं बहुत्वम्। प्रातिपदिकविशेषणात्तदन्तविधिः। स्त्रियामिति चाधिक्रियते तदाह—**ऋदन्तेभ्य इत्यादि। क्रोष्ट्रीति।** 'स्त्रियां च' इत्येतस्याङ्गत्वादङ्गेन प्रत्ययस्याक्षेपाद्विभक्तौ परत एवेह तृज्वद्भावः, ततो ङीबिति बोध्यम्। **भ्रूरिति।** भ्रमतीति भ्रूः, 'भ्रमेश्च डूः' इति भ्रमतेर्डूप्रत्ययः, डित्त्वाट्टिलोपः। **हे सुभ्रूरिति।** डूप्रत्ययस्यास्त्रीप्रत्ययत्वात् 'गोस्त्रियोः–' इति ह्रस्वो न भवति। 'नेयङुवङ्स्थानौ–' इति नदीसंज्ञानिषेधात्संबुद्धिह्रस्वोऽपि नेति भावः। ह्रस्वोऽत्रानुपपन्न इत्याक्षिपति—**कथं**

ध्यायमिति वक्तव्यः। खलपूः पुंवत्। पुनर्भूः। 'दृन्कर–' (वा ४११८) इति यणा उवङो बाधनात् 'नेयङुवङ्–' (सू ३०३) इति निषेधो न, हे पुनर्भु। पुनर्भ्वम्। पुनर्भ्वौ। ३०७ एकाजुत्तरपदे णः। (८-४-१२) एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात्। आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम्। यणं

इत्यर्थः। **प्रमाद इति**। 'स्त्र्याख्यौ–' इति ह्रस्वत्वस्य भावः। **बहव इति**। केचित्तु सामान्ये नपुंसकत्वमाश्रित्य कथंचित् समादधुः। **खलपूः पुंवदिति**। खलपवनरूप उपसर्जनः पुंस्त्वस्य प्रकारान्तरं विना स्त्रियां वर्तमानत्वाभावेन नित्यस्त्रीत्वाभावाद् नदीत्वं नेति भावः।

**पुनर्भूरिति**। 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः। तस्य 'नेयङुवङ्' इति निषेधमाशङ्क्याह—**दृन्करेतीति**। अम्शसोः पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा 'दृन्कर–' इति यणिति मत्वाह—**पुनर्भ्वम्, पुनर्भ्वाविति**। पुनर्भ्वे। पुनर्भ्वाः। नद्यन्तत्वाद् नुटि दीर्घे पुनर्भूनाम् इति स्थिते रेफाण्णकारस्य भिन्नपदस्थत्वाद् 'अट्कुप्वाङ्–' इत्यप्राप्ते—**एकाजुत्तरपदे णः**। समासस्य चरमावयवे रूढेन उत्तरपदशब्देन समास इति लभ्यते। एकः अच् यस्मिन् तद् एकाच्, तद् उत्तरपदं यस्य सः एकाजुत्तरपदः, तस्मिन् समास इति बहुव्रीहिगर्भो बहुव्रीहिः 'रषाभ्यां नो णः–' इत्यनुवर्तते। 'पूर्वपदात् संज्ञायाम्–' इत्यतः पूर्वपदादित्यनुवर्तते, पूर्वं पदं यस्य तत् पूर्वपदम्, एकत्वमविवक्षितम्, पूर्वपदस्थाभ्यामिति लभ्यते। 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनुवर्तते, विद्यमानस्येति शेषः। तदाह—**एकाजुत्तरपदमित्यादिना**। नन्विह णकारग्रहणं व्यर्थम्, 'रषाभ्यां नो णः–' इत्यत एव तदनुवृत्तिसिद्धेः। न च 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पनिवृत्त्यर्थं पुनर्णग्रहणमिति वाच्यम्, आरम्भसामर्थ्यादेव नित्यत्वसिद्धेरित्यत आह—**आरम्भेति**। **यणमिति**। 'दृन्कर–' इति

---

**तर्हीति**। 'विमानिता सुभ्रु पितुर्गृहे कुतः' इति कालिदासप्रयोगोऽप्यनुपपन्न इति बोध्यम्। **बहव इति**। केचित्तु—'नेयङुवङ्–' इति सूत्रे 'वामि' इत्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषां चाश्रित्य समादधिरे। तदसत्। तथा सतीह नञ्ग्रहणं 'वामि' इत्युत्तरसूत्रं च व्यर्थं स्यात्, 'वेयङुवङ्स्थानौ–' इत्येव वक्तुं शक्यत्वात्। अन्ये तु–'सामान्ये नपुंसकम्' इति कथंचित्समादधुः। **एकाच्**। एकोऽच् यस्मिंस्तद् एकाच्, तदुत्तरपदं यस्य स एकाजुत्तरपद इति बहुव्रीहिगर्भो बहुव्रीहिः। उत्तरपदशब्दः समासावयवे रूढः, तेनाक्षिप्तः समासोऽनेन विशेष्यत इत्याह—**तस्मिन्समास इति**। 'रषाभ्यां नो णः–' इत्यतो ण इत्यनुवर्तमानेऽपि णग्रहणमिह नित्यार्थमावश्यकमित्याशङ्क्याह—

आश्रित्वा परत्वान्नुट्, पुनर्भूणाम्। वर्षाभूः। भेकजातौ नित्यस्त्रीत्वाभावाद् हे वर्षाभूः कैयटमते। मतान्तरे तु हे वर्षाभु, 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः। 'वर्षाभ्वश्च' (सू २८२) वर्षाभ्वौ, वर्षाभ्वः। स्वयम्भूः पुंवत्। इत्यूदन्ताः॥ ३०८ न षट्स्वस्रादिभ्यः। (४-१-१०)। षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः।

---

इत्यर्थः। पुनर्भूणामिति। 'भुवश्च' 'हृशि च' इत्युत्वं तु न, रोरेव तद्विधानात्। ङेराम्, पुनर्भ्वाम्। वर्षाभूशब्दे विशेषमाह—भेकेति। 'बह्वादिभ्यश्च' इति ङीषो वैकल्पिकत्वाद् ङीषन्तो वर्षाभूशब्दः। स च भेकजातौ द्विलिङ्गः।

'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः।

दर्दुरो भेकः। एवं च 'लिङ्गान्तरानभिधायकत्वम्' इति कैयटमते नित्यस्त्रीलिङ्गत्वाभावाद् नदीत्वाभावे सति 'अम्बार्थ—' इति ह्रस्वाभावे सति हे वर्षाभूरिति रूपमित्यर्थः। मतान्तरे त्विति। 'पदान्तरं विनापि स्त्रियां वर्तमानत्वम्' इति वृत्तिकारादीनां मते तु वर्षाभूशब्दस्य जातिशब्दतया पदान्तरं विनापि स्त्रियां वर्तमानतया नित्यस्त्रीत्वान्नदीत्वे 'अम्बार्थ—' इति ह्रस्वे सति हे वर्षाभु इति रूपमित्यर्थः। ननु 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इत्यमरकोशे वर्षाभूशब्दस्य भेकजातौ स्त्रीलिङ्गमात्रावगमात् कैयटमतेनापि नित्यस्त्रीत्वं कुतो न स्यादित्यत आह—भेक्यामिति। यादवकोशानुसारात् अमरकोशे स्त्रीग्रहणमुपलक्षणमिति भावः। यद्वा अमरमतरीत्या कैयटमतेऽपि नित्यस्त्रीत्वमस्तु। अजादौ 'एरनेकाचः—' इति यणः 'न भूसुधियोः' इति निषेधे प्राप्ते 'वर्षाभ्वश्च' इति यणः प्रतिप्रसव उक्तः। तं स्मारयति—वर्षाभ्वश्चेति। स्वयम्भूः पुंवदिति। स्वयम्भूशब्दस्य चतुरानने रूढत्वात् तस्य यौगिकस्य पदान्तरं विना स्त्रियामवृत्तेः न वृत्तिमते नित्यस्त्रीत्वम्। कैयटमते तु अनेकलिङ्गत्वाद् न नित्यस्त्रीत्वमिति भावः॥ इत्यूदन्ताः॥

अथ ऋदन्ता निरूप्यन्ते। 'सावसेर्ऋन्' इति सौ उपपदे अस्यतेः ऋन्प्रत्यये स्वसृशब्दो भगिनीवाची। 'ऋन्नेभ्यः—' ङीपि प्राप्ते—न षट्। 'षट्' इत्यनेन षट्संज्ञका गृह्यन्त इत्याह—षट्संज्ञकेभ्य इति। ङीप्टापाविति। 'ऋन्नेभ्यः—' इत्य-

---

आरम्भसामर्थ्यादिति। 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पेन णत्वसिद्धावेतदारम्भसामर्थ्यादित्यर्थः। स्वयंभूः पुंवदिति। मतद्वयेऽपि नदीसंज्ञाया अभावाद् 'ङिति ह्रस्वश्च' इत्यादि न प्रवर्तत इति भावः। न षट्स्वस्रादिभ्यः। स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानादनन्तरो ङीबिव व्यवहितष्टाबपि निषिध्यत इत्याशयेनाह—ङीप्टापौ नेति। स्वस्रादीनां ङीप् प्राप्तः, षट्संज्ञकानां तूभौ।

"स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥"

'अप्तृन्-' ( सू २७७ ) इति दीर्घः-स्वसा, स्वसारौ, स्वसारः । माता पितृवत् । शसि मातॄः । इत्यृदन्ताः ॥ द्यौः गोवत् ॥ इत्योदन्ताः ॥ राः पुंवत् ॥ इत्यैदन्ताः ॥ नौः ग्लौवत् ॥ इत्यौदन्ताः ॥

॥ इत्यजन्तस्त्रीलिङ्गप्रकरणम् ॥

---

तो ङीबिति, 'टाबृचि' इत्यष्टाविन्यस्य चानुवृत्तेरिति भावः । स्वस्रादीन् पठति--**स्वसा तिस्र इत्यादिना** । अथ 'तिस्रुचतस्रु' इत्यनयोः पाठो न कर्तव्यः, 'न तिसृचतसृ' इति नामि दीर्घनिषेधादेव लिङ्गाद् ङीबभावसिद्धेरिति 'कृन्मेजन्तः' इति सूत्रे कैयटः । न नन्दतीति ननान्दा । 'नप्ति च नन्देः' इति ऋन् वृद्धिश्च । 'ननान्दा तु स्वसा पत्युः' इत्यमरः । दोग्धीति दुहिता । 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ' इति दुहेस्तृच् , इट् , गुणाभावश्च निपात्यते । मान्यते पूज्यते इति माता, 'मान् पूजायाम्' । तृचि नलोपश्च, यतत इति याता, 'यतेर्वृद्धिश्च' इति ऋन् , उपधावृद्धिश्च । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इत्यमरः । **अप्तृन्नितीति** । स्वसृशब्दात् सुः, 'ऋदुशनस्-' इत्यनङ् , तृप्रत्ययान्तत्वाभावेऽपि 'अप्तृन्-' इति सूत्रे स्वसृग्रहणाद् दीर्घ इति भावः । **माता पितृवदिति** । 'अप्तृन्-' इति सूत्रे औणादिकतृन्तृजन्तेषु नप्त्रादीनामेव दीर्घनियमनादिति भावः । इत्यृदन्ताः ।

**अथ ओदन्ता निरूप्यन्ते । द्यौर्गोवदिति** । 'ओतो णित्' इति णिद्वत्त्वातिदेशाद् 'अचो ञ्णिति' इति वृद्धिः । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः ॥ इत्योदन्ताः ॥

**अथ ऐदन्ता निरूप्यन्ते । राः पुंवदिति** । 'रायो हलि' इत्यात्वम् । 'राः स्त्रीत्येके' इति क्षीरस्वाम्युक्तेः स्त्रीलिङ्गोऽप्ययमिति भावः । इत्यैदन्ताः ।

**अथ औदन्ता निरूप्यन्ते । नौर्ग्लौवदिति** । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ इत्यौदन्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायामजन्तस्त्रीलिङ्गनिरूपणं समाप्तम् ।

---

**स्वसा तिस्र इति** । 'न तिसृचतसृ' इति नामि दीर्घत्वप्रतिषेधाज्ज्ञापकादेव ङीबभावे सिद्धे स्वस्रादिषु तिसृचतसृशब्दपाठो न कर्तव्य इति 'कृन्मेजन्तः' इति सूत्रे कैयटः । **स्वसेति** । 'सावसेर्ऋन्', 'ऋदुशन-' इत्यनङ् । 'ननान्दा तु स्वसा पत्युः' । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' । **द्यौर्गौवदिति** । 'गमेर्डोः'

# अथ अजन्तनपुंसकलिङ्गप्रकरणम् । १० ।

**३०१ अतोऽम्। ( ७-१-२४ )** अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात् । 'अमि पूर्वः' ( सू १९४ ) ज्ञानम् । 'एङ्ह्रस्वात्-' ( सू १९३ ) इति हल्मात्रलोपः,

---

अथाजन्तनपुंसकलिङ्गा निरूप्यन्ते । ज्ञानशब्दात् सुः 'स्वमोर्नपुंसकात्' इति तस्य लुकि प्राप्ते—**अतोऽम्**। अत इति पञ्चमी । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते, अत इत्यनेन विशेष्यते, तदन्तविधिः । 'स्वमोर्नपुंसकात्' इत्यनुवर्तते । तदाह—**अतोऽङ्गादिति** । अदन्तादङ्गादित्यर्थः । **ज्ञानमिति** । सोरमि कृते अमि पूर्वरूपम् इति भावः । अमोऽम्विधानं तु 'स्वमोर्नपुंसकात्' इति लुङ्निवृत्त्यर्थम् । ननु 'अतः' 'म्' इत्येव छेदोऽस्तु, सोर्मकारादेशे ज्ञानमिति सिद्धेः । अमि च 'आदेः परस्य' इति अकारस्य मकारे अन्त्यस्य मकारस्य संयोगान्तलोपेनैव ज्ञानमिति सिद्धेरिति चेत्, मैवम्—एवं सति ज्ञानमित्यत्र 'सुपि च' इति दीर्घापत्तेः । न च अदन्तसंनिपातमाश्रित्य प्रवृत्तस्य मादेशस्य तद्विघातकदीर्घनिमित्तत्वं न संभवति, संनिपातपरिभाषाविरोधादिति वाच्यम्, 'सुपि च' इति दीर्घे कर्तव्ये संनिपातपरिभाषाया अप्रवृत्तेरित्युक्तत्वादित्यलम् । हे **ज्ञानेति** । हे ज्ञान म् इति स्थिते, सोरमि कृते, पूर्वरूपे 'एङ्ह्रस्वात्-' इति मकारलोपे हे ज्ञानेति रूपम् । ननु 'एङ्ह्रस्वात्-' इत्यत्र संबुद्ध्याक्षिप्तस्य संबुद्ध्यैवान्वय उचितः, ततश्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परा या संबुद्धिः तदवयवस्य हलो लोप इति लभ्यते । ततश्च प्रकृते पूर्वरूपे कृते तस्य पूर्वान्तत्वाश्रयेण ज्ञान इत्यदन्तमङ्गम्, ततः परा संबुद्धिर्नास्ति, मकारमात्रस्यासंबुद्धित्वात्, सुस्थानिकस्याम एव संबुद्धित्वात्, अर्धविकारेण एकदेशविकृतन्यायानवताराच्च । न च पूर्वरूपात् प्राक् 'एङ्ह्रस्वात्-' इत्यस्य प्रवृत्तिः किं न स्यादिति वाच्यम्, परत्वात् पूर्वरूपस्यैव पूर्वं प्रवृत्तेः । न च पूर्वान्तत्वात् पूर्वरूपस्याङ्गान्तर्भावाद् ज्ञान इत्यदन्तमङ्गम्, परादित्वाच्च अम् इत्यस्य संबुद्धित्वं चेत्याश्रित्य तदवयवहलो मकारमात्रस्य 'एङ्ह्रस्वात्-' इति लोपो निर्बाध इति वाच्यम् 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादित्यत आह—**एङ्ह्रस्वादिति । हल्मात्रलोप इति** । पूर्वरूपे कृते संबुद्धेर्मकारमात्रं यत् परि-

---

बाहुलकाद् द्युतेरपि, डित्वाट्टिलोपः । 'ओतो णित्' इति णिद्वद्भावाद् वृद्धिः । **राः पुंवदिति** । यद्यपि पुँल्लिङ्ग एवायम् 'अर्थैरैविभवा अपि' इत्यमरोक्तेर्भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्, तथापि 'रात्येनं राः स्त्रीत्येके' इति क्षीरस्वामिना स्त्रीलिङ्गताया अप्यभ्युपगमादेवमुक्तम् । **नौग्लौवदिति** । 'ग्लानुदिभ्यां डौः' । डित्वाट्टिलोपः । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ इत्यजन्तस्त्रीलिङ्गप्रकरणम् ॥

**अतोऽम्** । अत इत्येतदधिकृतस्याङ्गस्य विशेषणम् 'स्वमोर्नपुंसकात्' इति

हे ज्ञान । २१० **नपुंसकाच्च** । ( ७-१-१९ ) क्लीबात्परस्यौङः शी स्यात् । भसंज्ञायाम् । २११ **यस्येति च** । ( ६-४-१४८ ) भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे । इत्यकारलोपे प्राप्ते । 'औङः श्यां प्रतिषेधो वाच्यः'

---

शिष्टं तस्य 'एङ्ह्रस्वात्–' इति लोप इत्यर्थः । तदयानुरोधात् संबुद्ध्याक्षिप्तमङ्गं संबुद्धौ नान्वेति, किं तु संबुद्ध्यवयवहल्येवान्वेति । ततश्च एङन्ताद् ह्रस्वान्ताच्चाङ्गात् परो यः संबुद्ध्यवयवहल् तस्य लोप इति लभ्यते । प्रकृते च पूर्वरूपे कृतेऽपि ह्रस्वान्तादङ्गात् परत्वं संबुद्ध्यवयवस्य मकारमात्रस्य अस्त्येवेति तस्य 'एङ्ह्रस्वात्–' इति लोपो निर्बाध इत्यन्यत्र विस्तरः ।

**नपुंसकाच्च** । 'जसः शी' इत्यतः शीति 'औङ आपः' इत्यतः औङ इति चानुवर्तते । तदाह—**क्लीबादिति** । औङित्यौकारविभक्तेः संज्ञेत्युक्तम् । ज्ञान ई इति स्थिते **यस्येति च** । यस्य ईतीति छेदः । इश्च अश्च तयोः समाहारः यम् , तस्य, इवर्णस्य अवर्णस्य चेत्यर्थः। भस्येत्यधिकृतम् ।'नस्तद्धिते'इत्यतः तद्धिते इत्यनुवर्तते । तदाह–**भस्येत्यादिना । इत्यकारलोपे प्राप्त इति** । 'सुडनपुंसकस्य' इति पर्युदासेन शीभावस्यासर्वनामस्थानतया तस्मिन् परतो भत्वादिति भावः । **औङः श्यामि-**

---

चानुवर्तत इत्याशयेनाह—**अतोऽङ्गादित्यादि** । अदन्तादङ्गादित्यर्थः । **स्वमो-रिति** । अमोऽमुविधानं 'स्वमोर्नपुंसकात्' इति प्राप्तस्य लुको बाधनार्थम् । **अम् स्यादिति** । यद्यपि म् इत्येव छित्त्वा सोर्मे कृते संनिपातपरिभाषया 'सुपि च' इति दीर्घत्वाप्रसक्त्या ज्ञानमिति रूपं सिध्यति, द्वितीयैकवचने तु 'आदेः परस्य' इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम् , तथापि 'संयोगान्तलोपो झलः' इत्यभिप्रायेणेदं व्याख्यातम् । यत्त्वाहुः—अमिति पदच्छेदाकरणे अतिजरमिति न सिध्येदिति । तद्भसात्,सोरमि कृते संनिपातपरिभाषया जरसादेशस्याप्रवृत्त्या अतिजरमिति रूपस्यैवेष्यमाणत्वात् । द्वितीयैकवचने तु 'अतोऽम्' इति बाधित्वा परत्वाज्जरसि कृते संनिपातपरिभाषया लुकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक् । **ज्ञानमिति** । ज्ञप्तिर्ज्ञानम् । ल्युडन्तः, 'युवोरनाकौ' । 'कृत्तद्धित–' इति प्रातिपदिकत्वात्स्वाद्युत्पत्तिः । **हल्मात्रेति** । हे ज्ञान सु इति स्थिते संबुद्धिलोपात्परत्वादमादेशे कृते अमि पूर्वत्वे च तस्यान्तवद्भावाद् ह्रस्वान्तमङ्गं न भवतीति ततः परस्य संबुद्धिसंबन्धिनो मकारस्य लोप इत्यर्थः । **नपुंसकाच्च** । 'जसः शी' 'औङ आपः' इत्यतः शी औङ इति चानुवर्तत इत्यभिप्रेत्याह—**क्लीबात्परस्येत्यादिना । भसंज्ञायामिति** । 'सुडनपुंसकस्य' इति पर्युदासेनासर्वनामस्थानत्वादौङि 'यचि भम्' इति प्रवर्तत इति भावः । **यस्येति च** । इश्च अश्च यं तस्य यस्य, तदाह—

( वा ४१८६ ) ज्ञाने । ३१२ जश्शसोः शिः । ( ७-१-२० ) क्लीबादनयोः, शिः स्यात् । ३१३ शि सर्वनामस्थानम् । ( १-१-४२ ) 'शि' इत्येतदुक्तसंज्ञं स्यात् । ३१४ नपुंसकस्य झलचः । ( ७-१-७२ ) झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः, ज्ञानानि । पुनस्तद्वत् । शेषं रामवत् । एवं धनवनफलादयः । ३१५ अद्ड्डतरादिभ्यः पञ्चभ्यः । (७-

ति । औङः यः शी आदेशः, तस्मिन् परतः 'यस्येति च' इति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः । श्यामिति निर्देशादेव नित्यस्त्रीत्वं बोध्यम् । औङ इति तु व्यर्थमेव, सर्वे इत्यादौ 'जसः शी' इत्यस्य साधिकारेणैव व्यावृत्तिसिद्धेः । ज्ञाने इति । ज्ञान ई इति स्थिते 'आद् गुणः' इति भावः । जश्शसोः शिः । 'स्वमोर्नपुंसकात्' इत्यतो 'नपुंसकात्' इत्यनुवर्तते । तदाह—क्लीबादिति । ज्ञान शि इति स्थिते स्थानिवत्त्वेन प्रत्ययत्वात् 'लशक्वतद्धिते' इति शकार इत् । शि सर्वनामस्थानम् । उक्तसंज्ञमिति । सर्वनामस्थानसंज्ञकमित्यर्थः । अनपुंसकस्येति पर्युदासात् शि इत्यस्य सर्वनामस्थानत्वे अप्राप्ते वचनम् । नपुंसकस्य झलचः । झल् च अच्चेति समाहारद्वन्द्वः, तेन च 'अङ्गस्य' इत्यधिकृतं विशेष्यते, तदन्तविधिः । 'इदितो नुम्धातोः' इत्यतो 'नुम्' इत्यनुवर्तते । 'उगिदचाम्–' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । तदाह—झलन्तस्येत्यादिना । मित्त्वादन्त्यादचः परः । उपधादीर्घ इति । ज्ञान न् इ—इति स्थिते 'सर्वनामस्थाने च–' इति दीर्घ इत्यर्थः । पुनस्तद्वदिति । अमौट्शस्सु ज्ञानम्, ज्ञाने । ज्ञानानि—इति क्रमेण रूपाणीत्यर्थः । शेषं रामवदिति । शिष्यत इति शेषम्, कर्मणि घञ् । 'घञबन्ताः पुंसि' इति तु प्रायिकमिति भावः ।

अद्ड्डतरादिभ्यः । अद्ड् डतरादिभ्य इतिच्छेदः । दस्य ष्टुत्वेन डकारः,

इवर्णोवर्णयोरिति । ईति चेति चकारेण 'नस्तद्धिते' इत्यतस्तद्धितोऽनुकृष्यते तदाह—ईकारे तद्धिते चेति । औङः श्यामिति । विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । नेदं वचनं कर्तव्यम्, 'विभाषा ङिश्योः' इत्यतः श्यामिति प्रकृतम्, 'न संयोगात्' इत्यतो नेति च, तत्रापि संबन्धमात्रं कर्तव्यं यस्य ईकारे तद्धिते च लोपो भवति श्यां नेत्याकरः । जश्शसोः । जसा साहचर्यादिह सुबेव शस् गृह्यते । तेनेह न, कुण्डशो ददाति । शि सर्वनामस्थानम् । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन । नपुंसकस्य । 'इदितो नुम् धातोः' इत्यतो नुमनुवर्तते । 'उगिदचाम्–' इत्यतः सर्वनामस्थाने इति च । 'अङ्गस्य' इति चाधिकृतम् । तथा च झलज्भ्यां नपुंसकमङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—झलन्तस्येत्यादि । अद्ड्डतरादिभ्यः । पञ्चभ्य इति किम्, नेमं तिष्ठति । नेमं पश्य । डतरादयो डतर-

१-२५ ) एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्। ३१६ टेः ।( ६-४-१४३ ) डिति परे भस्य टेर्लोपः स्यात् । 'वाऽवसाने' ( सू २०६) कतरत्-कतरद्, कतरे, कतराणि । 'भस्य' इति किम्-पञ्चमः। टेर्लुप्तत्वात् 'प्रथमयोः-' (सू १६४) इति पूर्वसवर्णदीर्घः 'एङ्ह्रस्वात्-' ( सू १९३ ) इति संबुद्धिलोपश्च न भवति, हे कतरत् । पुनस्तद्वत् । शेषं पुंवत् । कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमशब्दस्य तु अन्यतममित्येव । 'एकतरात्प्रतिषेधो वक्तव्यः ।' (वा ४२८७)

---

इत्य संयोगान्तलोपश्च आदेशस्वरूपावगतये न कृत इति कैयटः। डतर, डतम, अन्य, अन्यतर, इतर इति डतरादयः सर्वादिगणपठिताः । अत्र डतरडतमौ प्रत्ययौ । अत-स्तदन्तग्रहणम् । 'स्वमोर्नपुंसकात्' इति सूत्रमनुवर्तते तदाह—एभ्य इत्यादिना । डकार इत् । कतर अद् इति स्थिते—टेः । 'अल्लोपोऽनः' इत्यस्माल्लोप इति 'ति विंश-तेर्डिति' इत्यतो डितीति चानुवर्तते । भस्येत्यधिकृतम् । तदाह—डितीत्यादिना । कतर अद् इत्यत्र रेफादकारस्य लोपः । चर्त्वविकल्पं स्मारयति—वावसान इति। ननु पररूपेण कतरदिति सिद्धेः अद्डो डित्करणस्य किं प्रयोजनमित्यत आह—टेर्लुप्तत्वादिति । टेर्लुप्तत्वात् पूर्वसवर्णदीर्घो न भवतीत्यन्वयः । डित्त्वाभावे 'टेः' इति लोपस्याप्राप्तया पररूपं बाधित्वा पूर्वसवर्णदीर्घः प्रसज्येत इति भावः । ननु पूर्व-सवर्णदीर्घाभावाय दकार एवादेशः क्रियतामित्यत आह—एङ्ह्रस्वादित्यादि । सो-र्दकारादेशे सति तस्य स्थानिवत्त्वेन संबुद्धित्वाद् ह्रस्वान्तादङ्गात् परत्वाच्च लोपः प्रस-ज्येत । अद्डादेशे तु टिलोपे सति कतर् इत्यङ्गम्, न तद् ह्रस्वान्तम् । यत्तु ह्रस्वान्तं इति, न तदङ्गम्, रेफादकारस्य प्रत्ययावयवत्वेन तदन्तस्य प्रत्ययपरकत्वाभावेन अङ्गत्वाभावात् । अतष्टिलोपप्रवृत्तये अद्डादेशविधिरिति भावः । पुनस्तद्वदिति । प्रथमावद् द्वितीयेत्यर्थः । शेषं पुंवदिति । सर्ववदित्यर्थः । अन्यतमशब्दस्य त्विति ।

---

डतमेतरान्यान्यतरेति सर्वादिषु पठिताः । अद्डादेशः स्यादिति । जिघृक्षितादेश-स्वरूपप्रतिपादनाय ष्टुत्वं न कृतम् । टेः । 'तिविंशतेः-' इत्यतो डितीत्यनुवर्तते 'भस्य' इति चाधिकृतं तदाह—डिति परे भस्येति । भस्य किम्, पञ्चमः । अत्र डटो मडागमे भत्वाभावाट्टिलोपो न भवति । किंतु पदत्वाद् नलोप एव । अद्डो डित्करणस्य प्रयोजनमाह—टेर्लुप्तत्वादित्यादि । ननु पूर्वसवर्णदीर्घाभावाय दादेश एव क्रियतां किमद्डादेशेनेत्याशङ्क्याह—एङ्ह्रस्वादित्यादि । डादेशे तु हे कत-रेति स्यादिति भावः । अन्यतमशब्दस्य त्विति । एवं च 'सामान्यादिष्वतमत्तमः' इत्यादिप्रयोगाः प्रामादिका एवेति भावः । अजरमिति । अविद्यमाना जरा यस्य तत् । 'गोस्त्रियोः-' इत्युपसर्जनह्रस्वे 'अतोऽम्' । परत्वादिति । अजर शि इति स्थिते

एकतरम्। सोरमादेशे कृते संनिपातपरिभाषया न जरस्, अजरम्। अजरसी–अजरे। परत्वाज्जरसि कृते झलन्तत्वान्नुम्, ३१७ सान्त महतः संयोगस्य।

---

तस्याव्युत्पन्नप्रातिपदिकत्वेन उत्प्रत्ययान्तत्वाभावेन तस्माद्डादेशो नेत्यर्थः। 'एकतरात्' इति एकतरशब्दात् स्वमोरद्डादेशे प्राप्ते आह—**एकतरादिति**। एकतरशब्दात् परयोः स्वमोरद्डादेशप्रतिषेधो वक्तव्य इत्यर्थः।

अविद्यमाना जरा यस्य कुलस्येति विग्रहे 'नञोऽस्त्यर्थानाम्–' इति बहुव्रीहौ विद्यमानपदलोपे 'गोस्त्रियोः–' इति ह्रस्वत्वे अजरशब्दः। तस्य प्रक्रियां दर्शयति—**सोरिति**। सोरमादेशे कृते अजरमित्यन्वयः। जरसादेशमाशङ्क्याह—**संनिपातेति**। अदन्तत्वनिमित्तकस्य अमः अदन्तत्वविघातकजरसादेशं प्रति निमित्तत्वायोगादिति भावः। **अजरसी इति**। 'नपुंसकाच्च' इति शीभावे जरसादेशे रूपम्। **अजरे इति**। जरसादेशाभावे रूपम्। जसि रूपं दर्शयितुमाह—**परत्वादिति**। अजर अस् इति स्थिते 'जश्शसोः शिः' इति शिभावात् परत्वाज्जरसि कृते, ततः शिभावे झलन्तत्वान्नुमित्यर्थ इति केचित्। तदेतद् 'जराया जरस्–' इति सूत्रे अजरांसीत्यत्र 'नुम्जरसोः परत्वाद् विप्रतिषेधेन जरस्' इति भाष्यविरुद्धत्वादुपेक्ष्यम्। शिभावात् पूर्वमेव परत्वात् जरसः प्रवृत्तौ हि तदा जसः सर्वनामस्थानत्वाभावेन नुम एवाप्रसक्तेः तद्-संगतिः स्पष्टैव। पूर्वविप्रतिषेधमाश्रित्य जरसः पूर्वमेव शिभावे तु तद्भाष्यं संगच्छते। तदेवं ततः पूर्वमेव शिभावे कृते तस्य सर्वनामस्थानत्वात् तस्मिन् परे नुम्जरसोः [illegible] जरस्, ततो झलन्तलक्षणो नुमित्येव व्याख्येयम्। यदि हि जरसादेशात् प्रागेव अजन्तलक्षणो नुम् स्यात्, तदा अजरन् इ इति स्थिते 'निर्दिश्यमानस्यादेशा भवन्ति' इति न्यायेन जरसि कृते 'अजरस् न' इति स्थिते सान्तसंयोगाभावात् 'सान्तमहतः–' इति वक्ष्यमाणदीर्घो न स्यादित्यादि शब्देन्दुशेखरे निर्जरशब्दनिरूपणे अत्र च प्रपञ्चितम्। उभयथापि अजरन् स् इ इति स्थिते नान्तत्वाभावात् 'सर्वनामस्थाने च–' इति दीर्घे अप्राप्ते—**सान्त महतः**। 'सर्वनामस्थाने चासंबुद्धौ' इति 'नोपधायाः' इति चानुवर्तते। नेति लुप्तषष्ठीकं पदम्। 'ढ्रलोपे पूर्वस्य–'

---

यद्यपि जरसादेशात्प्रागेव 'नपुंसकस्य झलचः' इत्यजन्तलक्षणो नुमागमः स्यात्स चाङ्गभक्तोऽङ्गमेव न व्यवदध्याद् अवयवस्य तु जराशब्दस्य व्यवधायक एवेति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति, तथापि यस्मादन्त्यादचः परस्तस्यैवान्तावयवो मित्स्यादिति स्वमते त्ववयवावयवः समुदायस्याप्यवयव इत्यभ्युपगमेन कथंचिज्जरसादेशे जातेऽपि सान्तत्वाभावात् 'सान्त महतः–' इति दीर्घो न स्यादिति भावः। **सान्त महतः**। अत्र 'नोपधायाः' 'सर्वनामस्थाने चासंबुद्धौ' इत्यनुवर्तते। सान्तेति

( ६-४-१० ) सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। अजरांसि, अजराणि। अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस्, ततः संनिपातपरिभाषया न लुक्—अजरसम्, अजरम्। अजरसी, अजरे। अजरांसि, अजराणि। शेषं पुंवत्। 'पद्दन्-' (सू २२८) इति हृदयोदकास्यानां हृद् उदन् आसन्। हृन्दि। हृदा, हृद्भ्यामित्यादि। उदानि। उद्ना, उदभ्यामित्यादि। आसानि। आस्ना। आसभ्यामित्यादि। मांसि। मांसा,

---

इत्यतो दीर्घ इत्यनुवर्तते। नकारस्य उपधाया दीर्घ इति लभ्यते। संयोगस्येत्यवयवषष्ठ्यन्तं नकारे अन्वेति। सान्तेति षष्ठ्यन्तं पृथक्पदम्। आर्षः षष्ठ्या लुक्। सान्तस्येति लभ्यते। तच्च संयोगे अभेदेनान्वेति—सान्तो यः संयोग इति। अत एवासामर्थ्यान्महच्छब्देन तस्य न समासः। महत इत्यप्यवयवषष्ठ्यन्तम्, तच्च नकारे अन्वेति। तदाह—**सान्तसंयोगस्येत्यादिना**। **अजरांसीति**। दीर्घे सति 'नश्चापदान्तस्य-' इत्यनुस्वारः। अत्र उपधाया इति पूर्वत्वमात्रोपलक्षणम्, पारिभाषिकोपधात्वस्यासंभवात्। अथ द्वितीयैकवचने रूपं दर्शयितुमाह—**अमि लुक इति**। अजर अम् इति स्थिते 'स्वमोर्नपुंसकात्' इति लुक् प्राप्तः, तं बाधित्वा तदपवादः 'अतोऽम्' इत्यम्भावः प्राप्तः, तं बाधित्वा 'विप्रतिषेधे परम्-' इति परत्वाज्जरस्। **अजरसमिति**। वस्तुस्थितिकथनमेतत्। ननु लुगपवादस्याम्भावस्य जरसादेशेन बाधितत्वाद् 'अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिः' इति न्यायेन अमो लुक् कुतो न स्यादित्यत आह—**तत इति**। ततो न लुगित्यन्वयः, जरसादेशानन्तरं अमो लुङ् न भवतीत्यर्थः। कुत इत्यत आह—**संनिपातेति**। अम्संनिपातमाश्रित्य प्रवृत्तस्य जरसः तल्लुकि निमित्तत्वाभावादिति भावः। **शेषं पुंवत्**। अजरसा, अजरेण। अजरसे, अजराय। अजरसः, अजरात्। अजरसः, अजरस्य। अजरसोः, अजरयोः। अजरसि, अजरे।

हृदयोदकास्यशब्दाः सुटि ज्ञानवत्। शसादौ विशेषमाह—**पद्दन्निति**। **हृन्दीति**। हृदयशब्दात् शसः शिभावे हृदादेशे 'नपुंसकस्य झलचः' इति झकारात् परतो नुमि 'नश्चापदान्तस्य-' इत्यनुस्वारे तस्य परसवर्णे नकारे रूपम्। **इत्यादीति**। हृदे। हृदः। हृदः, हृदोः, हृदाम्। हृदि, हृदोः, हृत्सु। हृदभावपक्षे ज्ञानवत्। उदकशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह—**उदानीति**। शसः शिभावे उदन्नादेशे 'सर्वनामस्थाने च-' इति दीर्घः। 'अल्लोपोऽनः' इति तु न, शेः सर्वनामस्थानत्वात्। **उद्नेति**। उदक आ इति स्थिते उदन्नादेशे अल्लोपः। **उदभ्यामिति**। उदन्नादेशे

संयोगान्तस्येत्यनेन समानाधिकरणमिति व्याचष्टे—**सान्तसंयोगस्येत्यादि**। **तस्योपधाया इति**। तत्पूर्वस्येत्यर्थः। **अमि लुकोऽपवादमित्यादि**।

मान्भ्यामित्यादि। वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम्। अत एव भाष्ये 'मांस्पचन्या उखायाः' इत्युदाहृतम्। अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न।

---

'न लोपः प्रातिपदिकान्तस्य' इति नलोपः, 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात्। इत्यादीनि। उद्ने। उद्नः। उद्नः। उद्नोः। उदनि, उद्नि। उद्नोः। उदन्नभावपक्षे ज्ञानवत्। आस्यशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह—आसानीत्यादि। उदन्नादेशवद्रूपाणि। इत्यादीनि। आस्ना। आस्नः। आस्नः। आस्नोः। आस्नि, आसनि। आस्नोः। आससु। आसन्नभावपक्षे ज्ञानवत्। मांसशब्दोऽपि सुटि ज्ञानवत्। 'मांसपृतनासानूनाम्—' इति शसादौ मांस्-आदेशः। अत्र नकारस्य 'नश्चापदान्तस्य—' इति कृतानुस्वारस्य निर्देशः। अत एवाह—मान्भ्यामिति। मांस्-आदेशे सकारस्य संयोगान्तलोपे सति निमित्तापायाद् अनुस्वारनिवृत्तौ रूपम्। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। अथ सुब्यपि हृदाद्यादेशं साधयितुमाह—वस्तुतस्त्विति। इत्युक्तमिति। 'ककुद्दोषणी' इति भाष्यप्रयोगात् प्रभृतिग्रहणस्य प्रकारार्थत्वम् अजन्तपुंल्लिङ्गाधिकारे स्वयमुक्तमित्यर्थः। ननु प्रभृतिग्रहणस्य प्रकारार्थत्वेऽपि प्रत्ययत्वेन सादृश्यविवक्षायां प्रथमैकवचने 'हृत्' इति प्रयोगोऽनुपपन्नः, सोर्लुका लुप्तत्वेन प्रत्ययलक्षणस्याप्यभावात्, तदनित्यत्वाश्रयणे च मानाभावादित्यत आह—अत एवेति। मांस्पचन्या इति। पच्यते अस्यामुखायामिति पचनी, अधिकरणे ल्युट्, अनादेशः, टित्त्वाद् ङीप्, मांसस्य पचनीति षष्ठीसमासः। अत्र ङसो लुका लुप्तत्वात् प्रत्ययलक्षणाभावे प्रत्ययपरत्वाभावाद् मांस्-आदेशो न स्यात्। अतो हृदाद्यादेशविधौ 'न लुमता—' इति निषेधस्यानित्यत्वमाश्रीयत इत्यर्थः। ननु मांस्पचन्या इत्यत्र अन्तर्वर्तिनं ङसं लुप्तमाश्रित्य मांस् इत्यस्यास्ति पदत्वम्, 'सुप्तिङन्तम्—' इति पदसंज्ञायाः प्रकृतिप्रत्ययधर्मत्वेन केवलाङ्गधर्मत्वाभावेन अत्र 'न लुमता—' इति निषेधस्याप्रवृत्तेः। अन्यथा राजपुरुष इत्यत्र कथं नलोपः। ततश्चात्र सकारस्य संयोगान्तलोपो दुर्वार इत्यत आह—भत्वात् संयोगान्तलोपो नेति। ननु यजादिस्वादिप्रत्यये परे विधीयमानाया भसंज्ञायाः केवलाङ्गधर्मत्वात् तत्र लुका लुप्ते प्रत्ययलक्षणनिषेधात् कथमिह भसंज्ञेत्यत आह—अयस्मयादित्वेनेति।

---

एतेन स्वमोरमादेशे कृते वा जरसिति प्राचो ग्रन्थः प्रत्युक्तः। मांस्पचन्या इति। पच्यतेऽस्यामिति पचनी। 'करणाधिकरणयोश्च' इति ल्युट्। टित्वान्ङीप्। मांसस्य पचनी मांस्पचनी। अत्र ङसो लुका लुप्तत्वात् प्रत्ययलक्षणं नेति प्रभृतिग्रहणस्य प्रकारार्थत्वं विना मांसशब्दस्य मांस्यादेशो न सिध्येदिति भावः। ननु पृषोदरादिसूत्रे 'मांसस्य पचि युड्घञोः' इति वक्ष्यमाणत्वादन्तलोपेनाप्येतद्रूपं सिद्धमिति चेत्।

'पद्दन्–' ( सू २२८ ) इत्यत्र हि 'छन्दसि' इत्यनुवर्तितं वृत्तौ, तथापि 'अपो भि' (सू ४४२) इत्यत्र 'मासश्छन्दसि' ( वा ४६३४ ) इति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचित्–इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् ॥ इत्यदन्ताः ॥ **२६८ ह्रस्वो नपुंसके प्रातिपदिकस्य । ( १-२-४७ )** क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् । श्रीपं ज्ञानवत् । श्रीपाय । अत्र

---

छन्दसि–इत्येतस्य अव्यवहितपूर्वोक्तत्वात् 'अयस्मयादीनि छन्दसि' इति सन्निध्यर्थः । वृत्ताविति—**वृत्तावित्यर्थेति** । 'पद्दन्–' इति सूत्रे 'शीर्षंश्छन्दसि' इत्यतः छन्दसीत्यनुवृत्तिः वृत्तिकृता दर्शितेत्यर्थः । तदर्थ वैदिकप्रक्रियायामेव तदुपन्यासो युज्यत इत्याशयः । परिहरति—**तथापीति** । 'पद्दन्–' इति सूत्रे छन्दोग्रहणानुवृत्तावपि लोकेऽपि क्वचिदित्यन्वयः । कुतो लोकेऽपि प्रयोग इत्यत आह—**अपो भीत्यादीति** । 'अपो भि' इति सूत्रम् । अपस्तकारः स्याद् भादौ प्रत्यये परे इत्यर्थः । तत्रास्ति वार्तिकम्—'मासश्छन्दसि' इति । मास् इत्यस्य तकारः स्याद् भादिप्रत्यये परे छन्दसि–इति तदर्थः । ऋग्वेदे 'माद्भिः शरद्भिः' इत्यादिरस्य उदाहरणम् । यदि 'पद्दन्–' इति छन्दोमात्रविषयं स्यात्, तदा मास् इत्यादेशस्य छन्दोमात्रविषयत्वादलौकिकत्वाद् 'मासश्छन्दसि' इति तस्य तकारविधौ छन्दोग्रहणं व्यर्थं स्यात् । अतो लोकेऽपि क्वचिदिति कैयटोक्तरीत्या 'पद्दन्–' इत्यस्य लोकेऽपि प्रवृत्तिमनुमेत्य पदाद्यादेशाः प्रयोक्तुं योग्या इत्यर्थः ॥इत्यदन्ताः॥

**अथ आदन्ता निरूप्यन्ते** । श्रियं पातीति श्रीपाशब्दो विश्वपाशब्दवद् विजन्तः क्विबन्तो वा । तस्य नपुंसकत्वे ह्रस्वविधानमाह—**ह्रस्वो नपुंसके** । ह्रस्वश्रुत्या उपस्थितेन 'अचः' इत्यनेन प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह—**क्लीब** इति । न च कुले इति द्विवचने एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् अजन्तप्रातिपदिकत्वाद् ह्रस्वः स्यादिति वाच्यम्, 'अर्थवदधातुः–' इत्यतः प्रातिपदिकग्रहणानुवृत्तौ पुनः प्रातिपदिकग्रहणेन अन्तवद्भावेन प्रातिपदिकत्वे ह्रस्वाभावबोधनात् । **ज्ञानवदिति** । ह्रस्वविधानाद् दीर्घान्तत्वप्रयुक्तं न कार्यविशेष इति भावः । 'जश्शसोः शिः' श्रीपाणीति रूपम्, भिन्नपदस्थत्वेऽपि 'एकाजुत्तरपदे णः' इति णत्वप्रवृत्तेः । श्रीपेण, इनादेशे गुणे तस्य पूर्वान्तत्वादुत्तरपदस्य एकाच्त्वात् स्यादेव णत्वम् । **श्रीपायेति** । श्रीपाशब्दस्य 'ह्रस्वो नपुंसके–' इति ह्रस्वत्वे ङेर्यादेशे 'सुपि च' इति दीर्घे

---

अत्राहुः—'पृषोदरादीनि यथोपदिष्टम्' इत्यस्योत्तरपदाधिकारस्थत्वाल्ल्युडन्तं यदुत्तरपदं मांसपचनमित्यादि तत्रैवान्तलोपः स्यात् । अत्र हि क्विबन्तमुत्तरपदं न तु ल्युडन्तमिति नास्त्येवान्तलोप इति । **मासश्छन्दसीति** । मास्शब्दस्य तकारः स्याद्भादौ

---

१ 'मनुष्यस' क ।

संनिपातपरिभाषया 'आतो धातोः' (सू २४०) इत्याकारलोपो न ॥ इत्यादन्ताः ॥

**३१९ स्वमोर्नपुंसकात् ।** ( ७-१-२३ ) क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् ।

---

रूपम् । संनिपातपरिभाषा तु कष्टायेति निर्देशाद् न प्रवर्तत इति प्रागुक्तम् । नन्वत्र ह्रस्वत्वे कृतेऽपि पा इत्यस्य एकदेशविकृतन्यायेन धातुत्वानपायाद् दीर्घे कृते आकारान्तत्वाच्च 'आतो धातोः' इत्याल्लोपः स्यात्, यादेशस्य स्वतो यकारादितया स्थानिवत्त्वेन स्वादिप्रत्ययतया च तस्मिन् परे सत्त्वस्यापि सत्त्वादित्यत आह—**अत्र संनिपातेति ।** ननु उपजीव्यविघातकं प्रति उपजीवकं निमित्तं न भवतीति संनिपातपरिभाषया लभ्यते, प्रकृते च अदन्तमुपजीव्य प्रवृत्तस्य यादेशस्य आल्लोपं प्रति कथं न निमित्तत्वम् । यादेशस्य आकारमुपजीव्य प्रवृत्तत्वाभावेन आकारलोपं प्रति निमित्तत्वे बाधकाभावादिति चेत्, मैवम्—यादेशस्तावद् ह्रस्वमवर्णमुपजीव्य प्रवर्तते, तद्विधावत इत्यनुवृत्तेः । ततश्च ह्रस्वत्वमवर्णत्वं च समुदितं यादेशस्य उपजीव्यम् । तत्र कष्टायेति निर्देशात् संनिपातपरिभाषां बाधित्वा कृतेऽपि दीर्घे ह्रस्वत्वांश एव निवृत्तः, अवर्णत्वांशस्त्वनुवृत्त एव । तस्याप्याल्लोपेन निवृत्तौ उपजीव्यविघातः स्यादेवेति भवत्येव संनिपातपरिभाषाविरोधः । अतो न भवत्याल्लोप इति कौस्तुभे समाहितम् 'इको गुणवृद्धी' इत्यत्र । वस्तुतस्तु 'आतो धातोः' इत्यत्र लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्त एवाकारान्तधातुर्गृह्यते । इह तु पाधातोर्ह्रस्वत्वे पुनर्दीर्घे सति अवगम्यमानं आन्तत्वं लाक्षणिकमेवेति न तस्यात्र ग्रहणमित्यास्तां तावत् ॥ इत्यादन्ताः ॥

**अथ इदन्ता निरूप्यन्ते ।** अथ वारिशब्दप्रक्रियां दर्शयितुमाह । **स्वमोर्नपुंसकात् ।** 'षड्भ्यो लुक्' इत्यतो लुगित्यनुवर्तत इत्याह—**क्लीबादित्यादिना ।**

---

प्रत्यये छन्दसीति वार्तिकार्थः । 'मातृभिः शरद्भिः दुरोदरं तव' इत्युदाहरणम् । **ह्रस्वो नपुंसके ।** इह ह्रस्वश्रुत्योपस्थितेनाच इत्यनेन प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**अजन्तस्येति ।** प्रातिपदिकस्याच इति वैयधिकरण्येन व्याख्यायां तु सुवाक् ब्राह्मणकुलमित्यत्रातिप्रसङ्गः स्यात् । एतच्च 'अचश्च' इति सूत्र एवास्माभिः स्पष्टीकृतम् । प्रातिपदिकस्येति किम्, काण्डे । कुड्ये । **ज्ञानवदिति ।** श्रीपाण्यादौ 'एकाजुत्तरपदे–' इति णत्वं तु विशेषः । श्रीपेत्यत्रापीनादेशेन सहाद्गुणे कृते एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अचः परस्मिन्–' इति सूत्रे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षाश्रयेण स्थानिवत्त्वाद्वा एकाजुत्तरपदत्वमस्तीति स्यादेव णत्वम् । **संनिपातेति ।** अवर्णमाश्रित्य कृतो यादेशः कथमवर्णलोपे निमित्तं स्यात् । न च 'सुपि च' इति दीर्घार्थं संनिपातपरिभाषाया अनित्यत्वाभ्युपगम आवश्यक एवेति वाच्यम् । 'कष्टाय–' इति निर्देशेन दीर्घविधौ अनित्यत्वाभ्युपगमेऽप्यवर्णलोपे कार्ये तदनभ्युपगमात् । कृते-

वारि । ३२० इकोऽचि विभक्तौ । ( ७-१-७३ ) इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारिणी । वारीणि । 'न लुमता–' ( सू २६३ ) इति निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः, हे वारे, हे वारि । 'आङो ना–' ( सू २४४ ) वारिणा । 'घेर्ङिति' ( सू २४५ ) इति गुणे प्राप्ते—'वृद्ध्यौत्त्वतृज्वद्भाव-

---

वारीणि । नोग्मश्च लुकि रूपम् । न च 'आदेः परस्य' इति अमः अकारस्यैव लुक् स्यात्, न तु नकारस्यापीति शङ्क्यम् । प्रत्ययस्य लोप एव हि लुगित्युच्यते । अम् इति समुदाय एवेह प्रत्ययः, न तु तदेकदेशभूतमकारमात्रम् । अतो लुग् अमः सर्वादेश एव भवति । इकोऽचि । 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते । 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येत्यनुवर्तते । अङ्गस्येत्यधिकृतम् इका विशेष्यते, तदन्तविधिः । तदाह—इगन्तस्येत्यादिना । अचि विभक्ताविति । अजादौ विभक्ताविसर्थः । 'इकोचि सुपि' इत्येव सुवचम् । विभक्तौ किम्, मधु नयम्, तस्येदं माधवम् । अणि परे नुमि टिलोपे माधमिति स्यात् । वारिणी इति । वारि औ इति स्थिते शीभावे, नुमि, 'अट्कुप्वाङ्–' इति णत्वे रूपम् । वारीणि इति । जश्शसोः शिभावे, नुमि, 'सर्वनामस्थाने च–' इति दीर्घे, णत्वे रूपम् । हे वारि सु इत्यत्र सोर्लुकि प्रक्रियां दर्शयति—पक्ष इति । 'ह्रस्वस्य गुणः' इति सम्बुद्धिनिमित्तको गुणः कदाचिद्भवतीत्यर्थः । नन्विह सम्बुद्धेर्लुका लुप्तत्वाद् 'न लुमता–' इति प्रत्ययलक्षणनिषेधात् कथं गुण इत्यत आह—न लुमतेति निषेधस्यानित्यत्वादिति । अत्र च 'इकोऽचि विभक्तौ' इत्यत्राज्ग्रहणं ज्ञापकम् । हलादिषु भ्यामादिषु सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्य' इति तस्य लोपसम्भवादचीति व्यर्थम् । न च सम्बुद्धिव्यावृत्त्यर्थम् अज्ग्रहणम्, तत्र नुमि सति 'न ङिसम्बुद्ध्योः' इति निषेधे सति नकारश्रवणप्रसङ्गादिति वाच्यम्, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरेवाभावात् । 'न लुमता–' इति निषेधस्यानित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुमज्ग्रहणम् अर्थवदिति भवत्यज्ग्रहणं 'न लुमता–' इत्यस्यानित्यत्वे लिङ्गमित्याहुः । अत एव 'इकोचि–' इति सूत्रे हे त्रपो इति 'एङ्ह्रस्वात्–' इति सूत्रे हे त्रपु इति च भाष्यं संगच्छते । आङो नेति । रूपे विशेषाभावेऽपि नुमपेक्षया परत्वेन नाभावस्यैव न्याय्यत्वादिति भावः । ङसिङसोर्विशेषमाह—घेरिति । नुमं बाधित्वा परत्वाद् गुणे प्राप्त इत्यर्थः । वृद्ध्यौत्त्वेति ।

---

ऽपि दीर्घे ह्रस्वव्यक्त्यपायेऽप्यत्वजातेरनपायादिति दिक् । एतेन श्रीपशब्दान्ङयि श्रीप्येति केषांचिद्व्याख्यानं परास्तम् । स्वमोर्नपुंसकात् । अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः । परत्वाद्धि त्यदाद्यत्वे 'तदोः–' इति सत्वे सोरम्भावे च संकुलमिति स्यात् । इष्यते तु तत् कुलमिति । इकोऽचि । विभक्तौ किम्, मधु

गुणेभ्यो नुम् पूर्वविप्रतिषेधेन' ( वा ४३७३ )। वारिणे। वारिणः। वारिणोः। 'नुमचिर-' ( वा ४३७४ ) इति नुट्। 'नामि' ( सू २०९ ) इति दीर्घः। वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत्। ३२९ **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य**। ( ७-१-७४ ) प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं

---

वार्त्तिकम्। वृद्ध्यादीनां क्रमेण सख्यौ, हरौ, क्रोष्टा, हरये—इत्यवकाशः। नुमोऽवकाशः वारिणी इति। अतिसखीनि इत्यत्र उभयप्रसक्तौ 'सख्युरसंबुद्धौ' इति णित्वाद् वृद्धिः परत्वाद् नुमं बाधित्वा प्राप्ता, वारिणि इत्यत्र ङौ तु 'अच्च घेः' इत्यौत्त्वं प्राप्तम्, प्रियक्रोष्टूनि इत्यत्र नपुंसके तृज्वत्त्वं प्राप्तम्, वारिशब्दात् ङयादौ गुणः प्राप्तः, अत्र पूर्वविप्रतिषेधान्नुमेवेत्यर्थः। **वारिणे इति**। ङयि गुणं बाधित्वा नुमि णत्वे रूपम्। **वारिण इति**। ङसिङसोर्गुणं बाधित्वा नुमि णत्वे रूपम्। **वारिणोरिति**। ओसि यणं बाधित्वा नुमि णत्वे रूपम्। वारि आमित्यत्र परत्वान्नुटं बाधित्वा नुमि प्राप्ते आह—**नुमचिरेति नुडिति**। नुम्नुटोः को विशेष इत्यत आह—**नामीति दीर्घ इति**। नुमि तु सति तस्याङ्गभक्तत्वाद् 'नामि' इति दीर्घो न स्यादिति भावः। **वारिणीति**। ङौ 'अच्च घेः' इत्यौत्त्वं परमपि बाधित्वा 'वृद्ध्यौत्व-' इति पूर्वविप्रतिषेधान्नुम्। न विद्यते आदिः उत्पत्तिः यस्य सः अनादिः ईश्वरः। अनादिः अविद्या। अनादि ब्रह्म। त्रिलिङ्गोऽयं विशेष्यनिघ्नः। तस्य नपुंसकत्वे प्रथमाद्वितीययोर्वारिवद्रूपाणि। टादिषु अचि विशेषमाह—**तृतीयादिषु**। भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तद् भाषितपुंस्कम्, तदस्यास्तीति अर्शआद्यच्। शब्दस्वरूपम् विशेष्यम्। पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तकमिति यावत्। 'इकोऽचि विभक्तौ' इत्यत इकोऽचीति 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येति चानुवर्तते। षष्ठी च प्रथमया विपरिणम्यते। तदाह—**प्रवृत्तिनिमित्तैक्य इत्यादिना**। **पुंवद्वेति**। गालव-

---

मतं तस्येदं माधवम्। अत्र नुमि सति टिलोपः स्यात्। **वृद्ध्यौत्वेति**। अतिसखीनीत्यत्र 'सख्युरसंबुद्धौ' इति णिद्वद्भावाद् वृद्धिः प्राप्ता, वारिणीत्यत्र तु 'अच्च घेः' इत्यौत्वम्, प्रियक्रोष्टूनीत्यादौ तृज्वद्भावः प्राप्तः। ननु नुम्नुटोः को विशेषस्तत्राह—**नामीति दीर्घ इति**। नुमस्त्वङ्गभक्तत्वात्तस्मिन्सति दीर्घो न स्यादिति भावः। **तृतीयादिषु**। यद्यत्र भाषितः पुमान् येन शब्देन स भाषितपुंस्कः शब्द इति विज्ञायेत, तदा पीलुने इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे—**प्रवृत्तिनिमित्तैक्य इति**। अयं भावः—भाषितः पुमान् यस्मिन् अर्थे तद् भाषितपुंस्कं प्रवृत्तिनिमित्तम्, तदस्यास्तीति अर्शआदित्वादच्। तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्द-

क्लीबं पुंवद्वा स्याट्टादावचि । अनादृये, अनादिने-इत्यादि । शेषं वारिवत् । पीलु-वृक्षः, तत्फलं पीलु, तस्मै पीलुने । अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात् । **२२२ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।** ( ७-१-७५ ) एषामनङ् स्याट्टादावचि,

प्रकृत[illegible] **अचीति** [illegible]तत्वश्च पुंवत्त्वे ह्रस्वनुमोरभावः फलति । घटपटादिशब्दास्तु घटत्वपटत्वादिविशेषेणैव तत्तद्व्यक्तिं प्रत्याययन्ति, न तु द्रव्यत्वपृथिवीत्वादिसामान्येन [illegible] विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रवर्तन्ते, तद्विशेषणं प्रवृत्तिनिमित्तमित्युच्यते, वाच्यतावच्छेदकमिति यावत् । एवं च नपुंसकत्वे पुंस्त्वे च तस्य एकत्वेन वाच्यतावच्छेदकम्, तत् शब्दस्वरूपं भाषितपुंस्क-शब्देन विवक्षितम् । अनादिशब्दस्य उत्पत्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुंन-पुंसकानां व्यक्तिप्रत्यायकत्वं इति भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वम् । अतस्तस्य टादावचि पुंवत्त्वविकल्प इत्यभिप्रेत्योदाहरति—**अनादृये, अनादिने इति** । पुंव-त्वे नुमः अप्रवृत्तेः 'घेर्ङिति' इति गुणः । पुंवत्त्वाभावे तु नुमिति भावः । **इत्यादीति** । अनादेः, अनादिनः । अनाद्योः, अनादिनोः । आमि तु अनादीनाम् इत्येव । **शेषं वा-रिवदिति** । प्रथमाद्वितीययोः भ्यामादौ हलि च वारिवदित्यर्थः । प्रवृत्तिनिमित्तैक्ये इत्यस्य प्रयोजनं दर्शयितुमाह—**पीलुर्वृक्ष इत्यादि** । यदा वृक्षविशेषः पीलुशब्द-वाच्यः, तदा पुंल्लिङ्गः पीलुशब्दः । यदा पीलुजन्यफलं पीलुशब्दवाच्यम्, तदा नपुंसक-लिङ्गः । 'फले लुक्' इत्यणो लुक् । अत्र फले वाच्ये पुंवत्त्वं नेत्यर्थः । कुत इत्यत आह—**प्रवृत्तिनिमित्तभेदादिति** । वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं वृक्ष-विशेषे वाच्ये प्रवृत्तिनिमित्तम् । फलविशेषे तु वाच्ये फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तमिति प्रवृत्तिनिमित्तभेदादित्यर्थः ।

तदुक्तम्—'पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे ।
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥' इति ।

अस्थि, दधि, सक्थि, अक्षि एतेषां प्रथमाद्वितीययोर्वारिवद्रूपाणि । टादावचि विशेषमाह—**अस्थिदधि** । तृतीयादिष्विति अचीति चानुवर्तते, तदाह—**एषामित्यादिना** । नुमोऽपवादः । अनङि ङकार इत्, अकार उच्चारणार्थः । ङित्त्वा-

---

स्वरूपं तल्लभ्यत इति । 'इकोऽचि विभक्तौ' इत्यतोऽचीत्यनुवर्तनादाह—**टादावचीति** । इगन्तं किम्, सोमपेन कुलेन, अचि किम्, ग्रामणिभ्यां कुलाभ्याम् । टादौ किम्, अनादिनी । अनादीनि । **तत्फलमिति** । पीलोः फलं पीलु । 'फले लुक्' इति अण्यो लुक् । **प्रवृत्तिनिमित्तभेदादिति** । पीलुशब्दस्य हि वृक्षत्वव्याप्यजाति-र्वृक्षे प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा । उभयथापि

स चोदात्तः । 'अल्लोपोऽनः' (सू २३४) । दध्ना । दध्ने । दध्नः । दध्नः, दध्नोः, दध्नाम् । दध्नि, दधनि । दध्नोः । शेषं वारिवत् । एवमस्थिसक्थ्यक्षीणि । तदन्तस्याप्यनङ् । अतिदध्ना ॥ इति इदन्ताः ॥ **सुधि, सुधिनी, सुधीनि । हे सुधे, हे सुधि । सुधिया, सुधिना । सुधियाम्, सुधीनाम् । प्रध्या, प्रधिना** ॥ इति ईदन्ताः॥

इत्यादेशः । **दध्नि, दधनि इति** । 'विभाषा ङिश्योः' इत्यल्लोपविकल्प इति भावः । **तदन्तस्यापीति** । अङ्गत्वादिति भावः । **अतिदध्नेति** । दधि अतिक्रान्तं कुलमतिदधि । अत्रापि नपुंसकत्वेऽपि संबध्यते । ततश्च धात्वः 'आदृगमहन—' इति किप्रत्यये दधिशब्दस्य पुंस्त्वे दधिनेत्येव । नपुंसकत्वेऽपि पृथगागमस्थ्यादिभिरेवान्वेति । तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम् ॥ इति इदन्ताः ॥

**अथ ईदन्ता निरूप्यन्ते** । सु ध्यायतीति, सु शोभना धीर्यस्येति वा विग्रहे सुधीशब्दस्य 'ह्रस्वो नपुंसके—' इति ह्रस्वत्वे वारिवद्रूपाणीत्याह । **सुधि, सुधिनी इत्यादि** । परत्वान्नुमा इयङ् बाध्यत इति भावः । **सुधिया, सुधिनेति** । सुध्यातृत्वस्य शोभनज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च एकत्वात् पुंवत्त्वविकल्पः । एवं प्रधीशब्दः । तत्र 'न भूसुधियोः' इति निषेधाभावाद् 'एरनेकाचः—' इति यण् ॥ इति ईदन्ताः ॥

पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तमिति भावः । **अस्थिदधि** । 'इकोऽचि—' इति नुमि प्राप्ते विधिरयम्, नकारादकार उच्चारणार्थः । ङकारस्त्वन्तादेशार्थः । 'नब्विषयस्यानिसन्तस्य' इति फिट्सूत्रेणास्थ्यादय एते आद्युदात्ताः । तत्रान्तस्यानुदात्तेकारस्य विधीयमानोऽनङ् 'स्थानेऽन्तरतमः' इत्यनुदात्तः स्यादित्युदात्त उच्यते, तच्चोदात्तत्वमस्थनि दधनि इत्यादावल्लोपाभावपक्षे स्फुटम्, दध्ना, दध्ने इत्यादावनङोऽकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं प्रयोजनमिति बोध्यम् । तृतीयादिष्वित्यनुवर्तते अचीति च, तदाह— टादौ किम्, दधिनी । दधीनि । अचि किम्, दधिभ्याम् । **तदन्तस्यापीति** । अङ्गत्वादिति भावः । **अतिदध्नेति** । दधि अतिक्रान्तेनेत्यर्थः । स्त्रियामतिदध्नेत्येव । संनिपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः । प्राचा तु प्रियदध्ना ब्राह्मणेनेत्युक्तम् । स्त्रियां तु प्रियदध्न्या, प्रियदध्न्यै इत्याद्यपि कैश्चिदुक्तम् । तदसत् । उरःप्रभृतिषु दधिशब्दस्य पाठाद्बहुव्रीहौ नित्यं कप्यनङः प्रसक्त्यभावात् । उक्तपरिभाषाभ्यां ङीपः प्रवृत्तेर्दुर्ग्रापत्वाच्चेति दिक् । **सुधिनी इति** । परत्वान्नुमा इयङ् बाध्यते । **सुधियेति** । शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् 'तृतीयादिषु—' इति पुंवत्पक्षे नुमभावात् 'न भूसुधियोः' इति यणिनिषेधाच्चेयङ् । **प्रध्येति** । अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुं

मधु , मधुनी , मधूनि । हे मधो, हे मधु। एवमम्ब्वादयः । सानुशब्दस्य स्नुर्वा स्नूनि, सानूनि । प्रियक्रोष्टु , प्रियक्रोष्टुनी । तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम् । प्रियक्रोष्टूनि । टादौ पुंवत्पक्षे-प्रियक्रोष्ट्रा, प्रियक्रोष्टुना । प्रियक्रोष्ट्रे, प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । 'नुम्-

---

**अथ उदन्ता निरूप्यन्ते । मध्विति** । 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च' इति कोशान्मधुशब्दस्य पुंनपुंसकयोः मद्यत्ववसन्तत्वादिरूपप्रवृत्तिनिमित्तभेदाद् न पुंवत्त्वविकल्पः । मृद्वीकाविकारवाचिनो मधुशब्दस्य तु नित्यनपुंसकत्वान्न पुंवत्त्वमिति विवेकः । **सानुशब्दस्य स्नुर्वेति** । 'पद्दन्-' इति सूत्रे 'मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः' इति वार्तिकादिति शेषः । **स्नूनि, सानूनीति** । शसि रूपम् । शसादावेव स्नुविधेः । प्रभृतिग्रहणस्य प्रकारार्थत्वे सुप्यपि स्नुर्भवति । अस्य च 'स्नुः प्रस्थः सानुरस्त्रियाम्' इति पुंनपुंसकत्वाद् भाषितपुंस्कत्वादस्त्येव पुंवत्त्वविकल्पः । **प्रियक्रोष्टु, प्रियक्रोष्टुनी इति** । प्रियः क्रोष्टा यस्येति विग्रहः । असर्वनामस्थानत्वान्न तृज्वत्त्वम् । अथ जश्शसोः शिभावे सति सर्वनामस्थानत्वाद् नुमं बाधित्वा परत्वात् तृज्वत्त्वे प्राप्ते आह—**तृज्वद्भावादिति** । 'वृद्धयौत्त्व-' इति वार्तिकादिति भावः । **प्रियक्रोष्टूनीति** । जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च-' इति दीर्घे रूपम् । न च नित्यत्वादेव नुम्सिद्धेः किं पूर्वविप्रतिषेधेनेति वाच्यम्, नित्यत्वान्नुमि कृतेऽपि 'तदागमाः-' इति न्यायेन 'तृज्वत्क्रोष्टुः' इत्यत्र नुम्विशिष्टस्य ग्रहणापत्तौ पुनस्तृज्वत्त्वापत्तेः । पूर्वविप्रतिषेधमाश्रित्य तृज्वत्त्वं बाधित्वा नुमि कृते तु न पुनस्तृज्वत्त्वम्, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायादित्यलम् । **पुंवत्पक्ष इति** । तत्रापि तृज्वत्त्वपक्ष इत्यर्थः । **प्रियक्रोष्ट्रेति** । पुंवत्त्वे तृज्वत्त्वे च सति रूपम् । अनपुंसकत्वान्न नुम् । **प्रियक्रोष्टुनेति** । पुंवत्त्वे तदभावे च तृज्वत्त्वाभावे रूपम् । पुंवत्वाभावपक्षेऽपि नुमं बाधित्वा परत्वान्नात्वमेव । **प्रियक्रोष्ट्रे इति** । पुंवत्त्वे तृज्वत्त्वे यण् । अनपुंसकत्वान्न नुम् । **प्रियक्रोष्टवे इति** । पुंवत्त्वे तृज्वत्त्वाभावे रूपम् । **अन्यत्रेति** । पुंवत्त्वाभावपक्ष इत्यर्थः । **प्रियक्रोष्टुनेति** । पुंवत्त्वतृज्वत्त्वयोरभावे रूपम् । तथा च त्रीणि रूपाणि ।

---

क्रमेवेति भाषितपुंस्कत्वात्तृतीयादिष्विति पुंवत्पक्षे यण् । नपुंसकपक्षे तु नुमिति बोध्यम् । बह्व्यः श्रेयस्यो यस्य तद्बहुश्रेयसी कुलमित्यत्र नपुंसकह्रस्वत्वं न । ईयसो बहुव्रीहेर्नेति ह्रस्वमात्रस्य प्रतिषेधादित्येके । अन्ये तूपसर्जनह्रस्व एव निषिध्यते । नपुंसकह्रस्वत्वं तु स्यादेव । बहुश्रेयसि बहुश्रेयसिनी इत्याहुः । **मध्विति** । 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च' । इह पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति, किं तु मधुत्ववसन्तत्वादिरूपं

---

१ 'यदागमाः' इति युक्तं वक्तुम् ।

**अचिर-' (वा ४३७४) इति नुट्। प्रियक्रोष्टूनाम्॥इत्युदन्ताः॥ सुलु, सुलुनी, सुलूनि। पुनस्तद्वत्। सुल्वा, सुलुना॥ इत्यूदन्ताः॥ धातृ, धातृणी, धातॄणि। हे धातः, हे धातृ। धात्रा, धातृणा। एवं ज्ञातृकर्त्रादयः॥ इत्यृदन्ताः॥ ३२३ एच इग्घ्रस्वादेशे। (१-**

एवं ङसिङसोः। प्रियक्रोष्टुः, प्रियक्रोष्टोः, प्रियक्रोष्टुनः। प्रियक्रोष्ट्रोः, प्रियक्रोष्ट्रोः, प्रिय-आमि विशेषमाह—**नुमचिरेति नुडिति**। तृज्वत्त्वं नुमं च बाधित्वेति शेषः। पुंवत्त्वे तृज्वत्त्वं बाधित्वा नुट्। पुंवत्त्वाभावे तु तृज्वत्त्वं बाधित्वा नुम्, तदपि बाधित्वा नुडिति विवेकः। प्रियक्रोष्टरि, प्रियक्रोष्टौ, प्रियक्रोष्टुनि। भ्यामादौ हलि मधुवत्॥ इत्युदन्ताः॥

**अथ ऊदन्ता निरूप्यन्ते। सुल्विति**। सुष्ठु लुनातीति क्विप्। 'ह्रस्वो नपुंसके-' इति ह्रस्वः। **सुलुनी इति**। 'ओः सुपि' इति यणं बाधित्वा परत्वान्नुम्। **सुल्वेति**। शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमिति पुंवत्त्वविकल्पः। पुंवत्त्वे ह्रस्वाभावे अधित्वाद् नाभावो न, नुमभावश्च, 'ओः सुपि' इति यण्। पुंवत्त्वाभावपक्षे तु यणं बाधित्वा नुम्। ङेप्रभृतिषु तु पुंवत्त्वाभावे 'वृद्ध्यौत्व-' इति पूर्वविप्रतिषेधेन नुमि सुलुने, पुंवत्त्वे तु सुल्वे इत्यादि रूपद्वयम्॥ इत्यूदन्ताः॥

**अथ ऋदन्ता निरूप्यन्ते। धातृ इति**। दधातीति धातृ। 'न लुमता-' इति निषेधादनङ् न। **धातृणी इति**। 'इकोऽचि-' इति नुमि 'ऋवर्णान्नस्य-' इति णत्वम्। **धातॄणि इति**। जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च-' इति दीर्घे णत्वम्। 'न लुमता इति निषेधस्यानित्यत्वात् संबुद्धिनिमित्तको ह्रस्वस्य पक्षे गुण इत्याह—**हे धातः, हे धातृ इति**। धारणकर्तृत्वरूपप्रवृत्तिनिमित्तैक्यात् टादावचि पुंवत्त्वविकल्प इत्याह-**धात्रा, धातृणा इति**। धात्रे, धातृणे। धातुः, धातृणः। धात्रोः, धातृणोः। 'नुमचिर-' इति नुट्। धातॄणाम्। धातरि, धातृणि॥ इत्यृदन्ताः॥

**अथ ओदन्ता निरूप्यन्ते**। प्रकृष्टा द्यौः यस्येति बहुव्रीहौ प्रद्योशब्दस्य 'ह्रस्वो नपुंसके-' इति ह्रस्वः प्राप्नुवन् एचां ह्रस्वाभावात् तेषां द्विस्थानत्वेन अ, इ, उ, ऋ, ऌ, इत्येतेषां ह्रस्वानामन्तरतमत्वाभावाद् अन्यतरस्थानसाम्याश्रयणे अवर्णादिषु यस्य कस्यचिदनियमेन पर्यायेण वा प्राप्ताविदमारभ्यते। **एच इक्**। आदिश्यत इत्या-

भिन्नभिन्नमेव। तथा च भाषितपुंस्कत्वाभावान्मधुने, मधुनः, मधुनोरित्येव भवति, न तु मधवे, मधोरित्यादीति दिक्। **स्नुवेति**। 'मांसपृतनासानूनाम्-' इति वार्तिककारोक्त्येति भावः। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्युभयलिङ्गः सानुशब्दः, तस्य नपुंसकत्वे रूपमाह—**स्नूनि। सानूनीति**। पुंसि तु स्नून्, सानून् इत्यादि। **सुल्वेति**। शोभ-

१ 'प्रवृत्तिनिमित्तैक्यम्' इति क।

१-४८) आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। प्रद्यु, प्रद्युनी, प्रद्यूनि। प्रद्युनेत्यादि। इह न पुंवत्, यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात्। एव-

---

देशः, कर्मणि घञ्। तस्य ह्रस्वपदेन सह कर्मधारयः। विशेष्यस्यार्षः पूर्वनिपातः। आदेश इति निर्धारणसप्तमी। सौत्रमेकवचनम्। तदाह—**आदिश्यमानेष्वित्यादिना**। मध्ये इत्यपपाठः, तद्योगे षष्ठ्या एवौचित्यात्। **इगेवेति**। तेन अकारव्यावृत्तिः फलतीति भावः। यद्यपीकश्चत्वारः, एचोऽप्येवम्, तथापि स्थान्यादेशानां यथासंख्यं न भवति। न ह्ययमपूर्वविधिः, किन्तु नियमविधिः। यथाप्राप्तमेव नियम्यते। एचां हि पूर्वभागः अवर्णसदृशः, उत्तरभागस्तु इवर्णोवर्णसदृशः। तत्र पूर्वभागसादृश्यमवर्णस्यास्ति। तस्य च इग्ग्रहणेन निवृत्तौ इवर्णसादृश्यमात्रमादाय एकारस्य ऐकारस्य च इवर्णः, उवर्णसादृश्याद् ओकारस्य औकारस्य च उवर्णः—इति व्यवस्था न्यायप्राप्ता। यथाप्राप्तमेव च नियम्यत इति न यथासंख्यम्। ततश्च प्रद्योशब्दे ओकारस्य उकारो ह्रस्व इत्यभिप्रेत्योदाहरति, **प्रद्यु इत्यादि**। ननु पुंनपुंसकयोः प्रकृष्टस्वर्गवत्त्वमेकमेव प्रवृत्तिनिमित्तमिति टादौ पुंवत्त्वविकल्पः कुतो नेत्यत आह—**इह न पुंवदिति**। कुत इत्यत आह—**यदिगन्तमिति**। प्रद्योशब्द ओदन्तः पुंसि। प्रद्युशब्दस्तु उदन्तो नपुंसके। तथा च पुंसि प्रद्योशब्दस्य भाषितपुंस्कत्वेऽपि नपुंसके प्रद्युशब्दस्य तदपेक्षया भिन्नत्वेन भाषितपुंस्कत्वाभावान्न पुंवत्त्वमित्यर्थः। केचित्तु पुंसि यः प्रद्योशब्द ओदन्तः, स एवेदानीं नपुंसकः, तस्य

---

नलवनकर्तृत्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे नुमभावाद् 'ओः सुपि' इति यण्। **सुलुनेति**। यणं बाधित्वा परत्वान्नुम्। **धात्रेति**। धारणपोषणकर्तृत्वं पुंनपुंसकयोरेकमेवेति पुंवत्पक्षे यण्। **एचः**। आदिश्यत इत्यादेशः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः, निर्धारणे सप्तमी जातावेकवचनमतो व्याचष्टे—**आदिश्यमानेषु ह्रस्वेष्विति**। एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथा च मा कदाप्युकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह—**इगेव स्यादिति**। आन्तरतम्यादेकारैकारयोरिकारः, ओकारौकारयोस्तूकारः। एकारान्तस्योदाहरणं तु इः स्मृतो येन स स्मृतेः। शोभनः स्मृतेः यस्य तत् सुस्मृतीत्यादि। एतच्च परिभाषासूत्रमपार्थकम्। तथा च वार्तिककृतोक्तं 'सिद्धमेङः सस्थानत्वात्' 'ऐचोश्चोत्तरभूयस्त्वात्' इति। अस्यार्थः—शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णाविवेति सिद्धम्। एचोश्चेति चकारो भिन्नक्रम उत्तरभूयस्त्वाच्चेति हेतोरनन्तरं बोध्यः। अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामादिवद् भूयसा व्यपदेशेनापि इकारोकारौ भविष्यत इति। **प्रद्युनेति**। ननु प्रकृष्टस्वर्गवत्त्वादिकं यत्प्रवृत्तिनिमित्तं तत्

मग्रेऽपि ॥ इत्योदन्ताः ॥ **प्ररि , प्ररिणी , प्ररीणि । प्ररिणा । एकदेशविकृतस्यानन्यत्वाद् 'रायो हलि' (सू २८६) इत्यात्वम् , प्रराभ्याम् । प्रराभिः । 'नुमचिर–' (वा ४३७४) इति नुड्यात्वे प्रराणाम् इति माधवः । वस्तुतस्तु संनिपातपरिभाषया नुड्यात्वं न । 'नामि' (सू २०६) इति दीर्घस्त्वारम्भसामर्थ्यात्संनिपातपरिभाषां बाधत इत्युक्तम् । प्ररीणाम्** ॥ इत्यैदन्ताः ॥ **सुनु , सुनुनी , सुनूनि । सुनुना । सुनुने–इत्यादि** ॥ इत्यौदन्ताः ॥

॥ **इत्यजन्तनपुंसकलिङ्गप्रकरणम्** ॥

---

ह्रस्वान्तत्वेऽपि एकदेशविकृतस्यानन्यत्वात् । अतः पुंवत्त्वविकल्पोऽस्त्येवेत्याहुः । **एवमग्रेऽपीति** । प्ररि, सुनु इत्यादावपीत्यर्थः ॥ इत्योदन्ताः ॥

**अथ ऐदन्ता निरूप्यन्ते** । एकारान्तस्योदाहरणं तु स्मृतः इः येन स स्मृतेः । सु–शोभनः स्मृतेर्यस्य तत् सुस्मृति इत्यादि बोध्यम् । **प्ररीति** । प्रकृष्टो राः-धनं यस्य इति बहुव्रीहौ प्ररैशब्दः । तस्य नपुंसकह्रस्वत्वेन इकारः । सुटि वारिवत् । सोर्लुप्तत्वाद् 'रायो हलि' इत्यात्वं न । टादावचि पुंवत्त्वविकल्पः प्रद्युशब्दवत् । भ्यामादौ हलि विशेषमाह—**रायो हलीत्यात्वमिति** । ननु रैशब्दस्य ऐदन्तस्य विहितमात्वं कथमिदन्तस्येत्यत आह—**एकदेशविकृतस्यानन्यत्वादिति** । आमि विशेषमाह—**नुमचिरेति** । नुटि 'रायो हलि' इत्यात्वे प्रराणामित्यन्वयः । ननु प्ररि आमिति स्थिते, नुटं बाधित्वा परत्वान्नुमि तस्याङ्गभक्तत्वाद् हलादिविभक्त्यभावात् कथमात्वमित्यत आह—**नुमचिरेति** । पूर्वविप्रतिषेधान्नुमं बाधित्वा नुड्यात्वं निर्बाधमिति भावः । **संनिपातेति** । ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमात्वं प्रति निमित्तत्वासंभवाद् इति भावः । ननु तर्हि ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकं 'नामि' इति दीर्घं प्रति कथं निमित्तत्वमित्यत आह—**नामीति दीर्घस्त्विति । इत्युक्तमिति** । रामशब्दाधिकार इति शेषः ॥ इत्यैदन्ताः ॥

**अथ औदन्ता निरूप्यन्ते** । सु–शोभना नौर्यस्येति विग्रहे बहुव्रीहौ 'ह्रस्वो नपुंसके–' इति ह्रस्व उकार इति मत्वाह—**सुनु इति** ॥ इत्यौदन्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् अजन्तनपुंसकलिङ्गनिरूपणं समाप्तम् ।

---

पुंनपुंसकयोः समानमिति भाषितपुंस्कत्वात् पक्षे पुंवद्भावोऽत्र स्यादेवेत्याशङ्कायामाह—**यदिगन्तमिति** । एतच्च 'रा दाने' इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम् । कथं तर्हि प्राचा प्रद्युवा प्ररायां सुनावेत्युदाहृतमिति चेदत्राहुः—प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात्सुद्योशब्दो भाषितपुंस्कः स एवेदानीमिगन्तस्तथा च प्रद्यु-

# अथ हलन्तपुँल्लिङ्गप्रकरणम् । ११ ।

**३२४ हो ढः ।(८-२-३१)** हस्य ढः स्याज्झलि पदान्ते च। हल्ङ्याप्–' (सू २५२) इति सुलोपः, पदान्तत्वाद्धस्य ढः, जश्त्वचर्त्वे, लिट्, लिड् । लिहौ, लिहः । लिहम् ,लिहौ, लिहः । लिहा, लिड्भ्याम् इत्यादि । लिट्त्सु, लिट्सु ।

**अथ हकारान्ता निरूप्यन्ते**[1] । तत्र वर्णसमाम्नायक्रममनुसृत्य हकारान्तमादौ निरूपयितुमाह—**हो ढः** । ह इति षष्ठ्यन्तम् । 'झलो झलि' इत्यतो झलीत्यनुवर्तते । पदस्येत्यधिकृतम् । 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इत्यनुवर्तते । तदाह—**हस्येति । झलीति** । झलि परतः पूर्वस्य हकारस्य, पदान्ते विद्यमानस्य हकारस्य चेत्यर्थः । न च डकार एव कुतो न विहित इति वाच्यम् , 'वा द्रुह–' इत्यत्र वक्ष्यमाणत्वात् । **पदान्तत्वादिति** । सुलोपे सति प्रत्ययलक्षणमाश्रित्य झल्परत्वाच्चेत्यपि बोध्यम् । **लिडिति** । 'लिह् आस्वादने' क्विप् । हल्ङ्यादिना सुलोपः । हस्य ढत्वे 'वावसाने' इति चर्त्वविकल्प इति भावः । **लिड्भ्यामिति** । 'स्वादिष्वसर्वनामस्थाने' इति पदत्वाद् 'झलां जशोऽन्ते' इति जश्त्वमिति भावः । **इत्यादीति** । लिड्भिः । लिहे । लिड्भ्यः । लिहः । लिहः । लिहोः । लिहाम् । **लिट्त्सु इति** । लिह् सु इति स्थिते हस्य ढः, तस्य जश्त्वेन डः, 'खरि च' इति चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि–' इति धुट् , ततो डस्य चर्त्वेन टः । धुटश्चर्त्वसंपन्नस्य तकारस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति न भवति । 'न पदान्तात्–' इति तकारस्य ष्टुत्वं न । **लिट्सु इति** । धुडभावे रूपम् । हस्य ढः । तस्य जश्त्वेन डः । तस्य चर्त्वेन टः । तस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति न । 'न पदान्तात्' इति सस्य न ष्टुत्वमिति भावः ।

---

शब्दोऽपि भाषितपुंस्क एव, एकदेशविकृतस्यानन्यत्वात्, अतः पुंवद्भावो भवतीति । इत्थं च पुंवद्भाव एजन्तेषु क्लीबेषु माधवमते नास्ति, मतान्तरे त्वस्तीति बोध्यम् । **प्ररीति** । प्रकृष्टो रा यस्य तत् प्ररि । शोभना नौर्यस्य तत् सुनु ॥

इति तत्त्वबोधिन्यामजन्तनपुंसकलिङ्गप्रकरणम् ।

**हो ढः** । 'झलो झलि' 'पदस्य' 'स्कोः संयोगाद्योरन्ते च' इत्यतो झलीति पदस्यान्त इति चानुवर्तते । तदाह—**झलीत्यादि** । झलि परतः पदान्ते वा विद्यमानस्य हस्येत्यर्थः । **लिडिति** । 'लिह् आस्वादने' क्विप् । **लिट्त्स्विति** । ढस्य जश्त्वेन डः, तस्य 'खरि च' इति चर्त्वेन टः । तस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति पक्षे टस्य ठो न । सस्य ष्टुत्वं तु न भवति । 'न पदान्ताट्टोः–' इति निषेधात् । **लिट्-**

---

१ 'अथ हलन्ता निरूप्यन्ते' इत्यत्रोचितः पाठः ।

**३२५ दादेर्धातोर्घः। (८-२-३२)** उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च। उपदेशे किम्-अधोक् इत्यत्र यथा स्यात्, दाममिहमात्मन इच्छति दाम-

---

दुह्धातोः क्विबन्तात्सुलोपे दुह् इत्यत्र ढत्वे प्राप्ते ढत्वं क्वचिदपवदति—**दादेर्धातोः**। 'हो ढः' इत्यतो ह इति षष्ठ्यन्तमनुवर्तते। झलि इति पदस्येति अन्ते इति च पूर्ववदनुवर्तते। धातोरित्यावर्तते। एकं धातुग्रहणमवयवषष्ठ्यन्तं हकारेऽन्वेति-धातोरवयवस्य हस्येति। दादेरित्येतत्तु धातोरित्यत्र सामानाधिकरण्येनान्वेति। दः आदिर्यस्येति बहुव्रीहिः। धातोरिति द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति। ततश्च फलितमाह—**उपदेशे इत्यादिना**। धातूपदेशकाले यो दकारादिर्धातुः, तदवयवस्य हस्येत्यर्थः। आवृत्तधातुग्रहणलब्धोपदेशग्रहणस्य फलं पृच्छति—**उपदेशे किमिति। अधोगिति**। 'दुह् प्रपूरणे' लङ्, अडागमः, तिप्, शप्, तस्य लुक्, लघूपधगुणः, हल्ङ्यादिना तिपो लोपः, 'दादेः—' इति हस्य घः, 'एकाचो बशः—' इति भष्भावेन दकारस्य धकारः। 'वाऽवसाने' इति चर्त्वजश्त्वे इति भावः। **यथा स्यादिति**। यथेति प्राप्तियोग्यतायाम्। घत्वमत्र प्राप्तियोग्यम्, तच्च उपदेशग्रहणे सत्येव स्यादित्यर्थः। घत्वप्रवृत्तिवेलायां दुह्धातोर्दकारादित्वं नास्ति, कृते अडागमे 'तदागमास्तद्ग्रहणेन गृह्यन्ते' इत्यकारादित्वात्। अतोऽत्र घत्वं न स्यादित्यव्याप्तिः स्यात्। उपदेशग्रहणे तु नायं दोषः, घत्वप्रवृत्तिवेलायां दुहेरत्र दकारादित्वाभावेऽपि धातूपदेशकाले दादित्वादिति भावः। तदेवमव्याप्तिपरिहारफलमुक्त्वा अतिव्याप्तिपरिहारफलमाह—**दामेति**। ग्रीवासु गवादिपशुबन्धनार्थरज्जुपर्यायो दामशब्दः। 'लिह् आस्वादने' दाम लेढीति दामलिट्। तमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यचि 'सनाद्यन्ताः—' इति धातुत्वात् तिपि शपि दामलिह्यतीति रूपम्। **ततः क्विपीति**। क्यजन्तात् कर्तरि क्विपि अल्लोपे यलोपे च दामलिह्शब्दात् सोर्लोपे 'हो ढः' इति ढत्वे 'वावसाने' इति चर्त्वविकल्पे दामलिट्, दामलिड् इति रूपमित्यर्थः। **अत्र मा भूदिति**। माङि लुङ्। सर्वलकारापवादः। अत्र घत्वं न भवेदित्येतदर्थमप्युपदेशग्रहणम्। कृते तु तस्मिन् घत्वमत्र न भवति, धातूपदेशे दामलिह् इति सुब्धातोः पाठाभावादिति भावः।

---

**स्विति**। ढस्य जश्त्वेन डकारे कृते चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि—' इति पक्षे धुट्। तस्य चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः। धुटश्चर्त्वस्यासिद्धत्वात्पक्षे 'चयो द्वितीयाः—' इति तस्य थो न। ष्टुत्वं तु तकारस्य न शङ्क्यमेव। 'न पदान्तात्—' इति निषेधस्याधुनैवोक्तत्वादिति। **दादेर्धातोर्घः**। धातोरित्यावर्तते। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—**उपदेश इति**। उपदेशग्रहणस्याव्याप्त्यतिव्याप्ति-

लिह्यति, ततः क्विपि दामलिट्, अत्र मा भूत् । ३२६ **एकाचो बशो भष् झषन्तस्य स्ध्वोः** । (८-२-३७) धातोरवयवो य एकाज् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च । एकाचो धातोः—इति सामानाधिकरण्येनान्वये त्विह न स्याद्—गर्दभमाचष्टे गर्दभयति, ततः क्विप्, णिलोपः, गर्धप् । झलीति निवृत्तम्, स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न—दुग्धम्, दोग्धा ।

---

तथा च प्रकृतोदाहरणे सौ दुघ् इति स्थिते—**एकाचो बशो** । स् च ध्व् च स्ध्वौ, तयोरिति विग्रहः । बश इति स्थानषष्ठी । एकाच इत्यवयवषष्ठी । एकः अच् यस्येति विग्रहः । झषन्तस्येत्यस्य शब्दस्येति विशेष्यम् । एकाच्कस्य झषन्तशब्दस्यावयवो यो बश् तस्य भष् स्यादित्यन्वयः । 'दादेर्धातोः—' इत्यतो धातोरित्यवयवषष्ठ्यन्तमनुवर्तते । तच्च झषन्तशब्देनान्वेति । पदस्येत्यधिकृतम् । 'स्कोः संयोगाद्योः—' इत्यतः अन्ते चेत्यनुवर्तते । तदाह—**धातोरवयव इत्यादिना** । ननु संभवति सामानाधिकरण्ये वैयधिकरण्याश्रयणस्यान्याय्यत्वाद् एकाच् झषन्तो यो धातुः तदवयवस्य बस इत्येवान्वय उचित इत्यत आह—**एकाचो धातोरित्यादि । गर्दभयतीति** । 'तत्करोति तदाचष्टे' इति णिजन्तस्य 'सनाद्यन्ताः—' इति धातुत्वात्तिबादि । **ततः क्विबिति** । गर्दभि इति ण्यन्तात् कर्तरि क्विबित्यर्थः । कपावितौ, वेर्लोपः । **णिलोप इति** । 'णेरनिटि' इत्यनेनेति शेषः । **गर्धप् इति** । गर्दभ् इत्यस्मात् सुः, हल्ङ्यादिलोपः । 'एकाचो बशः—' इति दस्य धः । 'वावसाने' इति चर्त्वम् । एकाचो धातोः झषन्तस्येत्यन्वये गर्दभ् इत्यस्य सुब्धातोरनेकाच्त्वाद् दकारस्य भष्भावो न स्यात् । धात्ववयवस्य झषन्तस्येत्यन्वये तु दभ् इति एकाचो झषन्तस्य धात्ववयवत्वात् तदवयवस्य दस्य भष्भावो निर्बाध इति भावः । अत्र प्राचीनैः झलीत्यनुवर्तितम् । तदयुक्तमित्याह—**झलीति निवृत्तमिति । सामर्थ्यादिति** । झलीत्यनुवृत्तौ तद्वैयर्थ्यादिति भावः । ननु झलीत्यस्यानुवृत्तिरेवास्तु, स्ध्वोरित्येव न क्रियतामित्यत आह—**तेनेति** । झलीत्यननुवर्तनेनेत्यर्थः । **दुग्धमिति** । दुहेः क्तः, कित्त्वाद् न लघूपधगुणः । 'दादेः—' इति हस्य घः । 'झषस्तथोर्धोऽधः' इति तकारस्य धः । 'झलां जश् झशि' इति घस्य गः । दुग्धमिति रूपम् । **दोग्धेति** । दुहेस्तृच्, लघूपधगुणः, 'दादेः—' इति हस्य घः ।

---

परिहारः फलमित्याह—**अधोगित्यादिनाऽत्र मा भूदित्यन्तेन । एकाचो बशो । झलीति निवृत्तमिति** । धुग्भ्यां धुक्षिवत्वादौ पदान्ते इत्येव भष्भावसिद्धेरिति भावः । प्राचा तु प्रातिपदिकस्य तु झलि पदान्ते चेति व्याख्यातम् । तत् प्रामादिकमेव । अधोक्, अधोग् इत्याद्यसिद्ध्यापत्तेः । प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च । ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तस्य दुहेः 'दादेः—' इति घत्वेन भाषन्त-

व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः, जश्त्वचर्त्वे धुक्, धुग्। दुहौ, दुहः। षत्वचर्त्वे धुक्षु। ३२७ वा द्रुहमुहष्णुहष्णिहाम्। (८-२-३३) एषां हस्य वा घः स्याज्झलि पदान्ते च। पक्षे ढः। ध्रुक्, ध्रुग्; ध्रुट्, ध्रुड्। द्रुहौ, द्रुहः

---

'झषस्तथोः–' इति तकारस्य धः 'ऋदुशनस्–' इत्यनङ्। 'सर्वनामस्थाने च–' इति दीर्घः। हल्ङ्यादिलोपः। 'न लोपः–' इति नकारलोपः, दोग्धा इति रूपम्। झली-त्यनुवृत्तौ इहोभयत्रापि घत्वे कृते भष्भावः स्यादिति भावः।

ननु दुहेः क्विबन्तात् सोर्लोपे 'दादेः–' इति घत्वे कृते दुघ् इति झषन्तमेका-च्कम्। तस्य धातुत्वाद् धात्ववयवत्वाभावात् कथमिह दकारस्य भष्भावेन धकारः स्यादित्यत आह—**व्यपदेशिवद्भावेनेति**।

व्यवहारः, सोऽस्यास्तीति व्यपदेशी, तेन तुल्यं व्यपदेशिवत्। धाताविव धात्ववयवत्वव्य-वहारो गौणः, राहोश्शिर इत्यादिवदिति भावः। इदं च 'आद्यन्तवदेकस्मिन्' इति सूत्रे भाष्ये स्पष्टम्। **धुक्, धुगिति**। क्विपः प्राक् प्रवृत्ताया धातुसंज्ञाया अनपायाद् 'दादेः–' इति घत्वे कृते झषन्तत्वाद् भष्भावे चर्त्वविकल्प इति भावः। दुहौ। दुहः। दुहम्। दुहौ। दुहः। दुहा। भ्यामादौ 'दादेः–' इति घत्वे कृते स्वादिष्विति पदत्वात् पदान्तत्वप्रयुक्तो भष्भावः। 'झलां जशोन्ते' इति जश्त्वम्। धुग्भिः। दुहे। धुग्भ्याम्। धुग्भ्यः। दुहः। दुहः। दुहोः। दुहाम्। दुह् सु इति स्थिते प्रक्रियां दर्शयति—**षत्वेति**। घत्वे कृते भष्भावे 'झलां जशोन्ते' इति जश्त्वेन गकारः। तस्य 'खरि च' इति चर्त्वस्यासिद्धत्वाद् 'आदेशप्रत्यययोः' इति षत्वे कृते चर्त्वे धुक्षु इति रूपमिति भावः। द्रुह् जिघांसायाम्, मुह् वैचित्त्ये, ष्णुह् उद्गिरणे, ष्णिह् प्रीतौ–एभ्यः क्विब-न्तेभ्यः सोर्लोपे द्रुहेर्दादित्वाद् ढत्वं बाधित्वा नित्यं घत्वे प्राप्ते इतरेषामदादित्वादप्राप्ते घत्वे इदमारभ्यते। **वा द्रुह**। 'दादेः–' इत्यतो घ इत्यनुवर्तते। झलीति पदस्येति अन्ते इति पूर्ववदनुवर्तते। तदाह—**एषामिति**। द्रुहादीनां चतुर्णामित्यर्थः। **ध्रुक्, ध्रुगिति**। घत्वपक्षे भष्भावे चर्त्वविकल्प इति भावः। **ध्रुट्, ध्रुडिति**। घत्वाभाव-

---

त्वेऽपि भष्भावो न स्यात्। दुघिति समुदायस्य यः पूर्वावयवो दु इत्येकाच् तस्य झष-न्तत्वाभावात्, उघ् इत्युत्तरावयवे तु बशो भावादित्यत आह—**व्यपदेशिवद्भावेनेति**। न च धात्ववयवो धातुरित्येव व्यपदिश्यतां तथा च गर्धबिति सिध्येदिति वाच्यम्। अर्थवतां हि व्यपदेशिवद्भावः, न चावयवोऽर्थवानिति, तस्य धातुत्वव्यपदेशासंभवात्। **भष्भाव इति**। क्विपः प्राक्प्रवृत्ताया धातुसंज्ञाया निरपवादत्वेनावस्थिततत्वात् 'दादे-र्धातोः–' इति घत्वे कृते झषन्तत्वादिति भावः। **धुगिति**। 'दुह् प्रपूरणे' क्विप्। **वा द्रुह**। 'द्रुह् जिघांसायाम्', 'मुह् वैचित्ये', 'ष्णुह् उद्गिरणे', 'ष्णिह् प्राप्तौ'। द्रुहेर्दा-

ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु। एवं मुहष्णुहष्णिहाम्। **३२८ इग् यणः संप्रसारणम् (१-१-४५)** यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्। **३२६ वाह ऊठ् (६-४-१३२)** भस्य वाहः संप्रसारणमूठ्

---

पक्षे 'हो ढः' इति ढत्वे भष्भावे चर्त्वविकल्पः। अत्र भष्भावार्थमेव 'हो ढः' इति सूत्रे ढ एव विहितः, न तु डः। तथा सति झषन्तत्वाभावाद् भष्भावो न स्यात्। अचि सुपि द्रुहम् इत्यादि। **ध्रुग्भ्यामिति**। घत्वपक्षे भष्भावः। **ध्रुड्भ्यामिति**। घत्वाभावापक्षे ढत्वे, जश्त्वे रूपम्। एवं भिसि भ्यसि च रूपद्वयम्। द्रुहः। द्रुहः। द्रुहोः। द्रुहाम्। **ध्रुक्ष्विति**। घत्वे भष्भावे 'आदेशप्रत्यययोः' इति षत्वे 'खरि च' इति चर्त्वम्। **ध्रुट्त्स्विति**। घत्वाभावपक्षे ढत्वे, भष्भावे, ढस्य जश्त्वे, धुटि, चर्त्वे डस्य चर्त्वम्। चर्त्वस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति तकारस्य थो न भवति। 'न पदान्तात्–' इति ष्टुत्वं न। **ध्रुट्स्विति**। धुडभावे रूपम्। हस्य ढः, भष्भावः, ढस्य जश्त्वेन डः, तस्य चर्त्वेन टः। **एवमिति**। भष्भाववर्जमिति शेषः।

विश्वं वहतीत्यर्थे 'भजो ण्विः' इत्यतो ण्विरित्यनुवृत्तौ 'वहश्च' इति ण्विः। णकार इत्। वेर्लोपः। 'अत उपधायाः' इति वृद्धिः। उपपदसमासः। विश्ववाह् इति रूपम्। ततस्सोः 'हल्ङ्याब्–' इति लोपे 'हो ढः' इति ढत्वे 'वाऽवसाने' इति चर्त्वविकल्पे विश्ववाट्–विश्ववाड्, विश्ववाहौ, विश्ववाहः। विश्ववाहम्, विश्ववाहौ–इति सुटि रूपाणि सुगमत्वादुपेक्ष्य शसादौ अचि संप्रसारणकार्यं वक्ष्यन् संप्रसारणसंज्ञां दर्शयति—**इग् यणः संप्रसारणम्। यणः स्थाने इति**। व्याख्यानात् स्थानार्थलाभः। 'षष्ठी स्थानेयोगा' इति तु नेह भवति, अनुवादे परिभाषाणामनुपस्थितेः। षष्ठी श्रुतौ सर्वत्र व्याख्यानादेव स्थानार्थलाभसंभवात् 'षष्ठी स्थानेयोगा' इत्येतद् 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येतदर्थमिति भाष्ये सिद्धान्तितत्वाच्च। **संप्रसारणसंज्ञ इति**। ततश्च 'वसोः संप्रसारणम्' 'वचिस्वपियजादीनाम्–' इत्यादौ संप्रसारणश्रुतौ यणस्थानिक इगुपस्थितो भवति। तत्रान्तरतम्याद्यस्य इकारः, वकारस्य उकारः, रेफस्य ऋकारः, लस्य लृकार इति ज्ञेयम्। **वाह ऊठ्**। 'भस्य' इत्यधिकृतम्। 'वसोः संप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तते। तच्च ऊठ् इत्यनेनान्वेति। तदाह—**भस्येत्यादिना। संप्रसारणमिति**। तेन वाहो यो यण् वकारस्तस्य ऊठ् इति लभ्यते। संप्रसारणमित्यन-

---

दित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते उभयत्र विभाषेयम्। ननु द्रुहादयो दिवादिष्वनेनैव क्रमेण पठ्यन्ते तत्र 'वा द्रुहादीनाम्' इत्येवास्तु दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिस्तदन्तर्गणो द्रुहादिरस्तु। रधादिगणसमाप्तये स्निह्धातोरनन्तरं वृत्करणस्य कृतत्वेनातिप्रसङ्गशङ्काया, निरवकाशत्वात्। मैवम्, तथा हि सति यङ्लुकि दोध्रुक् दोध्रुट् इत्यादि न सिध्येत्

स्यात्। ३३० संप्रसारणाच्च (६-१-१०८) संप्रसारणादचि पूर्वरूपमेकादेशः स्यात्। 'एत्येधत्यूठ्सु' (सू ७३) विश्वौहः । विश्वौहेत्यादि। छन्दस्येव ण्विः-

---

नुवृत्तौ 'अलोऽन्त्यस्य' इति हकारस्य स्यात्। तदनुवृत्तौ तु ऊठो यण्स्थानिकत्वलाभाद् न 'अलोऽन्त्यस्य' इति भवति। विश्व ऊ आह् अस् इति स्थिते-**संप्रसारणाच्च।** 'इको यणचि' इत्यतः अचीति 'अमि पूर्वः' इत्यतः पूर्व इति चानुवर्तते। 'एकः पूर्व-परयोः' इत्यधिकृतम्। तदाह—**संप्रसारणादित्यादिना।** विश्व ऊह् अस् इति स्थिते आद् गुणमाशङ्क्याह--**एत्येधत्यूठ्स्विति।** अनेन गुणापवादो वृद्धिरिति शेषः। विश्वौहः। विश्वौहा। **इत्यादीति।** विश्ववाड्भ्याम्। विश्ववाड्भिः। विश्ववाड्भ्यः। विश्वौहे। विश्वौहः। विश्वौहः। विश्वौहोः। विश्वौहाम्। विश्ववाट्त्सु-विश्ववाट्सु।

ननु 'वहश्च' इति ण्विविधौ 'छन्दसि सहः' इत्यतः छन्दसीति केचिदनुवर्तयन्ति, तन्मते विश्ववाह्शब्दस्य लोके कथं प्रयोग इत्यत आह—**छन्दस्येव ण्विरिति पक्षे**

---

'निर्दिष्टं यद्गुणेन च' इति निषेधात्। **इग्यणः। यणः स्थान इति।** विधिप्रदे-शेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणान्नान्योन्याश्रयः। ननु यण्स्थानिकस्येकः संप्रसारण-त्वे अदुहितरामित्यत्र लुङो लकारस्य स्थाने उत्तमपुरुषैकवचनमिट्, तस्य यण्स्थानि-कत्वेन संप्रसारणसंज्ञायां सत्यां 'हलः' इति दीर्घः स्यात्। तरपं प्रति लुङन्तस्याङ्गत्वा-दिति चेत्। अत्र कैयटः—यथासंख्यसंबन्धात्संप्रसारणसंज्ञात्र न भवतीति। नन्वनुवादे परिभाषाणामनुपस्थानात्कथमिह यथासंख्यत्वलाभः। न चैवं स्थानेयोगोऽपि न लभ्ये-तेति वाच्यम्, 'षष्ठी स्थानेयोगा' इत्यत्रैतत्सूत्रमनुवर्त्य व्याख्यायां तल्लाभात्। अत्राहुः-तन्त्रावृत्त्याद्याश्रयणेन 'संप्रसारणस्य' इति सूत्रे तद्भावितग्रहणाददुहितरामित्यत्र 'हलः' इति लुङ्स्थानिकस्येटः संप्रसारणस्य दीर्घो न भवति, लुङ्स्थानिकस्येटः संप्रसारण-शब्देनाभावितत्वात्। नन्वेवमप्यक्षद्युवौ अक्षद्युव इत्यादौ ऊठः संप्रसारणसंज्ञायां 'संप्र-सारणाच्च' इति पूर्वरूपं स्यादिति चेत्, न। 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम्' इति वार्तिककृतोक्तत्वाद् वार्णादाङ्गस्य बलीयस्त्वाद्वा उवङेव स्यात्। अत्र नव्याः— 'ष्यङः संप्रसारणम्—' इत्यादिविधिप्रदेशेष्वेव 'यण इक्' इति पठित्वा संप्रसारणसंज्ञा-सूत्रं त्यक्तुं शक्यमित्याहुः। **वाह ऊठ्।** 'एत्येधत्यूठ्सु' इति विशेषणार्थष्ठकारो 'हल-न्त्यम्' इतीत्संज्ञकः। अत्र 'भस्य' इत्यधिक्रियते। 'वसोः संप्रसारणम्' इत्यतोऽनुवृत्तं संप्रसारणमूठो विशेषणम्, तेनात्र 'अलोऽन्त्यस्य' इति न भवति। तदेतदाह—**भस्य वाह इत्यादि।** प्राचा तु वाहो वाशब्दस्य संप्रसारणं स्यादित्युक्तम्, तच्च फलितार्थकथनपर-तया कथंचिन्नेयमित्याहुः। **संप्रसारणाच्च।** 'अमि पूर्वः' इत्यतः पूर्व इत्यनुवर्तते 'इको यणचि' इत्यतोऽचीति च, 'एकः पूर्वपरयोः' इति चाधिक्रियते। तदाह—

इति पक्षे णिजन्ताद्विच् । **३३१ चतुरनडुहोरामुदात्तः** । (७-१-९८) अनयोराम् स्यात्सर्वनामस्थाने परे, स चोदात्तः । **३३२ सावनडुहः** । (७ १-८२) अस्य नुम् स्यात्सौ परे । 'अचः' इत्यधिकारादवर्णात्परोऽयं नुम् । अतो विशेषवि-

---

**णिजन्ताद्विजिति** । विश्वं वाहयतीत्यर्थे वाह् इ इति ण्यन्तात् 'अन्येभ्योऽपि दृश्यते' इति विचि 'नेड्वशि कृति' इति इडभावे, णिलोपे, अपृक्तलोपे, उपपदसमासे विश्ववाह् , शब्दो लोके प्रयोगार्हः । किन्तु तस्य ऊठ् न भवति, 'अचः परस्मिन्–' इति णिलोपस्य स्थानिवत्त्वेन शसि तस्य भत्वाभावात् । वाहयतेः क्विपि विश्ववाह्शब्दस्य तु ऊठ् निर्बाध एव, 'क्वौ लुप्तम्–' इति णिलोपस्य स्थानिवत्त्वाभावेन तस्य भत्वानपायात् । अत एव 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति सूत्रे प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमिति लौकिकविग्रहवाक्ये 'प्रष्ठौहः' इति प्रयोगः संगच्छते । क्वचित् पुस्तके 'छन्दस्येव ण्विरितिप्रमाणिकाः' इति पठ्यते । 'कव्यपुरीष–' इत्याद्युत्तरसूत्रे तदनुवृत्तेरावश्यकत्वादिति तदाशयः ।

अनः शकटं वहतीत्यर्थे अनसि वहेः 'अनसो डश्च' इति क्विप्, सस्य डश्च । 'वचिस्वपियजादीनां किति' इति यजादित्वाद् वकारस्य सम्प्रसारणम् उकारः । 'संप्रसारणाच्च' इति पूर्वरूपम् । अनडुह् इति रूपम् । ततः सुबुत्पत्तिः । अनडुह् स् इति स्थिते–**चतुरनडुहोः** । **अनयोरिति** । चतुरनडुहोरित्यर्थः । **सर्वनामस्थान इति** । 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तेरिति भावः । आमि मकार इत् । मित्त्वादन्त्यादचः परः । उकारस्य यण् वकारः । अनड्वाह् स् इति स्थिते—**सावनडुहः** । **अस्येति** । अनडुह्शब्दस्येत्यर्थः । **नुम् स्यादिति** । 'आच्छीनद्योर्नुम्' इत्यतो नुमित्यनुवृत्तेरिति भावः । नुमि मकार इत्, उकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । अनड्वान् ह् स् इति स्थितम् । ननु आम्नुमौ एतौ मित्त्वादन्त्यादचः उकारात् परौ प्राप्तौ, तत्र 'चतुरनडुहोः–' इत्याम् सर्वनामस्थाननिमित्तकः सामान्यविहितः, 'सावनडुहः' इति नुम् तु सर्वनामस्थानविशेषे सौ विहितत्वाद्विशेषविहितः, स च निरवकाशत्वाद् सामान्यविहितमामं बाधेत, सोरन्यत्राम्विधेश्चरितार्थत्वात् । तथा च अनडुन् इति स्यात्, अनड्वान् इति न स्यात् । किं च सम्बुद्धौ हे अनडुह् स् इति स्थिते 'अम् सम्बुद्धौ' इत्यमागम आमपवादोऽनुपदमेव वक्ष्यते । तत्र 'सावनडुहः' इति नुमपि प्राप्तः, स च सम्बुद्धावसम्बुद्धौ च विहितत्वात् सामान्यविहितः, 'अम् सम्बुद्धौ' इत्यम् तु सम्बुद्धावेव विहितत्वाद् विशेषविहितः । स च निरवकाशत्वात् सामान्यविहितं नुमं बाधेत, असम्बुद्धौ सौ नुम्विधेश्चरितार्थत्वात् । ततश्च हे अनड्वन्निति न

---

**संप्रसारणादचीत्यादिना** । **छन्दस्येव ण्विरिति** । 'वहश्च' इति सूत्रे 'भजो ण्विः' 'छन्दसि सहः' इत्यतो ण्विप्रत्ययस्य छन्दसीत्यस्य चानुवृत्तेरिति भावः । स्या-

**हितेनापि नुमा आम् न बाध्यते । अमा च नुम् न बाध्यते। सोर्लोपः । नुम्विधि-**

स्यात् । 'हो ढः' इति ढत्वे हे अनड्वट् इति स्यादित्याशङ्क्याह—**आदित्यधिका-रादित्यादि नुम् न बाध्यत इत्यन्तम्** । 'सावनडुहः' इति नुम्विधौ तावत् 'आच्छीनद्योः–' इत्यत आदिति पञ्चम्यन्तमनुवर्तते । अतः अनडुहः अवर्णात् परो नुमिति लाभाद् विशेषविहितेनापि 'सावनडुहः' इति नुमा 'चतुरनडुहोः–' इति सामान्य-विहित आम् न बाध्येत, अवर्णात् परत्वेन विधीयमानं नुमं प्रति आम उपजीव्य-त्वात्, उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावविरहात्, प्रत्युत आमभावे नुमः प्रवृत्त्यसम्भवात् । तथा 'अम् संबुद्धौ' इत्यमा च विशेषविहितेन 'सावनडुहः' इति नुम् न बाध्यते, नुम उपजीवकत्वेन विरोधाभावात्, प्रत्युत अमभावे नुमः प्रवृत्त्य-संभवादित्यर्थः ।

ननु 'सावनडुहः' इति नुम्विधौ आदित्यवर्ततां नाम । तथापि आमुपजीवकत्वं नुमो न लभ्यते, अनडुहि नुमो नकाराकारात् परत्वेऽपि आदित्यनुवृत्तेरविरोधादिति चेद् मैवम्—'सावनडुहः' इति नुम्विधौ मित्त्वादन्त्यादच इत्युपस्थितम्, तत्र च आदित्यनुवृत्तमन्वेति । ततश्चानडुहि यः अन्त्यरूपः अवर्णः तस्मात् परो नुमिति लभ्यते। नकाराकारस्तु नैवंविध इत्यामुपजीवकत्वं नुमो निर्बाधमेव। एवं संबुद्धौ अमुप-जीवकत्वमपि ज्ञेयम् । क्वचित्पुस्तके 'आमा च नुम् न बाध्यते' इति पठ्यते । तत्रेयं योजना । ननु बह्वनड्वांहि कुलानीत्यत्र 'नपुंसकस्य झलचः' इति नुमपेक्षया पर-त्वादाम् स्यात्, कृते त्वामि पुनर्नुम् न भवति, 'विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति न्यायादित्यत आह—**आमा च नुम् न बाध्यत इति** । 'पुनः प्रसङ्गविज्ञा-नात् सिद्धम्' इति क्वचिद्विप्रतिषेधेन बाधितस्य पुनरुन्मेषादामि कृतेऽपि 'नपुंसकस्य झलचः' इति नुम् निर्बाध इति भावः । **सोर्लोप इति** । अड्वान् ह् स् इत्यत्र हल्ङ्यादिना–इति शेषः । ननु कृते सुलोपे हकारस्य संयोगान्तलोपे नुमो नकारस्य पदान्तत्वाद् 'वसुस्रंसुध्वंस्वनडुहां दः' इति दत्वं कुतो न स्यादित्यत आह—**नुम्वि-**

देतत्—'वाहः' इत्येव सूत्रमस्तु, संप्रसारणमेवात्र विधीयताम्, तस्य लघूपधगुणे 'वृद्धिरेचि' इति वृद्धौ सिद्धं विश्वौह इत्यादि, किमूठ्ग्रहणेन । सत्यम् । एवं स्थिते क्रिय-माणमूठ्ग्रहणं बहिरङ्गपरिभाषां ज्ञापयति । तस्यां हि सत्यां जातस्य बहिरङ्गस्य संप्र-सारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम् । नन्वनकारान्तोपपदेऽ-कारान्तोपसर्गोपपदे च रूपे विशेषः स्यादिति कथमूठ्ग्रहणं ज्ञापकमिति चेत् । अत्राहुः कैयटादयः—भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाभावोऽनुमीयत इति । एतेन भुवं वहतीति भूवाट् । भूहः । भूहा । प्रौहः । प्रौहेत्यादिप्रयोगाः परास्ताः ।

सामर्थ्यात् 'वसुस्रंसु–' (सू ३३४) इति दत्वं न। संयोगान्तलोपस्यासिद्धत्वान्न-लोपो न। **अनड्वान्**। ३३३ **अम् संबुद्धौ**। (७-१-९९) चतुरनडुहोरम् स्यात्संबुद्धौ। आमोऽपवादः। हे अनड्वन्। अनड्वाहौ। अनड्वाहः। अनडुहः।

---

**धीति**। यदि ह्यत्र नुमो नस्य दत्वं स्यात्, तर्हि अनड्वाह् इत्यत्र नुमभावेऽपि हस्य दत्वेनैव अनड्वाद् इति सिद्धेः नुम्विधिरनर्थकः स्यात्। अतो नुमो नस्य दत्वं नेति विज्ञायत इति भावः। ननु अनड्वान् ह् स् इत्यत्र सुलोपे संयोगान्तलोपे च कृते नकारस्य प्रातिपदिकान्तत्वात् पदान्तत्वाच्च 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः किं न स्यात्। न च नुम्विधिसामर्थ्यान्नात्र नलोप इति वाच्यम्, नलोपाभावस्थले संबुद्धौ 'हे अनड्वन्' इत्यत्र नुम्विधेश्चरितार्थत्वात्। तत्र 'न ङिसंबुद्ध्योः–' इति नलोपप्रतिषेधादित्यत आह—**संयोगान्तेति**। हकारलोपस्यासिद्धत्वे सति नकारस्य प्रातिपदिकान्तत्वाभावात् पदान्तत्वाभावाच्च नलोपो नेत्यर्थः। **अनड्वानिति**। अनडुह स् इति स्थिते आम्, यण्, नुम्, सुलोपः, संयोगान्तलोपश्च। अथ संबुद्धौ हे अनडुह् स् इति स्थिते 'चतुरनडुहो.–' इत्यामागमे प्राप्ते—**अम् संबुद्धौ**। 'चतुरनडुहो.' इत्यनुवर्तते। तदाह—**चतुरनडुहोरिति**। अमो मकार इत्। मित्त्वादन्त्यादचः परः। **हे अनड्वन्निति**। अम्, यण्, नुम्, सुलोप, संयोगान्तलोपश्च। **अनड्वाहाविति**। सर्वनामस्थानत्वादाम्, नुम् तु न, तस्य सावेव विधानात्। **अनडुह इति**। शसादावचि अविकृत एवानडुह्शब्द इति भावः।

---

**चतुरनडुहोः**। 'इतोत्सर्वनामस्थाने' इत्यतोऽनुवर्तनादाह—**सर्वनामस्थान इति**। **सावनडुहः**। 'आच्छीनद्योः–' इत्यतो नुममनुवर्त्याह—**नुम् स्यादिति**। विशेषविहितेन याडुटा सामान्यविहितः सीयुडिव नुमा आम् बाध्यतामित्याशङ्कां निराकरोति—**अवर्णात्परोऽयमित्यादिना**। उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावो नेति भावः। **अमा चेति**। विशेषविहितेनापीत्यनुषज्यते। 'आमा च नुम्न बाध्यते' इति केचित्पठन्ति। तस्यायमर्थः—बहनड्वांहीत्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञानाद् 'नपुंसकस्य झलचः' इति नुम् भवत्येव, न तु बाध्यत इति। नुमो दत्वमाशङ्क्याह—**नुम्विधिसामर्थ्यादित्यादि**। विधानसामर्थ्यात्सर्वत्राविकृतेन नुमा भवितव्यमिति भावः नन्वेवमनड्वांस्तत्रेत्यत्र 'नश्छवि–' इति रुत्वमपि न स्यादिति चेत्। अत्राहुर्भाष्यकाराः—यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यत इति। भवति हि दत्वं प्रति नुमो विधिरनर्थकः, रुत्वं प्रति तु निमित्तमेवेति। **अनड्वानिति**। अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप्, अनसो डश्च। यजादित्वात्संप्रसारणम्। अनडुह् स् इति स्थिते। आम्नुम्सुलोपेषु कृतेषु संयो-

अनडुहा । ३३४ **वसुस्रंसुध्वंस्वनडुहां दः ।** (८-२-७२) सान्तवस्वन्तस्य स्रंस्वादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्त इति किम्-विद्वान् । पदान्त इति किम्-स्रस्तम् । ध्वस्तम् । ३३५ **सहेः साडः सः ।** (८-३-५६) साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाद्, तुराषाड्, तुरासाहौ, तुरा-

---

भ्यामादौ हलि विशेषमाह—**वसुस्रंसु** । वसुः प्रत्ययः, तेन तदन्तं गृह्यते । 'स्रंसु ध्वंसु अवस्रंसने' इति धातू । 'ससजुषो रुः' इत्यतः स इति लुप्तषष्ठीकमनुवृत्तम् । तेन च वसुर्विशेष्यते । तदन्तविधिः । सान्तत्वं स्रंसुध्वंस्वोर्न विशेषणम्, अव्यभिचारात् । नाप्यनडुहः, असंभवात् । पदस्येत्यधिकृतं बहुवचनान्तत्वेन विपरिणम्यते । 'अलोऽन्त्यस्य' इति तदन्तस्य भवति । फलितमाह—**सान्तेत्यादिना** । यथासंभवं रुत्वढत्वयोरपवादः । **अनडुद्भ्यामिति** । 'स्वादिष्वसर्वनामस्थाने' इति पदत्वादिति भावः । **इत्यादीति** । अनडुद्भिः । अनडुद्भ्यः । अनडुहे । अनडुहः । अनडुहः । अनडुहोः । अनडुहाम् । दत्वे 'खरि च' इति चर्त्वम्—अनडुत्सु । **सान्तेति किमिति** । वसोरपि सान्तत्वाव्यभिचारात् प्रश्नः । **विद्वानिति** । विद्वस् स् इति स्थिते 'अत्वसन्तस्य–' इति दीर्घे 'उगिदचाम्–' इति नुमि सुलोपे संयोगान्तलोपे च रूपम् । अत्र वसोः सकारान्तत्वाभावान्न दत्वमिति भावः । **स्रस्तं ध्वस्तमिति** । क्तप्रत्ययान्तम् । अत्र पदान्तत्वाभावान्न दत्वम् । विद्वांसौ, अनड्वाहावित्याद्यपि प्रत्युदाहार्यम् । अथ तुरासाह्शब्दात् सोर्हल्ङ्यादिलोपे हस्य ढत्वे कृते विशेषमाह—**सहेः साडः सः** । 'इक्श्तिपौ धातुनिर्देशे' इति 'षह् मर्षणे' इति धातोरिक्प्रत्यये 'धात्वादेः षः सः' इति षस्य सत्वे सहिशब्दः । षह्धातोरित्यर्थः । साड इति कृतढत्वडत्ववृद्धेरनुकरणम् । तदाह-**साड्रूपस्येति । मूर्धन्येति** । 'अपदान्तस्य मूर्धन्यः' इति तदधिकारादिति भावः । मूर्धनि भवो मूर्धन्यः, मूर्धस्थानक इत्यर्थः । **तुराषाद्, तुराषाडिति** । सुलोपे ढत्वे, जश्त्वेन डत्वे, सस्य मूर्धन्यः षकारः, विवृतप्रयत्नसाम्यात् । 'वाऽवसाने' इति चर्त्वपक्षेऽपि मूर्धन्यो भवत्येव, सूत्रे साड इति कृतजश्त्वनिर्देशस्य पदान्तोपलक्षणत्वादिति भावः । **तुरासाहाविति** । अपदान्तत्वान्न मूर्धन्य इति भावः । **इत्यादीति** । तुराषाड्भिः । तुराषाड्भ्यः । तुरासाहे । तुरासाहः । तुरासाहः । तुरासाहोः । तुराषाट्सु–तुराषाट्त्सु ।

---

गान्तलोपेन हकारलोपः । **वसुस्रंसु** । वस्विति प्रत्ययः, तेन तदन्तं ग्राह्यम् । 'ससजुषोः–' इति सूत्रात्सेत्यनुवर्तते, तच्च वसोरेव विशेषणम्, न तु स्रंसुध्वंस्वोरव्यभिचारात् । नाप्यनडुहः, असंभवादित्यभिप्रेत्याह—**सान्तवस्वन्तस्येति । सहेः साडः सः ।**

किम्, सह डेन वर्तते सडः, यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति ।

---

१ 'बहुवचनेन' क

साहः। तुराषाड्भ्यामित्यादि। तुरं सहत इत्यर्थे 'छन्दसि सहः' (सू ३४०१) इति ण्विः। लोके तु साहयतेः क्विप्। 'अन्येषामपि-' (सू ३५३९) इति पूर्वपदस्य दीर्घः॥ इति हान्ताः॥ ३३६ दिव औत्। (७-१-८४) दिविति प्रातिपदिकस्य औत्स्यात्सौ परे। अल्विधित्वेन स्थानिवत्त्वाभावाद् 'हल्ङ्याप्-' (सू २५२) इति

---

अथ तुरासाह्शब्दं व्युत्पादयति। **तुरं त्वरां सहत इत्यर्थे छन्दसि सह इतीति।** कर्मण्युपपदे सहेर्ण्विः स्यात् छन्दसीति तदर्थः। णकार इत्, उपधावृद्धिः, अपृक्तलोपः। ननु ण्विप्रत्ययस्य छन्दोविषयत्वेन तुरासाह्शब्दस्य कथं लोके प्रयोग इत्यत आह—**लोके त्विति।** सहेर्ण्यन्तात् क्विपि, णिलोपे, अपृक्तलोपे च सति लोके प्रयोज्य इति भावः। ननु 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति हि सहौ क्विबन्ते पर एव पूर्वपदस्य विहितो दीर्घः कथमिह स्यादित्यत आह—**अन्येषामपीति।** सहेः किम्? डकारेण सहितः सडः मृडादिशब्द, स यस्य नाम सोऽपि लक्षणया सडः, तस्यापत्यं साडि. 'अत इञ्'। 'यस्येति च' इत्यकारलोपः। आदिवृद्धिः। साडिरिति रूपम्। अत्र न मूर्धन्य इति भाष्ये स्थितम्॥ इति हान्ताः॥

**अथ वकारान्ता निरूप्यन्ते।** दिव्शब्दः स्त्रीलिङ्गः। 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्' इत्यमरः। सु—शोभना द्यौर्यस्येति बहुव्रीहौ पुंसि सुदिव् स् इति स्थिते—**दिव औत्।** 'सावनडुहः' इत्यतः सौ इत्यनुवर्तते। दिव इति षष्ठ्यन्तं 'दिवेर्डिविः' इत्यौणादिकम्, अव्युत्पन्नं वा प्रातिपदिकं गृह्यते, न तु 'दिवु क्रीडादौ' इति धातुः, निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति न्यायात्। तदाह **दिविति प्रातिपदिकस्येति।** औदिति तकार उच्चारणार्थः, नत्वादेशे तकारः श्रूयते। एवं चानेकाल्त्वप्रयुक्तं सर्वादेशत्वं न। तकारस्य इत्संज्ञा तु न, फलाभावात्। तित्स्वरितस्य तु नात्र सम्भवः। 'तिति प्रत्ययग्रहणम्' इति वार्तिकात्। ननु सुदिव् स् इत्यत्र वकारस्यौत्त्वे, इकारस्य यणि, औकारस्य स्थानिवत्त्वेन हल्त्वाद् हल्ङ्यादिना सुलोपः स्यादित्यत आह—**अल्विधित्वेनेति।** औकारादेशस्थानिभूताद् वकारात्मकहलः परत्व-

---

सडस्यापत्यं साडिः॥ इति हान्ताः॥ **दिव औत्।** तकार उच्चारणार्थः। **प्रातिपदिकस्येति।** अव्युत्पन्नस्य 'दिवेर्डिविः' इति न्यासोहितसूत्रेण व्युत्पन्नस्य वा ग्रहणम्,

---

१ 'इति हान्ताः' इत्यादयः पाठा अन्यत्र कौमुदीपुस्तकेषु नोपलभ्यन्त इति टीकाकृतैव सौकर्यार्थं मूलेऽपि निवेशिता भवेयुः। मुद्रकैरेव वा टीकायामेतादृशपाठान् दृष्ट्वा मूलेऽपि निवेशिताः स्युरिति संभाव्यते। 'क' पुस्तके तु एतदनन्तरम् 'अथ-हलन्तपुँल्लिङ्गे वकारान्तप्रकरणम्' इत्यादयः पाठाः सर्वत्राधिका उपलभ्यन्ते, परं व्यर्थविस्तरपरिजिहीर्षया ते परित्यक्ताः।

सुलोपो न। सुद्यौः, सुदिवौ, सुदिवः। सुदिवम्, सुदिवौ। **३३७ दिव उत्** (६-१-१३१) दिवोऽन्तादेश उकारः स्यात्पदान्ते। सुद्युभ्याम्। सुद्युभिः-इत्यादि ॥ इति वान्ताः ॥ चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः। चतुर्भ्यः। **३३८ षट्-चतुर्भ्यश्च**। (७-१-५५) षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः। स्यात्।

---

माश्रित्य प्रवर्तमानस्य सुलोपस्याल्विधित्वादिति भावः। **सुद्यौरिति**। आङ्गत्वात् तदन्तस्याप्यौत्त्वे यण्, रुत्वविसर्गौ। **सुदिवाविति**। अजादिषु सुदिव्शब्दः अविकृत एवेति भावः। भ्यामादौ हलि विशेषमाह—**दिव उत्**। **अन्तादेश इति**। अलोऽन्त्यसूत्रलभ्यम्। **पदान्त इति**। पदान्तादित्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः। उतस्तपरत्वं तु 'भाव्यमान उकारः सवर्णग्राहकः' इति ज्ञापनार्थमिति 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टम्। **सुद्युभ्यामिति**। वकारस्य उत्त्वे इकारस्य यण्। अत्र उकारस्य 'हलः' इति दीर्घस्तु न, वकारस्थाने उकारस्य संप्रसारणत्वानवसायात्। संप्रसारणशब्देन विहितस्यैव यण्स्थानिकस्य इकः संप्रसारणत्वाद् इति 'इग्यणः-' इति सूत्रे शब्देन्दुशेखरे स्पष्टम्। **इत्यादीति**। सुदिवे। सुद्युभ्यः। सुदिवः। सुदिवोः। सुदिवाम्। सुद्युषु ॥ इति वान्ताः ॥

**अथ रेफान्ता निरूप्यन्ते**। 'चतेरुरन्' इत्युणादिषु चतुर्शब्दो व्युत्पादितः नित्यं बहुवचनान्तः। **चत्वार इति**। जसि रूपम्। 'चतुरनडुहोः-' इत्युकाराद् आम्। उकारस्य यणिति भावः। **चतुर इति**। शसादौ सर्वनामस्थानत्वाभावान्नाम्। चतुर् आम् इति स्थिते ह्रस्वाद्यन्तत्वाभावाद् नुटि अप्राप्ते—**षट्चतुर्भ्यश्च**। षट्-चतुर्भ्य इति पञ्चमी, 'आमि सर्वनाम्नः-' इत्यत आमीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। षडिति षट्संज्ञकं गृह्यते, न तु षष्शब्दः, 'कृत्रिमाकृत्रिमयोः-' इति न्यायात्। तदाह-**षट्संज्ञकेभ्य इत्यादिना**। नुटि टकार इत्, उकार उच्चारणार्थः, टित्त्वादाद्यवयवः।

---

न तु 'दिवु क्रीडादौ' इति धातोः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया। तेनाक्षद्यूरित्यादौ न भवति। न च तत्रान्तरङ्गत्वादूठेव स्यान्न तु औत्वप्रसक्तिरिति वाच्यम्, ऊठि कृतेऽप्येकदेशविकृतन्यायेन 'दिव औत्' इत्यस्यापि प्रसक्तिसंभवादिति दिक्। **दिव उत्**। तपरकरणमिह द्युभ्यामित्यादावुकारस्य संप्रसारणत्वाद् 'हलः' इति दीर्घे प्राप्ते तन्निवारणायेत्याहुः ॥ इति वान्ताः ॥ **चत्वार इति**। 'चतेरुरन्' इत्युरन्प्रत्ययान्तश्चतुर्शब्दः। ततो जसि 'चतुरनडुहोः-' इत्याम्। **षट्चतुर्भ्यश्च**। बहुवचननिर्देशादर्थस्य प्राधान्यं विवक्षितम्। अर्थाश्रामः परत्वं शब्दद्वारकम्, तेन तदन्तविधौ सत्यपि परमचतुर्णामित्यादावेव भवति, न तु बहुव्रीहौ, तदेतद्वक्ष्यति-

णत्वम्, द्वित्वम्। चतुर्णाम्। ३३९ रोः सुपि। (८-३-१६) सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य। षत्वम्। षस्य द्वित्वे प्राप्ते। ३४० शरोऽचि। (८-४-४९) अचि परे शरो न द्वे स्तः। चतुर्षु। प्रियचत्वाः। हे प्रियचत्वः।

णत्वमिति। 'रषाभ्याम्–' इत्यनेनेति शेषः। द्वित्वमिति। 'अचो रहाभ्याम्–' इति णकारस्येति शेषः। द्वित्वस्यासिद्धत्वात् पूर्वं णत्वे कृते ततो णस्य द्वित्वम्। न च 'पूर्वत्रासिद्धमद्विर्वचने' इति निषेधः शङ्क्यः, द्वित्वे कर्तव्ये अन्यदसिद्धं नेति हि तदर्थः, न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः। चतुर् सु इति स्थिते रेफस्य विसर्गे प्राप्ते—रोः सुपि। खरीत्यनुवृत्तेः सप्तमीबहुवचनमेवात्र सुप्, खरवसानयोरित्येव सिद्धे नियमार्थ एवैष विधिरित्याह। रोरेवेति। विपरीतनियमस्तु न, 'हलोऽनन्तराः संयोगः' इति निर्देशात्। षत्वमिति। 'आदेशप्रत्यययोः' इत्यनेनेति शेषः। रेफस्य इण्त्वेन ततः परत्वादिति भावः। षस्य द्वित्व इति। अचो रहाभ्यामित्यनेनेति शेषः। शरोऽचि। 'अचो रहाभ्याम्–' इत्यतो द्वे इति 'नादिन्याक्रोशे–' इत्यतो नेति चानुवर्तते। तदाह—अचि पर इत्यादिना। तथा च चतुर्षु इत्येकषकारमेव रूपम्। न च सत्यपि द्वित्वे 'झरो झरि सवर्णे' इति लोपादेव एकषकाररूपसिद्धेरिदं व्यर्थमिति वाच्यम्। लोपस्य वैकल्पिकत्वादिति भावः। प्रियाः चत्वारो यस्येति बहुव्रीहौ 'प्रियचतुर्' शब्दो विशेष्यनिघ्न एकद्विबहुवचनान्तः। तस्य सौ रूपमाह—प्रियचत्वारिति। प्रियचतुर् स् इति स्थिते 'चतुरनडुहोः–' इत्युकारादाम्। तस्याङ्गत्वेन तदन्तेऽपि प्रवृत्तेः। तत उकारस्य यण्, हल्ङ्यादिलोपश्चेति भावः।

'णौत्वे तु नुट् नेष्यते' इत्यादिना। द्वित्वमिति। 'अचो रहाभ्याम्–' इत्यनेन। रोः सुपि। सुपीति न प्रत्याहारः, खरीत्यनुवृत्तेः। तेन पयोभ्यामित्यादौ विध्यर्थमेतन्न भवति। 'खरवसानयोः–' इत्येव सिद्धेऽयमारम्भो नियमार्थमित्याह—रोरेवेति। 'रोः सुप्येव विसर्जनीयः' इति विपरीतनियमस्त्विह न भवति। 'हलोऽनन्तराः संयोगः' इत्यादिनिर्देशात्। शरोऽचि। 'अचो रहाभ्याम्–' इत्यतो द्वे इति 'नादिन्याक्रोशे–' इत्यतो नेति चानुवर्तत इत्याह—न द्वे स्त इति। नन्वस्तु द्वित्वम्, एकस्य 'झरो झरि सवर्णे' इति लोपे सिद्धमिष्टम्। मैवम्। लोपस्य वैकल्पिकत्वेन पक्षे द्वयोः श्रवणप्रसङ्गात्। प्रियाः चत्वारश्चत्वारि वा यस्य स प्रियचत्वाः। आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहोः–' इत्याम्। हे प्रियचत्वरित्यत्र तु 'अम् संबुद्धौ' इत्यम्। इति रान्ताः। कमलामिति। 'कमला श्रीर्हरिप्रिया' इत्यमरः। कमलिति। 'तत्करोति तदाचष्टे'

१ क पुस्तके तु 'रोः सुपि'। 'खरवसानयोर्विसर्जनीयः' इत्यतो विसर्जनीय इत्यनुवर्तते' इत्येतावन्मात्रं पठितम्। 'खरीत्यनुवृत्तेः' इत्यादि नास्ति।

वनिबन्तं मध्योदात्तं छन्दस्येव । अन्तोदात्तं तु लोकेऽपीति विशेषः । मघवानौ, मघवानः । सुटि राजवत् । ३६२ श्वयुवमघोनामतद्धिते । ( ६-४-१३३ ) अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात् । 'संप्रसारणाच्च' (सू ३३०) 'आद् गुणः' (सू ६६) मघोनः । अन्नन्तानाम् किम्—मघवतः । मघवता ।

---

दकारो वकारादकारश्चानुदात्तः, 'उदात्तादनुदात्तस्य स्वरितः' इति वकारादकारः स्वरितः, तथा च मघवन्निति रूपं मध्योदात्तं संपद्यते । एतादृशमघवन्शब्दविषयकं छान्दसत्वाभिधानम् । कन्यन्ते तु मघवन्शब्दे वकारादकारः प्रत्ययस्वरेणोदात्तः, शिष्टस्वरेण मकारादकारो घकारादकारश्च अनुदात्तौ, तथा च मघवन्निति रूपमन्तोदात्तमिति स्थितिः । एतादृशमघवन्शब्दस्तु लोकवेदसाधारणः, तस्य छन्दोमात्रविषयत्वे प्रमाणाभावात् । किं च 'वनो र च' इति सूत्रे भाष्यम्—'मघवन्शब्दः अव्युत्पन्नं प्रातिपदिकम्' इति । अयमपि मघवन्शब्दः फिट्स्वरेणान्तोदात्तः लोकवेदसाधारण एव, छन्दोमात्रविषयत्वे प्रमाणाभावादिति भावः । शब्दरत्ने तु 'न शिष्यं छान्दसं हि तत्' इत्युदाहृतभाष्यवार्तिकयोः सामान्यप्रवृत्तयोः मध्योदात्तमात्रविषयसंकोचे प्रमाणं न किञ्चिदस्ति, कविप्रयोगाणां तु 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादिविषये बहुशः प्रमाददर्शनात् तेषामपि नार्षवचनसंकोचकता, अतो मघवन्शब्दस्य सर्वस्यापि लोके असाधुत्वमेवेति प्रपञ्चितम् । **सुटि राजवदिति** । तृत्वाभावपक्षे नान्तत्वाद्दीर्घ इति भावः ।

शसादावचि मघवन् अस् इत्यादिस्थिते 'अल्लोपोऽनः' इति प्राप्ते—**श्वयुवमघोनामतद्धिते** । श्वा च, युवा च, मघवा च इति द्वन्द्वः । 'वसोः संप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तते । 'भस्य' इत्यधिकृतम् । 'अल्लोपोऽनः' इत्यतः अन इत्यपकृष्यते । तच्च श्वयुवमघोनां प्रत्येकं विशेषणम्, तदन्तविधिः । फलितमाह—**अन्नन्तानामित्यादि** । 'इग्यणः संप्रसारणम्' इति वकारस्य संप्रसारणमुकारः । मघ उ अन् इति स्थिते पूर्वरूपमुक्तं स्मारयति—**संप्रसारणाच्चेति** । मघ उ न् इति स्थिते गुणं स्मारयति—**आद् गुण इति** । **अन्नन्तानां किमिति** । श्वयुवमघोनामन्नन्तत्वाव्यभिचारात् किमर्थमन्नन्तत्वविशेषणम्, मघवन्शब्दे नकारस्य त्रादेशपक्षेऽपि एकदेशविकृतस्यानन्यतया अन्नन्तत्वसत्त्वादिति प्रश्नः । **मघवत इति** । त्रादेशपक्षे मघवन्शब्दे संप्र-

---

इत्युदाहरिष्यति वैदिकप्रक्रियायाम् । **अन्तोदात्तं त्विति** । यद्यपि 'श्वन्नुक्षन्' इत्यत्र कनिन्नन्ता एते इत्युज्ज्वलदत्तादिग्रन्थपर्यालोचनया आद्युदात्तत्वं लभ्यते, तथापि 'उक्षा समुद्रो अरुणः सुपर्णः' 'पूषा त्वेतो नयतु' 'अग्निर्मूर्धा दिवः' इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः । **श्वयुव** । 'अल्लोपोऽनः' इत्यतोऽन इत्यपकृष्य व्याचष्टे—**अन्नन्तानामिति** । अन्नन्ताना

**स्त्रियां मघवती। अतद्धिते किम्–माघवनम्। मघोना, मघवभ्याम् इत्यादि। शुनः। शुना, श्वभ्यामित्यादि। युवन्शब्दे वस्योत्वे कृते। ३६३ न संप्रसारणे**

सारणनिवृत्त्यर्थम् अन्नन्तत्वविशेषणम्। यद्यप्येकदेशविकृतस्यानन्यतया अन्नन्तत्वम-स्त्येव, तथापि विशेषणसामर्थ्यात् श्रूयमाणनकारान्तस्यैव संप्रसारणमित्याहुः[1]। **स्त्रियां मघवतीति**। मघवतः स्त्री मघवती, पुंयोगेन स्त्रियां वृत्तौ 'उगितश्च'[2] इति ङीप्[3]। अत्राप्यन्नन्तत्वविशेषणाद् न संप्रसारणमिति भावः। अत्र 'उगिदचाम्–' इति नुम् तु न, ङीपा[4] व्यवधानेन तान्तस्य उगितः सर्वनामस्थानपरकत्वाभावात्। लिङ्गविशिष्टपरि-भाषा तु नेह प्रवर्तते, विभक्तौ लिङ्गविशिष्टाग्रहणमित्युक्तेरिति भावः। **माघवनमिति**। 'साऽस्य देवता' इति मघवन्शब्दाद् अणि आदिवृद्धिः। अत्राणस्तद्धितत्वात् तस्मिन् परे न संप्रसारणमिति भावः। **मघवभ्यामिति**। भ्यामादौ हलि नलोप इति भावः। **इत्यादीति**। मघोने। मघोनः। मघोनोः। मघोनाम्। मघोनि। श्वन्शब्दः प्रायेण राजवत्। शसादावचि 'श्वयुव–' इति संप्रसारणे वकारस्य उकारः। शु अन् इति स्थिते 'संप्रसारणाच्च' इति पूर्वरूपमिति मत्वाह—**शुनः। शुनेति। इत्यादीति**। शुने। शुनः। शुनोः। शुनाम्। शुनि। युवन्शब्दोऽपि प्रायेण राजवत्। शसादावचि विशे-षमाह—**युवन्शब्द इति**। युवन् अस् इत्यादिस्थिते 'श्वयुव–' इति वकारस्य संप्र-सारणे उकारे, यु उ अन् इति स्थिते 'संप्रसारणाच्च' इति पूर्वरूपे, यु उ न् इति स्थिते सवर्णदीर्घे यून इत्यादिरूपेषु सिद्धेषु, यकारस्यापि संप्रसारणे प्राप्त इत्यर्थः। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इत्यस्य तु नायं विषयः, कार्याश्रयवर्णभेदेन लक्ष्यभेदात्। अन्यथा संस्कर्तेत्यादौ 'अनचि च' इत्यादेरसकृत्प्रवृत्त्यनुपपत्तेरिति भावः।

---

**किम्। मघवत इति**। यद्यपि नस्य तादेशेऽप्येकदेशविकृतस्यानन्यत्वादन्नन्तताऽत्रा-स्त्येव, तथापि विशेषणसामर्थ्यात् श्रूयमाणनकारान्तस्यैव संप्रसारणं न त्वत्रेत्याहुः। वार्तिककृता तु 'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इत्युक्तम्। नन्वेवमपि 'अल्लोपोऽनः' इत्यल्लोपो दुर्वार इति चेन्मैवम्। भाष्यकृता पूर्वोक्तवार्तिकम-त्रानुवर्त्य 'अल्लोपोऽनः, नकारान्तस्यैव' इति व्याख्यातत्वात्। एतच्च 'अलुक्' इति सूत्रे भाष्ये स्पष्टम्। एतेन बहुधीवरी राजकीयमित्यत्राप्यल्लोपाभावः सिद्धः। 'वनो र च' 'राज्ञः क च' इत्यादेशे कृते नकारान्तत्वाभावात्। **स्त्रियां मघवतीति**। मघ-

---

१ वस्तुतस्तु 'एकदेशविकृतन्यायस्य लोकव्यवहारमूलकतया, लोके यथा छिन्न-पुच्छे शुनि श्वव्यवहारसत्त्वेऽपि पुच्छवत्त्वव्यवहारो न जायते, तथा तान्तमघवच्छब्दे मघवन्शब्दत्वव्यवहारसंभवेऽपि नान्तत्वव्यवहारासंभव एव बोध्यः।

२ 'पुंयोगादाख्यायाम्' इति क। ३ 'ङीष्' क। ४ 'ङीषा' क।

**संप्रसारणम्** । (६-१-३७) संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् , अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् , यूनः । यूना, युवभ्यामित्यादि । अर्वा । हे अर्वन् । ३६४ **अर्वणस्त्रसावनञः** । ( ६-

---

**न संप्रसारणे । इति यकारस्येति** । सवर्णदीर्घनिष्पन्नस्य उकारस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वेन संप्रसारणतया यकारस्य संप्रसारणपरकत्वाद् न संप्रसारणमिकार इत्यर्थः । ननु उकारद्वयस्थानिकस्य ऊकारस्य स्थानिवत्त्वे सति तस्य उकारद्वयात्मकतया प्रथमेन उकारेण व्यवधानात् संप्रसारणपरत्वाभावात् कथमिह निषेधः, 'येन नाव्यवधानम्–' इति न्यायस्य तु नायं विषयः, विव्यथे इत्यादौ 'व्यथो लिटि' इति वकारस्याव्यवहितसंप्रसारणपरत्वे निषेधस्य चरितार्थत्वाद् इति चेन्मैवम् । एवं हि सति 'न संप्रसारणे संप्रसारणम्' इति निषेधस्य 'व्यथो लिटि' इति संप्रसारणमात्रविषयकत्वमापद्येत, एवं च सति 'व्यथो यो लिटि' इति यकारग्रहणेनैव सिद्धे 'न संप्रसारणे संप्रसारणम्' इति सूत्रमनर्थकमेव स्यात् । अतः 'श्वयुव–' इति संप्रसारणनिषेधकत्वमस्यावश्यकमिति व्यवहितेऽपि संप्रसारणे परे यून इत्यादौ निषेधो निर्बाधः, 'यूनस्ति' इत्यादिनिर्देशाच्चेत्यलम् । ननु सकृत्प्रवृत्त्यैव युवन्शब्दे यवयोः संप्रसारणे जाते निषेधो व्यर्थः, निमित्तत्वानुपपत्तिश्च । यद्वा प्रथमं यकारस्य संप्रसारणमस्तु, तदानीं संप्रसारणपरत्वाभावेन निषेधाप्रवृत्तेः, अनन्तरं तु वकारस्यापि संप्रसारणमस्तु । तत्राह—**अत एव ज्ञापकादिति** । अन्यथा एतन्निषेधारम्भवैयर्थ्यापातादिति भावः । **इत्यादीति** । यूने । यूनः । यूनोः । यूनि ।

'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यते' इति ऋधातोः वनिपि गुणे रपरत्वे अर्वन्शब्दः अश्वे योगरूढः । तस्य सौ राजवद्रूपं मत्वाह—**अर्वा । हे अर्वन्निति । अर्वणस्त्रसावनञः** । तृ असौ इति छेदः । न विद्यते नञ् य-

---

वती, मघवत्यौ, मघवत्य इत्यत्र लिङ्गविशिष्टपरिभाषया 'उगिदचाम्–' इति नुम् न शक्यः, विभक्तौ लिङ्गविशिष्टाग्रहणादित्याहुः । **न संप्रसारणे** । 'ह्वः संप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तमानेऽपि पुनः संप्रसारणग्रहणात् प्रदेशान्तरस्थं 'श्वयुवमघोनाम्–' इत्यपि संप्रसारणं निषिध्यते, तदाह—**इति यकारस्य नेत्वमिति । यून इति** । ननूकारेण व्यवधानात्कथमत्र निषेधः । विव्याध विव्यथे इत्यादावव्यवधानेऽपि निषेधस्य चरितार्थत्वात् । न च सवर्णदीर्घे कृते नास्ति व्यवधानमिति वाच्यम् । 'अचः परस्मिन्–' इति स्थानिवत्त्वात् । अत्राहुः—विदेशस्थनिषेधार्थात्पुनः संप्रसारणग्रहणादेव व्यवधानेऽप्यत्र निषेधो भविष्यतीत्यदोषः । न च 'व्यथो लिटि' इति विदेशस्थेन यकारस्य संप्रसारणे कृते वकारस्य तदभावाय 'न संप्रसारणे–' इति सूत्रं

४-१२७ ) नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशः स्यात्, न तु सौ।

स्येति बहुव्रीहिः, अङ्गस्येत्यधिकृतम् अर्वणा विशेष्यते। तदाह। **नञा रहितस्ये-**

प्रवर्त्य पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधाने निषेधो न भविष्यतीति शङ्क्यम्। 'व्यथो लिटि' इत्येतद्धलादिः शेषापवाद इत्याकरे स्पष्टत्वात्। उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारणं भवति, न पूर्वस्येति कैयटेन व्याख्याततत्वाच्चेति। **अर्वणस्तृ।** अङ्गस्येति वर्तते, तच्चार्वणा विशेष्यते, अनञ इत्यनेनापि, तदाह—**नञा रहितस्ये-त्यादि।** असाविति पर्युदासे विभक्तौ परत एव स्यात्, ततश्चार्वतीत्यादौ न स्यादित्या-शयेनाह—**न तु साविति।** न चैवमर्वप्रिय इत्यादावतिप्रसङ्गः, अङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपाल्लुका लुप्तत्वेनात्र प्रत्ययलक्षणाभावात्। एतेन 'वाहैरलुप्यत सहस्रदगर्वे-गर्वः' इति श्रीहर्षप्रयोगो व्याख्यातः। नन्वेवं 'स्थानिवदादेशः—' इति सूत्रे धात्वङ्ग-कृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत्स्युरिति प्राचो ग्रन्थमनूद्य—तत् किं परिगणनम्, उदाहरणमात्रं वेति विकल्प्य, नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यादिति मनो-रमायां यदुक्तं तत् कथं संगच्छेत, अव्ययस्योक्तरीत्यानङ्गत्वात्। न च 'न लुमता—' इत्यनेनाङ्गकार्यनिषेधेऽप्यङ्गसंज्ञाया अनिषेधान्नोक्तदोष इति वाच्यम्, प्रत्यये परतः पूर्वस्य यत् कार्यमाङ्गमनाङ्गं वा तत्सर्वं 'न लुमता—' इत्यनेन निषिध्यते, इति 'यणोऽचि च' इति सूत्रस्थमनोरमाग्रन्थपर्यालोचनया लुमताशब्देन लुप्ते अङ्गसंज्ञाया अप्यस्वीकार्य-त्वात्, तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात्। यदि तु लुका लुप्तेऽप्यङ्गत्वं स्वी-क्रियते, तदायं ग्रन्थो 'यचि भम्' 'वृषण्वस्वश्वयोः' इत्यत्र 'वृष वर्षुकं वसु धनं यस्य वृषण्वसु, वृषा अश्वो यस्य वृषणश्व इत्युदाहृत्य भत्वादिह नलोपो न भवति। अल्लोपस्तु अनङ्गत्वान्न।' इति मूले वैदिकप्रक्रियायां वक्ष्यमाणग्रन्थेन सह विरुध्येत। न च 'अल्लोपो-ऽनः' इत्यत्राङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽनिति व्याख्यानाद् अल्लोपस्य तत्र प्राप्त्यभावादनङ्गत्वादिति समाधानं व्यर्थमिति भ्रमितव्यम्, भसंज्ञयैव यजादिस्वा-दिपरो योऽनिति व्याख्यानवद् वस्वश्वयोः परतो योऽनिति व्याख्यानस्यापि लाभात्। तस्मात्पदात्पृथगित्येव वक्तव्ये अङ्गपदाभ्यामित्यङ्गग्रहणं रभसकृतमेवेति चेत्। अत्राहुः— 'न लुमता—' इति सूत्रे लुमता लुप्ते तन्निमित्ताङ्गस्याङ्गसंज्ञकस्य कार्यं न स्यादिति यदा व्याख्यायते, तदा 'अर्वणस्तृ—' इत्याद्यङ्गकार्याप्रवृत्तावप्यङ्गसंज्ञाया निर्बाधत्वादङ्गग्रहणं तत्रत्यं सम्यगेव। यदा त्वाङ्गमनाङ्गं वेत्यादिमनोरमाग्रन्थस्यानङ्गत्वादिति मूलग्रन्थस्य च स्वारस्यपर्यालोचनया लाघवादव्ययस्याङ्गत्वे फलाभावाच्च प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते, तदा त्वविशेषेण अङ्गसंज्ञाया अपि निषेधादङ्गग्रहणं तत्र रभसकृतमेव। न च 'न लुमता—' इत्यनेनाङ्गसंज्ञानिषेधे 'युवोरनाकौ' इति सूत्रस्थभाष्यकैयटाभ्यां

उगित्त्वान्नुम्। अर्वन्तौ, अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम् इत्यादि। अनञः किम्-अनर्वा यज्ववत्। **३६५ पथिमथ्यृभुक्षामात्।**

---

**त्यादिना।** ऋकार इत्। 'अलोन्त्यस्य' इति नस्य तः। **उगित्त्वान्नुमिति।** 'उगिदचाम्–' इत्यनेनेति भावः। **अर्वन्ताविति।** नुमो नस्य 'नश्चापदान्तस्य–' इति अनुस्वारः, परसवर्ण इति भावः। शसादावचि असर्वनामस्थानत्वान्नुम् नेति मत्वाह–**अर्वत इति। अर्वद्भ्यामिति।** 'स्वादिषु–' इति पदत्वाज्जश्त्वमिति भावः। **इत्यादीति।** अर्वद्भिः। अर्वते। अर्वद्भ्यः। अर्वतः, अर्वतोः, अर्वताम्। अर्वति, अर्वत्सु। **अनञः किमिति।** अनञ इत्यस्य किं प्रयोजनमित्यर्थः। **अनर्वा यज्ववदिति।** अनर्वन्शब्दो यज्ववदित्यर्थः। शसादावचि 'न संयोगाद्वमन्तात्' इत्यल्लोपो नेति भावः।

पथिन्, मथिन्, ऋभुक्षिन्, एते नकारान्ताः। तेषु विशेषमाह—**पथिमथ्यृभुक्षामात्।** पन्थाश्च मन्थाश्च ऋभुक्षाश्च पथिमथ्यृभुक्षाणः, तेषामिति विग्रहः।

---

विरोधः स्यादिति वाच्यम्। तयोस्तत्र प्रौढिवादेन प्रवृत्तत्वात्। तथा च 'न लुमता तस्मिन्' इति सिद्धान्तः, प्रत्यये परतः पूर्वस्य कार्यं निषिध्यत इति मनोरमाग्रन्थश्च स्वरसतः संगच्छत इति। ननु ऋधातोर्विचि गुणे च अरिति रूपम्, तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति, 'छन्दसीवनिपौ–' इति वनिपि वेदे अर्वेति सेत्स्यति, ऋधातोरेव 'स्नामदिपद्यर्ति–' इत्यादिना वनिपि तु लोकेऽप्यर्वेति सेत्स्यति रूढिशब्दश्चायम्, 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरकोशात्। ततश्चार्थोऽपि न भिद्यत इति किमनेन सूत्रेणेति चेत्। अत्राहुः—नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञुपपदे च नान्तस्य प्रयोगो भवति, अन्यत्र तु नान्तस्य प्रयोगो न भवतीति व्यवस्थार्थमिदं 'तृज्वत् क्रोष्टुः' इति त्रिसूत्रीवदिति। यत्तु कैश्चिदुक्तम्—अर्वन्मघवन्शब्दयोरपि भाषायामसाधुत्वमेव। 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्॥' इति वार्तिकादिति। तदापाततः, वार्तिकस्य वनिबन्तमध्योदात्तपरत्वात्, छन्दस्येव वनिब्विधानात्। तथा च श्रीहर्षः—'वाहैरलुप्यत सहस्रदृगर्वगर्वः' इति प्रायुङ्क्त। **अर्वन्तौ, अर्वन्त इति।** व्यपदेशिवद्भावेनार्वन्नन्तत्वात् त्रादेशः। न च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति वाच्यम्, तस्य प्रत्ययविधिविषयत्वात्। **पथिमथि।** 'गमेरिनिः' इत्यत इनिरिति 'परमे कित्' इत्यतः किदित्यनुवर्तमाने 'मन्थः' इत्यनेन निष्पन्नो मथिन्शब्दः। 'पतस्थ च' चादिनिः। पथिन्। 'ऋभुक्षः स्वर्गवज्रयोः'। ततो मत्वर्थीयेनिना ऋभुक्षिन्निति बोध्यम्। ननु 'अस्थिदधि–' इति सूत्रे उदात्ततया पठितेऽप्यनभीष्टसिद्धौ 'अनङुदात्तः' इत्युदात्तग्रहणं 'गुणा अभेदकाः' इति

**(७-१-८५)** एषामाकारोऽन्तादेशः स्यात्सौ परे। आ आत् इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः। **३६६ इतोऽत्सर्वनामस्थाने। (७-१-८६)** पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे। **३६७ थो न्थः। (७-१-८७)**

'सावनडुहः' इत्यतः साविल्यनुवर्तते, आदिति तपरकरणम्, आकार एव विधेयः। तदाह—**एषामित्यादिना**। 'अलोऽन्त्यस्य' इति नकारस्य आकारः। ननु नकारस्य आन्तरतम्याद् अनुनासिक एव आकारः प्राप्नोति। न च निरनुनासिकस्यैवाकारस्योच्चारणात् शुद्ध एव आकार इति वाच्यम्, गुणानामभेदकत्वात्, भेदकत्वेऽपि तपरकरणेन अनुनासिकस्याप्याकारस्य ग्रहणात्, व्यक्तिपक्षे तपरसूत्रस्य अनेणसु[1] दीर्घप्लुतेषु विध्यर्थत्वात्। न च ग्रहणकसूत्रे वार्णसमाम्नायिकत्वेन निश्चितस्याणग्रहणस्य अप्रत्यय इत्यस्य च तपरसूत्रे अनुवृत्तेराकारस्येहानणत्वाद् विधीयमानत्वाच्च न तत्काल इति वाच्यम्, तपरसूत्रे अणग्रहणस्य अप्रत्ययग्रहणस्य चानुवृत्तौ मानाभावादित्यत आह—**आ आदिति**। सवर्णदीर्घेणाकारान्तरं प्रश्लिष्यते, ततश्चाननुनासिकरूप आकारो भवतीति लभ्यते। न च सर्वादेशत्वं शङ्क्यम्, न ह्यत्र वर्णद्वयं विधीयते, विशेषणविशेष्यभावेनान्वयाभ्युपगमेन अननुनासिकाकारस्यैकस्यैव विधानादिति भावः। भाष्ये तु अनुनासिकविधेः संमतत्वे प्रतिपत्तिलाघवाय अनुनासिकस्यैव 'ञ्चः, ऊँ' इत्यत्रेव उच्चार्य विधानसंभवात्तदनुच्चारणाच्छुद्ध एव आकार इह विधेय इत्युक्तम्। तपरकरणं तु उच्चारणार्थमेव। वस्तुतस्तु 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषयैव अनुनासिकाकारनिराससंभवादाकारप्रश्लेषक्लेशो व्यर्थः। 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति पाठस्तु प्रामादिकः, 'ज्यादादीयसः' इति सूत्रे आदिति तपरनिर्देशेनेयं परिभाषा ज्ञाप्यते—'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येव भाष्ये पाठात्, अणुदित्सूत्रभाष्येऽप्यणग्रहणरहिताया एवास्याः परिभाषायाः पाठदर्शनाच्चेत्यास्तां तावत्। नकारस्य आत्त्वे पथि आ स् इति स्थिते—**इतोऽत्**। 'पथिमथ्यृभुक्षाम्' इत्यनुवर्तते। इत इति तपरकरणं स्पष्टार्थम्, पथ्यादिषु त्रिषु दीर्घप्लुतयोरसंभवात्। भाव्यमानत्वादेव सवर्णाग्राहकत्वे सिद्धे अदिति तपरकरणमपि स्पष्टार्थमेव। तदाह—**पथ्यादेरित्यादिना**। पथ आ स् इति स्थिते—**थो न्थः**। थः न्थ इति च्छेदः। थ इति

पक्षं ज्ञापयतीति निर्विवादम्। तथा च तस्मिन् पक्षे सूत्रेऽननुनासिकोच्चारणेऽप्यान्तरतम्यादनुनासिकाकारः स्यादत आह—**आआदिति। इतोऽत्सर्वनाम**। आदिति वर्तमाने पुनरद्वचनं किमर्थम्, कृतेऽप्यद्वचने पन्था इत्यत्र सवर्णदीर्घेण भाव्यमन्यत्र तूपधाया दीर्घेणेति चेत्। मैवम्। ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' इति दीर्घ-

[1] 'अणसु' इति क।

थिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। पन्थाः, पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ। ३६८ **भस्य टेर्लोपः**। (७-१-८८) भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा, पथिभ्यामित्यादि। एवं मन्थाः, ऋभुक्षाः। स्त्रियां

---

षष्ठी। आदेशे अकार उच्चारणार्थः। पथिमथिग्रहणमनुवर्तते। ऋभुक्षिग्रहणं निवृत्तम्, तत्र थकाराभावात्। 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थानग्रहणमनुवर्तते। तदाह—**पथिमथोरित्यादिना। पन्था इति।** नकारस्य आत्वे इकारस्य अत्वे थकारस्य न्थादेशे पन्थ आ स् इति स्थिते सवर्णदीर्घे रुत्वविसर्गाविति भावः। **पन्थानाविति।** पथिन् औ इति स्थिते सावित्युक्तेर्नात्त्वम्, 'इतोऽत्' इति इकारस्यात्त्वे थकारस्य न्थादेशे 'सर्वनामस्थाने च–' इति दीर्घे रूपमिति भावः। एवं पन्थानः। पन्थानम्, पन्थानौ। शसादावचि विशेषमाह—**भस्य टेर्लोपः। पथ्यादेरिति।** 'पथिमथ्यृभुक्षाम्' इत्यनुवर्तत इति भावः। **पथः। पथेति।** पथिन् अस् पथिन् आ इति स्थिते इनो लोपे रूपद्वयमिति भावः। **पथिभ्यामिति।** नलोपे रूपम्। **इत्यादीति।** पथिभिः। पथे। पथिभ्यः। पथः, पथोः, पथाम्। पथि, पथोः, पथिषु।

**एवं मन्थाः, ऋभुक्षा इति।** मन्थदण्डवाची मथिन्शब्दः। तस्य आत्त्वम्, अत्त्वम्, न्थादेशः, टिलोपश्च। मन्थाः, मन्थानौ, मन्थानः। मन्थानम्, मन्थानौ, मथः। मथा, मथिभ्याम्। मथे। मथः, मथोः, मथाम्। मथि। मथिषु। ऋभुक्षिन्शब्दस्तु इन्द्रवाची। तत्र 'थो न्थः' इतिवर्जमात्त्वादि भवति, षात्परत्वाण्णत्वं च। ऋभुक्षाः, ऋभुक्षाणौ–इत्यादि। यत्तु अत्र पन्थानमात्मन इच्छति पथीयति, 'सुप आत्मनः क्यच्', 'नः क्ये' इति पदत्वाद् नलोपः, 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'सनाद्यन्ता–' इति धातुत्वम्, ततः क्विप्, अल्लोपयलोपौ, एकदेशविकृतस्यानन्यत्वात् 'पथिमथि–' इत्यात्त्वम्, 'थो न्थः', 'इतोऽत्–' इत्यत्त्वं तु तपरकरणान्न भवति, पन्थाः। 'एरनेकाचः–' इति यणं बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः', ततः संयोगपूर्वत्वान्न यण्, किन्त्वियङेव–पन्थियौ। 'भस्य टेर्लोपः' पथः–इत्यादि प्रौढमनोरमातत्त्वबोधिन्यादावुक्तम्, तदेतदनुनासिकविधौ सति प्रतिपत्तिलाघवायानुनासिकस्यैव उच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमिति भाष्यविरोधादुपेक्ष्यम्। पथीयतेः क्विपि हि ईकारस्य शुद्धाकारार्थम् अनुनासिकानुच्चारणस्यावश्यकत्वे तदसंगतिः स्पष्टैव। तस्मात् पथीयतेः क्विपः अनभिधानमेवोचितमिति शब्देन्दुशेखरे स्पष्टम्। प्रसङ्गादाह—**स्त्रियामिति।**

---

विकल्पे सति पक्षे ह्रस्वश्रवणार्थमद्वचनस्यावश्यकत्वात्। **थो न्थः।** स्थान्यादेशौ द्वावप्यनच्कौ। 'थेन्थः' इत्येव सिद्धे 'इतोऽत्सर्वनामस्थाने' इत्येतदृभुक्षिन्नर्थम्। त्रयाणामनुवृत्तावपि ऋभुक्षस्थो न संभवतीत्याशयेनाह—**पथिमथोरिति।** प्रसङ्गादाह—

**नान्तलक्षणो ङीपि भत्वाट्टिलोपः। सुपथी सुमथी नगरी। अनृभुक्षी सेना। आत्त्वं नपुंसके न भवति 'न लुमता-' (सू २६३) इति प्रत्ययलक्षणनिषेधात्। सुपथि वनम्। 'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः' (वा ४७८६)। हे सुप-**

---

सु-शोभनः पन्था अस्या इति बहुव्रीहिः, 'ऋन्नेभ्यः-' इति ङीप्, 'भस्य टेर्लोपः' इति इनो लोपः, सुपथीति रूपम्। 'ऋक्पूः-' इत्यप्तु न, 'न पूजनात्' इति निषेधात्। न चैवमपि 'न पूजनात्' इति निषेधस्य षचः प्रागेव प्रवृत्तेर्वक्ष्यमाणत्वाद् 'इनः स्त्रियाम्' इति कप् दुर्वार एवेति वाच्यम्, 'युवोरनाकौ' इत्यत्र सुपथीति भाष्यप्रयोगेण तस्यानित्यत्वज्ञापनात्। न च लिङ्गविशिष्टपरिभाषया 'पथिमथि-' इत्यात्त्वं थो न्थश्च कुतो नेति वाच्यम्, विभक्तौ लिङ्गविशिष्टाग्रहणात्। **सुमथी इति**। सु-शोभनः मन्था यस्या इति विग्रहः। ङीबादि पूर्ववत्। **अनृभुक्षी सेनेति**। अविद्यमानः ऋभुक्षा यस्या इति विग्रहः। 'नञोऽस्त्यर्थानाम्-' इति समासः। ऋभुक्षाः स्वामी[3]।

अथ सु-शोभनः पन्था अस्य वनस्येति बहुव्रीहौ सुपथिन्शब्दान्नपुंसकात् 'स्वमोर्नपुंसकात्' इति सोर्लुकि प्रत्ययलक्षणमाश्रित्य सुप्परत्वसत्त्वात् 'पथिमथि-' इत्यात्त्वमाशङ्क्याह—**आत्त्वं नपुंसक इति। सम्बुद्धाविति**। यद्यपि भाष्ये नपुंसकानामित्येव पठितम्, तथापि हे चर्मन् हे चर्मेति भाष्ये सम्बुद्धावेव उदाहृतत्वात् तन्मात्र-

---

**स्त्रियामिति। नान्तलक्षण इति**। 'न पूजनात्' इति निषेधाद् 'ऋक्पूरब्धूः-' इत्यप्रत्ययो नेति भावः। **सुपथीति**। 'इनः स्त्रियाम्' इति कप्तु न कृतः, समासान्तविधेरनित्यत्वात्। 'युवोरनाकौ' इति सूत्रे 'सुपथी' इति भाष्याच्च। 'न पूजनात्' इति निषेधस्य तु नायं विषयः, 'षचः प्राचीनेष्वेव सः' इति वक्ष्यमाणत्वात्। पथिमथीत्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाऽग्रहणान्न भवति। अत्रेदं बोध्यम्—पन्थानमात्मन इच्छति पथीयति, ततः क्विप्, अल्लोपयलोपौ, एकदेशविकृतस्यानन्यत्वात् 'पथिमथि-' इत्यात्वम्, 'थो न्थः', पन्थाः। 'इतोऽत्सर्वनामस्थाने' इत्यत्त्वं न भवति, इत इति तपरकरणाद्। 'एरनेकाचः-' इति यणं बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः', संयोगपूर्वकत्वान्न यण्, पन्थियौ, पन्थियः। पन्थियम्,

---

१ सुमथीति पाठोऽन्यत्र कौमुदीपुस्तकेषु न लभ्यते, न च नगरीविशेषणमिदं स्वारस्येनोपपद्यते। २ 'सुपथी' इति 'क' 'ख' पाठः पुनरुक्तिभिया 'ग' संपादकेनोपेक्षितः। स्वयमेव च 'सुमथी' इति मूलपाठं प्रकल्प्य तदर्थस्वारस्यमपि दृष्टिपथादपसारितम्। वस्तुतस्तु पङ्क्तिरियमत्र प्रमादपतितैव प्रतिभातीति न तदनुरोधेनास्वारसिको मूलपाठः कल्पनामर्हति। ३ 'ऋभुक्षाः स्वामी' इति पाठः क्वचिन्नास्ति।

थिन्, हे सुपथि। 'नलोपः सुप्स्वर–' (सू ३५३) इति नलोपस्यासिद्धत्वाद् ध्रस्वस्य गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात्सुपन्थानि। पुनरपि सुपथि, सुपथी, सुपन्थानि। सुपथा। सुपथे, सुपथिभ्यामित्यादि। ३६६ ष्णान्ता षट् (१–१–२४) षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। 'षड्भ्यो लुक्' (सू २६१) पञ्च। पञ्च। संख्या किम्–विप्रुषः, पामानः। शतानि, सहस्राणि

---

विषयत्वमस्येति भावः। सम्बुद्धेर्लुका लुप्तत्वात् सम्बुद्धिपरत्वाभावाद् 'न ङिसम्बुद्ध्योः' इति निषेधाप्रवृत्तेः नित्यं नलोपप्राप्तौ विकल्पार्थोऽयमारम्भः। ननु नलोपपक्षे 'ह्रस्वस्य गुणः' इति सम्बुद्धौ परतो गुणे कर्तव्ये 'न लुमता–' इति निषेधस्यानित्यत्वाद् हे वारे हे वारि इतिवद् गुणविकल्पः स्यादित्यत आह—**नलोपः सुविति**। **द्विवचन इति**। सुपथिन्शब्दाद् औङः शीभावे सति असर्वनामस्थानत्वेन भत्वाद् 'भस्य टेर्लोपः' इति इनो लोपे सुपथी इति रूपमित्यर्थः। **शाविति**। सुपथिन्शब्दाद् जश्शसोः शिभावे सति तस्य सर्वनामस्थानत्वाद् 'इतोऽत्–' इत्यत्त्वे, 'थो न्थः' इति थस्य न्थादेशे नान्तत्वाद् दीर्घे सुपन्थानि इति रूपमित्यर्थः।

पञ्चन्शब्दो नित्यं बहुवचनान्तः। तस्य षट्संज्ञाकार्यं लुकं विधास्यन् षट्संज्ञामाह—**ष्णान्ता षट्**। ष् च नश्च ष्णौ, ष्टुत्वेन णः, ष्णौ अन्तौ यस्याः सा ष्णान्ता। 'बहुगणवतुडति संख्या' इत्यतः संख्येत्यनुवर्तते। तच्च पूर्वसूत्रे बहुगणवतुडतिपरमपि शब्दाधिकारादिह पञ्च षडित्यादिप्रसिद्धसंख्याबोधकशब्दपरमाश्रीयते, बहुगणवतुडतिषु ष्णान्तत्वासम्भवात्, तदाह—**षान्तेत्यादिना**। **षड्भ्यो लुक् इति**। अनेन जश्शसोर्लुगिति शेषः। **पञ्च पञ्चेति**। जश्शसोर्लुकि नलोप इति भावः। **संख्या किमिति**। संख्याग्रहणानुवृत्तेः किं फलमिति प्रश्नः। **विप्रुषः, पामान इति**। विप्रुष्शब्दस्य पामन्शब्दस्य च ष्णान्तत्वेऽपि संख्यावाचकत्वाभावेन षट्संज्ञाविरहात् ततः परस्य जसो न लुगिति भावः। ननु शतशब्दाद् जश्शसोः शिभावे 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने च–' इति दीर्घे शतानीति रूपम्, एवं सहस्राणीत्यपि रूपम्, तत्र 'अट्कुप्वाङ्–' इति णत्वं विशेषः। इह 'तदागमाः–' इति न्यायेन नुमः अङ्गभक्तत्वात् शतन्शब्दसहस्रन्शब्दयोः नान्तसंख्याशब्दत्वात् षट्संज्ञायां सत्यां 'षड्-

---

पन्थियौ। **भस्य टेर्लोपः**। पथः। पथा, पथीभ्याम्, पथीभिरित्यादि। एवं मथीयतेः क्विपि तु मन्थाः, मन्थियौ, मन्थियः। ऋभुक्षाः, ऋभुक्षियौ, ऋभुक्षियः इत्यादि। एतेन 'इतोऽत्सर्वनामस्थाने' इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति हरदत्तग्रन्थः प्रत्युक्तः। आदेशे तपरकरणस्यानावश्यकत्वेऽपि स्थानिनि तु पन्थियौ इत्यादिसिद्धये तस्यावश्यकत्वात्। ननु नलोपस्यासिद्धत्वात् 'पथिमथ्यृभुक्षाम्–'

इत्यत्र संनिपातपरिभाषया न लुक्, सर्वनामस्थानसंनिपातेन कृतस्य नुमस्तद्विघातकत्वात्। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। 'षट्चतुर्भ्यश्च' (सू ३३८) इति नुट्। **३७० नोपधायाः।** (६-४-७) नान्तस्योपधाया दीर्घः स्यान्नामि परे। नलोपः, पञ्चानाम्। पञ्चसु। परमपञ्च। परमपञ्चानाम्। गौणत्वे तु न लुङ्नुटौ, प्रियपञ्चा, प्रियपञ्चानौ, प्रियपञ्चानः। प्रियपञ्च्नाम्। एवं सप्तन् नवन् दशन्।

---

भ्यो लुक्' इति जश्शसोर्लुक् स्यादत आह—**शतानीत्यादि।** **सर्वनामेति।** सर्वनामस्थानं परत्वेन उपजीव्य प्रवृत्तस्य नुमः सन्निपातपरिभाषया सर्वनामस्थानभूतजश्शसोर्लुकं प्रति निमित्तत्वाभावादित्यर्थः। **पञ्चभिः।** **पञ्चभ्य इति।** नलोपे रूपम्। पञ्चन् आम् इति स्थिते 'षट्चतुर्भ्यश्च' इति नुटि नलोपे तस्यासिद्धत्वाद् 'नामि' इति दीर्घे अप्राप्ते आह—**नोपधायाः।** नेति लुप्तषष्ठीकम् अङ्गस्येत्यधिकृतस्य विशेषणम्, तदन्तविधिः, 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते, 'नामि' इति सूत्रं च, तदाह—**नान्तस्येत्यादिना।** **नलोप इति।** नलोपस्यासिद्धत्वात् प्रथमं दीर्घे ततो न लोप इत्यर्थः। **परमेति।** परमाश्च ते पञ्च चेति विग्रहः। 'षड्भ्यो लुक्' इत्यस्य 'षट्चतुर्भ्यश्च' इत्यस्य चाङ्गत्वात् तदन्तेऽपि प्रवृत्तिरिति भावः। प्रियाः पञ्च यस्येति बहुव्रीहौ प्रियपञ्चन्शब्दो विशेष्यनिघ्नः त्रिलिङ्गः। तस्य पुंस्त्वे विशेषमाह—**गौणत्वे त्विति।** 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इति च बहुवचननिर्देशेन षट्चतुरर्थप्राधान्यावगमादिति भावः। **प्रियपञ्चेति।** सुटि हलादौ च राजवत्। शसादावचि तु

---

इति नस्यात्वे पन्थ्याः, मन्थ्याः, ऋभुक्ष्या इत्येव भवितव्यम्, न तु पन्था इत्यादि इति चेत्। अत्राहुः—नलोपस्यान्तर्वर्ती सुन्निमित्तम्, आत्वस्य तु बहिर्वर्ती सुप्। प्रत्यासत्त्या हि यत्र एक एव सुब् निमित्तभूतस्तत्रैव 'नलोपः सुप्स्वर–' इति नलोपस्यासिद्धत्वं नान्यत्रेति नात्र नकारस्यात्वं किं त्वीकारस्येति। **ष्णान्ता षट्।** स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम्, तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपरं संपद्यत इत्याशयेनाह—**संख्येति।** प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तम्, तत् 'पञ्चेत्यत्र नलोपे कृतेऽपि–' इत्यादिवक्ष्यमाणस्वग्रन्थविरुद्धम्। संप्रत्यनान्तत्वेऽप्युपदेशे नान्तत्वमासीदिति किमसिद्धत्वेनेति दिक्। **संनिपातेति।** तथा चोपदेशकाले इति व्याख्यानं निष्फलमपीति भावः। यत्त्वाहुः—परिभाषाया अनित्यत्वाल्लुक् स्यादिति, तत्साहसमात्रम्। इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया अकिंचित्करत्वापत्तेः। यदप्याहुः—उपदेशग्रहणमिह कुतः समागतमित्याशङ्क्य 'ष्णान्ता–' इत्यन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यत इति। तदपि न। संख्येत्यस्यापकर्षणेन संज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात्। **नोपधायाः।** नेति लुप्तषष्ठीकं पदमङ्गस्य विशेषणम्। नलोपस्या-

**३७१ अष्टन आ विभक्तौ । (७-२-८४)** अष्टन आत्वं स्याद्धलादौ विभक्तौ
**३७२ अष्टाभ्य औश् । (७-१-२१)** कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् । 'अष्टभ्यः' इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । वैकल्पिकं चेदमष्टन आत्वम् । 'अष्टनो दीर्घात्, (३७१८) इति सूत्रे दीर्घग्रहणाज्ज्ञापकात् ।

---

'अल्लोपोऽनः' इत्यकारलोपे नस्य श्चुत्वेन ञकारः, चकारे तु परे अनुस्वारस्य परसवर्णो ञकारः स्थित एव, तथा च ञकारद्वयमध्ये चकारः ।

अष्टन्शब्दो नित्यं बहुवचनान्तः । तस्य विशेषमाह—**अष्टन आ विभक्तौ ।** 'रायो हलि' इत्यतो हलि इत्यपकृष्यते, तच्च विभक्तेर्विशेषणम्, तदादिविधिः, तदाह—**अष्टन आत्वमित्यादिना ।** ग्रहणकसूत्रे अणग्रहणेन वार्णसमाम्नायिकानामेव ग्रहणादाकारस्यानणत्वाद् भाव्यमानत्वाच्च शुद्ध एव नकारस्य आकारः । **अष्टाभ्य औश् ।** 'जश्शसोः शिः' इत्यतो जश्शसोरित्यनुवर्तते, अष्टाभ्य इति पञ्चमी, 'तस्मादित्युत्तरस्य' इत्युपतिष्ठते, अष्टा इत्याकारान्तशब्दो विवक्षितः, तदाह—**कृताकारादित्यादिना ।** नकारस्यात्वे कृते सति यः अष्टाशब्दः तस्मादित्यर्थः । शित्त्वात् सर्वादेशः । 'आदेः परस्य' इति तु नात्र प्रवर्तते, 'अनेकाल्शित्—' इति परेण तस्य बाधात् । औशादेशोऽयं 'षड्भ्यो लुक्' इत्यस्यापवादः । ननु जश्शसोः परतः अष्टन्शब्दस्यात्वं नास्त्येव, 'अष्टन आ विभक्तौ' इति आत्वविधौ हलीत्यपकर्षस्य उक्तत्वात्, ततश्च जश्शसोरौश्विधौ कृताकाराद् अष्टन इत्यनुपपन्नम्, तत्राह—**अष्टभ्य इति वक्तव्य इत्यादि ।** भ्यसि अष्टभ्यः, अष्टाभ्य इति रूपद्वये सत्यपि औश्विधौ लाघवादष्टभ्य इत्येव निर्देश उचितः, आकारनिर्देशात्तु जश्शसोरचि परतोऽप्यात्वं विज्ञायत इत्यर्थः । ननु 'अष्टन आ विभक्तौ' इति हलादिविभक्तौ अष्टनो नित्यमात्वविधानाद् अष्टाभ्य इत्येव निर्देष्टव्यम्, प्रामाणिकगौरवस्यादोषत्वात् । ततश्च औश्विधौ अष्टाभ्य इति निर्देशः जश्शसोरष्टनः कथमात्वं ज्ञापयेदित्यत आह—**वैकल्पिकं चेदमिति । ज्ञापकादिति ।** 'अष्टनो दीर्घात्' इति सूत्रम् । दीर्घान्तादष्टन्शब्दात् परा असर्वनामस्थानविभक्तिरुदात्ता स्यादिति तदर्थः । अष्टाभिर्विकर्षतीत्यत्र भकारादिकार उदात्तः । 'अनुदात्तं पदमेकवर्जम्' इति शिष्टमनुदात्तम् । दीर्घादिति विशेषणाद् अष्टभिरित्यत्र आत्वाभावस्थले भिस उदात्तत्वं न भवति, किं तु मध्योदात्तत्वमेव, 'झल्युपोत्तमम्' इत्यस्य प्रवृत्तेः । षट्चतुर्भ्यो या

---

सिद्धत्वाद् 'नामि' इति दीर्घो न प्रवर्तत इत्ययमारम्भः । **गौणत्वे त्विति ।** बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः । **प्रियपञ्चामिति ।** ञद्वयमध्ये चकारः । **अष्टन आ विभक्तौ ।** सौत्रत्वादिहाल्लोपो न कृतः । 'कनिन्युवृषितक्षि—' इत्यतः कनिन्नित्यनुवर्तमाने 'सप्यशूभ्यां तुट् च' इत्यनेन सप्तन् अष्टन्शब्दौ निष्पन्नौ 'रायो हलि'

**अष्टौ । अष्टौ । परमाष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु ।**

झलादिविभक्तिः तदन्ते पदे विद्यमानमुपोत्तममुदात्तं स्यादिति तदर्थः । यदि तु अष्टन आत्वं नित्यं स्यात्, तर्हि अष्टभिरिति ह्रस्वान्तव्यावृत्तये क्रियमाणं दीर्घग्रहणमनर्थकं स्यात्, व्यावर्त्याभावात् । आत्वस्य विकल्पितत्वे तु तदभावपक्षे अष्टभिरिति व्यावर्त्यस्य सत्त्वाद् दीर्घग्रहणमर्थवत् । अतो दीर्घग्रहणमष्टन आत्वस्य वैकल्पिकत्वे ज्ञापकमित्यर्थः । **अष्टाविति** । अष्टन्शब्दाद् जश्शसोरौश् । शित्त्वात् सर्वादेशः । अष्टाभ्य इति निर्देशाद् नकारस्यात्वम्, सवर्णदीर्घः, वृद्धिरिति भावः । **परमाष्टाविति** । 'अष्टाभ्य औश्' इत्यस्य आङ्गत्वात्तदन्तेऽपि प्रवृत्तिरित्यर्थः । **अष्टाभिरिति** । हलादौ[1] आत्वे सवर्णदीर्घः । **अष्टानामिति** । आदौ नुटि कृते सति हलादित्वादात्वम् । न च नान्तत्व-

इत्युत्तरसूत्राद्धलीत्यपकृष्यते, तच्च विभक्तेर्विशेषणमित्यभिप्रेत्य व्याचष्टे—**हलादाविति** । हलीत्यस्यानपकर्षणे त्वष्टानामिति न सिध्येत् । परत्वान्नित्यत्वाच्च नुटः प्रागात्वे कृते अनान्तत्वेन षट्संज्ञाभावान्नुटोऽप्रवृत्तेः । न च यथोद्देशपक्षे अन्तरङ्गत्वात्प्रागेव कृता षट्संज्ञा एकदेशविकृतन्यायेन कृतात्वेऽपि सुलभेति वाच्यम् । अल्विधौ उक्तन्यायायोगात् । किं च प्रियाष्टानौ, प्रियाष्टानः, प्रियाष्ट्नः, प्रियाष्ट्नेत्याद्यपि न सिध्येत्, उक्तरीत्या तत्राप्यात्वप्रवृत्तेरिति बोध्यम् । **अष्टाभ्य औश्** । शित्त्वात्सर्वादेशः । ननु 'अनेकाल् शित् सर्वस्य' इति सूत्रे शिद्ग्रहणं प्रत्याख्यायानेकाल्त्वादेव सर्वादेश इति सुवचम् । न च शस्येत्संज्ञायामनेकाल्त्वं नास्तीति वाच्यम्, शकारोच्चारणसामर्थ्यादत्र भूतपूर्वगत्याश्रयणात् । न चैवम् 'अर्वणस्त्रसौ–' इति त्रादेशस्यापि सर्वादेशता स्यादिति वाच्यम्, ऋकारस्योगित्कार्यार्थत्वेन तत्र सामर्थ्योपक्षयात् । न चैवमौशित्यादौ शकारः श्रवणार्थ एव स्यादिति शङ्क्यम्, अनुशतिकादिषु 'ऐहलौकिकम्' इति निर्देशेन शकारस्येत्संज्ञाभ्युपगमादिति दिक् । **कृताकारादिति** । ननु हलीत्यपकृष्यत इत्युक्तम्, तत् कथं कृताकारतेत्यत आह—**अष्टभ्य इतीति** । अष्टाभ्य इति कृतात्वस्येदमनुकरणम्, न तु लक्षणवशसंपन्नमात्वम्, तथा हि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थम् 'अष्टभ्य औश्' इत्येव ब्रूयादिति भावः । **इदमिति** । श्रुतमनुमितं चेत्यर्थः । **अष्टनो दीर्घादिति** । दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात् । अष्टाभिः । दीर्घात्किम्, अष्टभिः । मध्योदात्तमिदम् । 'षट्त्रिचतुर्भ्यो हलादिः' इति बाधित्वा 'झल्युपोत्तमम्' इत्यस्य प्रवृत्तेः । षट्त्रिचतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यादिति तदर्थः । ननु प्रियाष्ट्नेत्यादौ विभक्तेरुदात्तत्वनिवारणाय दीर्घग्रहणमिहावश्यकमिति कथमस्यात्वविकल्पज्ञापकतेति चेत् । अत्राहुः—

1 'भिसादौ' क

**आत्वाभावे अष्ट अष्ट इत्यादि पञ्चवत् । गौणत्वे त्वात्वाभावे राजवत् । शसि प्रियाष्ट्नः, इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम् ।** कार्यकाल-

---

प्रयुक्तषट्संज्ञकशब्दसन्निपातमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकमात्वं प्रति कथं निमित्तत्वमिति वाच्यम्, नहि षट्सन्निपातेन जातस्य नुट आत्वेऽपि तद्विघातकत्वम्, कृतात्वेऽपि स्थानिवत्त्वेन षट्त्वसत्त्वात्, 'शमामष्टानां दीर्घः श्यनि' इत्यादिनिर्देशेन अत्र सन्निपातपरिभाषाया अनित्यत्वाश्रयणाच्चेति भावः। **आत्वाभाव इति** । 'अष्टनो दीर्घात्' इति दीर्घग्रहणेनात्वविकल्पस्य ज्ञापितत्वादिति भावः। यद्यपि 'अष्टनो दीर्घात्' इति सूत्रे शसादिविभक्तिषु परतः स्वरविधायके दीर्घग्रहणं शसादिष्वेवात्वविकल्पं ज्ञापयितुं शक्नोति न तु जसि, तथापि ज्ञापकस्य सामान्यापेक्षत्वाज्जस्यप्यात्वविकल्प इति भावः।

प्रिया अष्टौ यस्येति बहुव्रीहौ प्रियाष्टन्शब्दो विशेष्यनिघ्न एकद्विबहुवचनान्तः। तत्र विशेषमाह—**गौणत्वे त्विति** । अष्टन्शब्दार्थस्याप्राधान्ये सतीत्यर्थः । **आत्वाभाव इति** । 'अष्टनो दीर्घात्' इति दीर्घग्रहणेनात्वस्य वैकल्पिकत्वज्ञापनादिति भावः। **राजवदिति** । प्रायेणेति शेषः । प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः । प्रियाष्टानम्, प्रियाष्टानौ । **शसि प्रियाष्ट्न इति** । 'अल्लोपोऽनः' इत्यकारलोपः । ननु कृते अल्लोपे नकारस्य ष्टुत्वेन णत्वं कुतो न स्यादित्यत आह—**इहेति** । इहाल्लोपस्य स्थानिवद्भावान्न ष्टुत्वमित्यन्वयः। अल्लोपस्य स्थानिवत्त्वे सति अकारव्यवहितत्वान्न ष्टुत्वमिति भावः। ननु स्थानिनि सति यत्कार्यं तदेवादेशेऽतिदिश्यते, स्थानिनि सति यत्कार्यं न भवति तदादेशे न भवति इत्येवं कार्याभावास्तु नातिदिश्यते, अन्यथा नायक इत्यादौ आयाद्यभावप्रसङ्गादिति स्थानिवत्सूत्रे स्थितम्, तस्मादल्लोपस्य स्थानिवत्त्वाद् न ष्टुत्वमित्यनुपपन्नम्। 'अचः परस्मिन्-' इति सूत्रं तु यद्यपि स्थानिनि सति यत्कार्यं न भवति, तदादेशेऽपि न भवतीत्येवं कार्याभावस्यातिदेशकम्, तथापि न तस्यात्र प्रवृत्तिरस्ति, स्थानिभूतादचः पूर्वस्यैव विधौ तत्प्रवृत्तेः, इह च स्थानिभूतादचः परस्यैव ष्टुत्वप्रवृत्तेरित्यत आह—**पूर्वस्मादपि विधाविति**। स्थानिभूतादचः पूर्वस्मात् परस्यापि विधौ

---

'अष्टनो दीर्घात्' इत्यत्रान्तोदात्तादित्यनुवर्त्यान्तोदात्तादष्टनः परेत्यादिव्याख्यानादष्टाभिरित्यादौ विभक्तेरुदात्तत्वं सिध्यति । घृतादित्वेनाष्टनोऽन्तोदात्तत्वात् । प्रियाष्ट्न इत्यादिबहुव्रीहौ तु पूर्वपदप्रकृतिस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाभावाद्विभक्त्युदात्तत्वं न प्रवर्तत इति दीर्घग्रहणं व्यर्थं सद् उक्तार्थे ज्ञापकमेवेति । **अष्टानामिति** । नुटः पश्चादेव संनिपातपरिभाषाया अनित्यत्वादात्वम्, न तु ततः प्रागिति तु मनोरमायां स्थितम् । अत्र नव्याः—संनिपातपरिभाषया आत्वाभावेऽप्यत्र न क्षतिः, 'नोपधायाः' इति दीर्घे नलोपे पञ्चानां सप्तानामितिवद्रूपसिद्धेः । न च 'अष्टनो दीर्घात्' इति विभक्त्युदात्तत्वमात्वविधेः

**पक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा । प्रियाष्ट्ना इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्य एव, न तु गौणतायाम्, तेन प्रियाष्ट्नो हलादावेव वैकल्पिकमात्वम् । प्रियाष्टाः । प्रियाष्टाभ्याम् । प्रियाष्टाभिः । प्रियाष्टाभ्यः । प्रियाष्टाभ्यः । प्रियाष्टासु ।**

---

स्थानिवत्त्वाभ्युपगमादित्यर्थः । न च 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधः शङ्क्यः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति तन्निषेधात् । 'अट्कुप्वाङ्-' इति णत्वं तु न शङ्क्यम्, टकारेण व्यवधानात् । शब्दकौस्तुभे तावत् 'तस्य दोषः-' इत्यत्र णत्वग्रहणं मास्त्वित्युक्तम्, तद्रीत्याप्याह-**बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वेति** । अल्लोपः अङ्गसंज्ञाभसंज्ञापेक्षत्वाद्बहिरङ्गः, ष्टुत्वं तु तदपेक्षयाल्पापेक्षत्वादन्तरङ्गम्[1], तस्मिन् कर्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वादकारव्यवहितत्वाद् न ष्टुत्वमित्यर्थः ।

ननु यथोद्देशपक्षे 'असिद्धं बहिरङ्गम्-' इति षाष्ठीं परिभाषां प्रति ष्टुत्वस्यासिद्धतया अन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः कथमिहाल्लोपस्यासिद्धत्वमित्यत आह— **कार्यकालपक्ष इति** । लक्ष्यानुरोधादिह यथोद्देशपक्षो नाश्रीयत इत्यन्यत्र विस्तरः । अथ प्रियाष्टन्शब्दस्यात्वपक्षे विशेषमाह—**जश्शसोरिति** । 'अष्टाभ्य औश्' इति जश्शसोरौशादेशविधौ कृतात्वनिर्देशाद् ज्ञाप्यमानमात्वमष्टन्शब्दस्य प्राधान्ये सत्येव भवति, न तूपसर्जनत्वेऽपि । 'अष्टाभ्यः' इति बहुवचननिर्देशात् । अन्यथा हाहा इति पञ्चम्यन्तवद् 'अष्टा औश्' इति निर्दिशेत्—इति 'ष्णान्ता षट्' इति सूत्रे भाष्ये स्पष्टम् । ततः किमित्यत आह—**तेनेति** । अष्टन्शब्दस्य गौणतायां जश्शसोर्विषये आत्वाभावेनेत्यर्थः । **हलादावेवेति** । 'अष्टन आ विभक्तौ' इत्यत्र अष्टन इत्येकवचननिर्देशेन अष्टन्शब्दार्थस्य प्राधान्याश्रयणे मानाभावादिति भावः । 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इत्यपि नात्र प्रवर्तते, तथा सति 'अष्टाभ्य औश्' इत्यत्र बहुवचनवैयर्थ्यादिति बोध्यम् । हलादावेवेत्येवकारेण जश्शसोरप्यात्वस्य पक्षेऽपि व्यावृत्तिरुक्तैवानूद्यते । औङादौ तु हलादित्वाभावादेव आत्वस्य न प्रसक्तिः । **प्रियाष्टा इति** । सौ हलि 'अष्टन आ

---

प्रयोजनमिति वाच्यम्, 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेनैव तत्सिद्धेरिति । **पूर्वस्मादपीति** । न चात्र 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधः शङ्क्यः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तत्वादिति दिक् । **प्राधान्य एवेति** । औश्त्वं हि लुगनुटाविव प्राधान्य एव भवति, न तु गौणत्वे, अष्टाभ्य इति बहुवचननिर्देशात् । अन्यथा हि कृतात्वानुकरणेऽपि एकवचनेनैव निर्दिशेत् 'अष्टा औश्' इति 'अष्ट' इति वा । एतच्च 'ष्णान्ता षट्' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वं प्राधान्य एवोचितमिति भावः । **प्रियाष्टा इति** । प्रथमैक-

---

[1] 'ष्टुत्वं तु तदनपेक्षत्वादल्पापेक्षत्वादन्तरङ्गम्' । क ।

"प्रियाष्टनो राजवत्सर्वं हाहावच्चापरं हलि।" ॥ इति नान्ताः॥ भष्भावः, जश्त्वचर्त्वे, भुत्, भुद्। बुधौ, बुधः। बुधा, भुद्भ्याम्। भुत्सु ॥ इति धान्ताः॥

---

विभक्तौ' इत्यात्वे रुत्वविसर्गौ इति भावः। 'षड्भ्यो लुक्' इति 'षट्चतुर्भ्यः–' इति च गौणतायां न प्रवर्तत इति च प्रागुक्तं न विस्मर्तव्यम्। तथा च अजादौ सर्वत्र राजवदेव रूपाणि, हलादिषु पक्षे आत्वमिति स्थितम्।

तदेतत्संगृह्णाति—**प्रियाष्टनो राजवदिति**। प्रियाष्टन्शब्दस्याजादिषु विभक्तिषु राजवदेव सर्वं रूपम्। हलादिषु विभक्तिषु तु हाहाशब्दवदन्यच्च रूपम्। चकाराद्राजवदपि। तदित्थमत्र रूपाणि। प्रियाष्टाः-प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः। प्रियाष्टानम्, प्रियाष्टानौ, प्रियाष्टनः। प्रियाष्टना, प्रियाष्टाभ्याम्–प्रियाष्टभ्याम्, प्रियाष्टाभिः–प्रियाष्टभिः। प्रियाष्टने, प्रियाष्टाभ्याम्–प्रियाष्टभ्याम्, प्रियाष्टाभ्यः–प्रियाष्टभ्यः। प्रियाष्टनः, प्रियाष्टाभ्याम्–प्रियाष्टभ्याम्, प्रियाष्टाभ्यः–प्रियाष्टभ्यः। प्रियाष्टनः, प्रियाष्टनोः, प्रियाष्टनाम्। प्रियाष्टनि–प्रियाष्टनि, प्रियाष्टनोः, प्रियाष्टासु–प्रियाष्टसु। वस्तुतस्तु 'ष्णान्ता षट्' इति सूत्रे भाष्ये 'अष्टन आ विभक्तौ' इत्यत्र हलीत्यपकर्षमुक्त्वा 'प्रियाष्टौ प्रियाष्टाः इति न सिध्यति, प्रियाष्टानौ प्रियाष्टान इत्येव प्राप्नोति' इति शङ्किते 'यथालक्षणमप्रयुक्ते' इति समाहितम्। 'नैव वा लक्षणमप्रयुक्ते प्रवर्तते, प्रयुक्तानामेवान्वाख्यानात्' इति कैयटः। एवं च एषामनभिधानमेवोचितम्। अत एव 'अष्टाभ्य औश्' इति सूत्रे भाष्ये 'अष्टन आत्वम् इह वैकल्पिकम्' यदयमात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति। अन्यथा अष्टन इत्येव ब्रूयात्' इत्युक्तम्। प्रियाष्टन्शब्दस्य लोके प्रयोगसत्त्वे तु तत्र गौणे औशादेशप्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकत्वात् तदसंगतिः स्पष्टैव। तस्मात् प्रियष्टान्शब्दप्रयोगविचारः सर्वोऽपि अभित्तिचित्रायित इति शब्देन्दुशेखरे प्रपञ्चितम्॥ इति नान्ताः॥

**अथ धकारान्ता निरूप्यन्ते**। 'बुध् अवगमने' कर्तरि क्विप्, बुध् इति धकारान्तः शब्दः। ततः सुबुत्पत्तिः। सौ विशेषमाह—**भष्भाव इति**। हल्ङ्यादिना सुलोपे सति प्रत्ययलक्षणमाश्रित्य सकारपरकत्वाद्वा पदान्तत्वाद्वा 'एकाचो बशः–' इति बकारस्य भष् भकार इत्यर्थः। **जश्त्वचर्त्वे इति**। 'वाऽवसाने' इति चर्त्वविकल्प इति भावः। भ्यामादौ 'स्वादिषु–' इति पदत्वाद् भष्, जश्त्वम्, भुद्भ्याम्। भुद्भिः। भुद्भ्यः। भुत्सु॥ इति धान्ताः॥

**अथ जकारान्ता निरूप्यन्ते**। अथ युज्शब्दस्य व्युत्पत्तिं दर्शयितुमाह—

---

वचनम्। उक्तार्थं संगृह्णाति—**प्रियाष्टनो राजवदिति**॥ इति नान्ताः॥ **भुदिति**।

**३७३ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। ( ३-२-५६ )** एभ्यः क्विन् स्यात्। अलाक्षणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते। निरुपपदाद्युजेः क्विन्। कनावितौ। **३७४ कृदतिङ्। (३-१-९३)** सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्। **३७५ वेरपृक्तस्य। (६-१-६७)** अपृक्तस्य वस्य लोपः

---

**ऋत्विग्दधृक्।** धातोरित्यधिकृतम्, 'स्पृशोऽनुदके क्विन्' इत्यतः क्विन्नित्यनुवर्तते। पञ्चम्यर्थे षष्ठी। तदाह-**एभ्य इति।** ऋतौ उपपदे यज्धातोः, धृष्धातोः, सृज्धातोः, दिश्धातोः, ष्णिह्धातोः, अञ्चुधातोः, युज्धातोः, क्रुञ्च्धातोश्चेत्यर्थः। ननु ऋत्विक्, दधृक्-इत्यादौ कुत्वद्वित्वादि कुत इत्यत आह—**अलाक्षणिकमपीति।** लक्षणानि सूत्राणि, तद्विहितं कार्यं लाक्षणिकम्। सूत्रतः प्रत्यक्षानुपदिष्टमपि कार्यं निपातनात् सिद्धरूपनिर्देशाद् लभ्यत इत्यर्थः। तत्र ऋतावुपपदे यजेः क्विन्, तस्य कित्त्वाद् 'वचिस्वपियजादीनाम्–' इति संप्रसारणम्, 'व्रश्च–' इति षत्वापवादः कुत्वं च। धृषेः क्विनि द्वित्वमन्तोदात्तत्वं च। सृजेः कर्मणि क्विन्, अमागमश्च। दिशेः कर्मणि क्विन्। उत्पूर्वात् स्निहेः क्विन्, उदो दलोपः षत्वं च। अञ्चेः सुप्युपपदे क्विन्। युजेः केवलात् क्विन्। क्रुञ्चेः क्विन् नलोपाभावश्च निपात्यते। यद्यपि अञ्चेः केवलस्यैवोपादानम्, तथाप्युष्णिक्शब्दसाहचर्यात् सोपपदस्यैवाञ्चेर्ग्रहणमित्याहुः। **निरुपपदादिति।** क्विन्विधिफलं हि नुमो नस्य कुत्वमेव, नुम् च असमासे एव वक्ष्यते, समासे तु सुयुगित्यादौ जस्य 'चोः कुः' इति कुत्वेनैव सिद्धतया क्विनि क्विपि च विशेषाभावादिति भावः। **कनाविताविति।** 'लशक्वतद्धिते' इति 'हलन्त्यम्' इति च सूत्राभ्यामिति शेषः। वकारादिकारस्तु उच्चारणार्थः। अथ क्विन्नन्तस्य 'कृत्तद्धित–' इति प्रातिपदिकत्वं वक्तुं क्विनः कृत्संज्ञां दर्शयति—**कृदतिङ्।** धातोरित्यधिकृतम्, प्रत्यय इति च। धातोरिति विहितविशेषणम्, धातोः विहितः प्रत्यय इति लभ्यते। धातोरित्यधिकृत्य विहित इति यावत्। तदाह—**संनिहिते धात्वधिकार इति।** तेन णिजादिनिरासः। युज् व् इति स्थिते—**वेरपृक्तस्य।** 'लोपो व्योः–' इत्यतो लोप इत्यनुवर्तते। उत्सृष्टानुबन्धाः सर्वे क्विबादयो वेरित्यनेन गृह्यन्ते। इकार उच्चारणार्थः, अपृक्तग्रहणात्। तदाह—**अपृक्तस्य**

---

बुध्यतेः क्विप्॥ इति धान्ताः॥ **ऋत्विग्दधृक्। किंचिदिति।** ऋतावुपपदे यजेः क्विन्। धृष्णोतेर्द्वित्वमन्तोदात्तत्वं च। सृजेः कर्मणि क्विन् अमागमश्च। दिशेः कर्मणि क्विन्। उत्पूर्वात् स्निहेः क्विन् उपसर्गान्तलोपः षत्वं च। अञ्चेः सुप्युपपदे क्विन् इत्यर्थः। **निरुपपदाद्युजेरिति।** क्रुञ्चेरप्येवम्। नलोपाभावस्त्वधिकः। **कनाविताविति।** इकारस्तूच्चारणार्थ इति भावः। **संनिहित इति।** प्राचा तु तृतीये धात्वधिकार इत्युक्तम्। तदसत्। 'धातोः कर्मणः–' इति सन्निधौ धातुग्रहणस्योत्तरत्रानुवृत्ते-

स्यात्। 'कृत्तद्धित-' (सू १७१) इति प्रातिपदिकत्वात्स्वादयः। **३७६ युजेरसमासे।** । (७-१-७१) युजेः सर्वनामस्थाने नुम्स्यादसमासे। सुलोपः, संयोगान्तलोपः। **३७७ क्विन्प्रत्ययस्य कुः।** (८-२-६२) क्विन् प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते। नस्य कुत्वेनानुनासिको ङकारः, युङ्। 'नश्चापदान्तस्य-' (सू १२३) इति नुमोऽनुस्वारः, परसवर्णः, तस्यासिद्धत्वात् 'चोः कुः' (सू ३७८) इति कुत्वं न, युञ्जौ। युञ्जः। युञ्जम्। युजौ। युजः। युजा। युग्भ्याम्

---

**वस्येति**। अपृक्तस्येति किम्? जागृविः। क्विनः कृत्संज्ञायाः प्रयोजनमाह—**कृत्तद्धितेति**। **युजेरसमासे**। उगिदचामित्यतः सर्वनामस्थान इत्यनुवर्तते। 'इदितो नुम् धातोः' इत्यतो नुमिति च। तदाह—**नुम्स्यादित्यादिना**। युन् ज् इति स्थिते, प्रक्रियां दर्शयति—**सुलोप इति**। परत्वापूर्वं नुमि ततो हल्ङ्यादिलोप इति भावः। **संयोगान्तलोप इति**। जकारस्येति शेषः।

**क्विन्प्रत्ययस्य कुः**। पदस्य इत्यधिकृतम्, 'झलाञ्जशोऽन्ते' इत्यतः अन्त इत्यनुवर्तते। क्विन् प्रत्ययो यस्मात् स क्विन्प्रत्ययः, तस्येति बहुव्रीहिः। क्विन्नन्तस्येति तु नार्थः, तथासति क्विनः कुरित्येव ब्रूयात्, प्रत्ययग्रहणपरिभाषया क्विन्नन्तस्येत्यर्थलाभात्, तदाह—**क्विन्प्रत्ययो यस्मादित्यादिना**। बहुव्रीहेः प्रयोजनं तु घृतस्पृश्शब्दनिरूपणे मूल एव वक्ष्यते। कुरिति कवर्गो गृह्यते, उदित्त्वात्। अणुदित्सूत्रे अप्रत्यय इत्येतद् अणैव संबध्यते, न तु उदिता, उदित्करणसामर्थ्यात्। तेन कुरिति विधीयमानोपि सवर्णग्राहकः। ननु नकारस्य कुत्वे कखगघङाः पञ्चापि पर्यायेण प्राप्नुयुः, स्थानत आन्तर्यस्य पञ्चस्वप्यभावात्, स्पृष्टप्रयत्नत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात्, घोषसंवारनादवता अल्पप्राणवता च नकारेण गकारस्यापि आन्तर्यसत्त्वात्, अत आह—**नस्येति**। नासिकास्थानत आन्तर्यादिति भावः। **युङिति**। युजिर् योगे रुधादिः, युनक्तीति युङ्, नुमि कृते तदीयनकारस्य 'चोः कुः' इति कुत्वं न प्राप्नोतीति क्विन्प्रत्ययस्येत्यारम्भः। अथ औजसादिषु विशेषमाह—**नश्चेति**। **नुम इति**। 'युजेरसमासे' इति विहितस्येति शेषः। **परसवर्ण इति**। 'अनुस्वारस्य ययि-' इति परसवर्णो ञकारः, नासिकास्थानत आन्तर्यादिति भावः। तेन युञ्जावित्यादि सिद्धम्। नन्विह ञकारस्य झलि जकारे परे 'चोः कुः' इति कुत्वं कुतो न स्यादित्यत आह—**तस्येति**। परसवर्णस्येत्यर्थः। **युग्भ्यामिति**। 'स्वादिषु-' इति पदत्वाज्जकारस्य

---

रभावेनाधिकारत्रयाभावात्। **युजेरसमासे**। 'उगिदचाम्-' इत्यतः सर्वनामस्थान इत्यनुवर्तते। 'इदितो नुम् धातोः' इत्यतो नुम् चेत्याशयेनाह—**सर्वनामस्थाने नुम् स्यादिति**। **क्विन्प्रत्ययस्य**। 'क्विनः कुः' इत्युक्तेऽपि प्रत्ययग्रहणे तदन्तग्रहणात्

इत्यादि । 'असमासे' किम्-३७८ **चोः कुः** । (८-२-३०) चवर्गस्य कवर्गः स्याद् झलि पदान्ते च । इति कुत्वम् , क्विन्प्रत्ययस्य-' (सू ३७७) इति कुत्वस्यासिद्धत्वात् , सुयुक् , सुयुग् । सुयुजौ । सुयुजः । 'युजेः' इति धातुपाठपठितेकारविशिष्टस्यानुकरणम् , न त्विका निर्देशः, तेनेह न-युज्यत समाधत्त इति युक् । 'युज समाधौ' दैवादिक आत्मनेपदी । संयोगान्तलोपः, खन् । खञ्जौ । खञ्जः-इत्यादि ।

---

गकार इति भावः । युञ्जु ।

असमास इत्यस्य व्यावर्त्यं सुयुज्शब्दं कथयिष्यन् तत्र विशेषमाह-**चोः कुः** । 'झलो झलि' इत्यतो झलीत्यनुवर्तते । पदस्येत्यधिकृतम् । 'स्कोः संयोगाद्योः-' इत्यतोऽन्ते इत्यनुवर्तते । तदाह—**चवर्गस्येति** । ननु 'चोः' इत्यत्र उकारस्य उपदेशाभावाद् इत्त्वाभावेन उदित्त्वाभावात् कथमिह सवर्णग्रहणमिति चेत्, न[1] । चोः इत्युकारान्तग्रहणसामर्थ्यादेव तत्र उकारस्य इत्त्वाभ्यनुज्ञानात् । अन्यथा 'चः कुः' इत्येव ब्रूयाद् इति । **कुत्वमिति** । सुयुज्शब्दे जकारस्य कुत्वं गकारः, घोषसंवारनादाल्पप्राणसाम्याद् यथासंख्यसूत्राच्चेति भावः । नन्विह 'क्विन्प्रत्ययस्य'इत्येव कुत्वं कुतो न स्यात्, यद्यपि सुपूर्वाद्युजेः 'सत्सूद्विष-' इत्यादिना क्विपि उपपदसमासे सुयुज्शब्दो न क्विन्नन्तोऽयम्, निरुपपदाद्युजेः क्विन्निति अनुपदमेवोक्तत्वात् । तथापि क्विन् प्रत्ययो यस्माद् इति बहुव्रीह्याश्रयणात् संप्रति क्विवन्तत्वेऽपि अनेनैव कुत्वमित्यत आह—**क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वादिति** । तथा चात्र 'चो कुः' इत्येव न्याय्यमिति भावः । **सुयुक्, सुयुगिति** । 'वावसाने' इति चर्त्वविकल्पः । ननु युक् इत्यपि रूपमिष्टं कथं सिध्येत्, क्विनि नुमि युङ्ङित्येवापत्तेः । न च 'ऋत्विक्' इत्यादिसूत्रे 'युजेरसमासे' इति सूत्रे च युजीति इकारविशिष्टस्यैव निर्देशाद् 'युज समाधौ' इति दैवादिकस्य अकारान्तस्याग्रहणात् ततः 'क्विप् च' इति क्विपि नुमभावे कुत्वे युक् इति सिध्यतीति वाच्यम्, 'इक्श्तिपौ धातुनिर्देशे' इति इक्प्रत्ययान्तत्व[2]स्य उभयत्रापि संभवेन उभाभ्यां क्विनि नुमि युङ्ङित्येवापत्तेरित्यत आह—**युजेरिति** । 'युजेरसमासे' इति सूत्रे युजीति, ऋत्विगादिसूत्रे युजीति च धातुपाठे 'युजिर् योगे' इति इकारविशिष्टो यः पठितः, तस्यैव रेफाशिरस्कतया ग्रहणम्, नत्विका निर्देशः, व्याख्यानादित्यर्थः । ततः किमित्यत आह—**तेनेति** । 'खजि गतिवैक्लव्ये' क्विप्, इदित्त्वान्नुम् । 'नश्चापदान्तस्य-' इत्यनुस्वारः, परसवर्णो ञकारः, खञ्ज्शब्दः । तस्य विशेषमाह—**संयोगान्तेति** ।

---

क्विन्नन्तस्य ग्रहणे सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे—**क्विन्प्रत्ययो यस्मादिति** । बहुव्रीह्याश्रयणफलं तु स्पृगित्यादि स्फुटीभविष्यति ।

---

१ 'न' इति नास्ति क । २ 'त्व' इति नास्ति क ।

'व्रश्च-' (सू २९४) इति षत्वम्, जश्त्वचर्त्वे, राट्, राड्। राजौ। राजः। राट्त्सु, राट्सु। एवं विभ्राट्। देवेट्, देवेजौ, देवेजः। विश्वसृट्, विश्वसृड्। विश्वसृजौ। विश्वसृजः। इह सृजियज्योः कुत्वं नेति क्लीबे वक्ष्यते। परिमृट्। षत्वविधौ राजिसाहचर्यात् 'टुभ्राजृ दीप्तौ' इति फणादिरेव गृह्यते। यस्तु 'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति तस्य कुत्वमेव, विभ्राक्, विभ्राग्। विभ्राग्भ्याम् इत्यादि। 'परौ व्रजेः षः

---

हल्ङ्यादिना सुलोपे जकारस्य संयोगान्तलोपः। ततो निमित्तापायाद् अनुस्वारपरसवर्णयोर्निवृत्तिः। खन् इति रूपमित्यर्थः। 'अनिदिताम्-' इति नलोपस्तु न, इदित्त्वात्।

'राजृ दीप्तौ' इत्यस्मात् क्विपि राज्शब्दः। तस्य विशेषमाह—**व्रश्चेति**। हल्ङ्यादिना सुलोपे 'व्रश्च-' इति षत्वम्, जश्त्वेन डकारः, 'वावसाने' इति चर्त्वविकल्पः। भ्यामादौ 'स्वादिषु-' इति पदत्वात् षत्वं जश्त्वं च—राड्भ्यामित्यादि। 'डः सि धुट्' इति विकल्पं मत्वाह—**राट्त्सु, राट्स्विति**। **एवं विभ्राडिति**। राज्शब्दवत् षत्वादीत्यर्थः। 'टुभ्राजृ दीप्तौ' क्विप्। विशिष्य भ्राजत इति विभ्राट्। देवान् यजतीति देवेट्। देवान् यजतीति विग्रहे क्विपि यजादित्वाद् 'वचिस्वपि-' इति संप्रसारणम्, 'आद् गुणः'। **विश्वसृडिति**। 'सृज् विसर्गे' क्विपि 'व्रश्च-' इति षत्वादि। ननु क्विबन्तेऽपि देवेज्शब्दे विश्वसृज्शब्दे च क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणादृत्विक्शब्दवत् कुत्वं कुतो न स्यादित्यत आह—**इहेति**। 'सृजिदृशोः-' इति सूत्रे काम्यच्सूत्रे च विश्वसृड्भ्यामिति उपयट्काम्यतीति च भाष्यप्रयोगात् 'क्विन्प्रत्ययस्य-' इति कुत्वं नेत्यर्थः। **परिमृडिति**। 'मृजू शुद्धौ' क्विप्। 'क्ङिति च' इति निषेधाद् 'मृजेर्वृद्धिः' इति न भवति। 'व्रश्च-' इति षत्वम्। परिमार्ष्टीति परिमृट्। अथ विभ्रागिति कुत्वं साधयितुमाह—**षत्वविधाविति**। व्रश्चादिसूत्र इत्यर्थः। अथ परिव्राज्शब्दं व्युत्पादयति—**परौ व्रजेः**। औणादिकसूत्रमेतत्। 'क्विब्वचिप्रच्छि-' इत्यादिपूर्वसूत्रात् क्विबिति

---

**सुयुगिति**। सुष्ठु युनक्तीति विग्रहे 'सत्सूद्विष-' इति क्विप्। **तेनेह नेति**। नुम्नेत्यर्थः। क्विन्प्रत्ययस्तु स्यादेव 'ऋत्विग्-' इत्यादिसूत्रे युजीति इका निर्देशात्। **खन्निति**। खञ्जतीति खन्। 'खजि गतिवैकल्ये'। **एवं विभ्राडिति**। फणादिरयम्। विशेषेण भ्राजत इति विभ्राट्। देवान् यजतीति देवेट्, क्विपि यजादित्वात्संप्रसारणे आद् गुणः। विश्वं सृजतीति विश्वसृट् क्विबन्तः। क्विप्रत्ययो यस्माद् इति बहुव्रीह्याश्रयणात् कुत्वं कस्मान्न भवतीत्याशङ्क्याह—**नेति क्लीबे वक्ष्यत इति**। 'रज्जुसृड्भ्याम्' इति भाष्यकारप्रयोगात्। यद्वा 'व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः' इति वक्ष्यत इत्यर्थः। परिमार्ष्टीति परिमृट्। **परौ व्रजे**। 'क्विब्वचिप्रच्छि-

---

१ 'यजत' इति क।

पदान्ते' (उ २१७)। परावुपपदे व्रजेः क्विप्स्याद्दीर्घश्च पदान्तविषये षत्वं च। परित्यज्य सर्वं व्रजतीति परिव्राट्। परिव्राजौ। परिव्राजः। ३७९ **विश्वस्य वसुराटोः।** (६-३-१२८) विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे। विश्वं वसु यस्य स विश्वावसुः। राडिति पदान्तोपलक्षणार्थम्। चर्त्वमविवक्षितम्। विश्वाराट्, विश्वाराड्। विश्वराजौ। विश्वराजः। विश्वाराड्भ्याम् इत्यादि। ३८० **स्कोः संयोगाद्योरन्ते च।** (८-२-२९) पदान्ते झलि च परे यः संयोगस्त-

दीर्घ इति चानुवर्तते। पदान्त इति ष इत्यनेनैव संबध्यते, न तु क्विब्दीर्घाभ्यामपि, व्याख्यानात्। तदाह—**परावुपपद इत्यादिना। षत्वं चेति।** 'चोः कुः' इत्यस्यापवाद इति भावः। विश्वस्मिन् राजते इत्यर्थे 'सत्सूद्विष—' इति क्विपि उपपदसमासे विश्वराज्शब्दः। तस्य विशेषमाह—**विश्वस्य वसुराटोः।** 'ढ्रलोपे—' इत्यतो दीर्घ इत्यनुवर्तते, तदाह—**विश्वशब्दस्येति। विश्वं वस्विति।**

'वसुर्ग्रहेऽग्नौ योक्त्रेंऽशौ वसु तोये धने मणौ।' इति कोशः।

विश्वावसुरित्युदाहरणं प्रासङ्गिकम्। 'आदित्यविश्ववसवः' इत्यमरप्रयोगे तु न दीर्घः, 'नरे संज्ञायाम्' इत्यतः संज्ञाग्रहणापकर्षात्। ननु राट्शब्दस्य कृतचर्त्वस्य निर्देशाद् जश्त्वे सति दीर्घो न स्यादित्यत आह—**राडिति। अविवक्षितमिति।** व्याख्यानादिति भावः। **विश्वाराट्, विश्वाराडिति।** 'व्रश्च—' इति षत्वम्। जश्त्वचर्त्वे। चर्त्वनिर्देशस्य पदान्तोपलक्षणत्वाद् जश्त्वपक्षेऽपि दीर्घः। यद्यपि त्रैपादिकं 'व्रश्च—' इति षत्वं 'चोः कुः' इति कुत्वात्परम्, तथापि चवर्गान्तव्रश्चादिविषये षत्वमपवादत्वान्नासिद्धम्—'अपवादो वचनप्रामाण्यात्' इति। **विश्वराजाविति।** अपदान्तत्वान्न दीर्घ इति भावः। 'भ्रस्ज पाके' क्विप्, 'ग्रहिज्या—' इति संप्रसारणं रेफस्य ऋकारः, 'संप्रसारणाच्च' इति पूर्वरूपम्, भृस्ज्शब्दः, ततः सुबुत्पत्तिः। तत्र विशेषमाह—**स्कोः संयोगा।** पदस्येत्यधिकृतम्, चकाराद् 'झलो झलि' इत्यतो झलीत्यनुवर्तते, पदस्यान्ते इति झलीति च संयोगेत्यनेन संबध्यते, संयोगेति लुप्तषष्ठीकं पृथक्पदम्, स् च क् च स्कौ, तयोरिति विग्रहः, 'संयोगान्तस्य लोपः' इत्यतो लोप इत्यनुवर्तते, तदाह—**पदान्त इत्यादिना।** अत्र काष्ठशक् स्थातेत्यत्र झल्परसंयोगादित्वात् ककारस्य लोपप्राप्तौ तन्निवृत्त्यर्थं वार्तिकं पठितम्—'झलीत्यपहाय सलीति वक्तव्यम्' इति। सनः

श्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च' इत्यौणादिकात्पूर्वसूत्रादिह क्विब्दीर्घावनुवर्तेते, तदाह—**क्विप् स्याद्दीर्घश्चेति। विश्वस्य वसु।** 'ढ्रलोपे—' इत्यतोऽनुवर्तनादाह—**विश्वशब्दस्य दीर्घः स्यादिति। स्कोः।** पदस्येत्यनुवर्तते, 'झलो झलि' इत्यतो झलीति च, संयोगेति लुप्तषष्ठीकं झलन्ताभ्यां विशेष्यते, तदेतदाह—**पदान्ते झलि च परे इति।** झलि किम्, भ्रष्टा। भृज्जतीति भृट्। क्विप्। 'ग्रहिज्या—' इति

दाद्योः सकारककारयोर्लोपः स्यात्। भृट्, भृड्। सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः, भृज्जौ। भृज्जः। 'ऋत्विग्–' (सू ३७३) इत्यादिना ऋतावुपपदे यजेः क्विन्, क्विन्नन्तत्वात्कुत्वम्, ऋत्विक्, ऋत्विग्। ऋत्विजौ। ऋत्विजः। 'रात्सस्य' (सू २८०) इति नियमान्न संयोगान्तलोपः, ऊर्क्, ऊर्ग्। ऊर्जौ। ऊर्जः॥ इति जान्ताः॥

---

सकारमारभ्य महिङो ङकारेण प्रत्याहारः। तदिदं वार्तिकं भाष्ये प्रत्याख्यातम्—'काष्ठशगेव नास्ति, कुतः काष्ठशक् स्थाता' इति। ककारान्तेभ्यो नास्ति क्विप्, अनभिधानादित्याशयः। न च पृथक् स्थातेत्यत्र ककारस्य लोपनिवृत्तये 'सङि' इति वार्तिकमावश्यकमिति वाच्यम्, तत्प्रत्याख्यानपरभाष्यप्रामाण्यादेवंजातीयकसंयोगादिलोपप्राप्तियोग्योदाहरणानामप्रयोगावगमादिति शब्देन्दुशेखरे स्पष्टम्।

**भृट्, भृडिति**। भ्रस्ज् स् इति स्थिते, हल्ङ्यादिलोपे 'स्कोः–' इति सकारलोपे जकारस्य व्रश्चादिना षत्वे जश्त्वचर्त्वे इति भावः। यद्यपि जकारस्य संयोगान्तलोपेऽपि सकारस्य 'व्रश्च–' इति षत्वे जश्त्वचर्त्वयोः भृट् भृड् इति सिध्यति, तथापि न्याय्यत्वादिह संयोगादिलोप एव भवति। **सस्येति**। भ्रस्ज् औ इत्यादावचि पदान्तझल्परसंयोगादित्वाभावान्न संयोगादिलोपः। 'झलां जश् झशि' इति जश्त्वस्यासिद्धत्वात् सकारस्य श्चुत्वमिति भावः। **तस्येति**। शकारस्येत्यर्थः। तालुस्थानकत्वात् शकारस्य जकारः। न च जश्त्वस्यासिद्धत्वात् शकारस्य 'व्रश्च–' इति षत्वं शङ्क्यम्, षत्वं प्रति श्चुत्वस्यासिद्धत्वात्। भ्यामादौ तु 'स्वादिषु–' इति पदत्वात्[1] संयोगादिलोपः, व्रश्चेति षत्वम्, जश्त्वं च, भृड्भ्यामित्यादि। **ऋत्विगित्यादिनेति**। 'ऋ गतौ' औणादिकस्तुः। ऋतुः–गमनं प्राप्तिः, दक्षिणाद्रव्यलाभो विवक्षितः। तस्मिन्निमित्ते यजन्ति यज्ञियव्यापारं कुर्वन्तीत्यर्थे ऋतावुपपदे यजधातोः क्विन्, 'वचिस्वपि–' इति यकारस्य संप्रसारणमिकारः, पूर्वरूपम्, यणादेशश्च, ऋत्विज् इति रूपम्, ततः सोर्हल्ङ्यादिलोपः, एतावत् सिद्धवत्कृत्याह—**क्विन्नन्तत्वात्कुत्वमिति**। 'क्विन्प्रत्ययस्य–' इत्यनेनेति शेषः। एतदर्थमेव क्विन्विधानमिति भावः। न च क्विपि 'चोः कुः' इति कुत्वेनैवैतत्सिध्यतीति वाच्यम्। 'चोः कुः' इति कुत्वं हि 'व्रश्च–' इति षत्वेन अपवादत्वाद् बाध्येत, 'क्विन्प्रत्ययस्य–' इति कुत्वं तु क्विन्विधिसामर्थ्यादेव न बाध्यते। यष्टेत्यादौ षविधेश्चरितार्थत्वादिति भावः। **ऊर्क्, ऊर्ग् इति**। 'ऊर्ज् बलप्राणनयोः' चुरादिर्ण्यन्ताद् 'भ्राजभास–' इत्यादिना क्विप्, णिलोपः, ऊर्ज् इति रूपम्, ततः सोर्हल्ङ्यादिलोपः, 'चोः कुः' इति जस्य कुत्वं गकारः,

---

संप्रसारणम्। 'व्रश्च–' इति षत्वम्। **ऊर्गिति**। 'ऊर्ज बलप्राणनयोः'। अस्माच्चुरादिर्ण्यन्ताद् 'भ्राजभास–' इत्यादिना क्विपि णिलोपः, स च चोः कुत्वे न स्थानिवत्,

---

१ 'पदान्तत्वात्' क।

त्यदाद्यत्वं पररूपत्वं च। **३८१ तदोः सः सावनन्त्ययोः।** ( ७-२-१०६ ) त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे। स्यः, त्यौ, त्ये। त्यम्, त्यौ,

---

'वावसाने' इति चर्त्वविकल्पः। न च कुत्वे कर्तव्ये णिलोपस्य स्थानिवत्त्वं शङ्क्यम्, पदान्तविधौ तन्निषेधात्, 'पूर्वत्रासिद्धीये न स्थानिवत्' इति वचनाच्च॥ इति जान्ताः॥

**अथ दकारान्ता निरूप्यन्ते**। त्यद्शब्दस्तद्शब्दपर्यायः। तस्य विशेषमाह—**त्यदाद्यत्वं पररूपत्वमिति**। सर्वत्र विभक्तावुत्पन्नायाम् 'त्यदादीनामः' इति दकारस्यान्त्यस्य अकारः 'अतो गुणे' इति पररूपं चेत्यर्थः। ततश्च अदन्तवद्रूपाणीति भावः। त्य स् इति स्थिते—**तदोः सः सावनन्त्ययोः। त्यदादीनामिति**। 'त्यदादीनामः' इत्यतस्तदनुवृत्तेरिति भावः। **तकारदकारयोरिति**। सूत्रे तश्च द् चेति विग्रहः। तकाराद्कार उच्चारणार्थ इति भावः। **सः स्यादिति**। आदेशेऽपि अकार उच्चारणार्थः। **त्यौ इति**। सावित्युक्तेर्न सत्वमिति भावः। **त्ये इति**। सर्व-

---

पदान्तविधित्वात् पूर्वत्रासिद्धत्वाच्च। इह जान्तेषु अवयाः, अवयाजौ, अवयाज इति नोदाहृतम्, 'मन्त्रे श्वेतवहोक्थ-' इति प्रकृत्य 'अवे यजः' इति विहितस्य ण्विनस्तदपवादस्य पदान्ते डसरश्छान्दसत्वेन वैदिकप्रक्रियायामेव वक्तुमुचिततत्वात्। **तदोः सः सावनन्त्ययोः**। 'त्यदादीनामः' इत्यतोऽनुवर्तनादाह—**त्यदादीनामिति**। त्यदादीनामिति किम्, आतपः, तारकः। तदोरिति किम्, यः। अनन्त्ययोः किम्, हे स। अत्र परत्वात्त्यदाद्यत्वं बाधित्वा दस्य सकारे सस् इति हल्ङ्यादिना सुलोपे रुत्वविसर्गौ स्याताम्, तथा च हे सः इति रूपं स्यात्। किं च स्त्रियां सेति रूपं न स्यात्। यदा त्वन्त्यस्य सकारे जातेऽपि पुनःप्रसङ्गविज्ञानात्त्यदाद्यत्वं सकारस्य स्वीक्रियते, तदा न किंचिदनिष्टमित्यनन्त्ययोरिति त्यक्तुं शक्यम्। यदि तु 'तदोः सः सौ-' इत्यस्यानन्तरम् 'अदस औ सुलोपश्च' इत्यत्र 'अदसः' इति योगं विभज्यादस एव दकारस्य सत्वं नान्यस्य दस्येति नियमः स्वीक्रियते, तदा तु 'सकृद्गतौ-' इति न्यायेनाप्यनन्त्ययोरिति त्यक्तुं शक्यम्। न चैवं द्वावात्मन इच्छति द्वीयति, ततः क्विपि स्व इति रूपं न स्यात्, किं तु द्व इति रूपं स्यादिति फलभेदान्नियमपक्षो न संभवतीति वाच्यम्, गौणे अत्वसत्वयोरसंभवेन द्वीरित्यस्यैव रूपस्य न्याय्यत्वादिति मनोरमायामुक्तत्वात्। सौ किम्, तौ ते तं तौ तान्। ननु 'तोः सः सौ' इत्येव सूत्रमस्तु, किमनेन तदोरिति पृथग्ग्रहणेनेति चेत्, मैवम्, अनेष इत्यत्र नकारस्य सत्वप्रसङ्गात्, 'नलोपो नञः' 'तस्मान्नुडचि' इत्यजाद्युत्तरपदस्य एष इत्यस्य नुड्विधानेन त्यदादितवर्गत्वान्नकारस्य। न च सत्वे सति नुड्विधानं व्यर्थमिति वाच्यम्, अनश्व इत्यादौ सावकाशत्वात्। तथा च 'तदोः-' इत्येव सूत्रं युक्तम्। ननु 'तस्मान्नुडचि' इति सूत्रे 'तस्मात्' इति पदं परित्यज्य लाघ-

त्यान् । सः, तौ, ते । परमसः, परमतौ, परमते । द्विपर्यन्तानामित्येव, नेह—त्वम् । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अतित्वमिति गौणे चरितार्थत्वात् । संज्ञायां गौणत्वे चात्वसत्वे न, त्यद्, त्यदौ, त्यदः । अतित्यद्, अतित्यदौ,

---

नामत्वाद् जसः शीभाव इति भावः । स्मायादीनामप्युपलक्षणमिदम् । त्यम्, त्यौ, त्यान् । त्येन, त्याभ्याम्, त्यैः । त्यस्मै, त्याभ्याम्, त्येभ्यः । त्यस्मात् । त्यस्य, त्ययोः, त्येषाम् । त्यस्मिन् । त्येषु । एवं तद्शब्दः । **परमस इति** । अत्वादीनामाङ्गत्वात्तदन्तेऽपि प्रवृत्तेरिति भावः । ननु युष्मच्छब्दस्यापि त्यदादित्वात्तस्यापि प्रथमैकवचने त्वमित्यत्र 'तदोः सः सौ–' इति सत्वं कुतो न स्यादित्यत आह—**द्विपर्यन्तेति** । 'त्यदादीनामः' इत्यत्र पठितं 'द्विपर्यन्तानामेवेष्यते' इति वार्तिकं 'तदोः सः सौ–' इत्यत्राप्यनुवर्तत एवेत्यर्थः । ततः किमित्यत आह—**नेहेति** । इहशब्दविवक्षितमाह—**त्वमिति** । युष्मच्छब्दस्य द्विशब्दादुपर्येव सर्वादिगणे पाठादिति भावः । ननु 'त्वाहौ सौ' इति तकारोच्चारणसामर्थ्यादेव त्वमित्यत्र सत्वं न भवति, अन्यथा 'स्वाहौ सौ' इत्येव ब्रूयात्, अतो द्विपर्यन्तानामित्यनुवृत्तिरिह व्यर्थेत्याशङ्क्य निराकरोति—**न चेति** । तकारोच्चारणसामर्थ्यादिह सत्वं नेति न वाच्यमित्यन्वयः । द्विपर्यन्तानामित्यननुवृत्तौ त्वमित्यत्रापि सत्वं स्यात् । न च 'त्वाहौ सौ' इति तकारोच्चारणानर्थक्यम्, त्वामतिक्रान्तः अतित्वमिति गौणे युष्मच्छब्दस्य त्वादेशे त्वाहाविति तकारोच्चारणस्य लब्धप्रयोजनत्वादित्यर्थः । न च अतित्वमित्यत्रापि सत्वप्रवृत्तेर्दुर्वारत्वात् त्वाहाविति तकारोच्चारणानर्थक्यं दुर्वारमिति वाच्यम्, सत्वस्य सर्वाद्यन्तर्गणकार्यत्वेन गौणे तस्याप्रवृत्तेः । अत एवाह—**संज्ञायामिति** । **त्यदिति** । कस्यचिन्नामेदम् । **अतित्यदिति** ।

---

वात् 'नुगचि' इत्येवोच्यताम्, तथा च अजाद्युत्तरपदे परे नञ एव नुगागम इत्यनेष इत्यत्र नोक्तदोष इति चेत्, एवं तर्हि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः स्यात् । विधानसामर्थ्यान्न भवतीति चेदेवमपि 'ङमो ह्रस्वादचि–' इति ङमुड् दुर्वार एव । ततश्च 'तस्मान्नुडचि' इति सूत्रे पञ्चम्यन्तमावश्यकमेव टिदनुबन्धश्चेति 'तदोः–' इति सूत्रे तोरिति वक्तुमशक्यम्, अनेष इत्यत्रोक्तदोषात् । अत्र कैयटः—तोरित्युक्तेऽप्यनेष इत्यत्र सत्वं न भवेत्, नुडागमस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वादन्तरङ्गरूत्वदृष्टया असिद्धत्वादिति । उत्तरपदाधिकारस्थकार्ये बहिरङ्गपरिभाषाभावस्य 'इच एकाचोऽम्–' इत्यत्र भाष्ये उक्तत्वादयं कैयटश्चिन्त्यः । **गौणे चरितार्थत्वादिति** । गौणे हि न्तर्गणकार्यत्वात्सत्वं न प्रवर्तते । 'त्वाहौ सौ' इत्युक्ते तु अतिस्वमिति स्यादिति भावः । **अत्वसत्वे नेति** । तयोः सर्वाद्यन्तर्गणकार्यत्वादिति भावः । **अतित्यदिति** ।

---

१ 'तकारेणोच्चारण' क ।

**अतित्यदः। यः, यौ, ये। एषः, एतौ, एते। अन्वादेशे तु एनम्, एनौ, एनान्। एनेन। एनयोः। एनयोः। ३८२ ङे प्रथमयोरम्। (७-१-२८) युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात्। ३८३ मपर्यन्तस्य। (७-२-९१) इत्यधिकृत्य। ३८४ त्वाहौ सौ। (७-२-९४) युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परे। ३८५ शेषे लोपः। (७-२-९०)**

---

त्यमतिक्रान्त इति विग्रहः। **य इति**। यद्शब्दस्य त्यदाद्यत्वे पररूपत्वे सर्वशब्दवद्रूपाणि। तकाराभावान्न सत्वम्। **एष इति**। एतद्शब्दस्य त्यदाद्यत्वे पररूपत्वे सर्ववदेव रूपाणि। सौ तु तकारस्य सत्वमिति विशेषः। **अन्वादेशे त्विति**। 'द्वितीयाटौस्स्वेनः' इत्यस्य एतद्शब्देऽपि प्रवृत्तेरिति भावः।

अथ युष्मदस्मद्शब्दयोः प्रक्रियां दर्शयति—**ङे प्रथमयोरम्**। 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते। परशब्दोऽध्याहर्तव्यः। ङे इति लुप्तषष्ठीकं पृथक्पदम्। प्रथमयोरिति प्रथमाद्वितीयाविभक्त्योर्लाक्षणिकमिति भाष्यम्। तदाह—**युष्मदस्मद्भ्यामित्यादिना**। सोरमादेशे कृते 'न विभक्तौ—' इति मस्य नेत्त्वम्। युष्मद् अम्, अस्मद् अम् इति स्थितम्। **अधिकृत्येति**। कार्याणि वक्ष्यन्त इति शेषः। **त्वाहौ सौ**। त्वश्च अहश्च त्वाहौ। मपर्यन्तस्येत्यधिकृतम्, 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते, तदाह—**युष्मदस्मदोरित्यादिना**। त्व अद् अम्, अह अद् अम् इति स्थितम्। यद्यप्यत्र 'त्वमावेकवचने' इत्येव युष्मद्शब्दस्य त्वादेशः सिद्धः, तथापि युष्मानतिक्रान्तः अतित्वमित्यत्र त्वादेशार्थमिह युष्मदस्त्वविधानम्। न हि तत्र 'त्वमावेकवचने' इत्यस्य प्रवृत्तिरस्ति, अत्र युष्मद्शब्दस्य बहुत्वविशिष्टे वृत्तेः। एकवचनशब्दो हि तत्र एकत्वविशिष्टवृत्तिवाची, न तु एकवचनसंज्ञकप्रत्ययवाचीत्यनुपदमेव वक्ष्यते। **शेषे लोपः**। 'अष्टन आ विभक्तौ' इत्यतो विभक्तौ इत्यनुवर्तते। विभक्तावित्यनुवृत्तं शेष इत्यनेनान्वेति। 'युष्मदस्मदोरना-

---

त्यमतिक्रान्तोऽतित्यत्। **ङे प्रथमयोरम्**। 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते। ङे इति पृथक् पदं लुप्तषष्ठीकम्। प्रथमयोरिति द्विवचनबलेन प्रथमाशब्दः प्रथमाद्वितीयोभयार्थक इत्याशयेन व्याचष्टे—**युष्मदस्मद्भ्यां परस्य ङे इत्येतस्येत्यादिना**। 'ङेसुटोः' इति सुवचम्। **त्वाहौ सौ**। यद्यपि युष्मदः 'त्वमावेकवचने' इत्येव त्वादेशः सिद्धस्तथापि अस्मदः अहादेशार्थमिदम्। किं च 'त्वमौ—' इति सूत्रेण युवां युष्मान् वाऽतिक्रान्तोऽतित्वमिति न सिध्यति, एकार्थवाचित्वाभावाद्युष्मद इति भावः। **युष्मदस्मदोरिति**। एतच्च 'युष्मदस्मदोरनादेशे' इत्यतो लभ्यते। **शेषे**। उक्तादन्यः शेषः, आत्वं यत्वं च प्रागुक्तम्, तद्विषयादन्यविभक्ति-

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् । 'अतो गुणे' (सू १९१), 'अमि पूर्वः' (सू १९४) त्वम् । अहम् । ननु 'त्वम् स्त्री' 'अहम् स्त्री' इत्यत्र 'त्व अम्' 'अह अम्' इति स्थिते, अमि पूर्वरूपं परमपि बाधित्वान्तरङ्गत्वाट्टाप् प्राप्नोति । सत्यम् । अलिङ्गे युष्मदस्मदी, तेन स्त्रीत्वाभावान्न टाप् । यद्वा

---

देशे' 'द्वितीयायां च' 'प्रथमायाश्च द्विवचने भाषायाम्' 'योऽचि' इत्यात्वयत्वयोः प्रागुक्तत्वात्तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थः, युष्मदस्मदोरिति चानुवृत्तम् , तदाह—**आत्वयत्वेति**। अन्त्यस्येति । अलोऽन्त्यपरिभाषालभ्यम् । शेषग्रहणमिह विभक्तिविशेषणं स्पष्टार्थमेव, विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसंभवाद् इति प्रकृतसूत्रे 'युष्मदस्मद्भ्यां ङसोऽश्' इति सूत्रे च भाष्यकैयटयोः स्पष्टम् । **अतो गुणे इति**। पूर्वयोरकारयोः पररूपमिति भावः । त्व अम् , अह अम्—इत्यत्र पूर्वसवर्णदीर्घमाशङ्कयाह **अमि पूर्व इति**।

अत्र शङ्कते—**नन्विति**। 'ननु च स्याद्विरोधोक्तौ' इत्यमरः, शङ्कायामिति यावत् । **अन्तरङ्गत्वादिति**। 'अजाद्यतः–' इति टापः परनिमित्तानपेक्षतया पररूपादन्तरङ्गत्वं बोध्यम् । अर्धाङ्गीकारेण परिहरति—**सत्यमिति**। पररूपादन्तरङ्गष्टाबित्यङ्गीक्रियते, इह प्रवृत्तिस्तु तस्य नाङ्गीक्रियत इत्यर्थः। **अलिङ्गे युष्मदस्मदी इति**। 'साम आकम्' इति सूत्रे भाष्ये पठितमेतत् । युष्मदस्मदी इति शब्दस्वरूपपरत्वान्नपुंसके। शब्दस्वरूपपरत्वादेव च 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषोऽपि न, अत एव भाष्यप्रयोगात् । **तेनेति**। अलिङ्गत्वेनेत्यर्थः । ननु 'ङे प्रथमयोः–' इति सूत्रे भाष्ये पुंसि युष्मानस्मानित्यत्र 'तस्माच्छसो नः पुंसि' इति नत्वस्य सिद्धत्वात् 'शसो न' इति नत्वविधिवैयर्थ्यमाशङ्क्य स्त्रियां नपुंसके च युष्मान् ब्राह्मणीः पश्य, अस्मान् ब्राह्मणीः पश्य, युष्मान् ब्राह्मणकुलानि पश्य, अस्मान् ब्राह्मणकुलानि पश्य इत्यत्र नत्वार्थं 'शसो न' इति नत्वविधानमित्यादि स्थितम् । किं च 'स्वमोर्नपुंसकात्' इत्यधिकारे 'नेतराच्छन्दसि' इति सूत्रे 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन' इति वार्तिकतद्भाष्ययोः शिशीलुङ्नुम्भिर्नपुंसकविहितैस्त्वाहादियुष्मदस्मदादेशानां विप्रतिषेध उपन्यस्तः । अतो

---

रिति शेषशब्दार्थस्तदेतद्व्याचष्टे—**आत्वयत्वनिमित्तेतरेति**। **अन्त्यस्येति**। अलोन्त्यपरिभाषयेति भावः । **अतो गुण इति**। नव्यास्तु 'त्वाहौ सौ' इत्यत्र त्वाहादेशयोरन्त्याकार उच्चारणार्थ एवास्तु किमनेन पररूपकरणप्रयासेनेत्याहुः । **त्वम् । अहमिति**। ननु युष्मानतिक्रान्तः अतित्वमित्यादौ 'त्वाहौ सौ' इत्यस्यावकाशोऽस्ति, त्वातिक्रान्तेनातित्वयेत्यादौ 'त्वमावेकवचने' इत्यस्यावकाशः, त्वमहमित्यत्र तूभयोः प्रसङ्गे त्वमावेकवचने' इत्यनेन परत्वाद्बाध्यम् । नैष दोषः । 'त्वमावपि प्रबाधन्ते

**शेष इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया, तेन मपर्यन्ताच्छेषस्य 'अद्' इत्यस्य लोपः, स च परोऽप्यन्तरङ्गे अतो गुणे कृते प्रवर्तते, अदन्तत्वाभावान्न टाप्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्। ३८६ युवावौ द्विवचने।**

---

युष्मदस्मदोरलिङ्गत्वमनुपपन्नम्। 'साम आकम्' इति सूत्रे 'अलिङ्गे युष्मदस्मदी' इति भाष्यं तु पुंस्त्रीनपुंसकलिङ्गपदान्तरसमभिव्याहारं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयत इत्येवंपरम् इति तत्रैव भाष्ये स्पष्टम्। एवं च युष्मदस्मदोः स्त्रीलिङ्गसत्त्वात् टाब् दुर्वार इत्यस्वरसादाह—**यद्वेति**। **अधिकरणत्वविवक्षयेति**। 'विवक्षातः कारकाणि भवन्ति' इति वक्ष्यमाणत्वादिति भावः। यदि हि 'शेषे' इति विभक्तिविशेषणं स्यात्, तर्हि व्यर्थमेव स्यात्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात्। अतः शेषस्येत्यर्थ आस्थेयः। ततः किमित्यत आह—**तेनेति**। शेषस्य स्थाने इत्यर्थाश्रयणेनेत्यर्थः। **मपर्यन्तादिति**। मपर्यन्तस्येत्यपकृष्टं पञ्चम्यन्ततया विपरिणम्यत इति भावः। एतच्च 'त्यदादीनामः' इति सूत्रे 'द्विलोपष्टाबभावार्थः कर्तव्य इति स स्मृतः। अथवा शेषसप्तम्या शेषे लोपो विधीयते।' इति वार्तिकतद्भाष्ययोः स्पष्टम्। न च मपर्यन्तस्य त्व इति अह इति चादेशे कृते शिष्टस्य अद् इत्यस्य मपर्यन्तात्परत्वं नास्तीति वाच्यम्, त्वाहादेशयोः कृतयोः अदो लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि त्वाहादेशप्रवृत्तेः पूर्वकालिकमपर्यन्तशेषत्वमादाय तदुपपत्तेः। नन्वस्तु मपर्यन्ताच्छेषस्य अद्शब्दस्य लोपः, तथापि त्व अद् अम्, अह अद् अम्—इति स्थिते पररूपापेक्षया परत्वाददो लोपे अदन्तत्वात् टाब् दुर्वार इत्यत आह—**स चेति**। शेषे लोप इत्यर्थः। **अन्तरङ्गे इति**। 'अतो गुणे' इत्यस्य बहिर्भूतविभक्त्यपेक्षलोपापेक्षया अन्तरङ्गत्वं बोध्यम्। **अदन्तत्वाभावादिति**। त्व अद्, अह अद् इत्यत्र पररूपे सति त्वद् अहद् इति स्थिते, अदो लोपे त्व् अह् इत्यनयोरदन्तत्वाभावान्न टाबित्यर्थः। **परमत्वमिति**। 'ङे प्रथमयोः—' इत्यादीनामाङ्गत्वात् तदन्तविधिरिति भावः।

**अतित्वमिति**। 'ङे प्रथमयोः' इत्यादीनां गौणे अप्रवृत्तौ मानाभावादिति भावः। युष्मद् औ, अस्मद् औ—इति स्थिते 'ङे प्रथमयोः' इत्यमि कृते युष्मद् अम्, अस्मद् अम् इति स्थिते—**युवावौ द्विवचने**। 'युष्मदस्मदोरनादेशे' इत्यतो युष्मद-

---

षेधतः' इति वक्ष्यमाणत्वात्। **अधिकरणत्वविवक्षयेति**। यदि तु 'शेषे' इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेव तत्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात्। न चैवमन्त्यलोप इति पक्षस्य निरालम्बनतापत्त्या युष्मदस्मदोरन्त्यस्य लोपः स्यादिति ग्रन्थोऽयुक्त इति वाच्यम्। 'साम आकम्' इति ससुट्कनिर्देशेन तस्यापि पक्षस्य ज्ञापितत्वादिति भावः। **अतो गुणे कृते प्रवर्तत इति।**

( ७-२-९२ ) द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ। ३८७ **प्रथमायाश्च द्विवचने भाषायाम्।** (७-२-८८) इह युष्मदस्मदोराकारोऽन्तादेशः स्यात्। युवाम्। आवाम्। 'औङि' इत्येव सुवचम्। भाषायाम् किम्-युवं वस्त्राणि। मपर्यन्तस्य (सू ३८३) किम्-साकच्कस्य मा भूत्, युवकाम्। आव-

स्मदोरित्यनुवर्तते, मपर्यन्तस्येत्यधिकृतम्, उक्तिर्वचनम्, द्वयोः वचनं द्विवचनम्, तत्र समर्थयोरित्यर्थः। द्वित्वविशिष्टार्थवाचिनोरिति यावत्, न तु द्विवचनसंज्ञके प्रत्यये परे इत्यर्थः, वचनग्रहणसामर्थ्यात्, अन्यथा द्वित्वे इत्येव ब्रूयात्, 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवृत्तौ सत्यां द्वित्वे या विभक्तिस्तस्यां परत इत्यर्थलाभात्, तदाह—**द्वयोरुक्तावित्यादिना**। द्वयोरुक्तावित्याश्रयणस्य फलमग्रे मूल एव स्पष्टीभविष्यति। युव अद्, आव अद् इति स्थिते 'शेषे लोपः' इति प्राप्ते, **प्रथमायाश्च द्विवचने भाषायाम्।** 'अष्टन आ विभक्तौ' इत्यत आग्रहणमनुवर्तते, 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोः इति च, तदाह—**इहेति**। भाषायां प्रथमाद्विवचने परे इत्यर्थः। भाषायामित्यस्य तु लौकिकव्यवहारे इत्यर्थः। **युवाम्। आवामिति**। युव अद् अम्, आव अद् अम् इत्यत्र दकारस्य आत्वे पूर्वयोरकारयोः पररूपे ततः सवर्णदीर्घे 'अमि पूर्वः' इति भावः। **औङीत्येव सुवचमिति**। द्वितीयाद्विवचनेऽप्यात्वस्य इष्टत्वादिति भावः। **युवं वस्त्राणीति**। युष्मद् औ इति स्थिते मपर्यन्तस्य युवादेशे सति शेषलोपे रूपम्।

**मपर्यन्तस्य किमिति**। युष्मदस्मदोः समस्तयोरेव युवावादेशयोः कृतयोरपि आत्वे पूर्वरूपे च युवाम् आवामिति सिद्धेरिति प्रश्नः। **साकच्कस्येति**। 'अव्ययसर्वनाम्नाम्–' इति टेः प्रागकचि युष्मकद् औ, अस्मकद् औ–इति स्थिते 'ङे प्रथमयोः–' इत्यमि 'युवावौ द्विवचने' इति समस्तयोः साकच्कयोस्तन्मध्यपतितन्यायेन युवावादेशयोः

'वार्णादाङ्गं बलीयः' इति तु समानाश्रय एव भवति, न तु व्याश्रये। इह तु शेषे लोपस्य विभक्तिर्निमित्तम्, पररूपस्य त्वकार इति व्याश्रयत्वमिति भावः। समानाश्रये उदाहरणं तु कारक इत्यादि बोध्यम्। तत्र हि यणवृद्ध्योः प्राप्तयोर्वृद्धिरेव भवति। आङ्गत्वात्तदन्तविधिरित्याह—**परमत्वमित्यादि। युवावौ द्विवचने**। उक्तिर्वचनं, द्वयोर्वचनं द्विवचनम्, तदेतदाह—**द्वयोरुक्ताविति**। न चात्र कृत्रिमाकृत्रिमन्यायविरोधः शङ्क्यः, वचनग्रहणसामर्थ्यादेव तद्बाधात्, अन्यथा द्वित्वे इत्येव ब्रूयात्। 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यधिकाराद् द्वित्वे या विभक्तिस्तस्यां परत इति व्याख्यानसंभवात्। **युवं वस्त्राणीति**। शेषे लोपः। **मपर्यन्तस्य किमिति**। अधिकारसूत्रं किमर्थमिति प्रश्नः। **युवकाम्। आवकामिति**। ननु युवावयोः समु-

काम् । 'त्वया' 'मया' इत्यत्र 'त्व्या' 'म्या' इति मा भूत् । 'युवकाभ्याम्' 'आवकाभ्याम्' इति च न सिध्येत् । ३८८ **यूयवयौ जसि** । (७-२-९३) स्पष्टम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । इह शेषे

'प्रथमायाश्च–' इति द्कारस्य आत्वे अमि पूर्वे च युवाम् आवाम् इत्येव स्यात्, ककारो न श्रूयेत । अतो मपर्यन्तस्येति वचनमित्यर्थः । ननु समुदायादेशत्वेऽपि 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य टेः प्राक्' इति व्यवस्थाया वक्ष्यमाणत्वाद्युवामावामिति परिनिष्ठितसुबन्तयोष्टेः प्रागकचि युवकाम् आवकामिति सिध्यत्येव । अत्र साकच्कयोर्युवावादेशाप्रसक्तेरित्यस्वरसादाह—**त्वया । मयेति** । यदि मपर्यन्तस्येति न स्यात्, तदा 'त्वमावेकवचने' इति त्वमादेशौ समस्तयोः स्याताम्, ततश्च तृतीयैकवचने युष्मद् आ, अस्मद् आ–इति स्थिते, समस्तयोः स्थाने त्वमादेशयोः त्व आ, म आ इति स्थिते, 'योऽचि' इति अकारस्य यत्वे त्व्या म्या इति स्यात् । अतो 'मपर्यन्तस्य' इति वचनम् । सति तस्मिन् मपर्यन्तस्य त्वमादेशयोः कृतयोः त्व अद् आ, म अद् आ इति स्थिते अकारयोः पररूपे दकारस्य यत्वे च त्वया मया इति सिध्यतीत्यर्थः । ननु 'योऽचि' इति सूत्रस्थाने 'अच्ये' इति सूत्रमस्तु, अजादिविभक्तौ युष्मदस्मदोरन्त्यस्य एकारः स्यादिति तदर्थः । तथा च त्वमयोः समस्तादेशत्वेऽपि तदन्त्यस्य अकारस्य एत्वे अयादेशे च कृते त्वया मयेति सिध्यतीत्यस्वरसादाह—**युवकाभ्यामावकाभ्यामिति च न सिध्यदिति** । असति मपर्यन्तवचन इति शेषः । 'ओकारसकार–' इत्यादिवचनेन भ्यामि टेः प्रागकचि तन्मध्यपतितन्यायेन साकच्कयोः स्थाने युवावादेशयोः युवाभ्यामावाभ्यामित्येव स्यात्, ककारो न श्रूयेत । युष्मकद्, अस्मकद् इत्यत्र मपर्यन्तस्यैव युवावादशयोस्तु 'युष्मदस्मदोरनादेशे' इत्यात्वे युवकाभ्याम्, आवकाभ्यामिति निर्बाधमित्यर्थः ।

'ङे प्रथमयोः–' इति जसः अमि कृते विशेषमाह—**यूयवयौ जसि । स्पष्टमिति** । युष्मदस्मदोर्मपर्यन्तस्य यूय वय इत्यादेशौ स्तो जसि परत इति सुगममित्यर्थः । यूय अद् अम्, वय अद् अम्–इति स्थिते पररूपे 'शेषे लोपः' इति मपर्यन्ताच्छेषस्य अदो लोपे परिनिष्ठितं रूपमाह—**यूयम् । वयमिति । परमयूयमिति** । यूयवयविधेराङ्गत्वात्तदन्तविधिरिति भावः । **अतियूयमिति** । गौणत्वेऽपि तदप्रवृत्तौ मानाभावादिति भावः । अत्र शीभावमाशङ्क्य परिहरति—**इहेति** । इह

दायादेशत्वेऽपि युवकामित्यादि सिध्यति । 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्राक्' इति युष्मदस्मद्विषये व्यवस्थायास्त्वयका मयकेत्यादिसिद्धये वक्ष्यमाणत्वात्, किमनेन 'मपर्यन्तस्य' इत्यधिकारेणेत्यपरितोषादाह—

**लोपेऽन्त्यलोप इति पक्षे जसः शी प्राप्तः, 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' (प ९३) इति न भवति। 'ङे प्रथमयोः–' (सू ३८२) इत्यत्र मकारान्तरं प्रश्लिष्य 'अम्**

---

'शेषे लोपः' इत्यन्त्यलोप इति पक्षे दकारस्य लोपे सति अवर्णान्तात् सर्वनाम्नः परत्वाद् जसः शीभावः प्राप्तो न भवतीत्यन्वयः। कुत इत्यत आह—**अङ्गकार्ये इति।** अङ्गाधिकारविहिते कार्ये कृते सति पुनर् अङ्गाधिकारविहितं कार्यं न भवतीत्यर्थः। तेन त्वमित्यत्र पररूपे कृते 'अमि पूर्वः' इत्यस्य नानुपपत्तिः। 'ज्यादादीयसः' इति सूत्रे 'ज्ञाजनोर्जा' इति सूत्रे च 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषा स्थिता। सा चात्र अर्थत उपनिबद्धा। न च द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते 'सुपि च' इति दीर्घो न स्यादिति वाच्यम्, 'द्व्योरेकस्य' इत्यादिनिर्देशेन तदनित्यत्वज्ञापनात्। प्रकृते च शेषलोपस्य आङ्गस्य प्रवृत्तत्वादाङ्गः शीभावो न भवतीति भावः। ननु 'अङ्गकार्ये–' इति परिभाषा नात्र प्रवर्तते, शीभावस्य अङ्गाधिकारविहितत्वेऽपि अङ्गाधिकरणकत्वाभावात्, 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषास्वारस्येन तथैव प्रतीतेः, अतोऽत्र शीभावो दुर्वार इत्यस्वरसादाह—**ङे प्रथमयोरिति।** 'ङे प्रथमयोरम्' इत्यत्र अम् म् इति मकारान्तरं प्रश्लिष्यते। अम् च म् चेति द्वन्द्वः। अन्त्यो मकारः संयोगान्तलोपेन लुप्तः। प्रश्लिष्टश्च मकारः अमो विशेषणम्, तदन्तविधिः। मकारान्तः अम् स्यादिति लभ्यते। मकारान्तस्य अमः पुनर्मान्तत्वविधानाद् अम् मान्त एव भवति। न तु तस्य विकारो भवतीति लभ्यते, अतो न शीभाव इत्यर्थः। वस्तुतस्तु मकारान्तरप्रश्लेषो भाष्ये अदर्शनादुपेक्ष्यः। संनिपातपरिभाषयैवात्र शीभावो न भवति। दकारस्य शेषलोपो हि आत्वयत्वनिमित्तेतरात्मकशेषविभक्त्यात्मकस्य अमः युष्मदस्मदोश्च संनिपातमाश्रित्य प्रवृत्तः, ततः शीभावे तु आद् गुणे यूये वये इति स्यात्, तत्र एकादेशस्य पूर्वान्तत्वे प्रकृत्यनुप्रवेशात् प्रत्ययसंनिपातभङ्गः। परादित्वे तु युष्मदस्मत्संनिपातविरोध इत्यलम्।

---

**त्वया मयेत्यत्रेति।** ननु त्वमादेशयोरपि समुदायादेशत्वे त्वयेत्यादि साधयितुं शक्यत एव, 'योऽचि' इति सूत्रं परित्यज्य 'अच्ये' इति सूत्रे कृते अजादौ विभक्तौ परतोऽन्त्यस्य एकारादेशे सत्ययादेशप्रवृत्तेरिति पुनरपरितोषादाह—**युवकाभ्यामित्यादि।** **अङ्गकार्ये इति।** एतेन 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषा अर्थत उपनिबद्धा। 'अङ्गे–अङ्गाधिकारे वृत्तं–वर्तनं यस्य तदङ्गवृत्तं शास्त्रम्, तस्मिन्प्रवृत्ते सति पुनरन्यस्याङ्गवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिः' इति तत्परिभाषाया अर्थः। एषा च परिभाषा 'ज्ञाजनोर्जा' इत्यनेन ज्ञापिता। उपपत्तिस्तु मनोरमातोऽवगन्तव्या। न चैवं द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते 'सुपि च' इति दीर्घो न स्यादिति वाच्यम्। 'द्व्योरेकस्य' इत्यादिनिर्देशेन उक्तपरिभाषाया अनित्यत्वज्ञापनादिति दिक्। **मकारान्तर**मित्युपलक्षणम्, 'जसः शी'

मान्त एवावशिष्यते, न तु विक्रियते' इति व्याख्यानाद्वा । **३८९ त्वमावेकवचने ।** ( ७-२-९७ ) एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ । **३९० द्वितीयायां च ।** (७-२-८७) युष्मदस्मदोराकारः स्यात् । त्वाम् । माम् । युवाम् । आवाम् । **३९१ शसो न ।** (७-१-२९) नेत्यविभक्तिकं पदम् । युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात् । अमोऽपवादः । 'आदेः परस्य' (सू ४४) ।

अथ द्वितीयैकवचनस्य अमः 'ङे प्रथमयोः–' इत्यमि कृते युष्मद् अम् , अस्मद् अम्–इति स्थिते—**त्वमावेकवचने** । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । 'मपर्यन्तस्य' इत्यधिकृतम् । एकवचनशब्दो यौगिक एव, वचनग्रहणसामर्थ्यात् । तदाह—**एकस्येत्यादिना** । त्व अद् अम् , म अद् अम् इति स्थिते—**द्वितीयायां च** । शेषपूरणेन सूत्रं व्याचष्टे—**युष्मदस्मदोरिति** । 'युष्मदस्मदोरनादेशे' इत्यतः तदनुवृत्तेरिति भावः । **आकार इति** । 'अष्टन आ विभक्तौ' इत्यतस्तदनुवृत्तेरिति भावः । तथा च द्वितीयाविभक्तौ परतः युष्मदस्मदोराकारः स्यादिति फलति । 'अलोऽन्त्यस्य' इति दकारस्य भवति । त्व अ आ अम् , म अ आ अम्–इति स्थिते पररूपे, सवर्णदीर्घे, अमि पूर्वरूपे च परिनिष्ठितं रूपमाह—**त्वाम् । मामिति । युवाम् । आवामिति** । पूर्ववद्, 'द्वितीयायां च' इत्यात्वमिति विशेषः । 'प्रथमायाश्च–' इत्यस्य अत्राप्रवृत्तेः । अथ शसि विशेषमाह—**शसो न** । 'ङे प्रथमयोः–' इत्यतः अमित्यनुवर्तते । युष्मदस्मद्भ्यामिति च । युष्मदस्मद्भ्यां परस्य शसः अम् न स्यादिति लभ्यते । तथा च अमभावे 'द्वितीयायां च' इत्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि' इति नत्वे युष्मानिति यद्यपि पुंसि रूपं सिध्यति, तथापि युष्मान् ब्राह्मणीः पश्य, अस्मान् ब्राह्मणीः पश्य, युष्मान् ब्राह्मणकुलानि पश्य, अस्मान् ब्राह्मणकुलानि पश्य, इति स्त्रीनपुंसकयोर्न सिध्येत् । अतो नेदं सूत्रं शसः अम्निषेधपरम् , किं तु शसो नकारोऽत्र विधीयत इत्यभिप्रेत्य, तर्हि शसो नः इति प्रथमा कुतो न श्रूयते इत्याशङ्क्य आह—**नेत्यविभक्तिकं पदमिति** । लुप्तप्रथमाविभक्तिकमित्यर्थः । ततश्च फलितमाह—**युष्मदस्मद्भ्यामित्यादिना** । **अमोऽपवाद इति** । 'ङे प्रथमयोः–' इति प्राप्त एव

इत्यत्र जसः स् इति सकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानात् , 'अतोऽम्' इतिसूत्रादम्ग्रहणमनुवर्त्य अम् अमेवेति व्याख्यानाद्वेति बोध्यम् । **एकस्योक्ताविति** । 'त्वमावेकत्वे' इति वक्तव्ये वचनग्रहणादयमर्थो लभ्यत इति भावः । **अविभक्तिकमिति** । तथा च 'ङे प्रथमयोः–' इति पूर्वसूत्रेण प्राप्तस्यामः प्रतिषेधोऽयमिति भाष्ये शङ्कितम् । न च तथैव किं न स्यात् , 'द्वितीयायां च' इत्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छसः–' इति नत्वे चेष्टसिद्धेरिति वाच्यम् , स्त्रीनपुंसकयोर्नत्वाप्राप्त्या युष्मान्ब्राह्मणीः,

'संयोगान्तस्य लोपः' (सू ५४)। युष्मान्। अस्मान्। **३६२ योऽचि**। (७-२-८९) अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया। **३६३ युष्मदस्मदोरनादेशे**। (७-२-८६) अनयोराकारः स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः। **३६४ तुभ्यमह्यौ ङयि**।

---

नत्वविधेस्तदपवादता। युष्मद् अस्, अस्मद् अस्–इति स्थिते 'द्वितीयायां च' इत्यात्वे अनेन शसो नकारः। स च 'अलोऽन्त्यस्य' इति नान्त्यस्येत्याह—**आदेः परस्येति**। **संयोगान्तस्येति**। अकारस्य नकारे कृते सकारस्य लोप इति भावः। यद्यपि शसः अमि कृतेऽपि अकारस्य नकारे मकारस्य संयोगान्तलोपे युष्मान् अस्मानिति सिध्यति, तथापि 'सत्यपि सम्भवे बाधनं भवति' इति न्यायान्नत्वस्य अमपवादत्वमाश्रितम्। किं च अमि कृते 'ङे प्रथमयोः–' इत्यत्र मकारान्तरप्रश्लेषपक्षे अकारस्य नकारे मकारस्य[1] संयोगान्तलोपो न स्यादित्यलम्।

**अथ तृतीया विभक्तिः**। युष्मद् आ, अस्मद् आ इति स्थिते—**योऽचि**। 'युष्मदस्मदोरनादेशे' [illegible]र्तते। 'अष्टन आ विभक्तौ' इत्यतो विभक्ताविति चानुवर्तते। अचीति विभक्तिविशेषणम्। तदादिविधिः। तदाह- -**अनयोरिति**। युष्मदस्मदोरन्त्यस्येत्यर्थः। अचि किम्? युवाभ्याम्। अनादेशे किम्? त्वत्, मत्। 'पञ्चम्या अत्' इत्यदादेशे सति न यत्वम्। युष्मद् आ, अस्मद् आ इत्यत्र 'त्वमावेकवचने' इति मपर्यन्तस्य त्वमादेशयोः दकारस्य यत्वे पररूपे च रूपमिति भावः। **युष्मदस्मदोरनादेशे**। 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति चानुवर्तते। रायो हलि' इत्यतो हलीत्यनुवृत्तं विभक्तिविशेषणम्। तदादिविधिः। तदाह—**अनयोरिति**। युष्मदस्मदोरन्त्यस्येत्यर्थः। वस्तुतस्तु हलीति नानुवर्तनीयम्, 'योऽचि' इत्यजादौ यत्वविधानेन परिशेषादेव तत्सिद्धेः। **युवाभ्याम्। आवाभ्यामिति**। युष्मद् भ्याम्, अस्मद् भ्याम्–इति स्थिते युवावादेशयोः दकारस्य आत्वे[2] सवर्णदीर्घ इति भावः। अत्र हलीत्यनुवृत्तौ 'योऽचि' इत्यज्ग्रहणं मास्तु, हलादावात्वस्य विशेषविहितत्वादेव यत्वनिवृत्तिसिद्धेरिति भाष्ये स्पष्टम्। **युष्माभिः। अस्माभिरिति**। 'युष्मदस्मदोरनादेशे' इत्यात्वे सवर्णदीर्घ इति भावः।

**अथ चतुर्थी विभक्तिः**। युष्मद् ए, अस्मद् ए–इति स्थिते 'त्वमावेकवचने' इति प्राप्ते—**तुभ्यमह्यौ ङयि**। ङे इत्यस्य सप्तम्येकवचने 'ङयि' इति। 'युष्मद-

---

युष्मान्कुलानीत्यसिद्धिप्रसङ्गात्। अलिङ्गत्वपक्षे तु युष्मान् ब्राह्मणानित्यादेरप्यसिद्धिप्रसङ्गाच्च। **योऽचि**। अचि किम्, युवाभ्याम्। यदि तु 'युष्मदस्मदोरनादेशे' इत्यत्र

---

१ 'मकारस्य प्रथमस्य' क। २ 'आत्वे पररूपे' क।

( ७-२-९५ ) अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। अमादेशः 'शेषे लोपः' (सू ३८९)। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्। युवाभ्याम्। आवाभ्याम्। **३९५ भ्यसो भ्यम्।** (७-१-३०) भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात्। आद्यः शेषे लोपस्यान्त्यलोपत्व एव। तत्राङ्गवृत्तपरिभाषया एत्वं न। अभ्यम् तु पक्षद्वयेऽपि साधुः। युष्मभ्यम्। अस्मभ्यम्। **३९६ एकवचनस्य च।** (७-१-३२) आभ्यां पञ्चम्येकवचनस्य अत् स्यात्।

---

स्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतम्। तदाह—**अनयोरिति**। युष्मदस्मदोरित्यर्थः। **अमादेश इति**। 'ङे प्रथमयोः–' इत्यनेनेति शेषः। **शेषे लोप इति**। अदो दस्य वा लोप इत्यर्थः। 'अमि पूर्वः' इति मत्वाह—**तुभ्यम्। मह्यमिति। परमतुभ्यमिति।** तुभ्यमह्यविध्योराङ्गत्वात्तदन्तेऽपि प्रवृत्तिरिति भावः। **अतितुभ्यमिति।** गौणत्वे तदप्रवृत्तौ मानाभावादिति भावः। **युवाभ्याम्। आवाभ्यामिति।** तृतीयाद्विवचनवदिति भावः। **भ्यसो भ्यम्।** भ्यम् अभ्यमिति वा छेदः। तदाह—**भ्यस इति।** युष्मदस्मद्भ्यां परस्येति शेषः, 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतस्तदनुवृत्तेः। ननु भ्यमादेशपक्षे 'शेषे लोपः' इत्यदो लोपे युष्मभ्यमस्मभ्यमिति मकारादकारो न श्रूयेतेत्यत आह—**आद्य इति**। लक्ष्यानुरोधादिह अन्त्यलोपपक्ष एवाश्रयणीयः। नन्वन्त्यलोपपक्षे दकारस्य लोपे सति 'बहुवचने झल्येत्' इत्येत्वं स्यादित्यत आह—**तत्राङ्गवृत्तेति।** 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषयेत्यर्थः। अङ्गे वृत्तं–वर्तनं यस्य तद् अङ्गवृत्तम्, तस्मिन् कार्ये प्रवृत्ते सति अन्यस्य अङ्गकार्यस्य वृत्तौ प्रवृत्तिविषये अविधिः विधिर्नास्तीत्यर्थः। प्रकृते च शेषलोपे अङ्गकार्ये प्रवृत्ते सति अन्यद् अङ्गकार्यमेत्त्वं न भवतीति भावः। **अभ्यम् त्विति।** अभ्यमादेशस्तु टिलोपपक्षे अन्त्यलोपपक्षे च अनुकूल इत्यर्थः। तत्र अन्त्यलोपपक्षे अभ्यमो झलादित्वाभावात्तस्मिन् परे एत्वं न। किन्तु पररूपे सति युष्मभ्यम्, अस्मभ्यम् इति सिध्यति। टिलोपपक्षे तु अङ्गस्य अदन्तत्वाभावादपि एत्वं न।

**अथ पञ्चमी विभक्तिः। एकवचनस्य च** युष्मदस्मद्भ्या इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते 'पञ्चम्या अत्' इति च, तदाह—**आभ्यामिति।**

---

'रायो हलि' इत्यतो हलीत्यनुवर्तते तदेहाचीति मास्तु, परिशेषादेव सिद्धेः। **युष्मदस्मदोरनादेशे**। अनादेशे किम्, युष्मभ्यम्। न चाभ्यम्पक्षे आदेशो हलादिर्नेत्यमादेशग्रहणं त्यक्तुं शक्यमिति वाच्यम्। योऽचीत्यत्रानुवृत्त्यर्थं तस्यावश्यकत्वात्। **हलादाविति**। 'योऽचि' इत्यज्ग्रहणात्परिशेषसिद्धमिदम्, 'रायो हलि' इत्यतोऽनुवृत्त्या लब्धं वा। **पक्षद्वयेऽपि साधुरिति**। नन्वन्त्यलोपपक्षे पररूपं बाधित्वा

त्वत्। मत्। 'ङसेश्च' इति सुवचम्। युवाभ्याम्। आवाभ्याम्। **३९७ पञ्चम्या अत्।** ( ७-१-३१ ) आभ्यां पञ्चम्या भ्यसोऽत्स्यात्। युष्मत्। अस्मत्। **३९८ तवममौ ङसि।** (७-२-९६) अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि। **३९९ युष्मदस्मद्भ्यां ङसोऽश्।** (७-१-२७) स्पष्टम्। तव। मम। युवयोः।

---

युष्मदस्मद्भ्यामित्यर्थः। अनेकाल्त्वात् सर्वादेशः। 'न विभक्तौ–' इति तस्य नेत्त्वम्। **त्वत् मत् इति**। युष्मद् अस्, अस्मद् अस् इति स्थिते त्वमादेशयोः कृतयोः ङसेः अदादेशे सति पररूपे 'शेषे लोपः' इति टिलोपः। अन्त्यलोपपक्षे दकारलोपे सति त्रयाणामकाराणां पररूपमिति भावः। **सुवचमिति**। लाघवादिति भावः। **पञ्चम्या अत्**। युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते, 'भ्यसो भ्यम्' इत्यतो भ्यस इति। तदाह—**आभ्यामिति**। युष्मदस्मद्भ्यामित्यर्थः। **युष्मत् अस्मदिति**। युस्मद् भ्यस्, अस्मद् भ्यस्, इति स्थिते भ्यसः अदादेशः शेषलोपश्च।

**अथ षष्ठी विभक्तिः। तवममौ ङसि**। 'युस्मदस्मदोरनादेशे' इत्यतो युस्मदस्मदोरित्यनुवर्तते। 'मपर्यन्तस्य' इत्यधिकृतम्। तदाह—**अनयोरिति**। युष्मदस्मदोरित्यर्थः। 'त्वमावेकवचने' इत्यस्यापवादः। **युष्दस्मद्भ्यां ङसोऽश्। स्पष्टमिति**। युष्मदस्मद्भ्यां परस्य ङसः अश् स्यादिति सुगममित्यर्थः। शित्त्वात् सर्वादेशः। **तव ममेति**। युष्मद् अस्, अस्मद् अस्, इति स्थिते मपर्यन्तस्य तवममादेशयोः

---

सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति चेत्। अत्राहुः—'बहुवचने झल्येत्' इत्येत्वनिवृत्त्याकारोच्चारणस्य चरितार्थत्वादिति। यद्यप्यङ्गवृत्तपरिभाषया एत्वं सुपरिहरम्, तथापि तस्यानित्यत्वे इदमप्यकारोच्चारणं ज्ञापकमिति तत्त्वम्, **युष्मदस्मद्भ्यां ङसोऽश्**। शित्त्वं सर्वादेशार्थम्। अन्यथा हि 'आदेः परस्य' इति स्यात्। न चाकारस्य अकारविधानवैयर्थ्यम्। आदेशव्यपदेशेन यत्वनिवृत्त्यर्थत्वात्। न चावयवस्यादेशे सत्यपि विभक्तेरनादेशताऽस्त्येवेति वाच्यम्। 'सर्वे सर्वपदादेशाः' इति सिद्धान्तात्। इदमेव शित्त्वं ज्ञापयति 'सर्वे सर्वपदादेशाः' इति। अर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यर्थः। सिद्धान्तादयस्तु वचनसामर्थ्यादनर्थकस्यापि भवन्तीति मनोरमायां स्थितम्। **तव ममेति**। ननु अत्रान्त्यलोपपक्षे अशः स्यादेशः स्यात्, यत्वनिवृत्त्यर्थतया अश्विधानस्य चरितार्थत्वात्। न च स्यादेशस्यापवादोऽशिति वाच्यम्, अशादेशप्रवृत्तिकाले शेषे लोपाभावेन स्यादेशस्याप्रसक्तेः। अत्राहुः—अङ्गवृत्तपरिभाषया स्यादेशो वारणीयः। यदि तु अङ्गस्य यत्कार्यं तद्विषयिण्येव सा परिभाषा, न त्वङ्गाधिकारेति दुराग्रहः, तर्ह्यशित्यत्र 'अतो गुणे' इति पररूपेणाकारान्तरं प्रश्लिष्य अकार एवाश् भवति, न तु विक्रियत इति व्याख्येयमिति। नन्वाकमादेशात्पूर्वमनादेश-

आवयोः। **४०० साम आकम्। (७-१-३३)** आभ्यां परस्य साम आकम् स्यात्। भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः। युष्माकम्। अस्माकम्। त्वयि।

---

कृतयोः अशादेशे दकारात् पूर्वयोरकारयोः पररूपे अदो लोपः। अन्त्यलोपपक्षे दकारलोपः, त्रयाणामकाराणां पररूपमिति भावः। **युवयोः। आवयोरिति।** युष्मद् ओस्, अस्मद् ओस् इति स्थिते मपर्यन्तस्य युवावादेशयोः 'योऽचि' इति दस्य यत्वे पररूपमिति भावः। **साम आकम्। आभ्यामिति।** 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतस्तदनुवृत्तेरिति भावः। **साम इति।** सकारेण सहित आम् साम्, तस्येत्यर्थः। ससुट्कस्य आम इति यावत्। ननु युष्मद् आम्, अस्मद् आम् इति स्थिते अवर्णात् परत्वाभावात् सुटो न प्रसक्तिः। न च 'शेषे लोपः' इति दस्य लोपे कृते अवर्णात् परत्वमस्तीति वाच्यम्। आकमादेशात् प्राग् अनादेशतया शेषलोपस्यैवात्राप्रसक्तेः ससुट्कनिर्देशोऽनुपपन्नः व्यर्थश्चेत्यत आह—**भाविन इति।** भविष्यत इत्यर्थः। यदि तु आम आकम् इत्यवोच्येत, तर्हि आम आकमादेशे कृते दकारस्य शेषलोपे सति स्थानिवत्त्वेन आकमादेशस्य आम्त्वात् तस्य च अवर्णात्परत्वात् सुडागमः स्यात्। तत एत्वषत्वयोर्युष्मेषाकम्, अस्मेषाकमिति स्यात्। अतः ससुट्कनिर्देशः। यद्यपि आकमादेशप्रवृत्तिकाले सुटो न प्रसक्तिः। तथापि आकमादेशोत्तरं दकारलोपे कृते स्थानिवत्त्वेन यः सुड् भविष्यति, तस्यापि स्थानषष्ठ्याः स्वीकरणान्निवृत्तिर्भवति। अन्यथा ससुट्कनिर्देशवैयर्थ्यादिति भावः। यदि तु शेषस्य लोप एवाश्रीयते, तदा कृतेऽप्याकमादेशे अदो लोपे अवर्णात् परत्वाभावादेव सुटः प्रसक्त्यभावात् ससुट्कनिर्देशो मास्तु। **युष्माकम्, अस्माकमिति।** आकमादेशे कृते अदो लोपे रूपम्। दकारलोपे तु सवर्णदीर्घः। एतदर्थमेव दीर्घोच्चारणम्। अन्यथा पररूपापत्तेः। न चाकारोच्चारणसामर्थ्यादेव पररूपनिरास इति वाच्यम्, कमादेशे प्राप्ते 'बहुवचने झल्येत्' इत्येत्त्वनिवृत्त्या चरितार्थत्वादित्यलम्।

---

त्वाद् 'योऽचि' इति यत्वे न भाव्यम्, ततश्च शेषे लोपाभावादवर्णान्तादिति विधीयमानस्य सुडागमस्याप्रसक्त्या साम इति ससुट्कनिर्देशो व्यर्थ इत्यत आह—**भाविन इति।** कृते हि शेषे लोपे अकारान्तत्वात् प्राप्तः सुट् ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्तत इति भावः। 'शेषे लोपष्टिलोपः' इति पक्षे तु सुड्ग्रहणं व्यर्थमेव। आकमिति दीर्घोच्चारणं सवर्णदीर्घार्थम्। अन्यथा पररूपं स्यात्। न चाकारोच्चारणसामर्थ्यम्। एत्वनिवृत्त्या अभ्यम इव चरितार्थत्वात्। इह 'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दावर्थपरौ, न तु प्रत्ययपराविति व्याख्यातम्। तत्फलं

---

१ इति क्वचिन्नास्ति।

मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ।

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसङ्ख्यश्चेत्स्तो युवावौ त्वमावपि ॥१॥
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममाविति ॥ २ ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।

**त्वयि, मयीति** । युष्मद् इ, अस्मद् इ इति स्थिते मपर्यन्तस्य त्वमादेशयोः 'योऽचि' इति दस्य यत्वे पररूपे रूपमिति भावः । **युवयोः, आवयोरिति** । प्राग्वत् । **युष्मासु, अस्मास्विति** । 'युष्मदस्मदोरनादेशे' इति दकारस्य आत्वे सवर्णदीर्घ इति भावः । 'त्वमावेकवचने' इत्यत्र 'युवावौ द्विवचने' इत्यत्र च एकवचनद्विवचनशब्दौ यौगिकौ, न तु प्रत्ययपराविति स्थितम् । तत्फलं श्लोकचतुष्टयेन संगृह्णाति—**समस्यमाने इति** । तत्र प्रथमश्लोके चेदित्यनन्तरम् अपीत्यध्याहार्यम् । यदि समस्यमाने युष्मदस्मदी द्व्येकत्ववाचिनी तदा समासार्थः अन्यसङ्ख्यश्चेदपि युवावौ त्वमावपि स्तः, इत्यन्वयः । त्वां मां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति, युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति च विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासं लभमाने युष्मदस्मदी द्वित्वैकत्वान्यतरविशिष्टार्थवाचिनी यदा, तदा समासार्थो मुख्यविशेष्यभूतः अन्यसंख्यश्चेदपि युष्मदस्मदर्थगतसंख्यापेक्षया अन्यसंख्याकश्चेदपि युष्मदस्मदर्थगतद्वित्वे युवावौ, तदर्थगतैकत्वे त्वमौ च द्विवचनैकवचनप्रत्ययपरत्वाभावेऽपि भवतः, युवावादेशविधौ द्विवचनशब्दस्य, त्वमादेशविधौ एकवचनशब्दस्य च यौगिकत्वाश्रयणात् । एकवचने प्रत्यये परतस्त्वमादेशौ, द्विवचने प्रत्यये परतो युवावादेशौ इत्यर्थाश्रयणे तु त्वाम् मां वा अतिक्रान्तौ, अतिक्रान्ता इति विग्रहे अतियुष्मद्शब्दे अत्यस्मद्शब्दे च युष्मदस्मदोर्द्विवचने बहुवचने च प्रत्यये परे त्वमौ न स्याताम् । तथा युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति विग्रहे युष्मदस्मदोरेकवचने बहुवचने च प्रत्यये परे युवावौ न स्यातामित्यव्याप्तिः स्यादित्यर्थः ।

ननु युष्मदस्मदोर्द्व्यर्थकत्वे युवावौ, एकार्थकत्वे तु त्वमौ इति किं सार्वत्रिकम् ? नेत्याह—**सुजस्ङेङस्सु इति** । द्वितीयश्लोकेऽस्मिन् उत्तरार्धे त्वाहावित्यादि तत्तत्सूत्रप्रतीकग्रहणम् । इतीत्यनन्तरं ये इत्यध्याहार्यम् । 'त्वाहौ सौ' 'यूयवयौ जसि' 'तुभ्यमह्यौ ङयि' इति सुजस्ङेङस्सु ये आदेशा विहिताः ते अतियुष्मदत्यस्मच्छब्दाभ्याम् एकद्विबह्वर्थवृत्तित्वेऽपि स्युरित्यर्थः । ननु तत्रापि द्व्यर्थकत्वे युवावौ, एकार्थकत्वे त्वमौ कुतो नेत्यत आह—**एते इति** । तृतीयश्लोके पूर्वार्धमेकं वाक्यम् । एते त्वाहादयः, स्वके

**त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥३॥**
**द्व्येकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी।**
**तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥४॥**

---

स्वीये विषये सुजसादौ, युवावौ बाधन्ते। कुतः ? परत्वात्। युवावापेक्षया एतेषां परत्वादित्यर्थः। नन्वस्त्वेवं त्वाहादिभिर्युवावयोर्बाधः। त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह—**त्वमावपीति। पूर्वेति।** विप्रतिषेधे सति पूर्वं पूर्वविप्रतिषेधः। 'सुप्सुपा' इति समासः। तृतीयान्तात्तसिः। विप्रतिषेधसूत्रे परशब्दस्य इष्टवाचितया क्वचिद्विप्रतिषेधे पूर्वकार्यस्य प्रवृत्त्याश्रयणादिति भावः। 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये तु 'त्वमावेकवचने' इति सूत्रे शेष इत्यनुवर्त्य 'सुजस्ङेङस्भिन्नविभक्तिषु' इति व्याख्यातम्। तदेवम् 'त्वमावेकवचने' 'युवावौ द्विवचने' इत्यत्र एकवचनद्विवचनशब्दयोर्यौगिकत्वाश्रयणस्य अव्याप्तिपरिहारार्थत्वमुक्त्वा अतिव्याप्तिपरिहारार्थत्वमाह—**द्व्येकसंख्य इति।** चतुर्थश्लोकेऽस्मिन् यदा तदेत्यध्याहार्यम्। यदा युष्मान् अस्मान् वा अतिक्रान्तौ अतिक्रान्त इति विग्रहे समासे सति द्वित्वैकत्वविशिष्टः समासार्थः समासस्य मुख्यविशेष्यभूतः, युष्मदस्मदी तु बह्वर्थके, तदा युवावौ त्वमौ च न स्तः, तयोः युष्मदस्मदोः द्वित्वैकत्वविशिष्टार्थकत्वाभावात्। युवावविधौ त्वमविधौ च युष्मदस्मदोर्द्वित्वैकत्वविशिष्टवाचित्वे सत्येव प्रवृत्तेराश्रयणात्। द्विवचने एकवचने च प्रत्यये परत इत्यर्थाश्रयणे तत्रातिव्याप्तिः स्यादित्यर्थः। अत्र 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे भाष्ये 'त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणम्' इति वार्तिकव्याख्यावसरे 'युवावौ द्विवचने' 'त्वमावेकवचने' इत्यत्र द्विवचनैकवचनशब्दयोर्यौगिकत्वाश्रयणमुपक्षिप्य युवाम् आवां वा अतिक्रान्तः, अति-

---

दर्शयति—**समस्यमान इत्यादिना। द्व्येकत्ववाचिनी इति।** पञ्चकं प्रातिपदिकार्थ इति पक्षाभिप्रायेणेदमुक्तम्। अस्मिँस्तु पक्षे संख्याया अपि प्रातिपदिकार्थत्वात्। त्रिकपक्षे तु द्व्येकार्थवाचिन इति पाठ्यम्। संख्याया विभक्त्यर्थत्वेऽपि संख्येयस्य प्रातिपदिकार्थत्वानपायात्। **अन्यसंख्यश्चेदिति।** युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः। **स्त इति।** अर्थपरत्वाश्रयणसामर्थ्यादेव भूतपूर्वगतेरपि स्वीकाराद्युवावौ त्वमावपि स्तः। प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः। एवं चतुर्थश्लोकेऽपि न युवावौ त्वमौ न चेत्युक्त्या प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता। एवं चाव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितम्। नन्वेवं सुजस्ङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्याताम्, एकार्थत्वे तु त्वमावित्याशङ्कायामाह—**सुजस्ङेङस्सु परत इति।** के ते आदेशा इत्यत आह—**त्वाहौ यूयवयावित्यादि।** अस्त्वेवं त्वाहादिभिर्युवावयोर्बाधः, त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह—**त्वमाव-**

त्वां मां वा अतिक्रान्त इति विग्रहे अतित्वम्, अत्यहम्। अतित्वाम्, अतिमाम्। अतियूयम्, अतिवयम्। अतित्वाम्, अतिमाम्। अतित्वाम्, अतिमाम्। अतित्वान्, अतिमान्। अतित्वया, अतिमया। अतित्वाभ्याम्, अतिमाभ्याम्। अतित्वाभिः, अतिमाभिः। अतितुभ्यम्, अतिमह्यम्। अतित्वाभ्याम्, अतिमाभ्याम्। अतित्वभ्यम्, अतिमभ्यम्। ङसिभ्यसोः—अतित्वत्, अतित्वत्। अतिमत्, अतिमत्। भ्यामि प्राग्वत्। अतितव, अतिमम। अतित्वयोः, अतिमयोः। अतित्वाकम्, अतिमाकम्। अतित्वयि, अतिमयि। अतित्वयोः, अति-

---

क्रान्तौ, अतिक्रान्ता इति विग्रहान् प्रदर्श्य, त्वाम् मां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति च विग्रहान् प्रदर्श्य, अतियुष्मदत्यस्मच्छब्दयोः सुजस्ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु सर्वत्र युवावादेशौ त्वमादेशौ च उदाहृत्य प्रदर्शितौ। सुजस्ङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येत एवादेशा उदाहृताः। तदिदं श्लोकचतुष्टयेन संगृहीतम्। तदिदानीं तत्प्रपञ्चनपरभाष्यानुसारेणोदाहृत्य प्रदर्शयति—**त्वां मां वा अतिक्रान्त इत्यादिना**। अतिक्रान्तौ अतिक्रान्ता इति च विग्रहयोरुपलक्षणमिदम्। विग्रहे इत्यनन्तरं 'रूपाणि वक्ष्यन्ते' इति शेषः। सुजस्ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य त्वमावेव भवतः। अवशिष्टप्रक्रियास्तु केवलयुष्मदस्मद्वज्ज्ञेयाः। सुजस्ङेङस्सु तु त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ इत्येते एवादेशाः पूर्वप्रतिषेधात् त्वमौ बाधित्वा भवन्ति। ततश्च सुजस्ङेङस्सु केवलयुष्मदस्मद्वदेव रूपाणीति निष्कर्षः। **अतित्वाकम्। अतिमाकमिति**। ननु 'साम आकम्' इति

---

**पीति**। 'विप्रतिषेधे परम्—' इत्यत्र परशब्दस्येष्टवाचित्वादिति भावः। **अतित्वाम्, अतिमामिति**। त्वां मां वा अतिक्रान्ताविति विग्रहः। **अतियूयम्, अतिवयमिति**। त्वां मां वा अतिक्रान्ता इति विग्रहः। एवमग्रेऽप्यूह्यम्। **अतित्वाकम्, अतिमाकमिति**। अत्रान्त्यलोपपक्षे त्वङ्गवृत्तपरिभाषया नुडागमो निवार्यः। 'ह्रस्वनद्यापः—' इत्यत्र ह्रस्वान्ताद्विहितस्यामो नुडिति व्याख्यानाद्वा। नन्वेवं भिन्नविषयतया सुटो नुडपवादत्वाभावेनावर्णान्तसर्वनामभ्यो विहितस्यामो नुडेव परत्वात् स्यात्, न तु सुडागमः, स्तस्य येषां केषामित्यादौ सावकाशत्वादिति चेत्। अत्राहुः—'त्यदादेरामि सुट्' इति वक्तव्ये 'आमि सर्वनाम्नः—' इति सर्वनामग्रहणसामर्थ्याद् 'हलि सर्वेषाम्' इत्यादिनिर्देशाच्च अवर्णान्तसर्वनामभ्योऽप्यामः सुडेव भवति, न तु नुट्। 'शस्प्रभृतिषु' इति च विषयसप्तमी, तेन पदादिष्वप्यामि न नुडिति। एवं च साम इति ससुट्कनिर्देशेन युष्माकमस्माकमित्यत्र सुडागमाभावेऽपि नुडागमो दुर्वार इत्याशङ्काया अपि

**मयोः। अतित्वासु, अतिमासु॥ युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङे-ङस्सु प्राग्वत्। औअम्औट्सु—अतियुवाम्, अतियुवाम्, अतियुवाम्। अत्या-वाम्, अत्यावाम्, अत्यावाम्। अतियुवान्, अत्यावान्। अतियुवया, अत्या-वया। अतियुवाभ्याम् ३, अत्यावाभ्याम् ३। अतियुवाभिः, अत्यावाभिः। भ्यसि—अतियुवभ्यम्, अत्यावभ्यम्। ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्, अत्यावत्। ओसि—अतियुवयोः, अतियुवयोः। अत्यावयोः, अत्या-वयोः। अतियुवाकम्, अत्यावाकम्। अतियुवयि, अत्यावयि। अतियुवासु। अत्यावासु॥ युष्मानस्मान्वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत्। औ-**

---

ससुट्कनिर्देशाद्यत्र आमः सुट्संभवः तत्रैवाकम्, न चात्र सुट् संभाव्यते। इह युष्मद-स्मदोरुपसर्जनत्वेन सर्वनामत्वाभावात्। सुटः सर्वनाम्नः परस्यामो विहितत्वादिति चेत्, मैवम्—ससुट्कत्वस्य संभावनामात्रविषयत्वात्। एवं च सुड् यत्र संभविष्यति तत्र सुटो निवृत्त्यर्थं ससुट्कनिर्देशः। यत्र तु सुड् न संभवति, तत्र केवलस्य आमः सुट्। अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे अतित्वाकमतिमाकमिति भाष्ये तदुदाहरणं प्रमाण-मित्यास्तां तावत्। तदेवमुपसर्जनयोः युष्मदस्मदोरेकार्थवाचित्वे उदाहरणान्युक्त्वा द्व्यर्थ-वाचित्वे उदाहरति—**युवाम् आवां वा अतिक्रान्त इति**। अतिक्रान्तौ, अति-क्रान्ता इति विग्रहयोरुपलक्षणम्। अत्र युष्मदस्मदोर्द्व्यर्थवृत्तित्वात् सुजस्ङेङस्भ्यो-ऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य युवावावेव भवतः, अवशिष्टास्तु प्रक्रियाः केवलयुष्मदस्मद्वद् ज्ञेयाः। सुजस्ङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येत एवादेशाः परत्वाद्युवावादेशौ बाधित्वा प्रवर्तन्ते। सुजस्ङेङस्सु केवल-युष्मदस्मद्वदेव रूपाणीति निष्कर्षः। अथ युष्मदस्मदोरुपसर्जनयोर्बह्वर्थवाचित्वे उदाहरणा-न्याह—**युष्मान् अस्मान्वेति**। युष्मानस्मान्वा अतिक्रान्तः, अतिक्रान्तौ, अति-क्रान्ता इति विग्रहेष्वित्यर्थः। 'द्व्येकसंख्यः समासार्थः' इति चतुर्थश्लोकस्योदाहरणा-न्येतानि। अत्र युष्मदस्मदोरेकद्व्यर्थवाचित्वाभावात् सुजस्ङेङस्भ्योऽन्यत्र मपर्यन्तस्य क्वापि न त्वमौ नापि युवावौ। 'ङे प्रथमयोः—' इत्याद्यास्तु भवन्त्येव। सुजस्ङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येते भवन्त्येव, तेषामेकद्व्यर्थविशेषनिबन्धनत्वा-भावात्। **प्राग्वदिति**। केवलयुष्मदस्मद्वदित्यर्थः।

---

निरवकाश एवेति बोध्यम्। यत्तु वदन्ति—'साम आकम्' इत्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणम्, बाधात्, तथापि उपलक्षणं भवति। तेन यस्यामः सुडग्रे भावी तस्यै-वाम आकमा भवितव्यम्, न चैतद्गौणत्वे संभवतीत्याकन्न प्रवर्तते, तथा च अतित्व-याम् अतिमयामित्येव रूपम्, न त्वतित्वाकमतिमाकमिति। तदसत्, आकमापहृतस्यामः

अम्औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्, अत्यस्माम्, अत्यस्माम्। अतियुष्मान्, अत्यस्मान्। अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम् ३, अत्यस्माभ्याम् ३। अतियुष्माभिः, अत्यस्माभिः। भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम्। ङसिभ्यसोः—अतियुष्मत् २, अत्यस्मत् २। ओसि—अतियुष्मयोः, अतियुष्मयोः। अत्यस्मयोः, अत्यस्मयोः। अतियुष्माकम्, अत्यस्माकम्। अतियुष्मयि, अत्यस्मयि। अतियुष्मासु, अत्यस्मासु। **४०१ पदस्य। ( ८-१-१६ ) ४०२ पदात्। ( ८-१-१७ )। ४०३ अनुदात्तं**

---

**पदस्य। पदात्। अनुदात्तं सर्वमपादादौ। इत्यधिकृत्येति।**

---

सुडन्वयाभावात्। आकमः सुड् भावीति चेत्तर्हि तमेवोपलक्षयेत्। आदेशद्वारकेण परम्परासंबन्धेन स्थानिनमुपलक्षयति चेदेवं तर्हि युष्माकमित्यादौ सुट् श्रूयेत। साम इति निर्देशसामर्थ्यान्न श्रूयेतेति चेन्न। निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामर्थ्याभावादित्यन्यत्र विस्तरः। गुणभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा संप्रति द्व्यर्थवाचित्वे उदाहरति—**युवामावां वा अतिक्रान्त इत्यादिना।** बह्वर्थयोस्तूदाहरति—**युष्मानस्मान्वेति। पदस्य।** 'अपदान्तस्य मूर्धन्यः' इति विरोधनिर्देशात्प्राक् पदस्येत्ययमधिकारः। तेन राजा राजभ्यामित्यादौ 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः सिध्यति, न तु राजानौ राजान इत्यत्र। तथा गोमान् यवमानित्यादौ संयोगान्तलोपः, न तु गोमन्तौ यवमन्तावित्यादौ। तथा 'मो नो धातोः' इति नत्वं प्रशान्भ्यामित्यादौ भवति, न तु प्रशामौ प्रशाम इत्यत्र। तथा हरिं वन्दे इत्यादौ 'मोऽनुस्वारः' प्रवर्तते, न तु गम्यत इत्यादौ। न च 'उञि च पदे' इत्यतः पदे इत्यधिकारात्पदे परतो मस्यानुस्वारः स्यात्, न तु गम्यत इत्यत्रेति किमिह पदस्येत्यधिकारेणेति वाच्यम्, पुंस्विति रूपासिद्धिप्रसङ्गात्। तस्मात् 'मोऽनुस्वारः' इत्यत्र पदस्येत्यनुवर्तनीयमेव, पदे इत्यस्योत्तरसूत्रेऽप्युपयोगो नास्तीति 'उञि च पदे' इत्यत्रावोचाम। इह पदस्येति संबन्धसामान्ये षष्ठी, सा तूत्तरेषु यथायोगं संबन्धविशेषे अवतिष्ठते, क्वचित् स्थानेषष्ठी, क्वचिद् अवयवषष्ठीति। तत्र 'संयोगान्तस्य लोपः' 'मो नो धातोः' 'मोऽनुस्वारः' इत्यादौ पदस्येति स्थानषष्ठी, अवयवषष्ठ्यां तूक्तातिप्रसङ्गात्। 'मादुपधायाः–' इत्यादौ त्ववयवषष्ठी, अन्यथा वृक्षवानित्यत्रैव मतुपो मस्य वत्वं स्यात्, न तु वृक्षवन्तौ वृक्षवन्त इत्यत्र, एतच्चानुपदमेवोपपादयिष्यते। यद्यपि 'षष्ठी स्थानेयोगा' इति परिभाषया 'पदस्य' इत्यत्र स्थानषष्ठ्येव लभ्यते, न त्ववयवषष्ठी, तथापि नलोपसूत्रे अन्तस्येति ग्रहणाज्ज्ञापकादवयवषष्ठ्यपि लभ्यते। यदि तु पदस्येति स्थानषष्ठ्येव स्यात्तर्हि नान्तस्य पदस्य लोपो भवन्नलोऽन्त्यस्य स्यादिति अन्तग्रहणमनर्थकं स्यात्।

**सर्वमपादादौ**। ( ८-१-१८ ) इत्यधिकृत्य ४०४ **युष्मदस्मदोः षष्ठी-चतुर्थीद्वितीयास्थयोर्वांनावौ**। ( ८-१-२० ) पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः । तौ चानुदात्तौ । ४०५ **बहुवचनस्य वस्नसौ**। ( ८-१-२१ ) उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयो-

---

विधयो वक्ष्यन्त इति शेषः । अष्टमस्य प्रथमे पाद इमानि सूत्राणि पठितानि । तत्र 'पदस्य' इत्येतद् 'अपदान्तस्य मूर्धन्यः' इत्यतः प्रागधिक्रियते। 'पदात्' इत्येतत्तु 'कुत्सने च सुप्यगोत्रादौ' इत्यतः प्रागधिक्रियते । 'अनुदात्तं सर्वमपादादौ' इति पदत्रयं तु आ पादसमाप्तेः अधिक्रियत इति भाष्यादिषु स्पष्टम्। **युष्मदस्मदोः षष्ठी। षष्ठ्यादिविशिष्टयोरिति**। षष्ठीचतुर्थीद्वितीयाभिः सह तिष्ठत इति षष्ठीचतुर्थीद्वितीयास्थौ, तयोरिति विग्रहः। षष्ठ्यादिविशिष्टयोरिति यावत्। षष्ठीचतुर्थीद्वितीयासु परतः तिष्ठत इति विग्रहस्तु न भवति। 'पदस्य' इत्यधिकारविरोधात्। पदस्येत्यनुवृत्तं हि द्विवचनेन विपरिणतं षष्ठीचतुर्थीद्वितीयास्थयोरित्यस्य विशेषणम्। न हि षष्ठ्यादिविभक्तिषु परतः पदत्वमस्ति, भ्यामादौ तत्सत्त्वेऽपि तदितरत्र द्वितीयादौ तदभावात्। स्थग्रहणस्य तु प्रयोजनं मूल एव वक्ष्यते। **बहुवचनस्य वस्नसौ। उक्तविधयोरिति**। षष्ठ्यादि-

---

अवयवषष्ठ्यङ्गीकारे तु अन्तस्येति ग्रहणं सार्थकम्। तद्यथा—नलोपसूत्रे प्रातिपदिकान्तस्येत्यसमासनिर्देशः। प्रातिपदिसंज्ञकस्य पदस्य अन्तावयवो यो नकारस्तस्य लोप इति सूत्रार्थ इति । नन्वेवमन्तस्येतिग्रहणमवयवषष्ठीत्वज्ञापनार्थमिति स्वीकारात्पदस्येत्यत्र कथं नाम स्थानषष्ठीलाभः, संबन्धविशेषस्य निर्धारितत्वेन स्थानषष्ठीपरिभाषाया अनुपस्थितेः। अत्राहुः—प्रयोगमूलत्वाद्व्याकरणस्मृतेर्लक्ष्यानुरोधेन स्थानषष्ठ्यपि स्वीक्रियते, ज्ञापकसिद्धा अवयवषष्ठी न सर्वत्र स्वीक्रियते, इति नलोपसूत्रे मनोरमायामन्तग्रहणं त्यक्तुं शक्यमित्युक्तम्। भाष्यादौ तु 'पदस्य' इत्यधिकृतस्यावयवषष्ठ्यन्तत्वमप्यभ्युपगम्यते, न तु स्थानषष्ठ्यन्तत्वमेवेति ज्ञापनार्थमन्तग्रहणम् , तेन वृत्रवन्तौ वृत्रवन्त इत्यत्र 'मादुपधायाः—' इति वत्वं सिध्यति, पदावयवस्य मतुपः सत्त्वात्। अन्यथा पदस्येत्यस्य विशेष्यत्वे मतुपा तदन्तविधौ मत्वन्तं यत्पदं तदवयवस्य मतुपो मादुपधायाः परस्य मस्य वत्वं भवतीत्यर्थः स्यात्। तथा च वृत्रवानित्यत्रैव स्यात् , न तु वृत्रवन्तौ वृत्रवन्त इत्यत्रेति स्थितम्। **पदात्**। 'कुत्सने च सुप्यगोत्रादौ' इत्यतः प्रागयमधिकारः। यदि तु 'कुत्सने च सुपि—' इत्यत्रापि पदादित्यनुवर्तते, तदा देवदत्तः पचति पूतीत्यत्रैव निघातः स्यान्न तु पचति पूतीत्यत्र। **अनुदात्तं सर्वमपादादौ**। इदं पदत्रयमापादपरिसमाप्तेरधिक्रियते—**षष्ठीचतुर्थीति**। 'अल्पाच्तरम्' इति षष्ठीत्यस्य पूर्वनिपातः। **षष्ठ्यादिविशिष्टयोरिति**। ननु युष्मदस्मदोरित्युक्तत्वात्तयोरेव

वंस्नसौ स्तः । वांनावोरपवादः । **४०६ तेमयावेकवचनस्य । ( ८-१-२२ )** उक्तविधयोरनयोः षष्ठीचतुर्थ्यैकवचनान्तयोस्ते मे एतौ स्तः । **४०७ त्वामौ द्वितीयायाः । ( ८-१-२३ )** द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः ।

**श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः ।**
**स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥१॥**

विशिष्टयोर्युष्मदस्मदोरित्यर्थः । **तेमयावेकवचनस्य । षष्ठीचतुर्थ्यैकवचनान्तयोरिति ।** अत्र द्वितीयाग्रहणं नानुवर्तते, तत्र त्वामादेशयोर्वक्ष्यमाणत्वात् । 'तेमयौ–' इति सूत्रे तेश्च मेश्च तेमयाविति विग्रह इति भावः । अयमपि वांनावोरपवादः । **त्वामौ द्वितीयायाः ।** त्वाश्च माश्चेति विग्रहः । एकवचनस्येत्यनुवर्तते । तदाह—**द्वितीयेत्यादिना ।**

अथ विभक्तिक्रमक्लृप्तद्वितीयाचतुर्थीषष्ठीक्रमेण एकद्विबहुवचनक्रमेण चोदाहरति—**श्रीश इत्यादि श्लोकद्वयेन ।** तत्र 'श्रीशस्त्वावतु मापीह' इति प्रथमः पादः । श्रिया ईशः–पतिः विष्णुः त्वा मा अपि पातु इत्यन्वयः । अत्र त्वाम्, माम् इति द्वितीयैकवचनान्तयोः त्वा मा इत्यादेशौ । **दत्तात्ते मेऽपि शर्म स इति ।** स श्रीशः ते मे अपि शर्म–सुखं दत्तादित्यन्वयः । 'डु दाञ् दाने' आशिषि लोटि दत्तादिति रूपम् । दद्यादिति क्वचित् पाठः । अत्र तुभ्यम् मह्यम् इति चतुर्थ्यैकवचनान्तयोः ते मे इत्यादेशौ । **स्वामी ते मेऽपि स हरिरिति ।** अत्र तव मम इति षष्ठ्येकवचनान्तयोः ते मे आदेशौ । **पातु वामपि नौ विभुरिति ।** विभुः–सर्वव्यापकः वां नौ अपि पातु इत्यन्वयः । अत्र युवाम् आवाम् इति द्वितीयाद्विवचनयोः वां नौ इत्या-

---

वांनावादय आदेशाः स्युः । न च 'पदस्य' इत्यधिकाराद्विभक्त्यन्तस्यैव पदत्वात्षष्ठ्यादिविशिष्टयोरेव स्युरिति वाच्यम्, उक्तरीत्या वस्नसादौ दोषाभावेऽपि भ्यामादौ परतो युष्मदस्मदोः पदत्वात्केवलयोर्वानावादेशप्रसङ्गस्य दुर्वारत्वात्, तथा च 'सुखं वां नौ ददात्वीशः' इति प्रयोगो न संगच्छेत । नापि 'द्वितीयास्थयोः' इति स्थग्रहणसामर्थ्याद्विभक्तिविशिष्टयोरेव आदेशा भवेयुरिति वाच्यम्, स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव इति वक्ष्यमाणतया तत्सामर्थ्यस्योपक्षयात् । मैवम्, 'अनुदात्तं सर्वम्–' इति सर्वग्रहणाधिकारात्सर्वस्यैव विभक्तिविशिष्टस्य आदेशा भवन्तीति आकरे स्पष्टत्वात् । यदि तु 'सर्वस्य द्वे' इत्यतः सर्वस्येति पदमनुवर्तते, तदा सर्वग्रहणमिह त्यक्तुं शक्यमित्याहुः । उक्तानादेशान्वचनक्रमेणोदाहरति—**श्रीश इत्यादिना । स्वामी ते मेऽपीति ।** 'स्वामीश्वराधिपति–' इति षष्ठीसप्तम्योर्विधानादिह षष्ठी । द्विवचनान्तयोरुदाहरणमाह—

सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥२॥

पदात्परयोः किम्—वाक्यादौ मा भूत्, त्वां पातु, मां पातु। अपादादौ किम्—'वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु।' स्थग्रहणाच्छ्रूयमाणविभक्ति-

---

देशौ। **सुखं वां नौ ददात्वीश इति**। नौ इत्यनन्तरमपिशब्दोऽध्याहार्यः। अत्र युवाभ्याम् आवाभ्याम् इति चतुर्थीद्विवचनान्तयोः वांनावौ। **पतिर्वामपि नौ हरिरिति**। अत्र युवयोः आवयोरिति षष्ठीद्विवचनान्तयोः वांनावौ। **सोऽव्याद्वो न इति**। स हरिः वः नः अपि अव्यात्—रक्षताद् इत्यर्थः। अत्र युष्मान् अस्मान् इति द्वितीया-बहुवचनान्तयोः वस्नसौ। **शिवं वो नो दद्यादिति**। शिवमिति शुभमुच्यते। न इत्यनन्तरम् अपीत्यध्याहार्यम्। अत्र युष्मभ्यम्, अस्मभ्यम् इति चतुर्थीबहुवचनान्तयोः वस्नसौ। **सेव्योऽत्र वः स न इति**। स हरिः वः नः अपि सेव्यः—भजनीय इत्यर्थः। 'कृत्यानां कर्तरि वा' इति षष्ठी। अत्र युष्माकम्, अस्माकम् इति षष्ठी-बहुवचनान्तयोः वस्नसौ। **त्वां पातु, मां पात्विति**। अत्र युष्मदस्मदोः पदात् परत्वाभावात् 'त्वामौ द्वितीयायाः' इति न भवतीत्यर्थः। यद्यप्यत्र अस्मच्छब्दस्य पात्विति पदात् परत्वमस्ति, तथापि भिन्नकालं वाक्यद्वयमिह विवक्षितमित्यदोषः। **संवेद्योऽस्मानिति**। अत्रास्मच्छब्दस्य पादादौ स्थितत्वान्नादेशः। यद्यप्यनुष्टुप्छन्दस्कोऽयं श्लोकः। तत्र एकैकः पादः अष्टाक्षर इति स्थितिः। तत्र सन्ध्यभावे 'अस्मान् कृष्णः सर्वदाऽवतु' इत्यस्य नवाक्षरत्वान्न पादत्वम्। कृते तु सन्धौ ओकारस्य परादित्वे सति अष्टाक्षरत्वव्याघातः। संवेद्य् इत्यस्य पदत्वाभावाद् अस्मदः पदात् परत्वाभावश्च। पूर्वान्तत्वे तु स्मानित्यस्य पादादिस्थितस्य नास्मच्छब्दरूपता। तथापि संवेद्यो इत्येकादेश-विशिष्टस्य पूर्वान्तत्वात् पदत्वम्। स्मानित्यस्य तु एकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्द-रूपत्वम्। वस्तुतस्तु ओकारस्य पूर्वान्तत्वात् संवेद्यो इत्यस्य पदत्वम्, स्मानित्यादे-रष्टाक्षरत्वं च। परादित्वाचास्मच्छब्दरूपता। 'उभयत आश्रयणे नान्तादिवत्' इति तु नास्तीति इणधातौ निरूपयिष्यामः। केचित्तु 'अपादादौ किम्, युष्मान् रक्षतु गोविन्दोऽस्मान् कृष्णस्सर्वदाऽवतु' इति प्रत्युदाहरन्ति। तन्न, युष्मानित्यस्य पदात् परत्वाभावादेवाप्राप्तेः। अस्मानित्यस्य तु पदात् परत्वेऽपि समानवाक्यस्थपदात् परत्वाभावात्।

ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयान्तयोः' इत्येव सूत्र्यताम्, किं स्थग्रहणेन। स्थग्रहणेऽपि कथञ्चित्तस्यैवार्थस्य लाभादित्यत आह—**स्थग्रहणादिति**।

---

**पातु वामित्यादिना**। बहुवचनान्तयोस्तु—**सोऽव्याद्वो न इत्यादि**। **सेव्योऽत्र वः स न इति**। 'अर्हे कृत्यतृचश्च' इति ण्यत्, 'कृत्यानां कर्तरि वा' इति

कयोरेव। नेह–इति युष्मत्पुत्रो ब्रवीति, इत्यस्मत्पुत्रो ब्रवीति। 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (वा ४७१४)। 'एकतिङ् वाक्यम्' (वा ११११)

स्थाधातुः अहानौ वर्तते। 'समये तिष्ठ सुग्रीव' इति यथा। समये–मर्यादायां विषये अनुवृत्तिं मा हासीरिति गम्यते। ततश्च षष्ठीचतुर्थीद्वितीयाः तिष्ठतः–न परित्यजतः इति व्युत्पत्तिर्विवक्षिता। षष्ठ्यादिविभक्तीरपरित्यजतोरित्यर्थः। अलुप्तषष्ठ्यादिविभक्तिविशिष्टयोरिति फलतीति भावः। **इति युष्मत्पुत्र इति**। पदात् परत्वं सम्पादयितुं इति शब्दः। युवयोर्युष्माकं वा पुत्रः, आवयोरस्माकं वा पुत्र इति विग्रहः। अत्र विभक्तेर्लुका लुप्तत्वात् श्रूयमाणविभक्तिकत्वाभावान्नादेशप्रवृत्तिः। तव पुत्रो मम पुत्र इति विग्रहस्तु न, 'प्रत्ययोत्तरपदयोश्च' इति तत्र त्वमादेशयोर्वक्ष्यमाणत्वात्। **समानवाक्ये इति**। निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थः। निघातशब्दः अनुदात्तवाची। **एकतिङिति**। तिङित्यनेन तिङन्तं विवक्षितम्। एकः तिङ् यस्येति विग्रहः। इदं च वाक्य-

षष्ठी। **वेदैरशेषैरिति**। 'युष्मान् रक्षतु गोविन्दः' इति प्राचः पाठस्तूपेक्षितः, युष्मानित्यस्य तु पदात्परत्वाभावादेवाप्राप्तेः, अस्मानित्यस्य तु पदात्परत्वेऽपि समानवाक्यस्थपदात्परत्वाभावात्। ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानाम्' इति सूत्र्यताम्, विशेषणेन तदन्तविधौ षष्ठ्याद्यन्तयोर्युष्मदस्मदोः पर्यवस्यति। न च स्थग्रहणाभावे युष्मदस्मदोः संबन्धिनीनां षष्ठीचतुर्थीद्वितीयानामित्यर्थः स्यादिति वाच्यम्, 'सर्वस्य' 'पदस्य' इत्यनुवर्तनादतो व्याचष्टे– **स्थग्रहणादिति**। तिष्ठतिरिहाहानौ वर्तते, यथा 'समये तिष्ठ सुग्रीव' इति समयं मा हासीरिति गम्यते। तेन षष्ठ्यादीनविजहतोरेव युष्मदस्मदोरादेशा इत्यर्थः। **इति युष्मत्पुत्र इति**। युवयोः पुत्रो युष्माकं पुत्र इति वा विग्रहः, न तु तव पुत्र इति। तथा हि सति त्वत्पुत्र इत्येव स्यात्। एवमस्मत्पुत्र इत्यत्राप्यूह्यम्। पदात्परत्वं संपादयितुमितिशब्दः। ननु राज्ञोः पुरुषो राज्ञां पुरुष इति विग्रहे राजपुरुष इति नेष्यत इति सिद्धान्तविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्र इत्यत्र युवयोर्युष्माकमित्यादिविग्रहो न संभवतीति चेत्। अत्राहुः—यत्र वृत्तौ संख्याविशेषबोधकं प्रमाणं नास्ति तत्रैवैकत्वसंख्याऽऽश्रीयते यथा राजपुरुष इति। न हि राजपुरुष इत्यत्र विभक्तौ निवृत्तायां राजपदार्थे द्वित्वादिप्रत्यायकं किंचिदस्ति। यत्र पुनः संख्याभेदगमकमर्थप्रकरणाद्यस्ति, भवति तत्र द्विवचनबहुवचनयोरपि वृत्तिः। प्रकृते त्वेकवचनान्तेन विग्रहे 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशप्रसङ्गादर्थाद् द्विवचनबहुवचनान्तेनेति विग्रहे वृत्तिर्भविष्यतीति। अर्थः सामर्थ्यम्। अर्थाद्यथा, मुद्रैः क्रीतो मौद्रिकः। न ह्येकेन मुद्रेन द्वाभ्यां वा मुद्राभ्यां क्रयणं संभवति। प्रकरणाद्यथा—'भवद्भिरामवसरप्रदानाय वचांसि नः'। भवतोर्गिरामिति तत्र ह्यर्थः। **समानवाक्य इति**। 'देवदत्त अस्त्ययं

तेनेह न-ओदनं पच, तव भविष्यति । इह तु स्यादेव-शालीनां ते ओदनं दास्यामि इति । 'एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः' (वा ४७१७)। अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव । ४०८ **न चवाहाहैवयुक्ते** । (८-१-२४) चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां मां च रक्षतु, कथं त्वां मां वा न रक्षेदित्यादि । युक्त-

---

लक्षणमेतच्छास्त्रोपयोग्येव। तेन 'पश्य मृगो धावति' इत्यादौ नाव्याप्तिरिति समर्थसूत्रे भाष्ये स्पष्टम् । **ओदनमिति** । ओदनं पचेत्येकं वाक्यम् । तव भविष्यतीत्यपरं वाक्यम् । ततश्च तवेति युष्मच्छब्दस्य भिन्नवाक्यस्थात् पदात् परत्वान्नादेश इति भावः । **शालीनामिति** । व्रीहीणामित्यर्थः । प्रकृतिविकारभावे षष्ठी । **एते वांनावादय इति** । इदं च 'सपूर्वायाः-' इति सूत्रे भाष्ये स्थितम् । **धातेति** । महादेवं प्रति वचनमेतत् । अन्वादेशे तु नित्यमित्यस्योदाहरणमाह—**तस्मै ते नम इत्येवेति** । अत्र 'योऽग्निर्हव्यवाट्, य इन्द्रो वज्रबाहुः' इत्यादि पूर्ववाक्यं द्रष्टव्यम्। एवं च किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं बोधयितुं पुनरुपादानादन्वादेशोऽयमिति तत्र नित्य एवादेश इति भावः। **न चवाहा** । च इत्यव्ययं समुच्चये, वा इति विकल्पे, हा[1] इत्यद्भुते, अह इति खेदे, एव इत्यवधारणे, एतेषां द्वन्द्वः। युक्त इति भावे क्तः । तदाह—**चादिपञ्चकयोगे इति** । पञ्चानामन्यतमेन योगे इत्यर्थः। **एते इति**। वांनावादय इत्यर्थः। 'युष्मदस्मदोः षष्ठी' इत्यादिसूत्रेभ्यस्तत्तदनुवृत्तेरिति भावः। **इत्यादीति**। कृष्णो मम हा[2]

---

दण्डो-देवदत्त हरानेन' इत्यत्र दण्ड इत्येतत्पूर्ववाक्यस्थमिति समानवाक्यस्थत्वाभावादामन्त्रितनिघातो न भवति । **एकतिङिति** । एकं तिङन्तं यत्रेति बहुव्रीहिः । ननु ओदनस्त्वया पक्तव्यस्तव भविष्यतीत्यत्रातिप्रसङ्गः' पक्तव्योऽस्तीत्यध्याहारेण भिन्नवाक्यतासमर्थनेऽपि पश्य मृगो धावतीत्यादावेकवाक्यत्वव्यवहारो न स्यात् । सत्यम् । प्रकृतोपयोगित्वेनेदमुक्तम्, पश्य मृग इत्यादौ तु 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति शास्त्रान्तरप्रसिद्धत्वमेवेत्येके । अन्ये तु—'आख्यातं सविशेषणं वाक्यम्' इति वार्तिककारवचनपर्यालोचनया 'एकतिङ्' इत्यत्र तिङन्तं विशेष्यसमर्पकं विवक्षितम्, ततश्च पश्य मृगो धावतीत्यत्र तिङन्तद्वये सत्यपि पश्येत्यस्यैव विशेष्यसमर्पकत्वान्नोक्तदोष इत्याहुः । एकशब्दः समानवचनो न तु संख्यावाची, बहुव्रीहिश्चायम् । तेन 'ब्रूहिब्रूहि देवदत्त' इत्यत्र वाक्यत्वादामन्त्रितनिघातः सिध्यतीति समर्थसूत्रे कैयटः।

---

१ 'ह' इत्युचितम् । 'हा इत्यद्भुते' इति त्वपपाठः प्रतिभाति । चादिपञ्चके 'हा' निपातस्य क्वाप्यदर्शनात्, 'हा विषादशुगर्तिषु' इति कोशात् तस्याद्भुतेऽर्थेऽप्रसिद्धेः, काशिकादिषु 'ह' निपातस्यवोदाहृतत्वाच्च । २ 'ह' इत्युचितम् ।

ग्रहणात्साक्षाद्योगेऽयं निषेधः। परम्परासम्बन्धे त्वादेशः स्यादेव। हरो हरिश्च मे स्वामी। ४०६ पश्यार्थैश्चानालोचने (८-१-२५) अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः। चेतसा त्वां समीक्षते। परम्परासम्बन्धेऽप्ययं निषेधः, भक्तस्तव रूपं ध्यायति। आलोचने तु भक्तस्त्वा पश्यति चक्षुषा। ४१०

---

प्रसीदति। अद्भुतमिदमित्यर्थः। कृष्णो ममाह न प्रसीदति। अहेति खेदे ममैव सेव्यः। ननु 'न चवाहाहैवैः' इत्येवास्तु, मास्तु युक्तग्रहणम्। 'वृद्धो यूना-' इत्यादिवत् तृतीययैव तल्लाभादित्यत आह—**युक्तग्रहणादिति**। यत्र चाद्यर्थैः समुच्चयादिभिर्युष्मदस्मदर्थयोः साक्षादन्वयः। तत्रैवायं निषेध इत्यर्थः। **हरो हरिश्चेति**। अत्र चशब्दस्य हरिहरयोः। साक्षादन्वयः समुच्चितयोर्हरिहरयोः स्वामीत्यत्रान्वयः। स्वामीत्यस्य मे इत्यनेनान्वयः। ततश्च चशब्दस्य अस्मच्छब्देन साक्षादन्वयाभावाद् मेआदेशस्य निषेधो नेति भावः। **पश्यार्थैश्चानालोचने**। दर्शनं पश्यः। 'दृशिर् प्रेक्षणे' इत्यस्मादत एव निपातनाद् भावे शप्रत्ययः। 'पाघ्रा-' इति पश्यादेशः। पश्यः दर्शनम् अर्थो येषां ते पश्यार्थाः, तैरिति विग्रहः। आलोचनं चाक्षुषं ज्ञानम्, तद्भिन्नमनालोचनम्, तत्र विद्यमानैः दर्शनार्थकैरित्यर्थः। पश्येति दृशिना ज्ञानसामान्यं विवक्षितम्, अनालोचने इति चाक्षुषपर्युदासात्। तदाह—**अचाक्षुषेत्यादिना**। **चेतसेति**। देवेत्यध्याहार्यम्। हे देव मनसा त्वां चिन्तयतीत्यर्थः। **परम्परेति**। 'न चवाहा-' इत्यत्र युक्तग्रहणसामर्थ्यात् साक्षात्संबन्धविवक्षा युक्ता। इह तु तद्विवक्षायां मानाभावात् परम्परान्वयेऽपि स्यादेव निषेध इत्यर्थः। **भक्तस्तवेति**। देवेत्यध्याहार्यम्। इह तवेत्यस्य रूपेणान्वयः, न तु साक्षात् ध्यायतिनेति भावः। अनालोचने इत्यस्य प्रयोजनमाह—

---

'युष्मदस्मदोर्विभाषा अनन्वादेशे' इति वार्तिकमर्थतः पठति—**एते वांनावादय इति**। यद्यपि 'सपूर्वायाः प्रथमाया विभाषा' इत्यत्रैतत् पठ्यते तथाप्यविशेषेण विकल्पोऽयं विधीयत इत्याशयेन सपूर्वत्वाभावेऽपि विकल्पमुदाहरति—**धाता ते भक्त इति**। अन्वादेशे तु नित्यमुदाहरति—**तस्मै ते नम इत्येवेति**। 'तुल्यार्थैः-' इत्यादिवत् 'न चवाहाहैवैः' इति तृतीयानिर्देशेनापि युक्तार्थलाभे युक्तग्रहणमनर्थकमित्यत आह—**युक्तग्रहणादिति**। यत्र युष्मदस्मदर्थगतान् समुच्चयादीन् चादयो द्योतयन्ति तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षाद्योगः, तत्रैवायं निषेध इत्यर्थः। **हरो हरिश्चेति**। अत्र चशब्दो हरहरिगतसमुच्चयमाह, हरिहराभ्यां त्वस्मदः संबन्धः, न तु समुच्चयेनेति न साक्षाद्योगः किं तु परम्परायोग इति न निषेध इति भावः। **पश्यार्थैश्चाना**। अत एव निपातनाद्भावे 'पाघ्राध्माधेट्-' इति शः। दर्शनं पश्यः, तच्चेह ज्ञानमात्रम् 'अदर्शनं लोपः' इत्यत्र यथा, न तु चाक्षुषज्ञानमेव, 'अनालोचने' इति निषेधात्। तदेतदाह—**अचाक्षुषज्ञानार्थैरिति**। **परम्परासंबन्धेऽपीति**।

**सपूर्वायाः प्रथमाया विभाषा।** (८-१-२६) विद्यमानपूर्वात् प्रथमान्तात्परयो रनयोरन्वादेशेऽप्येते आदेशा वा स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्। त्वा मा इति वा। ४११ **सामन्त्रितम्।** (२-३-४८) सम्बोधने या

---

**आलोचने त्विति। सपूर्वायाः।** वां-नावाद्यादेशा अनन्वादेशे पाक्षिकाः, अन्वादेशे तु नित्या इत्युक्तम्। अन्वादेशेऽपि क्वचिद्विकल्पार्थमिदम्। सहशब्दोऽत्र सलोमक इत्यादिव विद्यमानवाची। विद्यमानं पूर्वं यस्या इति विग्रहः, 'तेन सहेति तुल्ययोगे' इति वा[1] विग्रहः, तुल्ययोगवचनं प्रायिकम् इति वक्ष्यमाणत्वात्। प्रथमेत्यनेन तदन्तं गृह्यते। तदाह—**विद्यमानेत्यादिना।** परयोरित्यनन्तरं युष्मदस्मदोरिति शेषः। **भक्त-स्त्वमिति।** देवदत्तेत्यध्याहार्यम्। हे देवदत्त त्वमपि भक्तः, अहमपि भक्त इत्यन्वयः **तेनेति।** भक्तत्वेनेत्यर्थः। **त्रायत इति।** पालयतीत्यर्थः। अत्र पूर्वं वाक्योपात्तयुष्म-दस्मदर्थयोरिह पुनरुपादानादन्वादेशोऽयम्। अत्र 'तेन' इत्येतत् पूर्वं विद्यमानं पदम्, ततः परं 'हरिः' इति प्रथमान्तम्, ततः परस्य युष्मच्छब्दस्यान्वादेशेऽपि त्वादेश विकल्पः। तथा 'त्रायते' इत्येतत् पूर्वं विद्यमानं पदम्, ततः परं 'सः' इति प्रथमान्तम्, ततः परस्यास्मच्छब्दस्यान्वादेशेऽपि मादेशविकल्पः। 'त्रायते' इत्येतत् मध्यमणिन्या-येन उभयत्र संबध्यते। तेन निमित्तनिमित्तिनोः समानवाक्यस्थत्वम्, स इत्यस्य विद्य-मानपूर्वत्वं च बोध्यम्। **सामन्त्रितम्।** प्रातिपदिकार्थसूत्रोपात्ता प्रथमा 'सा' इत्यनेन परामृश्यते। 'संबोधने च' इत्यतः संबोधने इत्यनुवर्तते। तदाह—**संबोधने इत्या-दिना।** तदन्तमिति प्रत्ययग्रहणपरिभाषालभ्यम्। महासंज्ञाकरणात् संज्ञाविधावपि

---

पूर्वसूत्रस्थयुक्तग्रहणेन ज्ञापितमेतद्भवत्यन्यत्र परम्परासंबन्धेऽपि निषेध इति। **स-पूर्वायाः।** सहशब्दोऽत्र सलोमक इत्यत्रेव विद्यमानवचनः। 'तेन सहेति-' इत्यत्र तुल्ययोगवचनं प्रायिकमिति वक्ष्यमाणत्वाद्विद्यमानवचनस्यापि सहस्य समासः। 'वोप-सर्जनस्य' इति सभावः। प्रथमाया इति च प्रत्ययग्रहणात्तदन्तविधिरित्यालोच्याह— **विद्यमानपूर्वादित्यादि।** 'एते वांनावादय आदेशाः' इत्यविशेषोक्त्यैव विभाषया सिद्धेः किमर्थमिदं वचनमित्याशङ्कां परिहरन्नाह—**अन्वादेशेऽपीति। भक्तस्त्व-मित्यादि।** त्वं भक्तोऽहमपि तेन हरिस्त्वां मां च त्रायते इति संबन्धः। एवं च प्रक्रान्तत्वान्न यच्छब्दापेक्षा। येन कारणेन हरेस्त्वं भक्तस्तेनैव कारणेनाहमपीति व्याच-क्षाणानां तु यच्छब्दाध्याहारक्लेश इति बोध्यम्। अत्र तेनेति पूर्वविद्यमानं पदं ततो हरिरिति प्रथमान्तं ततः परस्य युष्मच्छब्दस्यादेशः। तथा त्रायते इत्यस्मात्परं स इति प्रथमान्तं ततः परस्यास्मच्छब्दस्यादेशः। **सामन्त्रितम्।** 'संबोधने' च इत्यतः

---

[1] 'इति पूर्वेण सह विद्यमाना इति वा विग्रहः' एवं पाठ उचितः स्यात्।

प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् । ४१२ आमन्त्रितं पूर्वमविद्यमानवत् । (८-१-७२) स्पष्टम् । अग्ने तव । देवास्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न । 'सर्वदा रक्ष देव नः' इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः । एवम् 'इमं मे गङ्गे यमुने' इति मन्त्रे यमुन इत्यादिभ्यः प्राचीनानामामन्त्रितानां-

तदन्तग्रहणम् । अत एव हे है भो इत्यादीनामपि संज्ञा सिद्धा **आमन्त्रितं मविद्यमानवत् । स्पष्टमिति** अनुवर्तनीयपदान्तराभावादिति भावः । **तवेति** । 'अग्ने तव श्रवो वयः' इत्यृचि अग्ने इत्यविद्यमानवत् । देवास्मानित्यत्र देव-शब्दः अविद्यमानवत् । 'अग्ने नय' इत्यृचि अग्ने इत्यविद्यमानवत् । 'अग्न इन्द्र वरुण' इत्यृचि अग्ने इत्यविद्यमानवदिति भावः । ततः किमित्यत आह—**इहेति** । अग्ने तवे-त्यत्र, देवास्मानित्यत्र च युष्मदस्मदोः तेनसावादेशौ न भवतः । तव अस्मानित्यनयोः पदात् परत्वाभावात् पादादौ स्थितत्वाच्च । 'अग्ने नय' इत्यत्र नयेति तिङन्तस्य 'तिङ्ङ-तिङः' इत्यनुदात्तत्वं न भवति । अतिङन्तात् पदात् परं तिङन्तं निहन्यत इति हि तदर्थः । इह च अग्ने इत्यतिङन्तस्य अविद्यामानवत्त्वादतिङन्तात् परत्वाभावाद् नानु-दात्तत्वम् । अग्न इन्द्र वरुणेत्यत्र तु 'आमन्त्रितस्य च' इति सर्वानुदात्तत्वं न भवति । पदात् परमामन्त्रितं निहन्यत इति हि तदर्थः । इह च अग्नेशब्दस्याविद्यमानवत्त्वेन पदात् परत्वाभावाद् इन्द्रशब्दस्य नानुदात्तत्वम् । एवं वरुणशब्दस्यापि नानुदात्तत्वम्, ततः प्राचीनयोः अग्ने इन्द्र इत्यनयोरविद्यमानवत्त्वात् ।

ननु 'सर्वदा रक्ष देव नः' इत्यत्र कथं नसादेशः, देवेत्यस्याविद्यमानवत्त्वादि-त्यत आह—**सर्वदेति** । 'लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि' 'प्रतापरुद्र ते ख्यातिः' इत्यादौ तु ते इति विभक्तिप्रतिरूपकमव्ययम्, तत्र आमन्त्रितस्याविद्यमानवत्त्वाद् युष्मद्शब्दस्य पादादिस्थत्वात् । **एवमिति** । 'इमं मे गङ्गे यमुने' इति मन्त्रे सर्वेषां निघात इत्यन्वयः । 'आमन्त्रितस्य च' इत्यनुदात्तत्वमित्यर्थः । सर्वशब्दं विशिनष्टि—**यमुन इत्यादिभ्यः प्राचीनानामिति** । इति आदिर्येषामिति विग्रहः । आदिना सरस्वतीशुतुद्रीत्यनयोर्ग्रहणम् । तद्गुणसंविज्ञानो बहुव्रीहिः । यमुने, सरस्वति, शुतुद्रि इत्येतेषु एकैकस्मात्प्राचीनानां गङ्गे, यमुने, सरस्वति इत्येषां सर्वेषां निघात इत्यर्थः ।

---

संबोधने इत्यनुवर्तते । सा इत्यनेन प्रथमा निर्दिश्यते । महासंज्ञाकरणसामर्थ्यात्संज्ञा-विधावपि तदन्तग्रहणम् । आमन्त्रणमामन्त्रितमुपचारात्तत्साधने वृत्तिः, विभक्त्यन्तेन चामन्त्र्यते न केवलया विभक्त्येत्याशयेनाह—**तदन्तमिति । इहेति** । 'अग्ने तव' 'देवास्मान्' इत्यत्र युष्मदस्मदोर्न भवत्यादेशः, 'अग्ने नय' इत्यत्र 'तिङ्ङतिङः' इति न तिङन्तनिघातः,

मविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः । **४१३ नामन्त्रिते समानाधिकरणे सामान्यवचनम्** । (८-१-७३) विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत्स्यात् । हरे दयालो नः पाहि । अग्ने तेजस्विन् । 'विभाषितं विशेषवचने' (सू ३६५४)। अत्र भाष्यम् 'बहुवचनमिति वक्ष्यामि' इति। बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा । यूयं प्रभवः देवाः शरण्याः, युष्मान्भजे, वो भजे इति वा।

---

शुतुद्रिशब्दस्य तु अनुदात्तत्वं नेत्यविवादम् , तस्य द्वितीयपादादिस्थत्वात् । 'आमन्त्रितस्य च' इत्यत्र 'पदस्य, पदात् , अनुदात्तं सर्वमपादादौ' इत्यनुवृत्तेः । 'इमं मे' इत्यृचो जगतीच्छन्दस्कतया सरस्वतीत्यन्तप्रथमपादस्य द्वादशाक्षरस्य समाप्तेः । ननु गङ्गे इत्यस्यानुदात्तत्वमुचितम् , तस्य मे इति पदात् परत्वात् । यमुने, सरस्वति इत्यनयोस्तु नानुदात्तत्वसंभवः, ततः प्राचीनयोः गङ्गे यमुने इत्यनयोरविद्यमानवत्त्वेन पदात् परत्वाभावादित्यत आह—**आमन्त्रितानामविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्येति** । आमन्त्रितानां मध्ये गङ्गे यमुने इत्यनयोरविद्यमानवद्भावेऽपीति योजनीयम् । एवं च इत्यादिभ्य इति सर्वेषामिति च बहुवचनमनुपपन्नमित्यपास्तम् । क्वचित् पुस्तकेषु यमुन इत्यादिप्राचीनामन्त्रिताविद्यमानवद्भावेऽपीति पाठो दृश्यते तत्र आदिना सरस्वतीत्येतदुच्यते । यमुने सरस्वतीत्याभ्यां प्राचीनयोरामन्त्रितयोरविद्यमानवद्भावेऽपीति सुगममेव । अयं च निघातः पदकाले स्पष्टं श्रूयते ।

**नामन्त्रिते** । आमन्त्रितम् अविद्यमानवदित्यनुवर्तते । सामान्यवचनमित्यनेन विशेष्यसमर्पकः शब्दो विवक्षितः, विशेष्यस्य विशेषणापेक्षया सामान्यरूपत्वात् । तेन च विशेषणमाक्षिप्यते । समानाधिकरणे इति तत्रान्वेति । समानम् अधिकरणं यस्येति विग्रहः । समानशब्द एकत्वपरः । विशेष्यबोधकशब्देन अभेदसंसर्गेण एकार्थवृत्तित्वं विवक्षितमित्याशयेनाह—**विशेष्यमित्यादिना** । **हरे दयालो इति** । अत्र दयालो इति समानाधिकरणविशेषणे परे हरिशब्दो नाविद्यमानवत् । ततश्च दयालो इत्यस्याविद्यमानवत्त्वेऽपि हरे इति पदात् परत्वान्नसादेश इति भावः । **अग्ने तेजस्विन्निति** । इह तेजस्विन्निति विशेषणे परे अग्ने इत्यस्य अविद्यमानवत्त्वाभावात् पदात् परत्वात्तेजस्विन्नित्यस्य निघात इति भावः । सु-शोभनौ पादौ यस्येति बहुव्रीहौ 'संख्यासुपूर्वस्य'

---

अग्न इन्द्र वरुणेत्यत्र तु 'आमन्त्रितस्य च' इत्यामन्त्रितनिघातो नेति विवेकः । **सर्वेषां निघात इति** । अयं च निघातः पदकाले श्रूयते न तु संहिताकाले । 'स्वरितात्संहितायामनुदात्तानाम्' इति संहितायामेकश्रुतिविधानात् । **अग्ने तेजस्विन्निति** । इह पदात्परत्वात्तेजस्विन्नित्यस्य 'आमन्त्रितस्य च' इत्याष्टमिकनिघातः सर्वानुदात्तः ।

इहान्वादेशेऽपि वैकल्पिका आदेशाः। सुपात्, सुपाद्। सुपादौ। सुपादः। सुपादम्। सुपादौ। ४१४ पादः पत्। (६-४-१३०) पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात्। सुपदः। सुपदा। सुपाद्भ्यामित्यादि॥ इति दान्ताः॥ अग्निं मन्थतीत्यग्निमत्, अग्निमद्। अग्निमथौ। अग्निमथः। अग्निमद्भ्यामित्यादि॥ इति थान्ताः॥ 'ऋत्विग्–' (सू ३७३) इत्यादिसूत्रेणाञ्चेः सुप्युप-

---

इति पादशब्दान्त्यलोपे सुपाद्शब्दः। तस्य सुटि रूपाण्याह—**सुपादित्यादिना**। शसि विशेषमाह—**पादः पत्**। 'भस्य' 'अङ्गस्य' इति चाधिकृतं पाद इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—**पाच्छब्दान्तमिति**। **पाच्छब्दस्येति**। पाच्छब्दान्तस्य विधीयमानोऽपि पदादेशः 'निर्दिश्यमानस्यादेशा भवन्ति' इति पाद्शब्दस्यैव सर्वादेशो भवति, न तु तदन्तस्येति भावः। **इत्यादीति**। सुपदे। सुपदः। सुपदः। सुपदोः। सुपदि॥ इति दान्ताः॥

**अथ थकारान्ता निरूप्यन्ते। अग्निमदिति**। 'मन्थ विलोडने' इति भ्वादौ। 'मन्थ विलोडने' इति क्र्यादौ। उभाभ्यामपि क्विपि 'अनिदिताम्–' इति नलोपे अग्निमथ् इति रूपम्। ततः सुबुत्पत्तिः। सौ जश्त्वचर्त्वे इति भावः। भ्यामादौ जश्त्वेन थस्य दः। अग्निमद्भ्यामित्यादि। सुपि 'खरि च' इति चर्त्वम्, अग्निमत्सु। 'मथे विलोडने' इत्यस्याप्येतदेव रूपम्। 'मथि हिंसासंक्लेशनयोः' इति इदितस्तु नलोपाभावाद् अग्निमन्, अग्निमन्थावित्यादि॥ इति थान्ताः॥

**अथ चकारान्ता निरूप्यन्ते। ऋत्विगित्यादिसूत्रेणेति**। प्र अञ्चतीत्यर्थे 'अञ्चु गतिपूजनयोः' इति गत्यर्थकाद्धातोः नोपधात् क्विन्नित्यर्थः। पूजार्थस्य त्वग्रे वक्ष्यते। क्विनि 'हलन्त्यम्' इति नकार इत्। इकार उच्चारणार्थः। 'लशक्वतद्धिते'

---

,पादिति। शोभनौ पादौ यस्येति बहुव्रीहिः। 'संख्यासुपूर्वस्य' इति पादस्यान्त-
गः। **पादः पत्। तदवयवस्येति**। एतच्च 'निर्दिश्यमानस्यादेशा भवन्ति' इति
। लभ्यते। इयं च परिभाषा 'षष्ठी स्थानेयोगा' इत्यनेन ज्ञापिता। तथाहि
रस्तेर्भूः' 'इको यणचि' इत्यादौ सामीप्यादिसंबन्धप्रसङ्गेऽपि लक्ष्यानुरोधेन व्याख्यानादन्तरङ्गत्वात् 'स्थानिवदादेशः–' इति ज्ञापकाच्च स्थानेयोगत्वे सिद्धेऽप्यारभ्यमाणेन 'षष्ठी स्थानेयोगा' इत्यनेन षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमानमित्यर्थो लभ्यते। तथा च 'निर्दिश्यमानस्यादेशा भवन्ति' इति सिद्धम्। 'अलोऽन्त्यस्य' 'आदेः परस्य' इति योगौ तु आरम्भसामर्थ्यान्निर्दिश्यमानपरिभाषाया बाधकौ, तेन 'पुमः खय्यम्परे' 'उदः स्थास्तम्भोः–' इत्यादौ न दोष इति दिक्॥ इति दान्ताः॥ **अग्निमदिति**। मथ्नातेर्मन्थतेश्च क्विपि एतदेव रूपम्। इदितस्तु नलोपाभावाद्

पदे क्विन्। **४१५ अनिदितां हल उपधायाः क्ङिति।** (६-४-२४) हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च। 'उगिदचाम्-' (सू ३६१) इति नुम्, 'संयोगान्तस्य लोपः' (सू २४), नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' (सू ३७७) इति कुत्वेन ङकारः, प्राङ्। अनुस्वारपरसवर्णौ, प्राञ्चौ। प्राञ्चः। प्राञ्चम्, प्राञ्चौ। **४१६ अचः।** (६-४-१३८) लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात्। **४१७ चौ।** (६-३-१३८) लुप्ताकारनकारेऽञ्चतौ परे पूर्व-

---

इति ककार इत्। 'वेरपृक्तस्य' इति वकारलोपः। प्र अन्च् इति स्थिते। **अनिदिताम्।** अङ्गस्येत्यधिकृतं बहुवचनेन विपरिणम्यते। हल इति तद्विशेषणम्। तदन्तविधिः। 'अनिदिताम्' इत्यपि तद्विशेषणम्। इत्–ह्रस्व इकारः, इत्–इत्संज्ञको येषां तानि इदिन्ति, न इदिन्ति, अनिदिन्ति, तेषामिति विग्रहः। अवयवषष्ठ्यन्तमेतद् उपधाया इत्यत्रान्वेति। उपधाया इत्यप्यवयवषष्ठ्यन्तम्। तच्च 'श्नान्न लोपः' इत्यतो नेत्यनुवृत्ते लुप्तषष्ठीके अन्वेति। क् च ङ् च क्ङौ इतौ यस्येति विग्रहः। तदाह—**हलन्तानामित्यादिना।** इति चकारात्पूर्वस्य नकारस्य लोपः। प्र अच् प्राच् इति स्थितम्। तस्मात् सुबुत्पत्तिः। सुटि विशेषमाह—**उगिदचामिति नुमिति।** सौ विशेषमाह—**संयोगान्तस्य लोप इति।** हल्ङ्यादिना सुलोपे सतीति शेषः। **कुत्वेन ङकार इति।** नासिकास्थानसाम्यादिति भावः। **अनुस्वारपरसवर्णाविति।** प्राच् औ इति स्थिते नुमि 'नश्चापदान्तस्य-' इति नकारस्यानुस्वारः। 'अनुस्वारस्य ययि-' इति तस्य परसवर्णो ञकारः। नस्य श्चुत्वं तु न भवति, अनुस्वारं प्रति तस्यासिद्धत्वादित्यर्थः। शसादावचि नुमभावात् प्र अच् अस् इति स्थिते। **अचः।** अच इत्यन्चुधातोः 'अनिदिताम्-' इति लुप्तनकारस्य षष्ठ्यन्तम्। भस्येत्यधिकृतम्। 'अल्लोपो नः' इत्यतो अल्लोप इत्यनुवर्तते। तदाह—**लुप्तेति।** इत्यकारलोपे प्र च् अस् इति स्थिते। **चौ।** अन्चुधातोरुकारान्तस्य लुप्तनकाराकारस्य चाविति सप्तम्यन्तम्। 'ढ्लोपे-' इत्यतः 'पूर्वस्य दीर्घोऽणः' इत्य-

---

अग्निमन्। अग्निमन्थौ। अग्निमन्थः॥ इति थान्ताः॥ **अनिदिताम्।** इद् ह्रस्वेकार इत्संज्ञको येषां तानि इदिन्ति, न इदिन्ति अनिदिन्ति, तेषामनिदिताम्। एतच्च अङ्गस्य विशेषणम्, हल इत्यपि, तदाह—**हलन्तानामनिदितामिति। उपधाया नस्येति।** 'श्नान्नलोपः' इति सूत्रान्नेति लुप्तषष्ठीकं पदमनुवर्तते, तच्चोपधाग्रहणेन विशेष्यत इति भावः। अनिदितामिति किम्, वन्द्यते। हलः किम्, नीयते। उपधायाः किम्, हन्यते। **अचः।** 'अल्लोपोऽनः' इत्यतोऽल्लोप इत्यनुवर्तते 'भस्य' इति च। तदाह—**भस्याकारस्य लोपः स्यादिति।** अत्र नव्याः—यद्यत्राञ्चतेर्भस्येति सामानाधिकरण्येनान्वयः स्वीक्रियते तर्हि प्रतीचः प्रतीचेत्यादि न सिध्येत्। उपसर्गसहितस्यैव

स्याणो दीर्घः स्यात् । प्राचः । प्राचा, प्राग्भ्यामित्यादि । प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः । प्रत्यञ्चम्, प्रत्यञ्चौ । 'अचः' (सू ४१६) इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते । 'अकृतव्यूहाः–' (प ४७) इति परिभाषया । प्रतीचः । प्रतीचा । 'अमु-

---

नुवर्तते । तदाह—लुप्तेति । प्राच इति । यद्यपि 'अचः' इत्यल्लोपस्य 'चौ' इति दीर्घस्य चाभावेऽपि सवर्णदीर्घेण प्राचः इति सिध्यति, तथापि प्रतीचः इत्याद्यर्थं सूत्रम् । प्राग्भ्यामिति । प्राच् भ्याम् इति स्थिते 'चोः कुः' इति कुत्वम्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वात् । इत्यादीति । प्राग्भिः । प्राचे । प्राचः । प्राचोः । प्राक्षु । प्रत्यङ् इति । प्रतिपूर्वादञ्चेः क्विन्, यण्, 'अनिदिताम्' इति नलोपः, सुबुत्पत्तिः । 'उगिदचाम्–' इति नुम्, हल्ङ्यादिना सुलोपः, चकारस्य संयोगान्तलोपः, नुमो नकारस्य 'क्विन्प्रत्ययस्य–' इति कुत्वेन ङकार इति भावः । प्रत्यञ्चाविति । प्रत्यच् औ इति स्थिते 'उगिदचाम्–' इति नुमि, तन्नकारस्य अनुस्वारे, तस्य परसवर्णे ञकार इति भावः । एवं प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । ननु प्रति अन्च् इति स्थिते अन्तरङ्गत्वाद्यणि कृते 'अनिदिताम्–' इति नलोपे प्रत्यच् इत्यस्मात् शसि असर्वनामस्थानत्वाद् 'उगिदचाम्–' इति नुमभावे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घो न भवति, पूर्वस्याणोऽभावात् । ततश्च प्रत्य्चः इति स्यादित्यत आह—अच इति लोपस्येत्यादि । 'अचः' इति लोपेन यण्निमित्तस्याकारस्य विनाशोन्मुखत्वादिह यण् न भवति । ततश्च प्रति अच् अस् इति स्थिते 'अचः' इत्यकारलोपे सति 'चौ' इति इकारस्य दीर्घे प्रतीच इति रूपं निर्बाधम् । एतदर्थमेव 'अचः' इति 'चौ' इति चारब्धम् । प्राचः

---

भत्वेन केवलस्याञ्चतेर्भत्वाभावात् । भस्यावयवस्याञ्चतेरिति वैयधिकरण्येनान्वये तु प्रत्यगात्मनेत्यादावञ्चतेरकारस्य लोपः स्यात् । अञ्चत्यन्तस्य भस्याकारलोप इति व्याख्यायां प्राचः प्राचेति प्रशब्दाकारस्यापि लोपः स्यात् । तन्त्रावृत्त्यादिनाञ्चत्यन्तस्य भस्याञ्चतेरकारस्येति व्याख्यानेऽपि प्रत्यञ्चमञ्चति प्रत्यगङ् । ततः शसादिषु प्रत्यक्चः प्रत्यक्चेत्यादावतिप्रसङ्ग एव । तस्माद् 'अल्लोपोऽनः' इत्यत्रेवात्रापि अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽञ्चतिस्तस्याकारस्य लोपः स्यादिति व्याख्येयम् । 'द्युप्रागपागुदक्प्रतीचः–' इति निर्देशश्चेह व्याख्याने लिङ्गमित्याहुः । चौ । 'चजोः–' इति निर्देशाच्चवर्गग्रहणं न भवतीत्याह—लुप्ताकारनकारेऽञ्चताविति । अत्राकारलोपेन नकारलोपस्याक्षिप्तत्वात्तत्कथनं व्यर्थमेव, किं तु लुप्ताकारेऽञ्चतावित्येव सुवचमित्याहुः । 'ढ्रलोपे–' इति सूत्रादणो दीर्घ इत्यस्य चानुवर्तनादाह—अणो दीर्घः स्यादिति । प्राचः । प्राचेति । प्रतीच इत्याद्यर्थमवश्यस्वीकार्येऽतोलोपे कृते अनेन दीर्घो विधीयत इति भावः । प्राग्भ्यामिति । 'चोः कुः' इति कुत्वम्, न तु 'क्विन्प्रत्ययस्य–'

मञ्चति इति विग्रहे 'अदस् अन्च्' इति स्थिते। **४१८ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये।** (६-३-९२) अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्ते अञ्चतौ परे। 'अदद्रि अन्च्' इति स्थिते, यण्। **४१९ अदसोऽसेर्दादुदो मः।** (८-२-८०) अदसोऽसान्तस्य दात्परस्य ऊदूतौ स्तो दस्य मश्च। उ इति

---

पश्येत्यत्र अल्लोपदीर्घयोरभावेऽपि सवर्णदीर्घेणैव रूपसिद्धेः। भाष्ये तु 'चौ' इत्यारम्भसामर्थ्यादेवात्र यण् नेति समाहितम्। न च प्राचः पश्येत्यादौ सावकाशत्वमिति वाच्यम्, सवर्णदीर्घेणैव निर्वाहात् ( 'वार्णादाङ्गं बलीयः' इति परिभाषया 'अचः' इत्यल्लोपे सति सवर्णदीर्घासिद्धेः ) इत्यन्यत्र विस्तरः।

**अदस् अञ्च् इति स्थित इति।** क्विनि उपपदसमासे सुब्लुकि च सति अदस् अञ्च् इति स्थिते, 'अनिदिताम्–' इति नलोपे कृते अदस् अच् इति स्थिते सतीत्यर्थः। **विष्वग्देवयोश्च।** अद्रि इति लुप्तप्रथमाकम्। **अनयोरिति।** विष्वग्देवशब्दयोरित्यर्थः। **सर्वनाम्न इति।** चकारेण 'आ सर्वनाम्नः–' इत्यतस्तदनुकर्षादिति भावः। **अप्रत्ययान्त इति।** सूत्रे अप्रत्यय इत्यत्र नित्यम् अश्रूयमाणत्वादविद्यमानः प्रत्ययः क्विबादिर्यस्मादिति बहुव्रीह्याश्रयणादिति भावः। प्रकृते अदसष्टेरद्र्यादेशमुदाहृत्य दर्शयति—**अदद्रि अञ्च् इति स्थित इति।** अद्र्यादेशोऽयम् 'अनिदिताम्–' इति नलोपे कृते प्रवर्तते, नलोपस्य परत्वादिति बोध्यम्। **यणिति।** रेफादिकारस्येति शेषः। अदद्र्यच् इत्यतः सुबुत्पत्तिः। **अदसो।** अदसः असेः दात् उ दः मः इति च्छेदः। अदस इत्यवयवषष्ठ्यन्तम्। असेरिति तद्विशेषणम्। न विद्यते सिः यस्य सः असिः, तस्येति विग्रहः। इकार उच्चारणार्थः। दादिति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यम्। तदाह—**अदसोऽसान्तस्येति।** असेः किम्? अदस्यति। दात् किम्? अमुया। अत्र 'अलोऽन्त्यस्य' इति यकारस्य न भवति। ननु उदूताविति कथम्, उ इत्यस्यैव श्रवणादित्यत आह—**उ इतीति।** उश्च ऊश्च तयोः समाहार इति विग्रहे द्वन्द्वे सति,

---

इत्यनेन, तस्यासिद्धत्वात्। **विष्वग्देवयोश्च।** चकारेण 'आ सर्वनाम्नः' इत्यतः सर्वनाम्न इति लभ्यत इत्याह—**अनयोः सर्वनाम्नश्चेति। अप्रत्ययान्तेऽञ्चताविति।** अविद्यमानः प्रत्ययोऽप्रत्ययः, क्विन्क्विबादिः। 'अञ्चतौ वप्रत्यये' इति पाठे तु 'वप्रत्ययान्तेऽञ्चतौ' इति व्याख्येयम्[1]। विष्वग्देवयोस्तूदाहरणं विष्वगञ्चतीति विष्वद्र्यङ्। देवानञ्चतीति देवद्र्यङ् इति बोध्यम्। **अदसोऽसेः।** असेरिति इकार उच्चारणार्थस्तदाह—**अदसोऽसान्तस्येति।** असान्तस्येति किम्, अमुमात्मन इच्छति

---

[1] बन्धनीधृतः पाठो नास्य ग्रन्थस्य, किन्तु केनचिट्टिप्पणीरूपेण धृतष्टीकायां लेखकप्रमादात्प्रविष्ट इति भाति।

ह्रस्वदीर्घयोः समाहारद्वन्द्वः। आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः। अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्चः। अमुमुयञ्चम्, अमुमुयञ्चौ, अमुमुईचः। अमुमुईचा, अमुमुयग्भ्यामित्यादि। मुत्वस्यासिद्धत्वान्न यण्। 'अन्त्यबाधेऽन्त्य-

---

सुब्लुकि, सवर्णदीर्घे, 'स नपुंसकम्' इति नपुंसकत्वे, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे, समाहारस्यैकत्वादेकवचनस्य सोः 'स्वमोर्नपुंसकात्' इति लुकि, उ इति रूपमित्यर्थः। **आन्तरतम्यादिति**। अर्धमात्रस्य व्यञ्जनस्य ईषत्सदृशो मात्रिको ह्रस्व उकारः। ह्रस्वस्य तु मात्रिकस्य मात्रिकत्वसादृश्यादुकारो ह्रस्वः, दीर्घस्य तु द्विमात्रत्वसादृश्याद् द्विमात्र ऊकार इत्यर्थः। **अमुमुयङिति**। अदद्यच् स् इति स्थिते 'उगिदचाम्–' इति नुमि, हल्ङ्यादिलोपे, चकारस्य संयोगान्तलोपे, नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वे, अदद्यङ् इति स्थिते, प्रथमदकारस्य मत्वे, तदुत्तरस्याकारस्य उत्वे, द्वितीयदकार-स्य मत्वे, तदुत्तरस्य रेफस्य उत्वे च कृते, अमुमुयङिति रूपमिति भावः। प्रक्रियाक्रमस्तु सूत्रपौर्वापर्यज्ञानवतां सुगमः। **अमुमुयञ्चाविति**। प्राञ्चावितिवद्रूपम्। उत्वमत्वे पूर्व-वत्। अमुमु इ अच् औ इति स्थिते यणीति विशेषः। **अमुमुईच इति**। अमुमु इ अच् अस् इति स्थिते 'अन्तरङ्गोऽपि यण् 'अचः' इति लोपविषये न प्रवर्तते' इत्युक्त-रीत्या अकृते यणि 'अचः' इत्यकारलोपे 'चौ' इति इकारस्य दीर्घ इति भावः। **अमु-मुयग्भ्यामिति**। 'चोः कुः' इति कुत्वमिति विशेषः। इकार परे मकारादुकारस्य यणमाशङ्क्य आह–**मुत्वस्यासिद्धत्वादिति**। अमुमुईचे। अमुमुईचः। अमुमुईचोः। अमुमुयक्षु। मतान्तरमाह–**अन्त्यबाध इति**। अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्य-स्य कार्याभावे सति अन्त्यसमीपवर्तिनः कार्यं भवतीत्यर्थः। प्रकृते च अदस इति नाव-यवषष्ठी। किन्तु स्थानषष्ठी। ततश्च 'अलोऽन्त्यस्य' इत्युपतिष्ठते। असान्तस्य अदसः अन्त्यस्य दात्परस्य उत्वं दस्य च म इति फलितम्। अदसश्चान्त्यवर्णः सकारो दात्परो न भवति। अद्र्यादेशे कृते तु इकारः अन्तः, सोऽपि दात्परो न भवति। ततश्च अलोऽ-न्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य आदेशबाधे सति अन्त्यसमीपवर्तिन एव दात्परस्य उत्वम्, दस्य च मः, न तु ततः प्राचीनयोरपि दकारतदुत्तरवर्णयोर्मुत्वमित्यर्थः। नन्वेवं

---

अदस्यति। दात् परस्य किम्, अमुया अमुयोरित्यत्रान्त्ययकारस्य माभूत्। **ह्रस्व-व्यञ्जनयोरिति**। व्यञ्जनस्य हि ह्रस्व ईषत्सदृशो दीर्घस्तु विसदृश इति भावः। प्राञ्चस्तु—ह्रस्वदीर्घयोः समाहारद्वन्द्वमकृत्वैव 'विधीयमानोऽप्यण् क्वचित् सवर्णान् गृह्णाति' इति स्वीकृत्य आन्तरतम्याद् ह्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घ इति व्याच-क्षते। **अन्त्यबाध इति**। सूत्रे अदस इति नावयवषष्ठी, किं तु स्थानेषष्ठी, एवं हि

**सदेशस्य' (प १०४) इति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते 'अदमुयङ्'। 'अः सेः सकारस्य स्थाने यस्य सः असिः, तस्य असेः' इति व्याख्यानात् 'त्यदाद्यत्वविषय एव मुत्वं नान्यत्र' इति पक्षे 'अदद्यङ्'। उक्तं च (भाष्ये)—**

**'अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।**
**केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥' इति।**

---

सति 'णो नः' इति धात्वादेर्णकारस्य विहितं नत्वं नेता इत्यत्रैव स्यात्, नमतीत्यत्र न स्यादिति चेत्, मैवम्—अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्तौ अन्त्यसदेशस्यैव भवतीति परिभाषार्थ इति 'ष्यङः संप्रसारणम्' इति सूत्रे भाष्ये स्पष्टं प्रपञ्चितत्वात्। यद्यपि 'ष्यङः सम्प्रसारणम्' इति सूत्रे प्रकृतसूत्रे च 'अनन्त्यविकारे अन्त्यसदेशस्य' इति परिभाषा पठिता, तथापि सैवात्रार्थतः संगृहीता। अन्त्यस्य विकार आदेशः अन्त्यविकारः। अन्त्यविकारस्याभावे अनन्त्यविकारे, अर्थाभावेऽव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यते इति वक्ष्यमाणत्वात्तत्पुरुषः अव्ययीभावपक्षे तु 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावाभावः। अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य आदेशाभावे सतीति यावत्। **अदमुयङिति**। अत्र पूर्वस्य दकारस्य तदुत्तराकारस्य च न मुत्वमिति विशेषः।

मतान्तरमाह—**अः सेः सकारस्येति**। सेरित्यस्य विवरणं सकारस्येति। असेरिति नायं नञ्तत्पुरुषः, किं तु अः सेः यस्य सः असिः, तस्य असेरिति विग्रहः। सेरिति स्थानषष्ठी, इकार उच्चारणार्थः, सकारस्थानकाकारवत इत्यर्थः। अदस्शब्दस्य त्यदाद्यत्वे कृते सकारस्थानकाकारवत्त्वम्। अतः त्यदाद्यत्ववत एवादस्शब्दस्य मुत्वं नान्यस्य इति फलितम्। अतः अद्र्यादेशे सति सकारस्थानकाकारवत्त्वाभावान्न मुत्वमित्यर्थः। तदिदं पक्षत्रयमपि भाष्यसंमतमित्याह—**उक्तं चेति**। अदसः टेः अद्रेर्विधौ सति अदद्र्यच् इत्यत्र प्रथमद्वितीययोः दकारयोः पृथङ् मत्वं तदुत्तरयोः अवर्णरेफयोरुत्वं च युगपदेव। लत्ववत्। चलीक्लृप्यते इत्यत्र चरीकृप्यते इति स्थिते रेफऋकारयोर्यथा 'कृपो रो लः' इति लत्वम्, तथा केचिदिच्छन्ति। अन्त्यसदेशस्यैव केचिद् लत्वमिच्छन्ति। अद्र्यादेशे सति प्रथमयोर्द्वितीययोश्च मुत्वं नैव केचिदिच्छन्ति। हि यतः

---

अलोन्त्यपरिभाषोपतिष्ठते। तथा च अदसो योऽन्त्यः स दात्परो न भवति, दात्परो यः सोऽदसोऽन्त्यो न भवतीत्येवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति तेषामाशयः। **उक्तं चेति**। वार्तिककृतेति शेषः। एवं च अमुद्यङ् इति केषांचिदुदाहरणं भाष्यादावनुक्तत्वादुपेक्ष्यमिति भावः। **लत्ववदिति**। चलीक्लृप्यत इत्यत्र 'कृपो रो लः' इत्युभयोर्यथा लत्वं तथेत्यर्थः। नन्वप्रत्ययग्रहणाभावेऽप्युत्तरपदाधिकारस्थत्वाद्विष्वद्र्यङ्

'विष्वग्देवयोः' किम्–अश्वाची। 'अञ्चतौ' किम्–विष्वग्युक्। 'अप्रत्यये' किम्–विष्वगञ्चनम्। अप्रत्ययग्रहणं ज्ञापयति 'अन्यत्र धातुग्रहणे तदादिविधिः' इति। तेनायस्कारः। 'अतः कृकमि–' (सू १६०) इति सः। उदङ्, उदञ्चौ, उदञ्चः। शसादावचि **४२० उद ईत्।** (६-४-१३९) उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात्। उदीचः। उदीचा, उदग्भ्यामित्यादि। **४२१ समः समि।** (६-३-९३) अप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात्। सम्यङ्, सम्यञ्चौ, सम्यञ्चः। समीचः। समीचा। **४२२ सहस्य सध्रिः।**

---

असेः सकारस्थानककारवत एव मुत्वं दृश्यते–अः सेः यस्येति बहुव्रीहिणा प्रतीयत इति योजना। **विष्वग्देवयोः किमिति।** विष्वग्देवयोश्चेति किमर्थमित्यर्थः। **अश्वाचीति।** अत्र विष्वग्देवयोः सर्वनाम्नश्चाभावाम्नाद्र्यादेश इति भावः। **अप्रत्यये किम्। विष्वगञ्चनमिति।** अत्र अन इति ल्युडादेशस्य श्रूयमाणतया अञ्चेरप्रत्ययान्तत्वं नेति भावः। ननु उत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यत्र अद्र्यादेशस्याप्रसक्तेः किमप्रत्ययग्रहणेनेत्यत आह–**अप्रत्ययग्रहणमिति। तेनेति।** अन्यथा 'अतः कृकमि–' इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्तसमासग्रहणेन उत्तरपदाक्षेपात् कृधातुरूपे उत्तरपदे इत्यर्थलाभादयस्कृदित्यत्रैव सत्वं स्यात्, अयस्कार इत्यत्र न स्यादित्यर्थः।

**उदङिति।** उत् अञ्चतीति विग्रहे क्विन्नादिरिति भावः। शसादौ 'अचः' इति लोपे प्राप्ते। **उद ईत्।** 'अचः' इति सूत्रमनुवर्तते, अल्लोप इत्यतः अत् इति च। 'भस्य' इत्यधिकृतम्। तदाह—**उच्छब्दादित्यादिना।** सम् अञ्चतीति विग्रहे क्विन्नादि। **समः समि।** समीति लुप्तप्रथमाकम्। अञ्चतावप्रत्यय इत्यनुवर्तते। तदभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—**अप्रत्ययेति। समीच इति।** 'अचः' इति लोपे 'चौ' इति दीर्घः। **सहस्य सध्रिः।** सहस्य सध्रिः स्यादप्रत्ययान्ते अञ्चतौ पर

---

देवद्र्यङ् इत्यञ्चत्युत्तरपदेष्वेवाद्र्यादेशः स्यान्न तु विष्वगञ्चनमित्यत्रातो व्याचष्टे—**अप्रत्ययग्रहणं ज्ञापयतीति। अन्यत्रेति।** 'अतः कृकमि–' इत्यादौ। **तेनेति।** अन्यथा 'नित्यं समासे–' इत्यतोऽनुवृत्तेन समासग्रहणेनोत्तरपदस्याक्षेपात् 'अतः कृकमि–' इति कृधातुग्रहणे कृधातूत्तरपदक एवायस्कृदित्यादौ सत्वं स्यात्, न त्वणन्तोत्तरपदकेऽयस्कार इत्यत्रेति भावः। **उद ईत्।** 'अचः' इत्यस्यापवादः। इह अच इत्यनुवर्तते भस्येति च तदाह—**उच्छब्दात्परस्य लुप्तनकारस्येत्यादि।** भस्येति किम्, उदञ्चौ। उदञ्चः। उदग्भ्याम्। लुप्तनकारस्येति किम्, पूजायाम्–उदञ्चः, उदञ्चेति यथा स्यादिति। **समः समि।** समीत्यविभक्तिको निर्देशः। एवं 'तिरसस्तिरि–' इत्यपि। संगतमञ्चतीति सम्यङ्। **समीच इति।** अल्लोपे 'चौ' इति

(६-३-९५) अप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् । **४२३ तिरसस्तिर्यलोपे** । (६-३-९४) अलुप्ताकारेऽञ्चतावप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् तिर्यञ्चौ, तिर्यञ्चः । तिर्यञ्चम्, तिर्यञ्चौ, तिरश्चः । तिरश्चा, तिर्यग्भ्यामित्यादि । **४२४ नाञ्चेः पूजायाम्** । (६-४-३०) पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । प्राङ्, प्राञ्चौ, प्राञ्चः । नलोपाभावादकारलोपो न ।

---

इति व्याख्यानं सुगमत्वादुपेक्षितम् । **सध्र्यङिति** । सह अञ्चतीति विग्रहे क्विन्नादि पूर्ववत् । सहस्य सध्र्यादेशे यण् । **तिरसस्तिर्यलोपे** । तिरि इति लुप्तप्रथमाकम् । अञ्चतावप्रत्यये इत्यनुवर्तते । न विद्यते 'अचः' इत्यल्लोपो यस्य सः अलोपः, तस्मिन्निति विग्रहः । तदाह—**अलुप्तेत्यादिना** । **तिर्यङिति** । तिरः अञ्चतीति विग्रहे क्विन्नादि । तिरसस्तिर्यादिशे यण् । **तिरश्च इति** । शसादावचि 'अचः' इत्यल्लोपसत्त्वान्न तिर्यादेशः । सस्य श्चुत्वेन श इति भावः ।

पूजार्थादञ्चुधातोः क्विनि 'अनिदिताम्–' इति नलोपे प्राप्ते—**नाञ्चेः** । 'अनिदिताम्–' इति सूत्राद् उपधायाः क्ङितीत्यनुवर्तते । 'श्नान्न लोपः' इत्यतो नलोप इत्यनुवर्तते । तत्र नेति लुप्तषष्ठीकम् । तदाह—**पूजार्थस्येत्यादिना** । पूजाया गम्यत्वे सतीत्यर्थः । न त्वत्राञ्चुधातोः पूजार्थत्वमेव इह विवक्षितम् । अत एव अञ्चितं गच्छति इत्यत्र नलोपो न । अञ्चेतरत्र समाधानमर्थः । समाहितो भूत्वा गच्छतीति गम्यते । समाधानं च अव्याकुलत्वम्, अव्याकुलं गच्छतीत्यर्थः । अव्याकुलगमने च पूजा गम्यते । न त्वञ्चेतेरेव सोऽर्थ इति 'अञ्चोऽनपादाने' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । **प्राङिति** । प्रपूर्वादञ्चतेः क्विन्, प्रकर्षेण पूजनमञ्चेरर्थः, नलोपाभावे प्राञ्च् इत्यतः सुबुत्पत्तिः । हल्ङ्यादिलोपः, संयोगान्तलोपः, ततः अनुस्वारपरसवर्णनिवृत्तौ नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकार इति भावः । **प्राञ्चाविति** । स्वाभाविकनकारस्य अनुस्वारपरसवर्णाविति भावः । **अलुप्तेति** । 'उगिदचाम्–' इत्यत्र नलोपिनोऽञ्चतेरेव ग्रहणान्नुम् न । ततश्च नकारद्वयश्रवणं न शङ्क्यमिति भावः । **नलोपाभावादिति** । शसादा-

---

दीर्घः । सह अञ्चतीति सध्र्यङ् । भविषये अल्लोपदीर्घा । सध्रीच इत्यादि । **तिरसः** । न विद्यते लोपो यस्य सः अलोप इति बहुव्रीहिः । अञ्चतावित्यनुवर्तमानमन्यपदार्थः । अवयवद्वारकश्च लोपः समुदाये उपचर्यत इत्यभिप्रेत्याह—**अलुप्ताकार इत्यादि** । अकारलोपे सतीति नोक्तम्, व्याख्यानात् । अप्रत्ययान्ते किम्, तिरोऽञ्चनमित्यादौ मा भूत् । **तिरश्च इति** । लुप्ताकारत्वात्तिर्यादेशाभावे सस्य श्चुत्वेन शः । न चाल्लोपस्य स्थानिवत्त्वात् श्चुत्वं न स्यादिति वाच्यम्, पूर्वत्रासिद्धे तदभावात्पदान्तविधित्वाच्च । **नाञ्चेः** । नुमैव सिद्धे प्राञ्चः प्राञ्चेत्यादौ नुमोऽभावेऽपि नकारश्रवणार्थः । **प्राङिति** ।

---

१ 'इह' इत्यनावश्यकम् ।

प्राञ्चः। प्राञ्चा, प्राङ्भ्याम् इत्यादि। प्राङ्क्षु, प्राङ्ख्षु, प्राङ्षु। एवं पूजार्थे प्रत्यङ्ङादयः। 'क्रुञ्च कौटिल्याल्पीभावयोः'। अस्य 'ऋत्विग्–' (सू ३७३) आदिना नलोपाभावोऽपि निपात्यते। क्रुङ्, क्रुञ्चौ। क्रुङ्भ्यामित्यादि। 'चोः कुः' (सू ३७८) पयोमुक्, पयोमुग्, पयोमुचौ, पयोमुचः। 'व्रश्च–' (सू २९४) इति षत्वम्।

---

वचि 'अचः' इति लोपो न भवति। लुप्तनकारस्यैवाञ्चतेस्तत्र ग्रहणादिति भावः। **प्राञ्च इति**। प्र अञ्च् अस् इति स्थिते सवर्णदीर्घे रूपमिति भावः। 'नाञ्चेः पूजायाम्' इत्यनारम्भे सुटि नुमैव रूपसिद्धावपि शसादावचि नकारश्रवणं न स्यात्, 'अनिदिताम्–' इति लोपप्रसङ्गात्। असर्वनामस्थानतया 'उगिदचाम्–' इति नुमश्चाप्रसक्तेरिति बोध्यम्। **प्राङ्भ्यामिति**। 'स्वादिषु–' इति पदत्वात् चकारस्य संयोगान्तलोपे अनुस्वारपरसवर्णनिवृत्तौ नकारस्य 'क्विन्प्रत्ययस्य–' इति कुत्वेन ङकार इति भावः। **इत्यादीति**। प्राङ्भिः। प्राञ्चे, प्राङ्भ्याम्, प्राङ्भ्यः। प्राञ्चः, प्राञ्चोः, प्राञ्चाम्। प्राञ्चि, प्राञ्चोः। **प्राङ्ख्ष्विति**। 'ङणोः कुक्टुक्–' इति वा कुक्। 'चयो द्वितीयाः–' इति पक्षे खश्च बोध्यः। **एवमिति**। सुटि पूर्ववदेव रूपाणि। शसादावचि प्रत्यञ्चः, प्रत्यञ्चा। प्रत्यङ्भ्याम्। अमुमुयञ्चः। अमुमुयङ्भ्याम्। उदञ्चः। उदङ्भ्यामित्यादि ज्ञेयम्। **क्रुञ्च कौटिल्येति। नलोपाभावोऽपीति**। 'अनिदिताम्–' इति नलोपाभावः, निरुपपदात् क्विन्नपि निपात्यत इत्यर्थः। सति तु नलोपे नकारो न श्रूयेत। 'उगिदचाम्–' इति नुमः सर्वनामस्थानेऽप्यप्रवृत्तेः। वस्तुतस्तु स्वाभाविकञोपधस्यैव धातुपाठे निर्देशाद् नलोपस्यात्र प्रसक्तिरेव नास्ति। अत एव 'परेश्च घाङ्कयोः' इति सूत्रे भाष्ये क्रुञ्चेत्यत्र चकारे परे 'चो कुः' इति कुत्वमाशङ्क्य ऋत्विगित्यादि सूत्रे क्रुञ्चेति निपातनात् कुत्वं नेत्युक्तं संगच्छते। यदि तु नस्यानुस्वारपरसवर्णाभ्यां ञकारो निर्दिश्येत, तर्हि तस्य 'चो कुः' इति कुत्वप्रसक्तिरेव नास्तीति तदसंगतिः स्यात्। कुत्वे कर्तव्ये परसवर्णस्यासिद्धत्वादित्यास्तां तावत्। नोपधत्वमभ्युपेत्य आह—**क्रुङ् इति**। हल्ङ्यादिलोपे संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य–' इति कुत्वम्। **क्रुङ्भ्यामिति**। संयोगान्तलोपे नकारस्य कुत्वं ङकारः। अत्र प्रथमैकवचने भ्यामादावपि कुत्वं निपातनादेव न भवति, चवर्गपञ्चमञकार एव सर्वत्रेति 'परेश्च घाङ्कयोः' इति सूत्रभाष्यकैयटस्वरसः। **पयोमुगिति**। 'मुच्लृ मोक्षणे' क्विप्। सुपूर्वात् 'ओव्रश्चू छेदने' इति धातोः क्विपि 'ग्रहिज्या–' इति सम्प्रसारणे सुवृश्च्शब्दः। तस्य विशेषमाह—**व्रश्चेति षत्वमिति**। हल्ङ्यादिना सुलोपे कृते चकारस्य षत्वमित्यर्थः।

---

प्रकर्षेणाञ्चति–पूजयतीति पूजार्थादञ्चेः क्विन्। **प्राङ्क्ष्विति**। 'ङणोः कुक्टुक्–' इति वा कुक्, 'चयो द्वितीयाः–' इति पक्षे खकारोऽपि बोध्यः। **एवमिति**। शसादिषु

'स्कोः—' (सू ३८०) इति सलोपः। जश्त्वचर्त्वे। **सुवृट्, सुवृड्, सुवृश्चौ, सुवृश्चः। सुवृट्त्सु, सुवृट्सु** ॥ इति चान्ताः॥ **'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च'** (उ २४१) एते निपात्यन्ते, शतृवच्चैषां कार्यं स्यात्। उगित्त्वान्नुम्। **'सान्त महतः—'** (सू ३१७) इति दीर्घः। मह्यते पूज्यत इति **महान्, महान्तौ, महान्तः। हे महन्। महतः। महता, महद्भ्यामित्यादि। ४२५ अत्वसन्तस्य चाधातोः।**

---

**सलोप इति**। धातुपाठे व्रस्च् इति सस्य श्चुत्वे कृते व्रश्च् इति निर्देशः। तत्र श्चुत्वस्यासिद्धत्वात् 'स्कोः—' इति सकारस्य लोप इत्यर्थः। 'वावसाने' इति चर्त्वे षस्य टः। तदभावे जश्त्वेन ड इत्यर्थः। **सुवृट्त्स्विति**। चर्त्वस्यासिद्धत्वात् पूर्वं 'डः सिः' इति वा धुट्। ततश्चर्त्वमिति भावः॥ इति चान्ताः॥

**अथ तकारान्ता निरूप्यन्ते**। अथ महच्छब्दे विशेषं वक्तुमाह— **वर्तमाने**। उणादिसूत्रमेतत्। **निपात्यन्त इति**। तत्र 'पृष सेचने' 'बृहि वृद्धौ' अनयोर्गुणाभावः, महेः कर्मणि अतिप्रत्ययः, गमेर्जगादेशश्चेति विशेषः। **शतृवदिति**। शतृप्रत्ययान्तवदित्यर्थः। **उगित्त्वादिति**। शतृवद्भावेन सुटि उगित्त्वान्नुमित्यर्थः। **सान्तेति**। सुटि महन्त् स् औ इत्यादिस्थितौ नकारात् पूर्वस्य अकारस्य दीर्घ इत्यर्थः। **मह्यते इति**। 'कर्तरि कृत्' इति कर्त्रर्थं बाधित्वा निपातनात् 'मह पूजायाम्' इति धातोः कर्मणि अतिप्रत्यय इति भावः। **महानिति**। नुमि दीर्घे सुलोपे संयोगान्तलोप इति भावः। **महान्ताविति**। नुमि दीर्घे अनुस्वारपरसवर्णाविति भावः। **हे महन्निति**। असंबुद्धावित्यनुवृत्तेः 'सान्तमहतः—' इति दीर्घो नेति भावः। **महत इति**। असर्वनामस्थानत्वाच्छसादौ न दीर्घः। धीः अस्यास्तीत्यर्थे धीशब्दान्मतुप्, पकार इत्, उकार उच्चारणार्थः। तद्धितान्तत्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः। धीमत् स् इति स्थिते। **अत्वसन्तस्य**। अतु इति लुप्तषष्ठीकं पृथक्पदम्। अङ्गविशेषणत्वात्तदन्तविधिः। अधातोरित्यसन्तविशेषणम्। 'नोपधायाः' इत्यत उपधाया इत्यनुवर्तते। अत्वन्तस्य धातुभिन्नासन्तस्य च उपधाया इति लभ्यते। 'सर्वनामस्थाने चासंबुद्धौ'

---

प्रत्यञ्चः। प्रत्यङ्भ्याम्। अमुमुयञ्चः। अमुमुङ्भ्याम्। उदञ्चः। उदङ्भ्यामित्यादि ज्ञेयम्। कुञ्चतीति कुङ्। **सलोप इति**। श्चुत्वस्यासिद्धत्वादिति भावः। सुष्ठु वृश्चतीति सुवृट्। क्विपि 'ग्रहिज्या—' इति संप्रसारणम्। **सुवृट्त्स्विति**। चर्त्वस्यासिद्धत्वात्पूर्वं 'डः सि—' इति वा धुट् ततश्चर्त्वम्॥ इति चान्ताः॥ **निपात्यन्त इति**। 'पृषु सेचने' 'बृह वृद्धौ' अत्र गुणाभावः। महेः कर्मणि प्रत्ययः। अत एव मह्यते— पूज्यते स महानिति व्याचष्टे। गमेस्तु जगादेशः चत्वारोऽप्यतिप्रत्ययान्ताः। एतच्च उणादिषु स्फुटीकरिष्यते। **अत्वसन्तस्य चाधातोः**। 'ढ्रलोपे—' सूत्राद्दीर्घस्य

(६-४-१४) अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः। ततो नुम्। धीमान्, धीमन्तौ; धीमन्तः। हे धीमन्। शसादौ महद्वत्। धातोरप्यत्वन्तस्य दीर्घः। गोमन्तमिच्छति, गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप्।

---

इत्यतः असंबुद्धाविति 'सौ च' इत्यतः साविति 'ढ्रलोपे–' इत्यतो दीर्घ इति चानुवर्तते। तदाह—**अत्वन्तस्येत्यादिना**। ननु कृते अकृते च दीर्घे प्रवृत्त्यर्हस्य नुमो नित्यत्वात् परत्वाच्च मकाराकाराद् नुमि कृते अत्वन्तत्वाभावात् कथमिह दीर्घ इत्यत आह—**परमिति। वचनसामर्थ्यादिति**। अन्यथा निरवकाशत्वापत्तिरिति भावः। **ततो नुमिति**। दीर्घे कृते नुमित्यर्थः। 'विप्रतिषेधे यद्बाधितं तद्बाधितम्' इति त्वनित्यम्, 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इत्युक्तेरिति भावः। **धीमानिति**। दीर्घे नुमि हल्ङ्यादिलोपे संयोगान्तलोपे रूपमिति भावः। **हे धीमन्निति**। असंबुद्धौ इत्युक्तेः न दीर्घ इति भाव। **महद्वदिति**। असर्वनामस्थानतया शसादौ नुमभावादिति भावः। अत्वसोरिति वक्तव्ये अन्तग्रहणं तु अत्वन्तमात्रग्रहणार्थम्। अन्यथा उपदेशे ये अत्वन्तास्त एव गृह्येरन्, न तु मतुबादयः। नह्येते उपदेशे अत्वन्ता इत्याहुः। नन्वधातोरित्येतद् असन्तस्येव अत्वन्तस्यापि विशेषणं कुतो नेत्यत आह—**धातोरपीति**। अत्वन्तस्य धातुत्वेऽपि दीर्घार्थम्। अधातोरित्येतस्य अत्वन्तविशेषणत्वं नाश्रितमित्यर्थः।

ननु धातुपाठे अत्वन्तधातुरप्रसिद्ध इत्यत आह—**गोमन्तमिति**। आचरति वेत्यनन्तरम् इत्यर्थे इति शेषः। गोमन्तमिच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यचि 'नः क्ये' इति नियमात् पदत्वाभावाज्जश्त्वाभावे गोमत्यशब्दात् 'सनाद्यन्ताः–' इति धातुत्वात् कर्तरि क्विपि 'यस्य हलः' 'अतो लोपः' इति यलोपाल्लोपयोः गोमत्शब्दात् सुबुत्पत्तिः। गोमानिवाचरतीत्यर्थे तु 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि 'सनाद्यन्ताः–' इति धातुत्वात् कर्तरि क्विपि सुबुत्पत्तिरिति भावः। एवंविधाद् गोमत्शब्दात् सौ 'अत्वसन्तस्य–' इति दीर्घे सति 'उगिदचाम्–' इति नुमि

---

'नोपधायाः' इत्युपधाग्रहणस्य चानुवर्तनादाह—**उपधाया दीर्घः स्यादेति**। इह अधातोरिति योगो विभज्यते तत्सामर्थ्यादनन्तरस्यासन्तस्यैव प्रतिषेधः, नत्वत्वन्तस्येति कैयटादयस्तदेतद्दर्शयति—**धातुभिन्नासन्तस्य चेति**। धात्ववयवभिन्नो योऽस् तदन्तस्येत्यर्थः। तेन उखास्रत् पर्णध्वद् इत्यादि सिद्धम्। धातुभिन्नो योऽसन्तस्तस्येति व्याख्यायां स्रत् ध्वद् इत्यत्र सिद्धान्ते दीर्घाभावेऽप्यत्र तु स्यादेवेति दिक्।
त्र 'सर्वनामस्थाने च–' इति सूत्रादसंबुद्धावित्यनुवर्तते। 'सौ च' इत्यतः साविति

'उगिदचाम्–' (सू ३६१) इति सूत्रेऽज्ग्रहणं नियमार्थम्। 'धातोश्चेदुगित्कार्यं तह्यञ्चतरेव'। तेन 'स्रत्' 'ध्वत्' इत्यादौ न। 'अधातोः' इति त्वधातुभूतपूर्वस्यापि नुमर्थम्। गोमान्, गोमन्तौ, गोमन्तः–इत्यादि। 'भातेर्डवतुः' (उ ६३) भवान्, भवन्तौ, भवन्तः। शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः। भवतीति

हल्ङ्यादिलोपे गोमानिति रूपं वक्ष्यति। तत्र गोमच्छब्दस्य क्यजन्तस्य आचारक्विबन्तस्य च 'सनाद्यन्ताः–' इति धातुत्वात् कथमस्य 'उगिदचाम्–' इति नुमागमः, अधातोरेव उगितो नुम्विधानादित्याशङ्क्य आह—**उगिदचामिति सूत्र इति**। 'उगितः सर्वनामस्थाने' इत्येतावदेव सूत्रमस्तु, अञ्चतेरुगित्त्वादेव सिद्धेः। अतः अज्ग्रहणमतिरिच्यमानं नियमार्थमित्यर्थः। नियमशरीरमाह—**धातोश्चेदिति**। 'धातोश्चेदुगितः कार्यं स्यात् तर्हि अञ्चतेरेव न तु धात्वन्तरस्येति नियमार्थम्' इति पूर्वेणान्वयः। नियमस्य फलमाह—**तेनेति**। 'स्रन्सु ध्वन्सु गतौ' इत्युगितौ धातू, ताभ्यां क्विपि 'अनिदितां हल उपधायाः–' इति नलोपे सुबुत्पत्तौ सोर्हल्ङ्यादिलोपे 'वसुस्रंसुध्वंस्वनडुहां दः' इति दत्वे स्रत् ध्वत् इति रूपमिष्टम्। उगितः सर्वनामस्थाने इत्युक्ते तु अत्रापि नुम् स्यात्। कृते त्वज्ग्रहणे उक्तनियमलाभादत्र नुम् न भवतीत्यर्थः। तर्ह्येतावतैव सिद्धे अधातोरिति किमर्थमित्यत आह—**अधातोरिति त्विति**। अधातुः पूर्वं भूतः अधातुभूतपूर्वः, पूर्वम् अधातुभूतस्यापि नुमर्थमधातोरित्येतदित्यर्थः। ततश्च 'उगिदचां सर्वनामस्थाने' इत्येकं वाक्यम्। तत्र अधातोरित्यभावेऽपि अज्ग्रहणादधातोरुगित इति लाभादधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यादित्यर्थः। अधातोरित्यपरं वाक्यम्। उक्तो नुमागमः अधातुभूतपूर्वस्यापि भवतीत्यर्थः। प्रकृते च क्यजाचारक्विबुत्पत्त्यनन्तरं धातुत्वे सत्यपि क्यजाद्युत्पत्तेः पूर्वम् अधातुत्वसत्त्वान्नुम् निर्बाध इत्यर्थः। एतत् सर्वम् 'उगिदचाम्–' इति सूत्रे भाष्ये स्पष्टम्। अत्र क्यच्पक्षे दीर्घे नुमि च कर्तव्ये अल्लोपो न स्थानिवत्, दीर्घविधौ तन्निषेधात्, क्वौ लुप्तं न स्थानिवदित्युक्तेश्च।

अथ भवच्छब्दे विशेषमाह—**भातेर्डवतुरिति**। उणादिसूत्रमेतत्। भाधातोर्डवतुः स्यादित्यर्थः। डकार इत्। उकार उच्चारणार्थः[1]। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। भवत् इति रूपम्। **भवानिति**। भवच्छब्दात् सुः। 'अत्वसन्तस्य–' इति दीर्घः, 'उगिदचाम्–' इति नुम्, हल्ङ्यादिलोपः, संयोगान्तलोपश्चेति भावः। **शत्रन्तस्य त्विति**। 'लटः शतृशानचौ–' इति भूधातोर्लटः शतृ आदेशः। शकार इत्, ऋकार इत्, शप्, गुणः, अवादेशः, पररूपम्, भवत् इति रूपम्। तस्य तु अत्वन्तत्वाभावादत्वसन्तस्येति दीर्घो न भवति। तत्र उकारानुबन्धग्रहणादित्यर्थः। **भवन्निति**।

च तदाह—**असंबुद्धौ सौ पर इति**। **अत्वन्तत्वाभावादिति**। अतु इत्यु-

१ 'उकार इत् उगित्त्वार्थः' इति तूचितम्। उच्चारणार्थत्वे उगित्त्वाभावान् नुम् न स्यात्।

भवन्। ४२६ उभे अभ्यस्तम्। (६-१-५) षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः। ४२७ नाभ्यस्ताच्छतुः। (७-१-७८) अभ्यस्तात्परस्य शतुर्नुम् न स्यात्। ददत्, ददद्, ददतौ, ददतः। ४२८ जक्षित्यादयः षट्। (६-१-६) षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः

---

सौ नुमि हल्ङ्यादिलोपे संयोगान्तलोपः। भवन्तावित्यादि तु पूर्ववदेवेति भावः। दाञ्धातोः लटः शत्रादेशे शप्, जुहोत्यादिभ्यः श्लुः, 'श्लौ' इति द्वित्वम्, अभ्यासह्रस्वः, 'श्नाभ्यस्तयोरातः' इत्याल्लोपः, ददत् इति रूपम्। ततः सुबुत्पत्तिः। 'उगिदचाम्-' इति नुमि प्राप्ते 'नाभ्यस्तात्-' इति तन्निषेधं वक्ष्यन् अभ्यस्तसंज्ञामाह—**उभे अभ्यस्तम्**। 'एकाचो द्वे प्रथमस्य' इत्यतो द्वे इत्यनुवर्तते। उभेग्रहणं समुदायप्रतिपत्त्यर्थम्। द्वे इत्यनेन च षष्ठाध्यायविहितमेव द्वित्वं विवक्षितम्, 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायात्। तदाह—**षाष्ठेत्यादिना**। समुदिते कम्? नेनिजतीत्यत्र प्रत्येकमभ्यस्तसंज्ञायाम् 'अभ्यस्तानामादिः' इत्युदात्तः प्रत्येकं स्यात्। **नाभ्यस्ताच्छतुः**। 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते। तदाह—**अभ्यस्तादित्यादिना। ददिति।** ददत्शब्दात् सुः। हल्ङ्यादिलोपः। 'नाभ्यस्तात्' इति निषेधात् 'उगिदचाम्-' इति नुम् न। अत्वन्तत्वाभावाच्च न दीर्घ इति भावः।

'जक्ष भक्षहसनयोः, जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीप्तौ, शासु अनुशिष्टौ, दीधीङ् दीप्तिदेवनयोः, वेवीङ् वेतिना तुल्ये' इति सप्त धातवः अदादौ पठिता लुग्विकरणाः। तेभ्यो लटः शत्रादेशे शब्लुकि सुबुत्पत्तौ 'नाभ्यस्ताच्छतुः' इति निषेध इष्यते। अभ्यस्तसंज्ञायाश्च द्वित्वनिबन्धनत्वादिहाप्राप्ताविदमारभ्यते—**जक्षित्यादयः षट्**। अभ्यस्तमित्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। तत्र जक्षितिः आदिर्येषामिति तद्गुणसंविज्ञानबहुव्रीहौ इति जक्षधातुमारभ्य षण्णामेव ग्रहणं स्यात्, वेवीङो न स्यात्। अतद्गुणसंविज्ञानबहुव्रीहौ तु जागृ इत्यारभ्य षण्णां ग्रहणं स्यात्, न तु जक्षेः। अतो व्याचष्टे—**षड्धातवोऽन्ये जक्षितिश्च सप्तम इति**। अत्र

---

कारानुबन्धस्यानुकरणाच्छत्रन्तस्य न भवतीत्यर्थः। **उभे**। शब्दरूपापेक्षया नपुंसकनिर्देशः। **षाष्ठद्वित्वेति**। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायादिति भावः। द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्टे—**उभे समुदिते इति**। अन्यथा नेनिजतीत्यत्र 'अभ्यस्तानामादिः-' इत्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात्। **नाभ्यस्ताच्छतुः**। व्यवहितोऽपि नुमेवात्र निषिध्यते अन्येषामप्रसक्तेरित्यभिप्रेत्याह—**नुम्न स्यादिति। ददिति** ददातीति ददत्। **दाञो लटः शत्रादेशः**, शपः श्लुः, 'श्लौ' इति द्वित्वमभ्यासस्य ह्रस्वः। 'श्नाभ्यस्तयो-

स्युः । जक्षत्, जक्षद्, जक्षतौ, जक्षतः । एवं जाग्रत्, दरिद्रत्, शासत्, चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत्, वेव्यत् ॥ इति तान्ताः ॥ गुप्, गुब्, गुपौ, गुपः । गुब्भ्यामित्यादि ॥ इति पान्ताः ॥ ४२६ त्यदादिषु दृशोऽनालोचने कञ्च । (३-२-६०) त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेर्धातोः कञ् स्यात्, चात् क्विन् । आ सर्वनाम्नः । (६-३-६१) सर्वनाम्न

---

विवरणवाक्ये जक्षितिरिति श्तिपा निर्देशः, जक्षधातुरित्यर्थः । 'रुदादिभ्यः सार्वधातुके' इति इडागमे रूपम् । सूत्रे जक्ष् इति पृथक्पदम् । इतिना जक्षिः परामृश्यते । इति आदिः येषामित्यतद्गुणसंविज्ञानबहुव्रीहिः । ततश्च इत्यादयः षट् इत्यनेन जक्षधातोः अन्ये जागृ इत्यारभ्य षड् धातवो विवक्षिताः, चशब्दः अध्याहार्यः । एवं च जक्षधातुश्च जागृधातुमारभ्य षड् धातवश्चेत्येवं सप्त धातवः अभ्यस्तसंज्ञकाः स्युरिति फलतीत्यर्थः । तदिदं भाष्ये स्पष्टम् । **जक्षदिति** । अभ्यस्तत्वान्नुम्निषेध इति भावः । ननु दीधीवेव्योर्ङित्त्वाद् 'अनुदात्तङित–' इति आत्मनेपदसंज्ञक एव लटः शानजादेशः स्यात्, न तु शत्रादेश इत्यत आह—**दीधीवेव्योरिति** । दीधीवेव्योः छन्दोमात्रविषयत्वं तिङन्ताधिकारे वक्ष्यते । ततश्च 'व्यत्ययो बहुलम्' इति छान्दसं परस्मैपदम् । अतः शानजसंभवात् शत्रादेश एवेत्यर्थः । **दीध्यत्** । **वेव्यदिति** । दीधी वेवी इत्याभ्यां लटः शत्रादेशे कृते शब्लुकि यणादेशः । अभ्यस्तत्वाच्च नुम् नेति भावः ॥ इति तान्ताः ॥

**अथ पकारान्ता निरूप्यन्ते । गुबिति** । 'गुपू रक्षणे' क्विप् । 'आयादय आर्धधातुके वा' इति वैकल्पिकत्वादायप्रत्ययो नेति भावः । **गुब्भ्यामिति** । 'स्वादिषु–' इति पदत्वाद् भ्यामादौ जश्त्वमिति भावः ॥ इति पान्ताः ॥

**अथ शकारान्ता निरूप्यन्ते** । तादृश्शब्दं व्युत्पादयितुमाह—**त्यदादिषु** । चकारात् 'स्पृशोऽनुदके क्विन्' इत्यतः क्विन् अनुकृष्यते । आलोचनमिह ज्ञानसामान्यं विवक्षितम् । तदाह—**त्यदादिष्वित्यादिना** । अनालोचने किम् ? तं पश्यति तद्दर्शः । कर्मण्यण् । कञि तु कित्त्वाद् गुणो न स्यात् । तद्शब्दे उपपदे क्विनि उपपदसमासे सुब्लुकि तद् दृश् इति स्थिते । **आ सर्वनाम्नः** । आ इत्यविभक्तिकनिर्देशः । 'दृग्दृशवतुषु' इति सूत्रमनुवर्तते । तदाह—**सर्वनाम्न इति** ।

---

रातः' इत्यालोपः । **जक्षित्यादयः षट्** । जक्ष इति पृथक् पदम् । इति शब्देन जक्षिरेव परामृश्यते । इति आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीहिस्तदतेदाह—**षड् धातवोऽन्ये इति** ॥ इति तान्ताः ॥ गोपायतीति गुप् । क्विपि विवक्षिते 'आयादय आर्धधातुके वा' इति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे त्वतो लोपे यलोपे च गोपा इति रूपं बोध्यम् ॥ इति पान्ताः ॥ **त्यदादिषु** । कञन्तस्य तूदाहरणं तादृशो

आकारोऽन्तादेशः स्याद् दृग्दृशवतुषु। कुत्वस्यासिद्धत्वात् 'व्रश्च–' (सू २९४) इति षः। तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वेन पक्षे कः। तादृक्, तादृग्, तादृशौ, तादृशः। 'षत्वापवादत्वात्कुत्वेन खकारः' इति कैयटहरदत्तादिमते तु

---

**अन्तादेश इति**। अलोऽन्त्यपरिभाषालभ्यमिदम्। दकारस्य आत्वे सवर्णदीर्घः। तादृश् इति रूपम्। ततः सुबुत्पत्तिः। **कुत्वस्येति**। तादृश् स् इति स्थिते हल्ङ्यादिलोपे, 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वाद् 'व्रश्च–' इति ष इत्यर्थः। **तस्येति**। 'व्रश्च–' इति संपन्नस्य षकारस्येत्यर्थः। **तस्य कुत्वेनेति**। डकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन गकार इत्यर्थः। **तस्य चर्त्वेनेति**। गकारस्य 'वावसाने' इति चर्त्वविकल्प इत्यर्थः। **तादृगिति**। स इव दृश्यत इति न विग्रहः, 'कर्तरि कृत्' इति कर्तर्येव क्विन्विधानात्। किं तु कर्मकर्तरि क्विन्, स इवायं पश्यति, ज्ञानविषयो भवतीत्यर्थः। 'दृशेरत्र ज्ञानविषयत्वापत्तिमात्रवृत्तित्वादज्ञानार्थता' इति 'त्यदादिषु दृशेः–' इति सूत्रे भाष्ये स्पष्टम्। रूढशब्द एवायमित्यन्ये।

अथात्र कैयटादिमतं दूषयति—**षत्वापवादत्वादिति**। यद्यदि दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चुषु अप्राप्तेऽपि व्रश्चादिषत्वे 'क्विन्प्रत्ययस्य कुः' इति कुत्वमारभ्यते। तथापि क्विपैव सिद्धे 'स्पृशोऽनुदके क्विन्, त्यदादिषु दृशोऽनालोचने कञ् च' इति क्विन्विधानं क्विन्प्रत्ययस्य कुः' इति कुत्वार्थं क्रियमाणं घृतस्पृक्, तादृक् इत्यादिषु अप्रवृत्तौ निरवकाशमेव स्यात्। अतस्तद्विषये कुत्वस्य फलतः षत्वापवादत्वमिति भावः। क्विन्विधानं 'क्विन्प्रत्ययस्य कुः' इति कुत्वार्थमेव इति 'स्पृशोऽनुदके–' इति सूत्रे भाष्ये स्पष्टम्। अनवकाशत्वादेव च षकारविषये कुत्वस्य नासिद्धत्वमपि। अन्यथा 'स्पृशोऽनुदके क्विन्' इत्यादिना स्पृशादेः क्विन्विधिवैयर्थ्यात्। उक्तं च 'पूर्वत्रासिद्धम्' इत्यत्र भाष्ये–'अपवादो वचनप्रामाण्यात्' इति। **खकार इतीति**। अघोषमहाप्राणसाम्यादिति भावः। **ख एवेति**। तादृक्, तादृग् इति रूपद्वयमिष्टम्। शकारस्य कुत्वेन खकारे सति तस्य 'वावसाने' इति चर्त्वपक्षे तादृक् इति रूपसिद्धावपि चर्त्वाभावपक्षे तादृख् इत्येव स्यात्, तादृग् इति गकारो न श्रूयेतेत्यर्थः। नन्वस्तु शकारस्य खकारः। अथापि तस्य चर्त्वा-

---

यादृश इत्यादि। तच्चात्र नोक्तम्, हलन्तेष्वनुपयोगात्। अनालोचने किम्, तं पश्यतीति तद्दर्शः, कर्मण्यण्। तादृशादयस्तु रूढिशब्दत्वाद् असताप्यवयवार्थेन व्युत्पाद्यन्ते। अत एवाज्ञानार्थाद् दृशेरिति संगच्छते। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता–तमिवेमं पश्यन्ति जनाः, 'स इवायं पश्यति'। ज्ञानविषयो भवतीत्यर्थादज्ञानार्थादिति तु संगच्छते, तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रवृत्तित्वेऽपि विषयीकरणावृत्तित्वात्। **आकारोन्तादेश इति**। अकारादेशे सति त्यतो गुणः स्यात्। न चाकारोच्चारणसामर्थ्याद्दीर्घः स्या-

चर्त्वाभावपक्षे ख एव श्रूयते, न तु गः, जश्त्वं प्रति कुत्वस्यासिद्धत्वात्। 'दिगादिभ्यो यत्' (सू १४२६) इति निर्देशाद्वासिद्धत्वमिति वा बोध्यम्। 'व्रश्च–' (सू २९४) इति षत्वम्, जश्त्वचर्त्वे। विट्, विड्, विशौ, विशः। विशम्।
**४३१ नशेर्वा।** (८-२-६३) नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते। नक्, नग्, नट्, नड्, नशौ, नशः। नग्भ्याम्, नड्भ्यामित्यादि। **४३२ स्पृशोऽनुदके क्विन्।** (३-२-५८) अनुदके सुप्युपपदे स्पृशेः क्विन्। स्यात् घृतस्पृक्, घृतस्पृग्,

---

भावपक्षे जश्त्वेन गकारो निर्बाध इत्यत आह—**जश्त्वं प्रतीति।** जश्त्वेन गकारे कर्तव्ये शकारस्थानकस्य कुत्वसम्पन्नखकारस्यासिद्धतया झलोऽभावेन जश्त्वासंभवादित्यर्थः। अथ कैयटादिमते उक्तदोषं निरस्यति—**दिगादिभ्यो यदितीति।** 'विश प्रवेशने' क्विप्, विश् इति रूपम्। तस्य विशेषमाह—**व्रश्चेति षत्वमिति।** विश् स् इति स्थिते हल्ङ्यादिलोपे 'व्रश्च–' इति शकारस्य षकार इत्यर्थः। **जश्त्वचर्त्वे इति।** षस्य जश्त्वेन डः। 'वावसाने' इति तस्य चर्त्वेन पक्षे ट इत्यर्थः। विड्भ्याम्। विट्त्सु, विट्सु।

'णश् अदर्शने' क्विप्। नश् इति रूपम्। ततः सुबुत्पत्तिः। सोर्हल्ङ्यादिलोपे व्रश्चादिना नित्यं षत्वे प्राप्ते। **नशेर्वा।** 'क्विन्प्रत्ययस्य कुः' इत्यतः कुरित्यनुवर्तते, 'स्कोः संयोगाद्योः–' इत्यतः अन्ते इति च। 'पदस्य' इत्यधिकृतम्। तदाह—**नशेः कवर्ग इत्यादिना।** अन्तादेश इत्यलोऽन्त्यसूत्रलभ्यम्। पक्षे 'व्रश्च–' इति षत्वम्। **नक् नगिति।** कुत्वपक्षे जश्त्वचर्त्वाभ्यां रूपे। **नट्, नडिति।** षत्वपक्षे जश्त्वचर्त्वाभ्यां रूपे। **नग्भ्याम्, नड्भ्यामिति।** कुत्वपक्षे जश्त्वेन गकारः। षत्वपक्षे तु जश्त्वेन डकारः। 'मस्जिनशोर्झलि' इति नुम् तु न, धातोर्विहिते प्रत्यये एव तत्प्रवृत्तेर्वक्ष्यमाणत्वात्। **स्पृशोऽनुदके। अनुदके सुपीति।** उदकशब्दभिन्ने सुबन्ते

---

देवेति वाच्यम्। अकारस्याविधौ हल एव श्रवणप्रसङ्गात्। **विडिति।** 'विश प्रवेशने' इत्यस्मात् क्विप्। **नशेर्वा।** केचिदिह झलीत्यनुवर्त्य झलि पदान्ते चेति व्याचक्षते। तन्न, नष्टमित्यादावतिप्रसङ्गात्। **नगिति।** षडगकाः प्राग्वत्। **स्पृशोऽनुदके क्विन्।** ककारो गुणाभावार्थः। नकारस्तु 'क्विन्प्रत्ययस्य कुः' इति विशेषणार्थः। वस्तुतस्तु व्यर्थ एव सः, 'क्विप्रत्ययस्य कुः' इत्युक्तेऽपि तदनुबन्धपरिभाषया क्विबन्तस्य कुत्वाप्रसक्तेः। न चाद्युदात्तत्वं प्रयोजनम्, क्विनः प्रकृतीनामेकाच्त्वाद्धातुस्वरेणापि तत्सिद्धेः। दधृगित्यत्र त्वन्तोदात्तत्वनिपातनादाद्युदात्तत्वं नापेक्षितमेवेति दिक्। अत्र सुपीत्यनुवर्तते, कर्मणीति तु निवृत्तमित्याशयेनाह—**अनुदके सुप्युपपद इति। घृतस्पृगिति।** घृतं घृतेन वा स्पृशतीति विग्रहः। अनुदके किम्, उदकं स्पृश-

घृतस्पृशौ, घृतस्पृशः। क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्क्विप्यपि कुत्वम्। स्पृक्। षडगकाः प्राग्वत्॥ इति शान्ताः॥ 'ञिधृषा प्रागल्भ्ये'। अस्मात् 'ऋत्विग्–' (सू ३७३) आदिना क्विन्। द्वित्वमन्तोदात्तत्वं च निपात्यते। कुत्वात्पूर्वं जश्त्वेन डः, गः, कः। धृष्णोतीति दधृक्, दधृग्, दधृषौ, दधृषः। दधृग्भ्यामित्यादि। रत्नानि मुष्णातीति रत्नमुट्, रत्नमुड्, रत्नमुषौ, रत्नमुषः। 'षड्भ्यो लुक्' (सू २६१) षट्, षड्। षड्भिः। षड्भ्यः। षड्भ्यः। 'षट्चतुर्भ्यश्च' (सू ३३८) इति नुट्। 'अनाम्' इति पर्युदासान्न ष्टुत्वनिषेधः। 'यरोऽनुनासिके–' (सू ११६) इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' (वा ५०१७) इति वचनान्नित्यमनु-

---

इत्यर्थः। 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तत इति भावः। **घृतस्पृक्, घृतस्पृगिति।** घृतं स्पृशतीति विग्रहे क्विन्। उपपदसमासः। सुब्लुक्। घृतस्पृश्शब्दात् सुबुत्पत्तिः। सोर्हल्ङ्यादिलोपः। 'क्विन्प्रत्ययस्य–' इति कुत्वस्यासिद्धत्वात् पूर्वं 'व्रश्च–' इति षः। तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वविकल्प इति भावः। घृतस्पृग्भ्याम्। घृतस्पृक्षु। अथ 'क्विन्प्रत्ययस्य कुः' इत्यत्र 'क्विनः कुः' इत्येतावतैव क्विन्नन्तस्येति लब्धे प्रत्ययग्रहणं क्विन् प्रत्ययो यस्मादिति बहुव्रीहिलाभायेत्युक्तं युजशब्दनिरूपणा-वसरे। तस्य प्रयोजनमाह—**क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपीति।** सति भवतीति शेषः। अनुदके सुप्युपपदे तावत् स्पृशः क्विन् विहितः। अतो निरुपसर्गात् स्पृशेः क्विबेव। तस्य संप्रति क्विन्नन्तत्वाभावेऽपि कुत्वं भवत्येव, बहुव्रीह्याश्रयणेन कदाचित् क्विन्नन्तत्वमात्रेणापि क्विन्प्रत्ययान्तत्वयोग्यतालाभादिति भावः। **षडगकाः प्राग्वदिति।** षत्वजश्त्वकुत्वचर्त्वैरिति भावः॥ इति शान्ताः॥

**अथ षकारान्ता निरूप्यन्ते।** दधृष्शब्दस्य व्युत्पत्तिं दर्शयति—**ञि धृषेति।** 'आदिर्ञिटुडवः' इति ञिः इत्। आकारस्तु 'उपदेशेऽजनुनासिकः–' इति इत्। **ऋत्विगादिनेति।** क्विन्नादित्रयं निपात्यते। क्विनि लुप्ते धृष् इत्यस्य द्वित्वम्। 'उरत्' रपरत्वम्। हलादिः शेषः। कित्त्वान्न लघूपधगुणः, दधृष् इति रूपम्। 'ञ्नि-त्यादिर्नित्यम्' इत्याद्युदात्तनिवृत्त्यर्थमन्तोदात्तनिपातनम्। **कुत्वात्पूर्वमिति।** जश्त्वं प्रति कुत्वस्यासिद्धत्वात् प्रथमं जश्त्वेन षस्य डकार इत्यर्थः। **गः क इति।** 'क्विन्प्रत्य-यस्य–' इति डस्य कुत्वेन गकारः, तस्य चर्त्वेन ककार इत्यर्थः। **रत्नमुडिति।** 'मुष स्तेये' क्विप्, उपपदसमासः सुब्लुक्, हल्ङ्यादिलोपः, जश्त्वचर्त्वे इति भावः। षष्-

---

तीति उदकस्पर्शः। निषेधसामर्थ्यादिह क्विबपि न भवति, तस्मिन् हि सति क्विन्प्र-त्ययो यस्मादिति बहुव्रीह्याश्रयणेन कुत्वस्यावर्जनीयतया 'अनुदके' इति निषेधस्य फलाभावात्। केचित्तु उदकस्पृडिति प्रत्युदाहरन्ति, निषेधसामर्थ्यात् कुत्वं मास्तु

**नासिकः । षण्णाम् । षट्त्सु, षट्सु । तदन्तविधिः । परमषट् । परमषण्णाम् । गौणत्वे तु प्रियषषः । प्रियषषाम् । रुत्वं प्रति षत्वस्यासिद्धत्वात् 'ससजुषो रुः' (सू १६२) इति रुत्वम् । ४३३ वोरुपधाया दीर्घ इकः । (८-२-७६) रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते । पिपठीः, पिपठिषौ, पिपठिषः । पिपठीर्भ्याम् । 'वा शरि' (सू १५१) इति वा विसर्जनीयः । ४३४ नुम्विसर्जनीय-**

---

शब्दो नित्यं बहुवचनान्तः । तस्य बहुवचनेष्वेव रूपाणि दर्शयति—**षड्भ्यो लुगिति ।** अनेन जश्शसोः लुकि जश्त्वचर्त्वे इति शेषः । **तदन्तविधिरिति ।** 'षड्भ्यो लुक्, षट्चतुर्भ्यश्च' इत्यनयोराङ्गत्वादिति भावः । प्रियाः षड् यस्येति बहुव्रीहौ प्रियषष्शब्दस्य एकद्विबहुवचनानि सन्ति । प्रियषट्, प्रियषड्, प्रियषषौ, प्रियषषः—इत्यादि रत्नमुष्शब्दवत् । तत्र 'षड्भ्यो लुक्' इति 'षट्चतुर्भ्यश्च' इति च लुङ्नुटावाशङ्क्य आह—**गौणत्वे त्विति ।** 'षड्भ्यः' इति 'षट्चतुर्भ्यः' इति च बहुवचननिर्देशबलेन तदर्थप्राधान्य एव लुङ्नुटोः प्रवृत्तेरिति भावः । पठितुमिच्छतीत्यर्थे 'पठ व्यक्तायां वाचि' इति धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सन्प्रत्यये 'सन्यङोः' इति द्वित्वे हलादिशेषे 'सन्यतः' इत्यभ्यासस्य इत्त्वम्, सन इट्, षत्वम्, 'सनाद्यन्ताः—' इति धातुत्वम् । पिपठिष इत्यस्मात् क्विप्, 'अतो लोपः', पिपठिष् इति षकारान्तम् । कृदन्तत्वात् प्रातिपदिकत्वम्, ततः सुः, तत्र विशेषं दर्शयति—**रुत्वं प्रतीति ।** 'क्वौ लुप्तं न स्थानिवत्' इति निषेधाद्धल्ङ्यादिलोपे कृते 'ससजुषो रुः' इति रुत्वम् । न च सकाराभावः शङ्क्यः, रुत्वं प्रति षत्वस्यासिद्धत्वादित्यर्थः ।

**वोरुपधायाः ।** र् च, व् च वौ तयोरिति विग्रहः । 'सिपि धातो रुर्वा' इत्यतो धातोरित्यनुवर्तते । वोरिति तद्विशेषणम् । तदन्तविधिः । 'पदस्य' इत्यधिकृतम् । 'स्कोः संयोगाद्योः—' इत्यतः अन्ते इत्यनुवर्तते । तदाह—**रेफेत्यादिना । पिपठीरिति ।** ठकारादिकारस्य दीर्घे रेफस्य विसर्गे इति भावः । **पिपठीर्भ्यामिति ।** 'स्वादिषु—' इति पदत्वाद् 'वोरुपधायाः—' इति भ्यामादौ पदान्तत्वलक्षणो दीर्घ इति भावः । सुपि विशेषमाह—**वा शरीति ।** पिपठिष् सु इति स्थिते षत्वस्यासिद्धत्वाद्रुत्वे, दीर्घे, विसर्जनीये, तस्य सत्वं बाधित्वा 'वा शरि' इति विकल्पेन विसर्जनीयः । तदभावपक्षे विसर्जनीयस्य सत्वमित्यर्थः । तत्र विसर्जनीयपक्षे पिपठीः सु इति स्थिते, इण्कवर्गाभ्यां परत्वाभावाद् 'आदेशप्रत्यययोः' इति षत्वे अप्राप्ते । **नुम्विसर्जनीय ।** 'इण्कोः'

---

क्विप् स्यादेवेति तेषामाशयः ॥ इति शान्ताः ॥ **गौणत्वे त्विति ।** 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इति बहुवचननिर्देशात् षडर्थप्राधान्ये एव लुग्नुटौ भवत इति भावः । पिपठिषतेः क्विप्यतो लोपे कृदन्तत्वात् स्वाद्युत्पत्तौ पिपठिष् सु इति स्थिते सोर्हल्ङ्या-

**शर्व्यवायेऽपि।** (८-३-५८) एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। ष्टुत्वेन पूर्वस्य षत्वम्। पिपठीष्षु, पिपठीःषु। 'प्रत्येकम्' इति व्याख्यानादनेकव्यवधाने षत्वं न। निंस्स्व। निंस्से। नुम्ग्रहणं नुम्स्थानिका-

---

इति, 'मूर्धन्यः' इति चानुवर्तते। तदाह—**एतैः प्रत्येकमित्यादिना।** अत्र प्रत्येकमेव नुमादिभिर्व्यवधानं विवक्षितम्। न तु 'अट्कुप्वाङ्–' इतिवत् यथासंभवं व्यवधानमिति भाष्ये स्पष्टम्। ततश्च प्रकृते विसर्जनीयपक्षे तेन व्यवधानेऽपि षत्वमिति भावः। विसर्जनीयस्य सत्वपक्षे आह—**ष्टुत्वेनेति।** पिपठीस् सु इति स्थिते प्रथमसकारेण शरा व्यवायमाश्रित्य ईकारादिणः परत्वाद् द्वितीयसकारस्य षत्वे सति पूर्वस्य सकारस्य ष्टुत्वेन षकारः, न तु 'आदेशप्रत्यययोः' इति षः। अपदान्तस्य इत्यनुवृत्तेरिति भावः। एवं च 'नुम्शर्व्यवायेऽपि' इत्येव सिद्धे विसर्जनीयग्रहणं व्यर्थमित्याहुः। अयोगवाहानां शर्ष्वपि पाठादिह विसर्जनीयग्रहणं भाष्ये प्रत्याख्यातम्। **निंस्स्वेति।** 'णिसि चुम्बने' लुग्विकरणः। 'णो नः' इति णस्य नः, इदित्त्वान्नुम्। अनुदात्तेत्त्वादात्मनेपदम्। लोण्मध्यमपुरुषैकवचनं थास्, 'थासः से' 'सवाभ्यां वामौ' इत्येकारस्य वत्वम्। निन्स् स्व इति स्थिते 'नश्चापदान्तस्य–' इत्यनुस्वारे निंस्स्वेति रूपम्। अत्र यथासंभवं व्यवधानाश्रयणे तु नुम्स्थानिकानुस्वारेण सकारेण च व्यवहितस्य द्वितीयसकारस्य षत्वं स्यात्। अतः प्रत्येकं व्यवधानमाश्रितमिति भावः। **निंस्से इति।** उक्तधातोर्लण्मध्यमपुरुषैकवचनं थास्। तस्य 'थासः से' इति सेआदेशः। निंस्से इत्यत्रापि द्वितीयसकारस्य षत्वं न भवति, प्रत्येकमेव व्यवधानाश्रयणादिति भावः। 'हिसि हिंसायाम्' सुपूर्वादस्मात् क्विप्, इदित्त्वान्नुम्, ततः सप्तमीबहुवचने सुहिन्स् सु इति स्थिते प्रथमसकारस्य संयोगान्तलोपे सुहिन्सु इति रूपम्। 'स्वादिषु–' पदान्तत्वाद् 'नश्चापदान्तस्य–' इत्यनुस्वारो न। किं च पुम्शब्दात् सप्तमीबहुवचने पुंस् सु इति स्थिते प्रथमसकारस्य संयोगान्तलोपे पुंसु इति रूपम्। तत्र सुहिन्सु इत्यत्र नुमा व्यवधानात् षत्वं स्यात्। नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वे पुंसु इत्यत्र षत्वं स्यादित्यत आह—**नुम्ग्रहणमिति।**

---

दिलोपे प्रत्ययलक्षणेन पदान्तत्वात्सस्य रुर्भवति। न च रुत्वे कर्तव्ये अल्लोपस्य स्थानिवत्त्वं शङ्क्यम्, पूर्वत्रासिद्धे तन्निषेधात्। **नुम्विसर्जनीय।** 'इण्कोः' इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम्। **ष्टुत्वेन पूर्वस्येति।** सनः सस्य रुत्वविसर्गयोः कृतयोः 'वा शरि' इति विकल्पात् पक्षे सकारस्तेन शर्व्यवाये सुपः सस्य षत्वम्, पूर्वस्य ष्टुत्वम्, न तु 'आदेशप्रत्यययोः' इति षः, 'पदान्तस्य' इति निषेधादिति भावः। एवं स्थिते शर्ग्रहणेन न प्रयोजनम्, किं तु 'नुम्विसर्जनीयव्यवायेऽपि' इत्येव सूत्रं युक्तमित्येके। 'नुम्शर्व्यवायेऽपि' इत्येव युक्तं सूत्रयितुम्, शर्ग्रहणेन विसर्जनीयस्य लाभादि-

नुस्वारोपलक्षणार्थं व्याख्यानात् । तेनेह न—सुहिन्सु । पुंसु । अत एव न शर्ग्रहणेन गतार्थता । 'रात्सस्य' (सू २८०) इति सलोपे विसर्गः । चिकीः, चिकीर्षौ, चिकीर्षः । 'रोः सुपि' (सू ३३१) इति नियमान्न विसर्गः । चिकीर्षु । 'दमेर्डोस्' (उ २२७) । डित्त्वसामर्थ्याट्टिलोपः । षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ ।

---

**व्याख्यानादिति** । प्रकृतसूत्रे 'हयवरट्' सूत्रे च भाष्ये तथा व्याख्यानादित्यर्थः । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थमित्येतत् सूत्राक्षरानुगतमित्याह—**अत एव न शर्ग्रहणेन गतार्थतेति** । नुम्ग्रहणस्य नुम्स्थानिकानुस्वारोपलक्षणार्थत्वादेव शर्ग्रहणेन नुम्ग्रहणस्य गतार्थता—लब्धप्रयोजनता नेत्यर्थः । नुम्ग्रहणस्य केवलानुस्वारोपलक्षणार्थत्वे तु शर्ग्रहणेनैव सिद्धत्वात् तद्ग्रहणमनर्थकं स्यात्, अनुस्वारस्य शर्ष्वपि पाठादिति भावः । **चिकीरिति** । कृधातोस्सनि 'इको झल्' इति सनः कित्त्वादृकारस्य गुणाभावे 'अज्झनगमां सनि' इति दीर्घः । ततः 'ॠत इद्धातोः' इति इत्त्वम्, 'हलि च' इति दीर्घः । ततः 'सन्यङोः' इति द्वित्त्वम्, हलादिशेषः, ह्रस्वः, 'कुहोश्चुः' इत्यभ्यासककारस्य चुत्वम्, सस्य षत्वम्, चिकीर्ष इति रूपम् । 'सनाद्यन्ताः–' इति धातुत्वात्ततः क्विप्, 'अतो लोपः', चिकीर्ष् इत्यस्मात् षकारान्तात् सुबुत्पत्तौ सोर्हल्ङ्यादिलोपे चिकीर्ष् इति स्थितम् । एतावत् सिद्धवत्कृत्य 'रात्सस्य' इति नियमात् षकारस्य संयोगान्तलोपाभावमाशङ्क्य आह—**रात्सस्येति** । षत्वस्यासिद्धत्वादिति भावः । एवं चिकीर्भ्यामित्याद्यूह्यम् । विसर्गमाशङ्क्य आह—**रोः सुपीति** । प्रकृते रपरत्वसम्पन्नस्य रस्य रुत्वाभावादिति भावः । **दमेर्डोसिति** । औणादिकमेतत्सूत्रम् । 'दमु उपशमे' इत्येतस्माद्धातोर्डोस्प्रत्ययः स्यादित्यर्थः । डकार इत् । **डित्त्वसामर्थ्यादिति** । 'टेः' इति भस्य विहितष्टिलोप इह भत्वाभावेऽपि डित्त्वसामर्थ्याद् भवतीत्यर्थः । सकारस्य प्रत्ययावयवत्वात् षत्वम्, दोष् इति षकारान्तं रूपम् । ततः सोर्हल्ङ्यादिलोपः । एतावत् सिद्धवत्कृत्य आह—**षत्वस्यासिद्धत्वाद्रुत्वविसर्गाविति** । षत्वस्यासिद्धत्वाद्रुत्वे सति विसर्गः ।

---

त्यन्ये । **निंस्स्वेति** । आद्यसकारस्य प्रत्येकं व्यवधानेऽपि आदेशप्रत्ययावयवत्वाभावात् षत्वं न भवति । न चात्र 'आदेशप्रत्यययोः' इत्यनुवृत्त्यभावात् 'नुम्विसर्जनीय–' इत्यनेन धातुसकारस्य षत्वं स्यादिति वाच्यम्, तस्य स्वातन्त्र्येण विधायकत्वानङ्गीकारात् । 'अपदान्तस्य मूर्धन्यः' 'इण्कोः' इतिवत् 'नुम्विसर्जनीय–' इत्यस्याप्यधिकारसूत्रत्वात् । कर्तुमिच्छति चिकीर्षति । चिकीर्षतेः क्विप्प्रत्ययः । चिकीः । 'एकाच उपदेशे–' इति 'सनि ग्रहगुहोश्च' इति वा सन इडभावे, 'इको झल्' इति कित्वाद्गुणाभावे 'अज्झनगमां सनि' इति दीर्घे 'ॠत इत्–' इतीत्वे रपरत्वम्, ततो द्वित्वम्,

दोः, दोषौ, दोषः। 'पद्दन्नो-' (सू २२८) इति वा दोषन्। दोष्णः। दोष्णा। दोषः। दोषा। 'विश प्रवेशने'। सन्नन्तात्क्विप्। कत्वस्यासिद्धत्वात्संयोगान्तलोपः। 'व्रश्च-' (सू २९४) इति षः। जश्त्वचर्त्वे। विविट्, विविड्, विविक्षौ, विविक्षः। स्कोः-'(सू ३८०) इति कलोपः। तट्, तड्, तक्षौ, तक्षः। गोरट्, गोरड्, गोरक्षौ, गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु 'स्कोः-' (सू ३८०) इति

---

वा दोषन्निति। शसादाविति शेषः। दोष्ण इति। शसि दोषन्नादेशे 'अल्लोपोऽनः' इत्यकारलोपे 'रषाभ्याम्-' इति णत्वमिति भावः। दोष्षु, दोःषु। विविक्ष्शब्दं व्युत्पादयति—विशेति। सन्नन्तादिति। वेष्टुमिच्छतीति विग्रहे विशेः सन् 'हलन्ताच्च' इति सनः कित्वान्न लघूपधगुणः। 'सन्यङोः' इति द्वित्वम्। हलादिः शेषः। शकारस्य झल्परकत्वाद् 'व्रश्च-' इति षः। 'षढोः कः सि' इति षस्य कः। प्रत्ययावयवत्वात् सस्य षत्वम्। 'सनाद्यन्ताः-' इति धातुत्वात् क्विप्। 'अतो लोपः' विविक्ष् इति षकारान्तं रूपमित्यर्थः। कत्वस्येति। विविक्ष् इत्यस्मात् सोर्हल्ङ्यादिलोपे षकारस्य संयोगान्तलोपः। 'स्कोः-' इति ककारलोपस्तु न शङ्क्यः, संयोगादिलोपे कर्तव्ये 'षढोः कः सि' इति कत्वस्यासिद्धत्वादित्यर्थः। व्रश्चेति ष इति। संयोगान्तलोपे सति सकारस्य निमित्तस्य निवृत्त्या कत्वस्यापि निवृत्तौ, झल्परत्वनिवृत्त्या पूर्वप्रवृत्तषत्वस्यापि निवृत्तौ, पदान्तत्वाद् 'व्रश्च-' इति शस्य ष इत्यर्थः। जश्त्वचर्त्वे इति। षस्य जश्त्वेन डः, तस्य चर्त्वविकल्प इत्यर्थः।

स्कोरिति। 'तक्षू तनूकरणे' अस्मात् क्विप् ततस्सोर्हल्ङ्यादिलोपे 'स्कोः-' इति कलोपे षस्य जश्त्वेन डः, तस्य चर्त्वविकल्प इत्यर्थः। तड्भ्याम्। तट्त्सु, तट्सु गोरडिति। 'रक्ष पालने' इत्यस्मात् कर्मण्युपपदे अणि प्राप्ते, वाऽसरूपन्यायेन क्विपि सुबुत्पत्तौ तक्ष्शब्दवद्रूपम्। तक्षिरक्षिभ्यामिति। इका निर्देशोऽयम्। तक्ष् रक्ष् धातुभ्यां 'हेतुमति च' इति णिच्, चकार इत्। 'चुटू' इति णकार इत्। ततः 'सनाद्यन्ताः-' इति धातुत्वात् क्विपि 'णेरनिटि' इति णिलोपे क्विपि लुप्ते तक्ष्, रक्ष् इति षकारान्ते रूपे। ततः सुलोपे सति संयोगान्तलोपापवादः 'स्कोः संयोगाद्योः-' इति कका-

---

'हलादिः शेषः' 'कुहोश्चुः' अल्लोपः। सोर्हल्ङ्यादिलोपे पदान्तत्वाद् 'र्वोरुपधायाः-' इति दीर्घः। दोरिति। दाम्यतीति दोः। संयोगान्तलोप इति। न चास्मिन् कर्तव्ये बहिरङ्गत्वेनातो लोपस्यासिद्धत्वं शङ्क्यम्, बहिर्निमित्तापेक्षपदसंज्ञासापेक्षत्वेन संयोगान्तलोपस्यैव बहिरङ्गत्वादिति दिक्। विविडिति। विशेः सन् 'एकाचः-' इतीण्निषेधे 'हलन्ताच्च' इति कित्त्वाद् गुणाभावः। द्वित्वाभ्यासकार्ये। तडिति। 'तक्षू त्वक्षू तनूकरणे' इत्यस्मात् क्विप्। गां रक्षतीति गोरट्। कर्मण्युपपदे 'वाऽसरूप-'

---

१ अयं पाठो बालमनोरमानुरोधेन। क्वचित्तु 'षत्वस्यासिद्धत्वात्' इति पाठः।

न प्रवर्तते, णिलोपस्य स्थानिवद्भावात् । 'पूर्वत्रासिद्धे न स्थानिवत्' (वा ४३३) इति त्विह नास्ति, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' (वा ४४०) इति निषेधात् । तस्मात्संयोगान्तलोप एव । तक्, तग् । गोरक्, गोरग् । 'स्कोः-' (सू ३८०) इति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगान्तलोपः । पिपक्, पिपग् । एवं विवक् । दिधक् ॥ इति षान्ताः ॥ 'पिस गतौ' सुष्ठु पेसतीति सुपीः, सुपिसौ, सुपिसः । सुपिसा, सुपीर्भ्याम् । सुपीःषु, सुपीष्षु । एवं सुतूः । 'तुस खण्डने' । विद्वान्, विद्वांसौ, विद्वांसः । हे विद्वन् । विद्वांसम्, विद्वांसौ । ४३५ वसोः

---

रस्य लोपो न प्रवर्तत इत्यर्थः । **णिलोपस्येति** । 'णेरनिटि' इति णिलोपस्य 'अचः परस्मिन्-' इति स्थानिवत्त्वादित्यर्थः । **तस्य दोष इति । तस्मादिति** । 'स्कोः-' इत्यस्याप्रवृत्तेरित्यर्थः । सति च षकारस्य संयोगान्तलोपे ककारस्य जश्त्वचर्त्वे इत्यभिप्रेत्य आह—**तक्, तग् । गोरक्, गोरगिति** । 'डुपचष् पाके' अस्मात् सनि 'सन्यङोः' इति द्वित्वम् । हलादिशेषः । 'सन्यतः' इत्यभ्यासाकारस्य इत्वम् । 'चोः कुः' इति चकारस्य कुत्वम् । प्रत्ययावयवत्वात् सस्य षः । पिपक्ष् इति रूपम् । ततः सोर्लोपे 'स्कोः-' इति ककारस्य लोपमाशङ्क्य आह—**कुत्वस्यासिद्धत्वादिति** । चकारस्थानिकस्येति शेषः । सति च षकारस्य संयोगान्तलोपे झल्परत्वनिवृत्त्या पूर्वप्रवृत्तककारस्य निवृत्तौ पदान्तत्वात् कुत्वे जश्त्वचर्त्वे इत्यभिप्रेत्य आह—**पिपक्, पिपगिति** । पिपक्षौ, पिपक्षः-इत्यादि । **एवं विवगिति** । वक्तुमिच्छतीति विग्रहे 'वच परिभाषणे' इत्यस्माद् विवक्षशब्दः पिपक्षशब्दवदित्यर्थः । **दिधगिति** । दग्धुमिच्छतीत्यर्थे 'दह भस्मीकरणे' इत्यस्मात्सनि द्वित्वे हलादिशेषे अभ्यासेत्त्वे दिदह्स् इति स्थिते 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशः-' इति दकारस्य धत्वे दिधघ्स इति घकारस्य चर्त्वेन ककारे प्रत्ययावयवत्वात् सस्य षत्वे ततः क्विपि अतो लोपे दिधक्ष् इति रूपम् । तस्मात् सुबुत्पत्तौ सोर्लोपे चर्त्वस्यासिद्धत्वाद् 'स्कोः-' इत्यभावे षकारस्य संयोगान्तलोपे खर्परत्वाभावात् पूर्वप्रवृत्तककारस्य निवृत्तौ पदान्तत्वात् जश्त्वचर्त्वे इति भावः । दिधक्षौ दिधक्षः-इत्यादि ॥ इति षान्ताः ॥

**अथ सकारान्ता निरूप्यन्ते । सुपीरिति** । 'र्वोरुपधायाः-' इति दीर्घः । **एवं सुतूरिति । विद्वानिति** । 'विद ज्ञाने' अदादिः, लटः शत्रादेशे 'विदेः शतु-

---

न्यायेन क्विप् । **कुत्वस्यासिद्धत्वादिति** । इतरथा 'स्कोः-' इति कलोपः स्यादिति भावः । **पिपगिति** । पक्तुमिच्छति पिपक् । वक्तुमिच्छति विवक् । 'दादेः-' इति घः । 'एकाचो बशो-' इति भष्भावः । दग्धुमिच्छतीति दिधक् ॥ इति षान्ताः ॥ **सुतूरिति** । सुष्ठु तोसतीति सुतूः । वेत्तीति विद्वान् । 'विदेः शतुर्वसुः' । अदादित्वा-

**सम्प्रसारणम्।** (६-४-१३१) वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। पूर्वरूपं षत्वम्। विदुषः। विदुषा। 'वसुस्रंसु-' (सू ३३४) इति दत्वम्। विद्वद्भ्याम् इत्यादि। सेदिवान्, सेदिवांसौ, सेदिवांसः। सेदिवांसम्। अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते, 'अकृतव्यूहाः-' (प ५७) इति परिभाषया। सेदुषः।

---

वेसुः' शित्त्वात् सार्वधातुकत्वात् शप्, लुक्। 'सार्वधातुकमपित्' इति ङित्त्वान्न लघूपधगुणः। कृदन्तत्वात् प्रातिपदिकत्वं विद्वस्शब्दः। तस्मात् सुः, उगित्वान्नुम्, 'सान्तमहतः-' इति दीर्घः, सुलोपः, सस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो नेति भावः। सान्तत्वाभावाद् 'वसुस्रंसु-' इति दत्वं न। **विद्वांसाविति**। सुटि नुमि कृते 'सान्तमहतः-' इति दीर्घः, 'नश्च-' इत्यनुस्वार इति भावः। शसादावचि विशेषमाह—**वसोः संप्रसारणम्**। प्रत्ययग्रहणपरिभाषया वसोरिति तदन्तग्रहणम्। 'भस्य' इत्यधिकृतम्। तदाह—**वस्वन्तस्येति**। **पूर्वेति**। शसि वकारस्य उत्वे विदु अस् इति स्थिते, 'संप्रसारणाच्च' इति पूर्वरूपे विदुस् इति स्थिते, प्रत्ययावयवत्वात् सस्य षत्वमित्यर्थः। 'षत्वतुकोरसिद्धः' इति पूर्वरूपस्यासिद्धत्वं न शङ्क्यम्, पदान्तपदाद्योरेकादेश एव तत्प्रवृत्तेः। सुपि दत्वे चर्त्वम्। विद्वत्सु। **सेदिवानिति**। 'षद्लृ विशरणगत्यवसादनेषु' 'धात्वादेः षः सः', 'भाषायां सदवसश्रुवः' इति लिटः क्वसुः, उकावितौ, 'लिटि धातोः-' इति द्वित्वम्, हलादिशेषः, 'अत एकहल्मध्ये-' इत्येत्त्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम्' इति इट्। सेदिवस्शब्दः। ततः सुः, उगित्त्वान्नुम्, 'सान्तमहतः-' इति दीर्घः, सुलोपः, सस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो न। सान्तवस्वन्तत्वाभावान्न दत्वमिति भावः। **सेदिवांसाविति**। नुमि 'सान्तमहतः-' इति दीर्घः। ननु उक्तरीत्या निष्पन्नात् सेदिवस्शब्दात् शसि 'वसोः संप्रसारणम्' इति वकारस्य उत्वे पूर्वरूपे इकारस्य यणि सेद्युष इति स्यात्। ततश्च सेदुष इति वक्ष्यमाणं रूपमयुक्तम्। न च शसि भविष्यति भविष्यत्संप्रसारणरूपकार्यं पर्यालोच्य पूर्वमेव इट् न प्रवर्तते, पदावधिकान्वाख्यानाभ्युपगमादिति वाच्यम्, एवमपि बहिर्भूतयजाद्यसर्वनामस्थानस्वादिप्रत्ययनिमित्तकभसंज्ञापेक्षतया संप्रसारणस्याङ्गस्य बहिरङ्गत्वेन इडागमस्यैवान्तरङ्गत्वात् प्रथमं प्रवृत्तेः। परादन्तरङ्गस्य बलवत्त्वादित्यत आह—**अन्तरङ्गोऽपीति**। **अकृतेति**। भविष्यता संप्रसारणेन वलादित्वस्य विनाशोन्मुखत्वादिति भावः।

---

च्छपो लुक्। 'सार्वधातुकमपित्' इति ङित्त्वान्नोपधागुणः। उगित्त्वान्नुम्। 'सान्तमहतः-' इति दीर्घः। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। **वसोः**। प्रत्ययग्रहणे तदन्तग्रहणमित्याह—**वस्वन्तस्येति**। **सेदिवानिति**। 'भाषायां सदवसश्रुवः' इति लिटः क्वसुः, 'लिटि धातोः-' इति द्वित्वम्, 'हलादिः शेषः' 'अत एकहल्मध्ये-'

**सेदुषा, सेदिवद्भ्याम्** इत्यादि। 'सान्तमहतः–' (सू ३१७) इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, न तु धातोः, महच्छब्दसाहचर्यात्। सुष्ठु हिनस्तीति **सुहिन्, सुहिंसौ, सुहिंसः**। **सुहिन्भ्याम्** इत्यादि। **सुहिन्त्सु, सुहिन्सु**। **ध्वत्,**

---

वस्तुतस्तु प्रथममपि सेदिवस्शब्दादेव सुबुत्पत्तिरस्तु। तथापि वकारस्य संप्रसारणे उत्वे कृते, यणि सत्यपि संप्रसारणस्य बहिरङ्गत्वेनासिद्धत्वाद् 'लोपो व्योः–' इति लोपे सेदुष इति रूपं सिद्धम्। न च 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति निषेधः शङ्क्यः। उत्तरकालप्रवृत्तिके अजानन्तर्य एव तत्प्रवृत्तेरभ्युपगमात्। इह च उत्तरकालप्रवृत्तिके वलि लोपे तदभावात्। किंच कृते इटि संप्रसारणप्रवृत्तावपि वलादित्वरूपनिमित्तनिवृत्त्या इटो निवृत्तौ सेदुष इति निर्बाधम्, 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायात्। किंच पदावधिकान्वाख्यानेऽपि सेद्वस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् प्रथमं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नास्तीति सेदुष इति निर्बाधमित्याहुः। **सेदुषा, सेदिवद्भ्यामित्यादीति**। सेदिवत्सु। 'हिसि हिंसायाम्' इदित्त्वान्नुम्, सुपूर्वात्क्विप्, इदित्त्वान्नलोपो न, 'नश्च–' इत्यनुस्वारः, सुहिंस्शब्दात्सोर्लोपः, सकारस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो न, नापि 'सर्वनामस्थाने च–' इति दीर्घः। निमित्तापायादनुस्वारनिवृत्तिः। सुहिन् इति सौ रूपं वक्ष्यति। तत्र 'सान्तमहतः–' इति दीर्घमाशङ्क्य आह—**सान्तेति**। **सुहिन्भ्यामिति**। 'स्वादिषु–' इति पदान्तत्वात् सस्य संयोगान्तलोपे निमित्तापायादनुस्वारनिवृत्तिरिति भावः। **सुहिन्स्विति**। संयोगान्तलोपे अनुस्वारनिवृत्तिः। सुपः सकारमाश्रित्य पुनरनुस्वार-

---

इत्येत्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम्' इतीट्, नुम्, 'सान्त' इति दीर्घः। **सेदुष इति**। ननु 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया 'विदेः शतुर्वसुः' इत्यस्यैव वसोः संप्रसारणं युक्तम्, न तु क्वसोः। सत्यम्, वसोरुकारानुबन्धकरणं क्वसोः सामान्यग्रहणार्थम्। उगित्त्वस्य स्थानिवद्भावेनापि सिद्धेः। इह गमिप्रभृतिभ्यः क्वसुर्नोदाहृतः, छान्दसत्वात्। अत एव वैदिकप्रक्रियायां तस्थिवान् जग्मिवान् इत्याद्युदाहर्तव्यं नात्रेत्याहुः। कवयस्तु प्रयुञ्जते—'श्रेयांसि सर्वाण्यधिजग्मुषस्ते'। 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादि। अत्र वदन्ति—छान्दसा अप्येते पद्न्नसादय इव क्वचिद् भाषायां भवन्ति, 'मासश्छन्दसि' इत्यस्य सामान्यापेक्षज्ञापकत्वाश्रयणात्कथंचित्समाधेयमिति। **सुहिनिति**। संयोगान्तलोपस्यासिद्धत्वान्नोपधादीर्घः। **सुहिन्त्स्विति**। 'नश्च' इति सस्य वा धुट्। ध्वंसत इति ध्वत्। स्रंसत इति स्रत्। 'स्रंसु ध्वंसु अवस्रंसने' 'ध्वंसु गतौ च' इत्याभ्यां क्विप्। 'अनिदिताम्–' इति नलोपः, 'वसु-

ध्वद्, ध्वसौ, ध्वसः। ध्वद्भ्याम्। एवं स्रत्। ४३६ **पुंसोऽसुङ्**। (७-१-८९) सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। असुङ उकार उच्चारणार्थः। 'बहुपुंसी' इत्यत्र 'उगितश्च' ( सू ४५५ ) इति ङीबर्थं कृतेन 'पूञो ड्डुंसुन्'

---

स्तु न, पदान्तत्वात्। **ध्वदिति**। 'ध्वंसु अवस्रंसने' कृतानुस्वारनिर्देशः। क्विप्, अनुस्वारस्यासिद्धत्वाद् 'अनिदिताम्–' इति नलोपः। सोर्लोपः। 'वसुस्रंसु–' इति दत्वम्। 'वाऽवसाने' इति चर्त्वविकल्प इति भावः। **एवमिति**। 'स्रंसु अवस्रंसने' क्विबादि पूर्ववदिति भावः। 'पूञ् पवने' अस्मात् 'पूञो ड्डुंसुन्' इति उणादिसूत्रेण ड्डुंसुन्प्रत्ययः। डकारो नकार उकारश्च इत्। डित्वसामर्थ्यादभस्यापि टेर्लोपः। पुंस्शब्दात् सुबुत्पत्तिः। तत्र सुटि विशेषमाह—**पुंसोऽसुङ्**। 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—**सर्वनामस्थान इति**। पुंसः असुङ् स्यात् सर्वनामस्थाने–इति फलितम्। ननु तत्पुरुषात् परमपुंस्शब्दात् सुटि असुङादेशात् प्रागेव 'समासस्य' इत्यन्तोदात्तत्वं पकारादुकारस्य स्यात्। सर्वनामस्थानोत्पत्तेः प्रागेव समासस्वरस्य अन्तरङ्गत्वात् प्राप्तेः। इष्यते तु असुङि कृते परमपुमस् इत्यत्र मकारादकारस्य। अत आह—**विवक्षित इति**। 'पुंसोसुङ्' इत्यत्र सर्वनामस्थाने इति न परसप्तमी, किं तु विवक्षिते इत्यध्याहृत्य सर्वनामस्थाने प्रयोक्तुमिष्टे सति ततः प्रागेव असुङित्यर्थ आश्रीयते। एवं च सर्वनामस्थानोत्पत्तेः प्रागेव असुङि कृते 'समासस्य' इत्यन्तोदात्तत्वं परमपुमस् इत्यत्र मकारादकारस्य भवतीति न दोष इति भावः। न च परसप्तमीपक्षेऽपि सर्वनामस्थानोत्पत्तेः प्रागन्तरङ्गोऽपि समासस्वरः पकारादुकारस्य अकृतव्यूहपरिभाषया न भवति, असुङि कृते पकारादुकारस्य समासान्ततायाः प्रनङ्क्ष्यत्त्वादिति वाच्यम्, विवक्षित इत्यर्थाश्रयणेनैव सिद्धे अकृतव्यूहपरिभाषाया अस्वीकार्यत्वादिति भावः। अत्र असुङि उकार इत् उदित्कार्यार्थ इति प्राचीनमतं दूषयितुमाह—**असुङ उकार उच्चारणार्थ इति**। न त्वित्संज्ञकः, प्रयोजनाभावादिति भावः। ननु उदित्कार्यमस्ति प्रयोजनमित्यत आह—**पूञो ड्डुंसुन्निति प्रत्ययस्य उगित्त्वेनैव नुम्सिद्धेरिति**। ननु विनिगमनाविरह इत्यत आह—**बहुपुंसीत्यत्र उगितश्च इति ङीबर्थं कृतेनेति**। बहवः पुमांसो यस्याम् इति बहुव्रीहौ सुब्लुकि निमित्ता-

---

स्रंसु–' इति दत्वम्। **पुंसोऽसुङ्**। 'इतोऽत्सर्वनामस्थाने' इत्यनुवर्तनादाह—**सर्वनामस्थान इति**। **विवक्षित इति**। तेन परमपुमानित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ् एवाकारस्य भवति। परसप्तम्यां तु नैतत्सिध्येत्। सर्वनामस्थानोत्पत्तेः प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते स्रंसनधर्मिणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात्। न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यते

**इति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ, पुमांसः । पुंसः । पुंसा, पुम्भ्याम्, पुम्भिः इत्यादि । पुंसि । पुंसु । 'ऋदुशन–' (सू २७६) इत्यनङ् । उशना, उशनसौ, उशनसः । 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः'**

---

पायादसुङो निवृत्तौ बहुपुंस्शब्दादुगित्त्वाद् ङीपि बहुपुंसीशब्दः । अत्र ङीपः ऽसर्वनामस्थानत्वात्तस्मिन् विवक्षिते असुङः प्राप्तिरेव नास्ति । डुंसुन उगित्त्वादेव ङी वक्तव्यः । तदर्थं डुंसुन उगित्त्वमावश्यकम् । तेनैव नुमोऽपि सिद्धत्वाद् असुङ उकार उच्चारणार्थ इति भावः । यद्यप्युणादिषु 'पातेर्डुंसुन्' इति वक्ष्यते, तथापि पाठान्तरमिदं द्रष्टव्यम् । 'स्त्रियाम्' इति सूत्रभाष्यकैयटयोस्तु सूतेः सस्य पः, ऊकारस्य ह्रस्वः, म्सुन् प्रत्यय इत्युक्तम् । **पुमानिति** । डुंसुन् इति कृतानुस्वारनिर्देशः । ततश्च पुंस्शब्दात् सौ विवक्षिते असुङ् । ङकार इत्, उकार उच्चारणार्थः, 'ङिच्च' इत्यन्तादेशः । निमित्तापायादनुस्वारनिवृत्तौ पुमस् सुः, उगित्त्वान्नुम्, 'सान्तमहतः–' इति दीर्घः, सोर्लोपः सस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो नेति भावः । **हे पुमन्निति** । 'सान्तमहतः–' इत्यत्र 'असंबुद्धौ' इत्यनुवृत्तेः न दीर्घ इति भावः । **पुमांसाविति** । असुङि पुमस् औ इति स्थिते नुमि 'सान्त–' इति दीर्घः । 'नश्च–' इति नुमोऽनुस्वार इति भावः । **पुंसः । पुंसेति** । शसादावसर्वनामस्थानत्वादसुङभावे रूपम् । यय्परत्वाभावान्न परसवर्ण इति भावः । **पुम्भ्यामिति** । सस्य संयोगान्तलोपे निमित्तापायादनुस्वारनिवृत्तौ भकारमाश्रित्य पुनरनुस्वारे परसवर्णे रूपमिति भावः । **इत्यादीति** । पुंसे । पुंसः । पुंसोः । **पुंसीति** । अत्र यय्परत्वाभावान्न परसवर्णः । नुम्स्थानिकानुस्वारस्यैवोपलक्षणाद् 'नुम्विसर्जनीय–' इति षत्वं नेति भावः ।

'वश कान्तौ' अस्माद् 'वशेः कनसिः' इति कनसिप्रत्ययः । ककार इत् । इकार उच्चारणार्थः । 'ग्रहिज्या–' इति संप्रसारणम् । उशनस्शब्दः । तस्य सौ विशेषमाह— **ऋदुशनेत्यनङिति** । ङकार इत्, अकार उच्चारणार्थः, ङित्वादन्तादेशः । उशनन् स इति स्थिते उपधादीर्घः, हल्ङ्यादिना सुलोपः, नलोपः । उशना इति रूपमिति भावः । यद्यपि वशधातुश्छान्दस इति लुग्विकरणे वक्ष्यते, तथापि तत् प्रायिकम्, 'वष्टि भागुरिः–' इत्यादिनिर्देशात्, 'उशना भार्गवः कविः' इति कोशाच्च । **अस्य संबुद्धाविति** । एतच्च वृत्तौ पठितम् । वशधातौ माधवस्तु 'संबोधने तूशनसस्त्रिरूपं

---

असुङश्चान्त्यत्वात्करिष्यत इति वाच्यम्, अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वादिति भावः । वस्तुतस्तु अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषापवादत्वात्परसप्तमीपक्षोऽपि सूपपादः । एतच्च मनोरमायां स्पष्टम् । **पूञ इति** । यद्यप्युणादिषु 'पातेर्डु-

---

१ पुमस्शब्दात्–इति क, ख ।

(वा ५०३७)। हे उशनन्, हे उशन, हे उशनः। उशनोभ्यामित्यादि। अनेहा, अनेहसौ, अनेहसः। हे अनेहः। अनेहोभ्यामित्यादि। वेधाः, वेधसौ, वेधसः। हे वेधः। वेधोभ्यामित्यादि। अधातोरित्युक्तेर्न दीर्घः। सुष्ठु वस्ते सुवः, सुवसौ, सुवसः। पिण्डं ग्रसते पिण्डग्रः, पिण्डग्लः। 'ग्रसु ग्लसु अदने'। **४३७ अदस औ सुलोपश्च। (७-२-१०७)** अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च।

---

सान्तं तथा नान्तमथाप्यदन्तम्' इति श्लोकवार्तिकमित्याह। भाष्यादृष्टत्वादिदमप्रामाणिकमेवेति प्रामाणिकाः। **हे उशनन् इति**। अनङि नलोपाभावे रूपम्। **हे उशनेति**। अनङि नलोपे रूपम्। **हे उशन इति**। अनङभावे रूपम्। **उशनोभ्यामिति**। सस्य रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः'। उशनःसु, उशनस्सु। **अनेहेति**। 'नञि हन एह च-' इति नञि उपपदे हनधातोरसुन्, प्रकृतेरेहादेशश्च, उपपदसमासः, 'नलोपो नञः' 'तस्मान्नुडचि' अनेहस्शब्दः। ततः सुः, अनङ्, सुलोपः, उपधादीर्घः, नलोप इति भावः। हे अनेहः। अनेहोभ्यामित्यादि। **वेधा इति**। 'विधाञो वेध च' विपूर्वाद् धाञ्धातोरसुन् प्रकृतेर्वेधादेशश्च। असुनि उकार उच्चारणार्थः। उगित्वाभावान्न नुम्, ततः सुः, असन्तत्वाद्दीर्घः, सुलोपः, रुत्वविसर्गाविति भावः। 'वस आच्छादने' लुग्विकरणः। सुपूर्वादस्मात् क्विप्, सुवस्शब्दः, ततः सुः, हल्ङ्यादिलोपः, रुत्वविसर्गौ सुव इति रूपं वक्ष्यति। अत्र 'अत्वसन्तस्य-' इति दीर्घमाशङ्क्य आह—**अधातोरित्युक्तेर्न दीर्घ इति**। न च सुवस्शब्दस्य असन्तत्वादधातुत्वाच्च दीर्घो दुर्वार इति वाच्यम्, धात्ववयवभिन्नो यः अस् तदन्तस्य दीर्घ इत्याश्रयणात्। सुवोभ्यामित्यादि। 'वस निवासे' इति भौवादिकस्य तु नेदं रूपम्, तस्य यजादित्वेन संप्रसारणप्रसङ्गात्। पिण्डग्रस्शब्दः सुवस्शब्दवत्।

अदस्शब्दात् सौ त्यदाद्यत्वे प्राप्ते—**अदस औ**। अदस इति षष्ठी। औ इत्यविभक्तिकनिर्देशः। 'तदोः सः सौ-' इत्यतः सावित्यनुवर्तते। तदाह—**अदस औकार इति**। अन्तादेश इत्यलोन्त्यपरिभाषालभ्यम्। सकारस्य औत्वे कृते हलः

---

म्सुन्' इति वक्ष्यति, तथापि पाठान्तरमनुसृत्यात्रोक्तमिति बोध्यम्। **हे पुमन्निति**। असंबुद्धावित्युक्तेः 'सान्त-' इति न दीर्घः। **पुंस्विति**। संयोगान्तलोपे 'मोऽनुस्वारः'। नुम्स्थानिकस्यैवानुस्वारस्योपलक्षणाद् 'नुम्विसर्जनीय-' इति न षत्वम्। **उशनेति**। 'वशेः कनसिः' 'ग्रहिज्या-' इति संप्रसारणम् **अस्य संबुद्धाविति**। एतच्च वाचनिकम्। हरदत्तादयस्त्वाहुः—'सोर्डा' इति वाच्ये 'अनङ् सौ' इति वचनेन क्वचिदनङ एव श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति। यद्यपि सोर्डे कृते डित्त्वसामर्थ्याट्टिलोपे 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घे 'उशाना' इत्यनिष्टरूपं प्रसज्यते, तथाप्यङ्गवृत्तपरिभाषया

'तदोः सः सौ–' (सू ३८१) इति दस्य सः । असौ । **'औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च'** (वा ४४८२) । प्रतिषेधसंनियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ, असुकः । त्यदाद्यत्वम्, पररूपम् , वृद्धिः । 'अदसोऽसेः–' (सू ४१६) इति मत्वोत्त्वे । अमू । 'जसः शी' (सू २१४) । 'आद् गुणः' (सू ६६) ।

**४३८ एत ईद्बहुवचने ।** (८-२-८१) अदसो दात्परस्य एत ईत्स्याद् दस्य च मो

---

परत्वाभावाद् हल्ङ्यादिलोपे अप्राप्ते सुलोपविधिः । **दस्य स इति ।** मुत्वापवाद इति भावः । **असौ इति ।** अदस् स् इति स्थिते सकारस्य औत्वे, सुलोपे, दस्य सत्वे च रूपम् । अथ 'अव्ययसर्वनाम्ना–' इत्यकचिं अदकस्शब्दात् सौ विशेषमाह—**औत्वप्रतिषेध इति ।** 'अदस औ सुलोपश्च' इत्यत्र अदश्शब्देन तन्मध्यपतितन्यायेन अदकस्शब्दस्यापि ग्रहणादौत्वे प्राप्ते विकल्पेन तत्प्रतिषेधो वक्तव्यः । 'तदोः सः सौ–' इति दकारस्य सकारे कृते तस्मात् सकारात् परस्य अकारस्य उकारश्च वा वक्तव्य इत्यर्थः । ततश्च अदकस् स् इति स्थिते, औत्वाभावे दस्य सत्वे सति सकारात् परस्य अकारस्य उत्वे सति त्यदाद्यत्वे पररूपे रुत्वे विसर्गे असुकः इति रूपम् । औत्वप्रतिषेधाभावपक्षे अदकस् स् इति स्थिते, सकारस्य औत्वे सुलोपे दस्य सत्वे असकौ इति रूपं वक्ष्यति । तत्र औत्वप्रतिषेधाभावपक्षे औत्वे कृते सकारादकारस्य उत्वविकल्पः कुतो न स्यादित्यत आह—**प्रतिषेधेति ।** 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति न्यायादिति भावः । अमुकः अमुकशर्मा इत्यादि त्वसाध्वेवेत्याहुः । अदस्शब्दपर्यायः अव्युत्पन्न इत्याहुः । अदस् औ इति स्थिते प्रक्रियां दर्शयति—**त्यदाद्यत्वमिति ।** पररूपमपि बोध्यम् । **मत्वोत्वे इति ।** अदौ इत्यत्र दात् परस्य औकारस्य दीर्घ ऊकारो दस्य मत्वं चेत्यर्थः । जसि त्यदाद्यत्वं पररूपं च सिद्धवत्कृत्य आह—**जसश्शीति ।** आद् गुणे अदे इति स्थितम् । तत्र दकारादेकारस्य ऊत्वे प्राप्ते । **एत ईद्बहुवचने ।** 'अदसोऽसेर्दादु दो मः' इत्यस्माद् 'अदसो

---

दीर्घो नेति कृत्वा ज्ञापकत्वं संगच्छत इति तेषामाशयः । **अनेहा । वेधा इति ।** असुन्प्रकरणे 'नञि हन एह च' 'विधाञो वेध च' इति व्युत्पादनादसन्तत्वेन दीर्घः । अनेहा कालः । वेधाः विश्वसृट् । **अदस औ सुलोपश्च ।** अदस इति षष्ठी । 'तदोः सः सौ–' इत्यतः सावित्यनुवर्तते, तदाह—**औकारोऽन्तादेशः स्यात्सौ पर इति ।** नन्वदस इति पञ्चम्येवास्तु, ततः परस्य सोरेवौकारो विधीयताम् , त्यदाद्यत्वेन असाविति रूपं सिध्यति, किं सुलोपविधानेन । न च स्वरे भेदः, उदात्तेन सहैकादेशे औकारस्योदात्तत्वात् । मैवम् , असकौ स्त्री इत्यत्र टापि 'प्रत्ययस्थात्–' इतीत्वप्रसङ्गात् । **असुक इति ।** औत्वाभावे त्यदाद्यत्वे सादुत्वम् । स्त्रियां तु असुकौ असुक इति, असुकी इति च

बह्वर्थोक्तौ । अमी । 'पूर्वत्रासिद्धम्' ( सू १२) इति विभक्तिकार्यं प्राक्, पश्चादुत्व-

दादिति' 'दो मः' इति चानुवर्तते। तदाह—**अदस इत्यादिना। बह्वर्थोक्ताविति।** सूत्रे बहुवचनशब्दो यौगिकः। पारिभाषिकस्य ग्रहणे तु अमीभिरित्यादिसिद्धावपि अमी इति न सिध्येत्, अदे इत्येकारस्य बहुवचनतया तत्परकत्वाभावादिति भावः। ननु औजसादिषु त्यदाद्यत्वे पररूपे च उत्वमत्वयोः कृतयोः अमुऔ अमुअः—इत्यादि स्यात्। मुत्वस्यासिद्धत्वान्न यणित्याशङ्क्य आह—**पूर्वत्रेति। विभक्तिकार्यमिति।** त्यदाद्य-त्वादिकमित्यर्थः। यदि तु 'पूर्वत्रासिद्धम्' इत्यत्र कार्यासिद्धत्वमिष्येत, तर्हि अमू अमी इत्यादि न सिध्येत्। तथा हि 'पूर्वत्रासिद्धम्' इति सिद्धे असिद्धत्वारोप उच्यते। निर-धिष्ठानश्चासिद्धत्वारोपो न सम्भवति। ततश्च कार्यासिद्धत्वपक्षे सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके मुत्वे कृते सति उत्वस्थानिनः अकारस्यापहारे सति, पश्चाद् मुत्वे अभावप्रतियोगित्वारोपेऽपि 'देवदत्तस्य हन्तरि हते सति देवदत्तस्य न पुनरुन्मज्जनम्' इति न्यायेन स्थानिभूतस्य दकारादकारस्याभावाद् वृद्धिगुणादि न स्यात्। शास्त्रासिद्धत्वपक्षे तु यथत् त्रैपादिकं शास्त्रं प्रवृत्त्युन्मुखं तत्त-च्छास्त्र एवाभावारोपसम्भवात् पूर्वशास्त्रप्रतिबन्धकस्य परशास्त्रस्य उच्छेदबुद्धौ सत्यां 'विप्रतिषेधे परं कार्यम्' इति न प्रवर्तते। तदुक्तं 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावा-दुत्तरस्य' इति। ततश्च स्थानिनः अकारस्य निवृत्त्यभावाद् वृद्धिगुणादिप्रवृत्तिर्निर्बाधा। एतच्च 'पूर्वत्रासिद्धम्' इत्यत्र 'अचः परस्मिन्—' इत्यत्र 'षत्वतुकोरसिद्धः' इत्यत्र च भाष्ये

---

प्रयोगोऽसाधुरेव। एवममुकशर्मेत्यादिरपि। अदकःशर्मेत्यादेरेव न्याय्यत्वात्। **एत ईद्बहुवचने।** पारिभाषिकस्य बहुवचनस्य ग्रहणे अमीभिरित्यादिसिद्धावपि जसि अमी इति न सिध्येत्। न ह्यत्र एकारस्य बहुवचनपरतास्त्यतो व्याचष्टे—**बह्वर्थोक्ता-विति। विभक्तिकार्यं प्रागिति।** 'त्यदादीनामः' इत्यादिसपादसप्ताध्यायीं प्रति 'अदसोऽसेः—' इति त्रैपादिकशास्त्रस्यासिद्धत्वादिति। अकृते तु विभक्तिकार्ये सान्त-त्वाद् उत्वमत्वयोरप्रवृत्तेश्चेति भावः। यदि तु 'पूर्वत्रासिद्धम्' इत्यत्र कार्यासिद्धत्वमिष्येत, तर्हि अमू अमुमित्यादि न सिध्येत्। त्यदाद्यत्वे कृते पररूपात्प्रागेवोत्वमत्वयोः कृतयोः पश्चान्मुत्वकार्यस्यासिद्धतया 'अतो गुणे' इति पररूपे अमौ इत्यादिरूपसिद्धिप्रसङ्गात्। किं च चर्म वस्ते चर्मवः, सुष्ठु वस्ते सुवः—अत्र परत्वात् 'स्कोः—' इति सलोपे तस्यासिद्धत्वाद्धल्ङ्यादिलोपे उक्तरूपं न सिध्यतीति कार्यासिद्धिपक्षो हेय एव। अत्र वदन्ति—सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितमसिद्धमिति प्रक्रिया-ग्रन्थोक्तकार्यासिद्धिपक्षे मनोरथः, अमुमित्यादि न सिध्येदिति केचित्। तन्न। प्रक्रिया-ग्रन्थोक्तेर्हि कार्यं प्रति कार्ये कर्तव्ये, असिद्धं पूर्वमेव न जातमित्यर्थः। शास्त्रासिद्धत्वे-

मत्वे । अमुम्, अमू, अमून् । (८-२-३) नाभावे घिसंज्ञायां नाभावः । ४३६ न मु ने । नासिद्धः स्यात् । अमुना, अमूभ्याम् ।

स्पष्टम् । प्रपञ्चितं च शब्देन्दुशेखरे शब्दरत्ने च इत्यास्तां तावत् । **अमुमिति ।** अदस् अम् इति स्थिते त्यदाद्यत्वम्, पररूपम्, अमि पूर्वः, उत्वमत्वे इति भावः । **अमू इति ।** द्वितीयाद्विवचनं प्रथमाद्विवचनवत् । **अमूनिति ।** शसि त्यदाद्यत्वम्, पररूपम्, पूर्वसवर्णदीर्घः, नत्वम्, उत्वमत्वे इति भावः । तृतीयैकवचने अदस् आ इति स्थिते त्यदाद्यत्वम्, पररूपम्, उत्वमत्वे च सिद्धवत्कृत्य आह—**मुत्वे कृते घिसंज्ञायां नाभाव इति ।** 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति नाभाव इत्यर्थः । ननु 'पूर्वत्रासिद्धम्' इति विभक्तिकार्यं प्राक् पश्चाद् उत्वमुत्वे इति प्रागुक्तम् । सम्प्रति तु मुत्वे कृते घिसंज्ञायां नाभाव इत्युच्यते । तदिदं पूर्वापरविरुद्धमिति चेत् सत्यम् । यद्विभक्तिकार्यं प्रति मुत्वं निमित्तं न भवति, तदेव विभक्तिकार्यं प्राग् भवति, न त्वन्यदिति विवक्षितम् । इह च नाभावं प्रति मुत्वं निमित्तमिति प्रथमं मुत्वप्रवृत्तेरविरोधः, 'न मु ने' इत्यारम्भसामर्थ्यादित्यलम् । ननु कृतेऽपि प्रथमं मुत्वे नाभावो न संभवति, तस्मिन् कर्तव्ये मुत्वस्य असिद्धतया घेः परत्वाभावादित्यत आह—**न मु ने ।** असिद्धमित्यनुवर्तते । मु च उश्चेति समाहारद्वन्द्वः । ने इति ना इत्यस्य सप्तम्येकवचनम् । विषयसप्तमी सत्सप्तमी च एषा । तथा च नाभावे कर्तव्ये कृते च इति लभ्यते । तदाह—**नाभाव इत्यादिना ।** प्रकृते च नाभावे कर्तव्ये मुत्वस्यासिद्धत्वाभावाद् घेः परत्वाभावो निर्बाधः । यदि तु नाभावे कर्तव्ये मुभावो नासिद्ध इत्येवाश्रीयते, तर्हि प्रकृते नाभावे कृते 'सुपि च' इति दीर्घः प्रसज्येत । दीर्घे कर्तव्ये मुत्वस्याऽसिद्धतया अकारसत्त्वात् । अतः कृतेऽपीत्याश्रितम् । ततश्च प्रकृते नाभावे कृतेऽपि दीर्घे कर्तव्ये मुत्वस्यासिद्धत्वाभावादकाराभावाद् न दीर्घ इति भावः । **अमूभ्यामिति ।** त्यदाद्यत्वे,

---

ऽप्येवमेव फलितोऽर्थः । तदुक्तं कैयटेन—'यच्छास्त्रमुच्चारितं तस्यासिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनातिदेश आश्रीयते' इति । तथा चातिदेशेन कार्याप्रवर्तकत्वरूपोऽसिद्धधर्मः शास्त्रेऽतिदिश्यमानः कार्यासिद्धत्व एव फलति । एवं च मनोरथ इत्यत्र उत्वे कर्तव्ये रेफलोपस्य पूर्वमेवाप्रवृत्तौ रोरुत्वस्याप्रतीघातान्मनोरथसिद्धिरप्रत्यूहा । तथा च अमुमित्यादिसिद्धिरिति कार्यासिद्धिपक्षे न काप्यनुपपत्तिरिति । **न मु ने ।** ने इति विषयसप्तमीत्याह—**नाभावे कर्तव्य इति ।** अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे 'सुपि च' इति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह—**कृते चेति ।** एतच्च ने इत्यस्यावृत्त्या लभ्यते । एकत्र विषयसप्तम्यपरत्र परसप्तमीत्याश्रयणात् । वस्तुतस्तु कृते चेति व्याख्यानं व्यर्थम्, संनि-

अमूभ्याम् । अमूभ्याम्, अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य, अमुयोः, अमीषाम् । अमुष्मिन्, अमुयोः, अमीषु ॥ इति सान्ताः ॥

इति हलन्तपुँल्लिङ्गप्रकरणम् ।

# अथ हलन्तस्त्रीलिङ्गप्रकरणम् । १२ ।

**४४० नहो धः । (८-२-३४) नहो हस्य धः स्याज्झलि पदान्ते च ।**

---

परूपे 'सुपि च' इति दीर्घे, दस्य मत्वम्, आकारस्य ऊत्वम् इति भावः । **अमीभिरिति** । त्यदाद्यत्वम्, पररूपम्, 'नेदमदसोरकोः' इति ऐस्निषेधः, 'बहुवचने झल्येत्' इत्येत्त्वम्, 'एत ईद्बहुवचने' इति ईत्त्वमत्त्वे इति भावः । **अमुष्मै इति** । त्यदाद्यत्वम्, पररूपम्, ङेः स्मै, उत्वमत्वे, षत्वमिति भावः । **अमीभ्य इति** । त्यदाद्यत्वम्, पररूपम्, 'बहुवचने झल्येत्' इत्येत्त्वम्, ईत्त्वमत्वे इति भावः । **अमुष्मादिति** । त्यदाद्यत्वम्, पररूपम्, ङसेः स्मात्, उत्वमत्वे, षत्वमिति भावः । **अमुष्येति** । त्यदाद्यत्वम्, पररूपम्, ङसः स्यादेशः, उत्वमत्वे, षत्वमिति भावः । **अमुयोरिति** । ओसि त्यदाद्यत्वम्, पररूपम्, 'ओसि च' इत्येत्त्वम्, अयादेशः, उत्वमत्वे इति भावः । **अमीषामिति** । आमि त्यदाद्यत्वम्, पररूपम्, 'आमि सर्वनाम्नः–' इति सुट्, एत्त्वम्, ईत्त्वम्, मत्वम्, षत्वमिति भावः । **अमुष्मिन्निति** । ङौ त्यदाद्यत्वम्, पररूपम्, ङेः स्मिन्नादेशः, उत्वमत्वे, षत्वमिति भावः । **अमीष्विति** । सुपि त्यदाद्यत्वम्, पररूपम्, एत्त्वम्, ईत्त्वमत्वे, षत्वमिति भावः ॥ इति सान्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां-
बालमनोरमाख्यायां हलन्तपुँल्लिङ्गप्रकरणं समाप्तम् ।

**अथ हलन्तस्त्रीलिङ्गे हकारान्ता निरूप्यन्ते** । 'णह बन्धने' 'णो नः' उपनह्यते इति विग्रहे उपपूर्वात् संपदादित्वात् कर्मणि क्विप्, 'नहिवृति–' इत्यादिना पूर्वपदस्य दीर्घः, उपानह्शब्दः स्त्रीलिङ्गः । 'पादुका' । 'पादूरुपानत्स्त्री–' इत्यमरः । **नहो धः** । 'हो ढः' इत्यतो ह इत्यनुवर्तते । 'पदस्य' इत्यधिकृतम् । 'स्कोः संयोगा–' इत्यतः अन्ते इत्यनुवर्तते । 'झलो झलि' इत्यतो झलि इत्यनुवर्तते । तदाह—**नहो**

---

पातपरिभाषया 'सुपि च' इति दीर्घस्य सुसमाधेयत्वात् । ननु 'अमुना' इतिवद् 'असुना' इत्येवोच्यतां किमनेनासिद्धत्वनिषेधेनेति चेत् । अत्राहुः—'न मु ने' इत्युक्तिः 'न' इति योगविभागार्था, तेन रामः रामेभ्य इत्यादि सिध्यति । अन्यथा हि रोरसिद्धतयोकारस्येत्संज्ञालोपौ कथं स्याताम् । न चानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रति रुत्वं नासिद्धमिति वाच्यम्, तरुमूलं देवरुहीत्यादौ 'हशि च' इत्यस्य व्यावृत्तये 'अतो रोः–'

उपानत्, उपानद्, उपानहौ, उपानहः। उपानद्भ्याम्। उपानत्सु। उत्पूर्वात् 'ष्णिह प्रीतौ' (धा ११०१) इत्यस्माद् 'ऋत्विग्–' (सू ३७३) आदिना क्विन्, निपातनाद् दलोपषत्वे, क्विन्नन्तत्वात्कुत्वेन हस्य घः, जश्त्वचर्त्वे। उष्णिक्, उष्णिग्,

---

**हस्येत्यादिना**। 'हो ढः' इति ढत्वापवादः। **उपानदिति**। उपानह्शब्दात् सोर्हल्ङ्यादिलोपः, हस्य धः, जश्त्वचर्त्वे इति भावः। अत्र दकार एव तु न विहितः, तथा सति नद्धमित्यत्र 'रदाभ्याम्–' इति नत्वप्रसङ्गादित्यलम्। **उपानद्भ्यामिति**। हस्य धत्वे जश्त्वमिति भावः। **उपानत्स्विति**। धत्वे 'खरि च' इति चर्त्वमिति भावः। उष्णिह्शब्दः छन्दोविशेषवाची स्त्रीलिङ्गः। तं व्युत्पादयितुमाह—**ष्णिह प्रीतावित्यादिना**। **दलोपषत्वे इति**। उदो दकारस्य लोपः, सस्य षत्वं च निपात्यत इत्यर्थः। न च 'धात्वादेः षः सः' इति कृतसकारस्य 'आदेशप्रत्ययोः' इत्येव षत्वसिद्धेः किं तन्निपातनेन इति वाच्यम्, 'सात्पदाद्योः' इति निषेधबाधनार्थं षत्वनिपातनस्यावश्यकत्वात्। न च उष्णिह्शब्दात् समासात् सुबुत्पत्तेः पूर्वं स्निह् इत्येतद् न पदम्, नतरां सकारस्य पदादित्वमिति वाच्यम्, पदादादिरिति पक्षे षत्वनिषेधप्रसक्तेरित्याहुः। **हस्य घ इति**। घोषनादसंवारमहाप्राणसाम्यादिति भावः। न च 'क्विन्प्रत्ययस्य–' इति कुत्वस्यासिद्धत्वाद् 'हो ढः' इति ढत्वमेवोचितमिति वाच्यम्, षत्वापवादः कुत्वमिति कैयटादिमते तुल्यन्यायतया षत्वस्येव ढत्वस्यापि कुत्वेन बाधात्। **जश्त्वचर्त्वे इति**। न च जश्त्वे कर्तव्ये 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वं शङ्क्यम्, 'उष्णिगञ्चु' इति निर्देशेन जश्त्वे कर्तव्ये कुत्वस्यासिद्धत्वाभावज्ञापनात्। वस्तुतस्तु 'क्विन्प्रत्ययस्य कुः' इति कुत्वं षत्वापवादो न भवति, इति मूलकारमते

---

इत्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात्। एवं च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गो लभ्यते। 'प्रत्ययः' 'परश्च' इत्यादिनिर्देशाश्चेह लिङ्गमिति दिक्।

इति हलन्तपुँल्लिङ्गप्रकरणम्॥

**नहो धः**। द इत्येव तु नोक्तम्, तथा हि सति नद्धमित्यत्र 'रदाभ्याम्–' इति नत्वं स्यात्, 'झषस्तथोः–' इति च न स्यात्। **नहो हस्येति**। 'हो ढः' इत्यतोऽनुवृत्तेः 'अलोऽन्त्यस्य' इत्यनेन वा हस्यैवादेश इति भावः। 'झलो झलि' 'पदस्य' 'स्कोः संयोगाद्योरन्ते च' इत्यतो झल्पदान्तग्रहणान्यनुवर्तन्ते। तदाह—**झलीत्यादि**। झलि परतः पदान्ते वा विद्यमानस्येत्यर्थः। **उपानदिति**। उपपूर्वान्नहेः संपदादित्वात् क्विपि 'नहिवृति–' इति पूर्वपदस्य दीर्घः। सोर्हल्ङ्यादिलोपे धत्वम्। जश्त्वचर्त्वे। अत्रेदं बोध्यम्—सुष्ठु अनड्वाहो यस्यामिति बहुव्रीहौ स्वनड्वानिति पुंवदेव रूपम्। केचित्तु गौरादिङीषं कृत्वा स्वनड्वाही इत्युदाजह्रुः। तदसत्। अनुपसर्जनाधिकार-

उष्णिहौ, उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ इति हान्ताः ॥ द्यौः, दिवौ, दिवः । द्युभ्याम् । द्युषु ॥ इति वान्ताः ॥ गीः, गिरौ, गिरः । एवं पूः । चतुरश्चतस्रादेशः । चतस्रः । चतस्रः । चतसृणाम् ॥ इति रेफान्ताः ॥ किमः कादेशे टाप् । का, के, काः । सर्वावत् । **४४१ यः सौ ।** ( ७-२-११० ) इदमो दस्य यः स्यात्सौ ।

---

तुल्यन्यायाद् ढत्वस्यापि नापवादः । ततश्च तद्रीत्या ढडगका इति बोध्यम् ॥ इति हान्ताः ॥

**अथ वकारान्ता निरूप्यन्ते । द्यौरिति ।** दिव्शब्दः स्त्रीलिङ्गः । 'द्यो-दिवौ द्वे स्त्रियाम्' इत्यमरः । तस्मात् सुः, 'दिव औत्' इति वकारस्य औकारः, इकारस्य यण्, रुत्वविसर्गौ, सुलोपस्य औत्त्वस्थानिभूतवकाराश्रयत्वेनाल्विधित्वात् स्थानिवत्त्वाभावाद् न हल्ङ्यादिलोप इति भावः । **द्युभ्यामिति** भ्यामादौ हलि 'दिव उत्' इत्युत्त्वमिति भावः ॥ इति वान्ताः ॥

**अथ रेफान्ता निरूप्यन्ते । गीरिति ।** 'गॄ निगरणे' क्विप्, 'ॠत इद्धातोः' इति इत्त्वम्, रपरत्वम्, गिर्शब्दात् सुबुत्पत्तिः, सोर्लोपः, 'र्वोरुपधायाः—' इति दीर्घः, रेफस्य विसर्ग इति भावः । भ्यामादौ तु हलि 'र्वोः—' इति दीर्घः, गीर्भ्या-मित्यादि । [१]गीर्षु । **एवं पूरिति ।** गीर्वदित्यर्थः । 'पॄ पालनपूरणयोः' क्विप्, 'उदो-ष्ठ्यपूर्वस्य' इत्युत्त्वं रपरत्वम् । पुर्शब्दात् सोर्लोपः, 'र्वो— इति दीर्घः, रेफस्य विसर्ग इति भावः । **चतुरश्चतस्रादेश इति ।** जश्शसोः स्त्रीलिङ्गस्य चतुर्शब्दस्य 'त्रि-चतुरोः स्त्रियाम्—' इत्यनेनेति भावः । **चतस्र इति ।** परत्वात् 'चतुरनडुहोः—' इत्यामं बाधित्वा चतस्रभावे यण् । चतस्रभावे कृते आम् तु न, 'विप्रतिषेधे यद्बाधितं तद्बाधित-मेव' इति न्यायादिति स्थानिवत्सूत्रे भाष्ये स्पष्टम् । **चतसृणामिति ।** 'न तिसृ-चतसृ' इति दीर्घनिषेधः ॥ इति रेफान्ताः ॥

**अथ मकारान्ता निरूप्यन्ते । किम इति ।** किम्शब्दात् स्त्रीलिङ्गा-द्विभक्तौ 'किमः कः' इति प्रकृतेः कादेशे कृते अदन्तत्वात् टाबित्यर्थः । **सर्वावदिति ।** सर्वाशब्दवदित्यर्थः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति न, शब्दस्वरूपपरस्य गौणतया कदाऽपि सर्वनामत्वाभावादिति भावः । अथ इदम्शब्दस्य स्त्रीत्वे विशेष-माह—**यः सौ ।** 'इदमो मः' इत्यत इदम इत्यनुवर्तते, 'दश्च' इत्यतो 'दः' इति च षष्ठ्यन्तमनुवर्तते । तदाह—**इदमो दस्येति ।** पुंसि तु नेदं प्रवर्तते, 'इदोऽय्

---

विरोधात् । **गीरिति ।** 'गॄ निगरणे', 'गॄ शब्दे' इत्यस्माद्वा क्विप् 'ॠत इद्धातोः' इतीत्वे रपरत्वम् । 'र्वोरुपधाया दीर्घः—' इति दीर्घः । **पूरिति ।** 'पॄ पालनपूरणयोः' 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम् । **चतस्र इति ।** इह 'चतुरनडुहोः-' इत्याम्न भवति, परत्वा-दामं बाधित्वा चतस्रादेशे कृते सकृद्गतिन्यायेन पुनस्तस्याप्रवृत्तेः । **चतसृणामिति ।**

---

१ 'गीष्षु—गीःषु' इति क्वचित् पाठः, स च प्रामादिकः, रोःसुपीति नियमाद् विसर्गाप्राप्तेः ।

'इदमो मः' (सू ३४३)। इयम्। त्यदाद्यत्वम्, टाप्, 'दश्च' (सू ३४५) इति मः। इमे, इमाः। इमाम्, इमे, इमाः। अनया। 'हलि लोपः' (सू ३४७)। आभ्याम्। आभ्याम्। आभ्याम्। आभिः। अस्यै। अस्याः, अनयोः, आसाम्। अस्याम्, अनयोः, आसु। अन्वादेशे तु एनाम्, एने, एनाः। एनया। एनयोः। एनयोः

---

पुंसि' इति विशिष्य विधेः। नापि क्लीबे, तस्य सोः लुका लुप्तत्वात्। ततश्च परिशेषात् स्त्रियामेवेदम्। **इयमिति**। इदम् स् इति स्थिते, दकारस्य यत्वे, इदम् स् इति स्थिते, त्यदाद्यत्वं बाधित्वा 'इदमो मः' इति मकारस्य मकारे कृते, हल्ङ्यादिना सुलोप इति भावः। इदम् औ इति स्थिते प्रक्रियां दर्शयति—**त्यदाद्यत्वमिति**। त्यदाद्यत्वे सति पररूपे अदन्तत्वात् टापि 'दश्च' इति दकारस्य मत्वे इमा औ इति स्थिते 'औङ आपः' इति शीभावे आद् गुणे इमे इति रूपम्। **इमा इति**। जसि त्यदाद्यत्वम्, पररूपम्, टाप्, 'दश्च' इति मः, पूर्वसवर्णदीर्घ इति भावः। अत्र विभक्तौ सत्यां त्यदाद्यत्वम्, पररूपम्, टाप् च सर्वत्र भवन्तीति बोध्यम्। इमा इत्यत्र इमा अस् इति स्थिते पूर्वसवर्णदीर्घः। 'जसः शी' इति तु न। टापि कृते अदन्तात् परत्वाभावात्। **इमामिति**। अत्वपररूपटाब्मत्वेषु कृतेषु 'अमि पूर्वः' इति भावः। **इमे इति**। औटि औवत्। **इमा इति**। अत्वपररूपटाब्मत्वेषु पूर्वसवर्णदीर्घः। स्त्रीत्वान्नत्वाभाव इति भावः। **अनयेति**। इदम् आ इति स्थिते, अत्वम्, पररूपम्, टाप्, 'अनाप्यकः' इति इद् इत्यस्य अन् आदेशः। अन् आ आ इति स्थिते 'आङि चापः' इत्येत्त्वे अयादेश इति भावः। टाप्रभृत्यजादौ सर्वत्र अन् आदेश इति बोध्यम्। **हलि लोप इति**। भ्यामादौ हलि इद् इत्यस्य लोप इत्यर्थः। **आभ्यामिति**। इदम् भ्याम् इति स्थिते इदो लोपे अत्वे पररूपे टापि च रूपमिति भावः। आभिरित्यप्येवम्। **अस्यै इति**। इदम् ए इति स्थिते, अत्वपररूपटाप्सु स्याडागमे ह्रस्वत्वे इदो लोप इति भावः। अस्या इत्यप्येवम्। **अनयोरिति**। इदम् औस् इति स्थिते इदम इदः अनादेशे अत्वपररूपटाप्सु 'आङि चापः' इत्येत्त्वे अयादेश इति भावः। **आसामिति**। इदम् आम् इति स्थिते अत्वपररूपटाप्सु सुटि इदो लोप इति भावः। **अस्यामिति**। इदम् इ इति स्थिते अत्वपररूपटाप्सु ङेरामि स्याडागमे ह्रस्वत्वे इदो लोप इति भावः। **आस्विति**। इदम् सु इति स्थिते अत्वपररूपटाप्सु इदो लोप इति भावः। **अन्वादेशे त्विति**। 'द्वितीयाटौस्स्वेनः' इत्येनादेशे टापि रमावद्रूपाणीति भावः॥ इति मान्ताः॥

---

'न तिसृचतसृ' इति न दीर्घः। **सर्ववदिति**। 'तेन तुल्यम्–' इति वतिः, 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवद्भावः। **यः सौ**। यत्त्वमिदं स्त्रियामेव परिशेषात्।

---

१ सर्वविदिति मूलपाठस्तु बालमनोरमानुरोधेन।

॥ इति मान्ताः ॥ 'ऋत्विग्–' (सू ३७३) आदिना सृजेः क्विन् अमागमश्च निपातितः। स्रक्, स्रग्, स्रजौ, स्रजः। स्रग्भ्याम्। स्रक्षु॥ इति जान्ताः॥ त्यदाद्यत्वम् टाप्। स्या, त्ये, त्याः। एवं तद्, यद्, एतद् ॥ इति दान्ताः॥ वाक्, वाग्, वाचौ, वाचः। वाग्भ्याम्। वाक्षु॥ इति चान्ताः॥ अप्शब्दो नित्यं बहुवचनान्तः। 'अप्तृन्–' (सू २७७) इति दीर्घः। आपः। अपः। **४४२ अपो भि। (७-४-४८)** अपस्तकारः स्याद्भादौ प्रत्यये परे। अद्भिः। अद्भ्यः। अद्भ्यः। अपाम्। अप्सु।

---

**अथ जकारान्ता निरूप्यन्ते।** स्रज्शब्दं व्युत्पादयति। **ऋत्विगिति।** 'सृज विसर्गे' अस्मात् क्विन्, ऋकारात् परः अमागमः, मकार इत्, ऋकारस्य यण् रेफः, स्रज्शब्दः स्त्रीलिङ्गः। 'माल्यं माला स्रजो मूर्ध्नि' इत्यमरः। **स्रक्-स्रगिति**। 'क्विन्प्रत्ययस्य कुः' इति कुत्वं जश्त्वचर्त्वे इति भावः॥ इति जान्ताः॥

**अथ दकारान्ता निरूप्यन्ते।** त्यद्शब्दस्य प्रक्रियां दर्शयति। **त्यदाद्यत्वमिति।** विभक्तौ अत्वे पररूपे टापि त्या इति रूपम्। सर्वत्र ततः सर्ववद्रूपाणि। सौ तु 'तदोः सः सौ–' इति तकारस्य स इति विशेषः। **एवमिति।** तद् यद् एतद् एतेभ्यो विभक्तौ अत्वपररूपटाप्सु सर्ववद्रूपाणि। तच्छब्दस्य तु तकारस्य सत्वम्। एतच्छब्दस्य तु तकारस्य सत्वे 'आदेशप्रत्यययोः' इति षत्वमिति विशेषः॥ इति दान्ताः॥

**अथ चकारान्ता निरूप्यन्ते। वागिति।** वचेः 'क्विब्वचि–' इत्यादिना क्विप्, दीर्घश्च, 'वचिस्वपि–' इति सम्प्रसारणाभावश्च, वाच् इति रूपम्। सुलोपः, चोः कुः, जश्त्वचर्त्वे इति भावः॥ इति चान्ताः॥

**अथ पकारान्ता निरूप्यन्ते। अप्शब्द इति।** 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' इति स्त्र्यधिकारे लिङ्गानुशासनसूत्राद् नित्यं बहुवचनान्तत्वं स्त्रीत्वं चेत्यर्थः। **दीर्घ इति।** जसीति शेषः। **अप इति।** 'अप्तृन्–' इत्यत्र 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनुवृत्तेः शसि न दीर्घ इति भावः। **अपो भि।** 'अच उपसर्गात्तः' इत्यस्मात् त इत्यनुवर्तते। अङ्गाधिकारस्थमिदम्। ततश्च अङ्गाक्षिप्तप्रत्ययो भि इति सप्तम्यन्तेन विशेष्यते, तदादिविधिः। तदाह—**अपस्तकार इत्यादिना।** प्रत्यये किम्? अब्भक्षः। **अद्भिरिति।** पकारस्य तकारे जश्त्वमिति भावः॥ इति पान्ताः॥

---

'इदोऽय् पुंसि' इति पुंस्यय्वचनात् क्लीबे सोर्लुका लुप्तत्वाच्च। **एवमिति।** सा। ते। ताः। या। ये। याः। एषा। एते। एताः। इत्यादीत्यर्थः। **वागिति।** वचेः 'क्विब्वचि–' इत्यादिना क्विप् दीर्घोऽसंप्रसारणं च। 'चोः कुः'। **अप्शब्द इति।** 'आप्नोतेर्ह्रस्वश्च' इति ह्रस्वश्चकारात्क्विप्। 'अच उपसर्गात्तः' इत्यतोऽनुवर्तनादाह—

॥ इति पान्ताः ॥ दिक्, दिग्, दिशौ, दिशः । दिग्भ्याम् । दिक्षु । 'त्यदादिषु-' (सू ४२६) इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग्, दृशौ, दृशः ॥ इति शान्ताः ॥ त्विट्, त्विड्, त्विषौ, त्विषः । त्विड्भ्याम् । त्विट्त्सु, त्विट्सु । सह जुषत इति सजूः, सजुषौ, सजुषः । सजूर्भ्याम् । सजूष्षु, सजूःषु । षत्वस्यासिद्धत्वाद्रुत्वम् । आशीः, आशिषौ, आशिषः । आशीर्भ्याम् । आशीर्भिः । ॥ इति षान्ताः ॥ असौ । त्यदाद्यत्वम्, टाप् । औङः शी । उत्वमत्वे । अमू, अमूः ।

---

अथ शकारान्ता निरूप्यन्ते । **दिगिति** । 'दिश अतिसर्जने' ऋत्विगादिना क्विन्, सुलोपः, 'व्रश्च-' इति षः, तस्य जश्त्वेन डः, तस्य 'क्विन्प्रत्ययस्य कुः, इति कुत्वेन गः, तस्य चर्त्वविकल्प इति भावः । दृश्यन्ते अर्था अनयेति विग्रहे संपदादित्वाद् दृशेः क्विप्, ततः सुलोपे 'व्रश्च-' इति षत्वमाशङ्क्य आह—**त्यदादिष्विति** । **अन्यत्रापीति** । त्यदाद्युपपदाभावेऽपीत्यर्थः । क्विन् प्रत्ययः यस्माद्विहित इति बहुव्रीह्याश्रयणादिति भावः । **दृगिति** । षडगकाः प्राग्वत् ॥ इति शान्ताः ॥

अथ षकारान्ता निरूप्यन्ते । **त्विडिति** । 'त्विष दीप्तौ' क्विप्, सुलोपः, जश्त्वचर्त्वे इति भावः । **सजूरिति** । 'जुषी प्रीतिसेवनयोः' क्विप्, 'सहस्य सः संज्ञायम्' इति वा 'ससजुषोः' इति निपातनाद्वा सहस्य सभावः, सुलोपः, 'ससजुषो रुः' इति षस्य रुत्वम्, 'र्वोरुपधायाः-' इति दीर्घः । 'आङः शासु इच्छायाम्' क्विप्, 'आशासः क्वावुपसंख्यानम्' इत्युपधाया इत्वम्, 'शासिवसिघसीनां च' इति सस्य षः, आशिष्शब्दात् सोर्लोपः । एतावत् सिद्धवत्कृत्य आह—**षत्वस्येति** । **आशीरिति** । षस्य रुत्वे कृते 'र्वोरुपधाया-' इति दीर्घ इति भावः ॥ इति षान्ताः ॥

अथ सकारान्ता निरूप्यन्ते । **असाविति** । अदश्शब्दस्य स्त्रियामपि पुंवदेव सौ रूपमित्यर्थः । अदस् औ इति स्थिते प्रक्रियां दर्शयति—**त्यदाद्यत्वमित्यादिना** । अत्वे, पररूपे, टापि, औङः शीभावे, आद् गुणे, अदे इति स्थिते, एकारस्य दीर्घत्वादूत्वं दस्य मत्वं चेत्यर्थः । विभक्तौ सत्याम् अत्वम्, पररूपम्, टाबित्येतत् सर्वत्र ज्ञेयम् । **अमूरिति** । जसि अत्वपररूपटाप्सु, पूर्वसवर्णदीर्घे, ऊत्वमत्वे । टापि सति अदन्तत्वाभावाद् जसः शीभावो न । एकाराभावान्नेत्त्वम् । **अमूमिति** । पुंवत्,

---

**तकारः स्यादिति** । **दिगिति** । क्विन्नन्तत्वात्कुत्वम् । षडगकाः प्राग्वदूह्याः । **अन्यत्रापीति** । त्यदाद्युपपदत्वाभावेऽपीत्यर्थः । **त्विडिति** । 'त्विष दीप्तौ' इत्यस्मात् क्विप् । जश्त्वचर्त्वे । **सजूरिति** । 'जुषी प्रीतिसेवनयोः' इत्यस्मात् क्विप् । 'ससजुषोः-' इति षस्य रुत्वम् । 'र्वोः-' इति दीर्घः । **आशिषाविति** । 'आशासः क्वावुपधाया इत्वं वाच्यम्' इत्युपधाया इत्वम्, 'शासिवसि-' इति षत्वम् । **असा-**

उपाध्यायी। 'या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः'। उपाध्यायी, उपाध्याया। 'आचार्यादणत्वं च' (वा २४७७)। आचार्यस्य स्त्री आचार्यानी। पुंयोग इत्येव, आचार्या, स्वयं व्याख्यात्री। 'अर्यक्षत्रियाभ्यां वा स्वार्थे' (वा

---

**लीति**। मातुलस्य स्त्रीत्यर्थः। **उपाध्यायानी, उपाध्यायीति**। उपाध्यायस्य स्त्रीत्यर्थः। **या तु स्वयमेवेति**। इदं तु वार्तिकं तृतीयस्य तृतीये 'इङश्च' इति सूत्रे पठितम्। या स्वयमेवाध्यापयति, न तूपाध्यायस्य स्त्री, तत्र पुंयोगाभावेऽपि केवलङीष्विकल्पो वाच्य इत्यर्थः। 'युगान्तरे ब्रह्मवादिन्यः स्त्रियः सन्ति' तद्विषयमिदम्,

'पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं च वेदानां सावित्रीवचनं तथा॥'

इति स्मरणात्। **आचार्यादणत्वं च**। इत्यपि वार्तिकम्। चकार आनुङ्ङीषोः समुच्चयार्थः। **आचार्यानीति**। आचार्यस्य स्त्रीत्यर्थः। 'अट्कुप्वाङ्–' इति णत्वं न भवति।

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥'
'एकदेशमुपाध्यायः' इति स्मृतिः।

**पुंयोग इत्येवेति**। पुंयोगग्रहणमनुवर्तत एवेत्यर्थः। तत्प्रयोजनमाह—**आचार्येति**। अत्र पुंयोगाभावं विशदयति—**स्वयं व्याख्यात्रीति**। धर्मोपदेष्ट्रीत्यर्थः। 'यस्माद्धर्मानाचिनोति स आचार्यः' इति स्मरणादिति भावः। **अर्यक्षत्रियाभ्यां वा**। इति वार्तिकम्। आनुङ्ङीषाविति शेषः। स्वार्थ इति व्याख्यानलभ्यम्, तेन पुंयोगनिरासः। अत एव भाष्ये 'अर्याणी, अर्या' इत्येवोक्तम्। पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवद् अर्यीति ङीषमेवोदाहरेत्। अर्यशब्दं व्याचष्टे—**स्वामिनी, वैश्या वेत्यर्थ इति**। 'अर्यः स्वामिवैश्ययोः' इति निपातनादिति भावः। **क्षत्रियाणी, क्षत्रियेति**। क्षत्रियात् क्षत्रियायां भार्यायामुत्पन्नेत्यर्थः। 'सवर्णेभ्यः सवर्णासु

---

मेवानेनाभिधीयते। अयमेव चास्य दोषो यस्माद्धि यवत्वजातेरभावेऽपि तदाकारानुकृतिः। **यवनानीति**। 'तस्येदम्' इत्यणो बाधको ङीष्। **वा ङीष्वाच्य इति**। इदं च 'इङश्च' इति घञ्विधायकसूत्रस्थं वार्तिकम्। वक्ष्यति च तत्र 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' इति। **उपाध्यायी, उपाध्यायेति**। उपेत्य अस्या अधीयत इति विग्रहः। **स्वार्थ इति**। यदि तु पुंयोग एवायं विधिः स्यात् शूद्रापि क्षत्रियस्य भार्या क्षत्रियाणी स्यात्। ब्राह्मणभार्या च क्षत्रिया क्षत्रियाणी न स्यादिति भावः। **वैश्या वेत्यर्थ इति**। 'अर्यः स्वामिवैश्ययोः' इत्यर्थद्वये निपातनादिति भावः।

२४७८ )। अर्याणी, अर्या। स्वामिनी वैश्या वेत्यर्थः। क्षत्रियाणी, क्षत्रिया। पुंयोगे तु—अर्यी। क्षत्रियी। कथं 'ब्रह्माणी' इति। ब्रह्माणमानयति जीवयतीति 'कर्मण्यण्' ( सू २९१३ )। **५०६ क्रीतात्करणपूर्वात्।** ( ४-१-५० )

---

जायन्ते हि सजातयः' इत्युपक्रम्य 'विन्नास्वेष विधिः स्मृतः' इति स्मरणात्। विन्नास्वित्यस्य ऊढास्वित्यर्थः। **पुंयोगे तु अर्यी क्षत्रियीति**। अर्यस्य स्त्री अर्यी, क्षत्रियस्य स्त्री क्षत्रियी, वैश्या शूद्रा वेत्यर्थः। **कथमिति**। 'इन्द्रवरुण–' इत्यादिसूत्रे ब्रह्मन्शब्दस्य अग्रहणाद् ब्रह्मणः स्त्रीत्यर्थे ब्रह्माणीत्यानुङ्ङीषौ कथमिति प्रश्नः। उत्तरमाह—**ब्रह्माणमिति**। आनयतीत्यस्य व्याख्यानं जीवयतीति। 'अन प्राणने' प्राणनं जीवनम्। अस्माद्धातोर्हेतुमणिणचि उपधावृद्धौ तिपि शपि गुणायादेशौ, आनयतीति रूपम्। भर्तृजीवनस्य जायासौमङ्गल्यायत्तत्वात्। ततश्च ब्रह्माणमानयतीति विग्रहे 'आनि' इति णयन्तात् 'कर्मण्यण्' इत्यणि 'णेरनिटि' इति णिलोपे आनशब्देन ब्रह्माणमित्यस्य उपपदसमासे सुब्लुकि नलोपे सवर्णदीर्घे ब्रह्मानशब्दात् 'टिड्ढाणञ्–' इति ङीपि 'यस्येति च' इत्यकारलोपे 'पूर्वपदात् संज्ञायाम्–' इति णत्वे ब्रह्माणीति रूपमिति भावः। 'एकाजुत्तरपदे' इति तु न, अणि सति प्रातिपदिकस्य द्व्यच्कत्वात्, लुप्तेऽप्यणि लोपस्य स्थानिवत्त्वात्। 'पूर्वत्रासिद्धीये न स्थानिवत्' इति तु न, 'तस्य दोषः–' इत्युक्तेः। **क्रीतात्करणपूर्वात्**। प्रातिपदिकादित्यनुवृत्तम् अत इत्यनुवृत्तेन क्रीतादित्यनेन च विशेष्यते, तदन्तविधिः। तदाह—**क्रीतान्तादित्यादिना**। करणमादिर्यस्येति विग्रहः। प्रातिपदिकशब्दो विशेष्यम्, तेन करणादेरिति पुंस्त्वमुपपन्नम्। **वस्त्रक्रीतीति**। ननु वस्त्रेण क्रीतेति टाबन्तेन विग्रहे 'कर्तृकरणे कृता बहुलम्' इति समासात्मकं प्रातिपदिकमादन्तमेव, न त्वदन्तमिति कथमत्र ङीषिति चेत्, सत्यम्—समासस्य तावदलौकिकविग्रहवाक्यं प्रकृतिः। वस्त्र भिस् क्रीत इति स्थिते 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया सुबुत्पत्तेः प्रागेव क्रीतशब्देन समासे 'सुपो धातु–' इति सुब्लुकि वस्त्रक्रीतेति प्रातिपदिकस्य अदन्तत्वं निर्बाधमिति भावः। एतच्च 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्ये स्पष्टम्। तर्हि धनक्रीतेत्यत्रापि ङीष् स्यादित्यत आह—**क्वचिन्नेति**। 'कर्तृकरणे कृता बहुलम्' इति

---

अत्रामरस्य संग्रहः–'अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि। उपध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः। आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा। उपाध्यायान्युपाध्यायी' इति। **कथमिति**। सूत्रे ब्रह्मन्शब्दस्याग्रहणादानुगनुपपन्न एव इति प्रश्नः। उत्तरं तु—**ब्रह्माणमानयतीत्यादि**। णयन्ताद् 'अन् प्राणने' इत्यस्मात्कर्मण्यणि 'णेरनिटि' इति णिलोपे 'टिड्ढाणञ्–' इति ङीपि 'पूर्वपदात्संज्ञा-

क्रीतान्तादन्तात्करणादेः स्त्रियां ङीष्स्यात् । वस्त्रक्रीती । क्वचिन्न, धनक्रीता ।
**५०७ क्तादल्पाख्यायाम्** । ( ४-१-५१ ) करणादेः क्तान्तादन्तात्स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । अल्पाख्यायाम् किम्—चन्दनलिप्ता अङ्गना ।
**५०८ बहुव्रीहेश्चान्तोदात्तात्** । (४-१-५२) बहुव्रीहेः क्तान्तादन्तोदात्तादद-

---

बहुलग्रहणेन 'गतिकारकोपपदानाम्—' इत्यस्य क्वचिदप्रवृत्त्यवगमादिह सुबन्तेन समासः । तत्र च सुपः प्रागेवान्तरङ्गत्वात् टापि सति ततः सुपि टाबन्तप्रकृतिकसुबन्तेन समासे सुब्लुकि धनक्रीताशब्दस्य अदन्तत्वाभावान्न ङीषित्यर्थः । एवं च अत इत्यनुवृत्तेरेतत्प्रयोजनमित्युक्तं भवति । एतच्च 'उपपदमतिङ्' इत्यत्र कैयटे स्पष्टम् । करणपूर्वात् किम्? सुक्रीता । न चैवमपि वस्त्रेण क्रीतेति वाक्याद् ङीष्प्रसङ्गः, क्रीतेति प्रातिपदिकस्य करणपूर्वत्वाद् अदन्तत्वाच्चेति वाच्यम्, करणपूर्वादिति हि क्रीतान्तस्य प्रातिपदिकस्य विशेषणम्, न तु क्रीतशब्दस्य । करणं पूर्वं यस्मिन् इति बहुव्रीहिः । करणशब्दात्मकपूर्वावयवात् क्रीतान्तसमासप्रातिपदिकादित्यर्थः । एतदर्थमेव पूर्वग्रहणम् । अन्यथा क्रीतात्करणादित्येवावक्ष्यदित्यलम् । **क्तादल्पाख्यायाम्** । **करणादेरिति** । करणपूर्वादित्यनुवृत्तेरिति भावः । **क्तान्तादिति** । क्तान्तान्तादित्यर्थः, प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात् । **अदन्तादिति** । अत इत्यनुवृत्तेरिति भावः । **अल्पत्वे द्योत्य इति** । अल्पाख्यायामिति समुदायोपाधिः । अल्पत्वं करणगतं क्रियागतं वा । **अभ्रलिप्ती द्यौरिति** । अभ्रैरल्पैराच्छन्नेत्यर्थः । अभ्रैरीषदाच्छन्नेति वा । **बहुव्रीहेश्च** । क्तादिति अत इति चानुवर्तते । तदाह—**बहुव्रीहेरिति क्तान्तादिति** । क्तान्तान्तादित्यर्थः । **तेनेति** । जातिपूर्वादिति विशेषणेन बह्वादिपूर्वान्न ङीषित्यर्थः । 'सुखादिभ्यः कर्तृ-

---

याम्—' इति णत्वे च ब्रह्माणीति रूपसिद्धेरिति भावः । **क्रीतात्** । इह प्रकरणे 'अतः' इत्यनुवर्तते 'प्रातिपदिकात्' इति च, तदाह—**अदन्तादिति** । प्रातिपदिकादिति शेषः । **वस्त्रक्रीतीति** । वस्त्र भिस् क्रीत इति स्थिते प्राक् सुबुत्पत्तेः 'कर्तृकरणे—' इति समासेऽदन्तत्वान्ङीप् । **क्वचिन्नेति** । 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणात् 'गतिकारकोपपद—' इति वक्ष्यमाणस्य क्वचिदप्रवृत्तौ सुबन्तेन समासः । तत्र सुपः प्रागेवान्तरङ्गत्वाट्टाप्, ततोऽदन्तत्वाभावान्न ङीषिति भावः । करणपूर्वादिति किम्, गवा क्रीता अश्वेन क्रीता, इत्यादिविग्रहे मा भूत् । पूर्वशब्दो ह्यवयववचनः, समासप्रातिपदिकं चान्यपदार्थः, करणं पूर्वं यस्मिन् प्रातिपदिके तदिदं करणपूर्वं तस्मादित्यर्थः । **क्तादल्पाख्यायाम्** । अत्र व्याचख्युः—अल्पाख्यायामिति समुदायोपाधिः । अल्पैरभ्रैर्लिप्ता अभ्रलिप्ती । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति

**न्तास्त्रियां ङीष्स्यात्। 'जातिपूर्वादिति वक्तव्यम्' ( वा २४८४ ) । तेन 'बहु-नञ्सुकालसुखादिपूर्वान्न'। ऊरुभिन्नी। नेह-बहुक्रीता। 'जातान्तान्न' (वा २४७६)। दन्तजाता। 'पाणिगृहीती भार्यायाम्' ( वा २४८० ) । पाणिगृहीता अन्या।**

---

वेदनायाम्' इत्यत्र सुखादिगणः पठितः। 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृत-मितप्रतिपन्नाः' इति 'नञ्सुभ्याम्' इति 'बहोर्नञ्वदुत्तरपदभूम्नि' इति च क्तान्तबहुव्रीहा-वन्तोदात्तविधायकानि । अत्र जातिपूर्वादित्युक्तेर्बह्वादिपूर्वस्यान्तोदात्तत्वेऽप्यर्थात् पर्यु-दास इति भावः। **ऊरुभिन्नीति**। ऊरू भिन्नौ–असंयुक्तौ यस्या इति विग्रहः। 'निष्ठा' इति भिन्नशब्दस्य पूर्वनिपातस्तु न भवति, 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति वार्तिकात्। 'जातिकालसुखादिभ्यः–' इत्यादिसूत्रेणान्तोदात्तमिदम्। जातिलक्षणं तु 'जातेरस्त्रीविषयात्–' इत्यत्र वक्ष्यते। **बहुक्रीतेति**। बहवः क्रीता ययेति विग्रहः। अकृता, सुकृता, मासयाता, सुखयाता, दुःखयाता इति च भाष्ये प्रत्युदाहृतम्। **जातान्तान्न** इति वार्तिकम्। 'बहुव्रीहेश्च–' इत्युक्तो ङीष् नेत्यर्थः। **दन्तजातेति**। दान्ता जाता यस्या इति विग्रहः। ऊरुभिन्नीतिवत् परनिपातः। **पाणिगृहीती भार्याया-मिति**। इदमपि वार्तिकम् । विधिवदूढा भार्या, तस्यां विद्यमानादेव पाणिगृहीत-शब्दाद् ङीषित्यर्थः। विवाहकाले विधिवत् पाणिः गृहीतो यस्या इति विग्रहः। **पाणि-गृहीताऽन्येति**। दास्यादिरित्यर्थः।

---

समुदायस्यापि क्तान्तत्वान्ङीष्। यद्यपि पूर्वपदार्थस्य अभ्राणामेवाल्पत्वं गम्यते, तथापि तदल्पत्वे सति तद्विलेपनस्याप्यल्पत्वमवश्यं भवतीति समुदायोपाधित्वमल्पत्वस्य संग-च्छत इति। **तेन बह्विति**। अयं भावः—'बहोर्नञ्वदुत्तरपदभूम्नि' 'नञ्सुभ्याम्' 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः' इति ह्यन्तोदात्त-विधायकानि। तत्र जातिपूर्वादित्युक्ते बह्वादिपूर्वकस्यार्थाद् व्युदास इति। **सुखादिपूर्वा-न्नेति**। 'सुखादिभ्यः कर्तृवेदनायाम्' इत्यत्र ये पठिताः सुखदुःखकृच्छ्रादयस्तेऽत्र गृह्यन्ते। सुखयाता, दुःखयाता, सुखं दुःखं वा यातं प्राप्तमनयेति विग्रहः। 'अस्वाङ्ग-पूर्वपदाद्वा' इति विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमाह—**ऊरु-भिन्नीति**। भिन्नौ ऊरू यस्या इति बहुव्रीहौ भिन्नशब्दस्य 'निष्ठा' इति पूर्वनिपाते प्राप्ते 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति परनिपातः। **बहुकृतेति**। बहूनि कृतानि यया सा। **जातान्तान्नेति**। 'वर्णादनुदात्तात्–' इतिवद् 'बहुव्रीहेरुदात्तात्' इत्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम् । 'वा जाते' इति तु वैकल्पिक उदात्तो न तु नित्य इति भावः। **पाणिगृहीतीति**। यस्याः पाणिरग्निसाक्षिकं गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दान्ङीष् वक्तव्य इत्यर्थः। **अन्येति**। कौतुकादिना पाणिगृ-

५०६ अस्वाङ्गपूर्वपदाद्वा । ( ४-१-५३ ) । नित्ये प्राप्ते विकल्पोऽयम् ।
सुरापीती, सुरापीता । 'अन्तोदात्तात्' किम्- ।। 'अनाच्छादनात्' इत्यु-

अस्वाङ्गपूर्वपदाद्वा । स्वाङ्गलक्षणमुत्तरसूत्रे वक्ष्यते । अस्वाङ्गं यत् पूर्वपदं तस्मात् परं यत् क्तान्तं तदन्ताद् बहुव्रीहेर्ङीप् वा स्यादिति सूत्रार्थः । यद्यपि अस्वाङ्गं पूर्वपदं यस्य तस्मात् क्तान्तबहुव्रीहेरित्यपि व्याख्यातुं शक्यम् , तथापि उत्तरसूत्रे अस्वाङ्गपूर्वपदादित्यनुवृत्तस्य कर्मधारयसमासाश्रयणादिहापि तथा व्याख्यानमुचितम् । ननु बहुकृता, अकृता इत्यादावपि अस्वाङ्गपूर्वपदक्तान्तबहुव्रीहित्वाद् ङीब्विकल्पः स्यादित्याशङ्क्याह—पूर्वेणेति । 'बहुव्रीहेश्चान्तोदात्तात्' इति पूर्वसूत्रेण नित्ये ङीषि प्राप्ते तद्विकल्पोऽत्र विधीयत इत्यर्थः । एवं च जातिपूर्वादित्यस्य अन्तोदात्तादित्यस्य च इहापि संबन्धाद् बहुकृता इत्यादौ नातिप्रसङ्ग इति भावः। सुरापीती, सुरापीतेति। सुरा पीता ययेति विग्रहः । ऊरुभिन्नीतिवत् पूर्वनिपातः। अन्तोदात्तात् किमिति। हेश्च'इत्यत्र श्रुतम् 'अस्वाङ्गपूर्वपदाद्वा' इत्यत्रानुवृत्तमपि अन्तोदात्तादित्येतत् किमर्थं। वस्त्रच्छन्नेति । ऊरुभिन्नीतिवत् पूर्वनिपातः । अथ वस्त्रच्छन्नेत्यत्र दिभ्यः-' इत्यन्तोदात्तत्वमाशङ्क्य निरस्यति—अनाच्छादनादिति ।

दास्यादेः सा पाणिगृहीता। पूर्वेण नित्यं प्राप्त इति। एतेन विकल्पोऽप्ययं जातिपूर्वादेवेति ध्वनितम् । कथं तर्हि पुत्रहतीत्यत्र 'अस्वाङ्गपूर्वपदात्-' इति ा ङीषिति कैयटः, पुत्रशब्दस्याजातिवाचकत्वात् । अन्यथा पुत्रादिनीत्यत्र 'सुप्यजातौ-' इति णिनिर्न स्यात् । यदि त्वदनमादः सोऽस्यास्तीति आदिनी पुत्राणामादि- विगृह्य कथंचित्साध्येत तर्ह्यपि 'जातिकालसुखादिभ्यः-' इत्यन्तोदात्तविधायकसूत्रे ः किं, पुत्रजातः' इति वक्ष्यमाणमूलग्रन्थो विरुध्यत एवेति चेदुच्यते—'प्रादुर्भावभ्यां सत्त्वस्य युगपद्गुणैः । असत्त्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥' ति भाष्ये लक्षणान्तरमुक्तम् । सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां प्रादुर्भावतिरोावौ या प्राप्नोति, यावद्द्रव्यभाविनीत्यर्थः । गुणैर्युगपद् द्रव्येण संबध्यते । बह्वर्था र्वव्यक्तिव्यापिनीमित्यर्थः । तां जातिमित्यादि कैयटेन व्याख्यातम् । एवं च पुत्रत्वस्य वद्द्रव्यभावित्वेनोक्तलक्षणलक्षितत्वाज् जातिवाचक एव पुत्रशब्द इति 'अस्वाङ्ग-' ति वा ङीषिति ग्रन्थस्तत्र न विरुध्यते । 'आकृतिग्रहणा जातिः' इत्यादिमुख्यपक्षाश्रयेण तु पुत्रत्वस्याजातित्वाज्जातेः किं पुत्रजात इति ग्रन्थोऽपि संगच्छत इति दिक्। चिदर्वाचीनास्तु पुत्रहती पुत्रजग्धीत्यत्र 'क्तादल्पाख्यायाम्' इत्यनेन ङीषमाहुः । सुरापीतीति । पीता सुरा यया सा । 'जातिकाल-' इति सूत्रवार्तिकाभ्यां निष्ठाया न्तोदात्तत्वपरनिपातौ । वस्त्रच्छन्नेति । बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरे शेषनि-

दात्तनिषेधः, अत एव पूर्वेणापि न ङीष् । **५१० स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ।(४-१-५४) असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीष् । केशानतिक्रान्ता अतिकेशी, अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । संयोगोपधात्तु सुगुल्फा । उपसर्जनात् किम्-शिखा । स्वाङ्गं त्रिधा—

---

तथा च बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे शेषनिघातेन अनुदात्तान्तमेतदिति भावः । **अत एवेति** । 'अस्वाङ्गपूर्वपदात्-' इत्यनेन 'बहुव्रीहेश्च-' इति पूर्वसूत्रेण च वस्त्रच्छन्नेत्यत्र वैकल्पिको नित्यश्च ङीष् नेत्यर्थः । अन्तोदात्तत्व एवोभयोः प्रवृत्तेरिति भावः । **स्वाङ्गाच्च** । उपसर्जनादिति असंयोगोपधादिति च स्वाङ्गादित्यत्रान्वेति । स्वाङ्गादित्येतद् अत इत्यनुवृत्तं च प्रातिपदिकादित्यनुवृत्तस्य विशेषणम्, तदन्तविधिः । तदाह—**असंयोगोपधमित्यादिना । वा ङीषिति** । 'अस्वाङ्गपूर्वपदाद्वा' इत्यतो वेति 'अन्यतो ङीष्' इत्यतो ङीषित्यस्य चानुवृत्तेरिति भावः । बहुव्रीहिरित्यनुवर्तमाने उपसर्जनग्रहणं किमर्थमित्याशङ्क्य परिहरति—**केशानतिक्रान्तेति** । 'अत्यादयः क्रान्ताद्यर्थे-' इति समासस्तत्पुरुषः । अत्र बहुव्रीहित्वाभावेऽपि प्राप्त्यर्थमुपसर्जनग्रहणमिति भावः । 'एकविभक्ति चापूर्वनिपाते' इति केशशब्दस्य उपसर्जनत्वम् । **चन्द्रमुखी, चन्द्रमुखेति** । चन्द्र इव मुखं यस्या इति विग्रहः । **सुगुल्फेति** । सु-शोभनौ गुल्फौ यस्या इति विग्रहः । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । **उपसर्जनात् किमिति** । केवलकेशादिशब्दानाम् अनुपसर्जनानां स्त्रीत्वविरहादेवाप्राप्तेः प्रश्नः । **शिखेति** । अत्र स्वाङ्गान्तत्वात् केवलशिखाशब्दाद् ङीष्निवृत्त्यर्थमुपसर्जनग्रहणमित्युक्तम् । अन्यथा टापं बाधित्वा पक्षे ङीष् स्यादिति भावः । शोभना शिखा सुशिखेति क्वचित् पुस्तकेषु दृष्टम्, तत् प्रक्षिप्तं वेदितव्यम् । टाबन्तेन समासे अनदन्तत्वादेव प्राप्तिविरहात् । ननु स्वस्य अवयवीभूतस्य अङ्गं स्वाङ्गम्, तथा च सुमुखा शालेत्यादावतिव्याप्तिः, तत्र मुखशब्दार्थस्य प्रथमभागस्य अवयवीभूतशालाङ्गत्वात्, किं च सुकेशी रथ्येत्यत्राव्याप्तिः, तत्र केशानां रथ्याङ्गत्वाभावादित्यत आह—**स्वाङ्गं त्रिधेति** । 'अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं

---

घाते च कृते अनुदात्तान्तोऽयम् । **स्वाङ्गाच्चो** । इह बहुव्रीहिरिति नानुवर्तते इति ध्वनयन्नुदाहरति—**अतिकेशीति । शिखेति** । 'शीङः खो ह्रस्वश्च' इति खस्तदन्ताट्टाप् । अन्यथा टापं बाधित्वा ङीष् स्यादिति भावः । केचित्तु सुशिखेत्यपि प्रत्युदाहरन्ति । तच्चिन्त्यम्, टाबन्तेन समासे अनदन्तत्वेन ङीषः प्राप्त्यभावात् । न च टापः प्रागेव कृदन्तेनैव समासाददन्तत्वमस्तीति वाच्यम्, तथा हि सति शोभना शिखा सुशिखेत्यर्थस्यालाभादिति नव्याः । यद्यत्र स्वमङ्गं गृह्यते तर्हि सुमुखा शालेत्यत्रापि

'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।'

सुस्वेदा, द्रवत्वात्। सुज्ञाना, अमूर्तत्वात्। सुमुखा शाला, अप्राणिस्थत्वात्। सुशोफा, विकारजत्वात्।

'अतत्स्थं तत्र दृष्टं च'

सुकेशी, सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्।

'तेन चेत्तत्तथा युतम्॥'

---

तत्र दृष्टं च, तेन चेत्तत्तथायुतम्॥' इति भाष्ये त्रिधा निरुक्तं पारिभाषिकं स्वाङ्गमिह विवक्षितमित्यर्थः। तत्र प्रथमार्धं प्रथमं स्वाङ्गलक्षणमित्यभिप्रेत्य विच्छिद्य पठति—**अद्रवमिति**। न विद्यते द्रवो यस्य तद् अद्रवम्। मूर्तिः—अवयवसंयोगः अस्यास्तीति मूर्तिमत्, अवयवसंयोगासमवायिकारणं द्रव्यमिति यावत्। प्राणिनि—प्राणवति जन्तौ विद्यमानं प्राणिस्थम्। अविकारजं रोगादिविकाराजन्यं च यत् तत् प्रथमं स्वाङ्गमित्यर्थः। अद्रवमित्यस्य प्रयोजनमाह—**सुस्वेदेति**। सु—शोभनः स्वेदो घर्मजः उदकप्रस्रव यस्या इति विग्रहः। स्वेदस्य शोभनत्वं तु दुर्गन्धाभावः। **द्रवत्वादिति**। न स्वाङ्गत्वमिति शेषः। अतो न ङीषित्यर्थः। मूर्तिमदित्यस्य प्रयोजनमाह—**सुज्ञानेति**। सु—शोभनं ज्ञानं यस्या इति विग्रहः। **अमूर्तत्वादिति**। न स्वाङ्गत्वमिति शेषः। प्राणिस्थमित्यस्य प्रयोजनमाह—**सुमुखा शालेति**। सु—शोभनं मुखं—प्रथमभागो यस्या इति विग्रहः। **अप्राणिस्थत्वादिति**। न स्वाङ्गत्वमिति शेषः। अविकारजमित्यस्य प्रयोजनमाह—**सुशोफेति**। सु—अधिकः शोफः—श्वयथुः यस्या इति विग्रहः। 'शोफस्तु श्वयथुः' इत्यमरः। **विकारजत्वादिति**। रोगजत्वादित्यर्थः। न स्वाङ्गत्वमिति शेषः। **अतत्स्थं तत्र दृष्टं चेति**। द्वितीयं स्वाङ्गलक्षणम्। तच्छब्देन प्राणी परामृश्यते। अतत्स्थम्—अप्राणिस्थं तत्र प्राणिनि दृष्टं यत् तदपि स्वाङ्गमित्यर्थः। **रथ्येति**। रथ्यास्थानां केशानां प्राणिस्थत्वाभावात् पूर्वलक्षणेन स्वाङ्गत्वाऽसिद्धेर्लक्षणान्तरमिति भावः। उक्तलक्षणमुदाहरणे योजयति—**अप्राणिस्थस्यापीति**। इदानीं प्राणिस्थत्वाभावेऽपि कदाचित् प्राणिस्थत्वादपि स्वाङ्गत्वमित्यर्थः। **तेन चेत्तत्तथा युतमिति**। तृतीयं स्वाङ्गलक्षणम्। अत्र भाष्ये 'स्वाङ्गमप्राणि-

---

स्यात्, मुखस्य शालाङ्गत्वात्। सुकेशी रथ्येत्यत्र च न स्यात्, केशानां रथ्याङ्गत्वाभावात्। अतोऽव्यात्यतिव्याप्तिपरिहारार्थमाह—**स्वाङ्गं त्रिधेति**। **मूर्तिमदिति**। स्पर्शवद्द्रव्यपरिमाणं मूर्तिः। **प्राणीति**। मुखनासिकासंचारी वायुः प्राणः। **सुमुखा शालेति**। एवं च 'फलमुखी कारणमुखी चानवस्था' इत्यादि प्रयोगाः प्रामादिका इति भावः। प्रतिमादिगतस्तनस्य प्राणिन्यदृष्टत्वात् स्वाङ्गत्वं न प्राप्नोतीति तृतीय-

सुस्तनी, सुस्तना वा प्रतिमा, प्राणिवत्प्राणिसदृशे स्थितत्वात्। ५११ **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च।** (४-१-५५) एभ्यो वा ङीष् स्यात्। आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते, पुरस्तादपवादन्यायात्। ओष्ठादीनां पञ्चानां

---

नोऽपि-' इति शेषः पूरितः। चेदिति यद्यर्थे। तेन प्राणिस्थेन स्तनाद्यङ्गाकृतिकावयवविशेषेण तद् अप्राणि द्रव्यं प्रतिमादि तथा प्राणिद्रव्यवद् युतं संबद्धं यदि, तदा तत् स्तनाद्याकृतिकम् अप्राणिनोऽपि स्वाङ्गमित्यर्थः। **सुस्तनी, सुस्तना वा प्रतिमेति।** सु-शोभनौ स्तनौ स्तनाकृती अवयवौ यस्या इति विग्रहः। प्रतिमागतयोः स्तनाकृतिकावयवयोः कदाचिदपि प्राणिस्थत्वाभावात् प्राण्यन्तरे अदृष्टत्वाच्च पूर्वलक्षणद्वयस्याप्यप्रवृत्तेर्लक्षणान्तरमिदम्। अथोदाहरणे लक्षणं योजयति—**प्राणिवदिति।** सप्तम्यन्ताद्वतिः। प्राणिवत् प्राणिसदृशे प्रतिमादिद्रव्ये स्थितत्वात् स्वाङ्गमित्यर्थः। न च कल्याणपाणिपादेति बहुव्रीहावपि ङीष् स्यादिति वाच्यम्, 'अस्वाङ्गपूर्वपदाद्वा' इत्यनुवृत्तेः। अत्र हि पाणिपादेति समुदायो न स्वाङ्गम्, किन्तु स्वाङ्गसमुदाय एव। यत्तु स्वाङ्गं पादेति, न तु तद् अस्वाङ्गात् पूर्वपदात् परम्, पाणिपदेन व्यवधानात्। तथा च स्वाङ्गस्य पादस्य अस्वाङ्गात् पूर्वपदात् कल्याणशब्दात् परत्वाभावान्न ङीषिति भाष्ये स्पष्टम्। **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च** 'अस्वाङ्गपूर्वपदाद्वा' इत्यतो वेति 'अन्यतो ङीष्' इत्यतो ङीषिति चानुवर्तते। तदाह—**एभ्य इति।** उपसर्जनभूतनासिकादिशब्दान्तेभ्य इत्यर्थः, पूर्वसूत्रादुपसर्जनादित्यनुवृत्तेः। ननु 'स्वाङ्गाच्च-' इति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह—**आद्ययोरिति।** नासिकोदरशब्दयोर्विषये 'न क्रोडादिबह्वचः' इति निषेधः प्राप्तः, सोऽनेन ङीष्विकल्पविधिना बाध्यत इत्यर्थः। बह्वज्लक्षणनिषेधस्तु सुजघनेत्यादौ सावकाश इति भावः। ननु सहनासिका, अनासिका, सहोदरा, अनुदरा इत्यत्र 'सहनञ्विद्यमानपूर्वाच्च' इति निषेधोऽप्यनेन बाध्यताम्, 'सहनञ्-' इत्यस्य सकेशा, अकेशा इत्यादौ सावकाशत्वादित्यत आह—**पुरस्तादिति।** 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायादित्यर्थः। ततश्च 'सहनञ्-' इति निषेधो 'नक्रोडादि-' सूत्रेण व्यवहितत्वाद् 'नासिकोदर-' इत्यनेन बाधं नार्हतीत्यर्थः। ओष्ठादिपञ्चकस्य प्रयोजनमाह—**ओष्ठादीनामिति।** सुगुल्फेत्यादौ असंयोगोपधादित्यस्य सावकाशत्वादिति भावः। ननु सहोष्ठा, अनोष्ठा इत्यादौ 'सहनञ्-'

---

लक्षणमाह—**तेन चेदिति।** येनाङ्गेन प्राणिरूपं वस्तु यथा युतं तेन तत्सदृशेनाङ्गेन तद् अप्राणिरूपं वस्तु तथा प्राणिवद्युतं युक्तं चेत् तदप्यप्राणिनि दृष्टं स्वाङ्गमि

तु 'असंयोगोपधात्' इति पर्युदासे प्राप्ते वचनम्, मध्येऽपवादन्यायात्। सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः। तुङ्गनासिकी–तुङ्गनासिकेत्यादि। नेह। सहनासिका, अनासिका अत्र वृत्तिः–'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्'। स्वङ्गी, स्वङ्गेत्यादि। एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित्। 'भाष्याद्यनुक्तत्वादप्रमाणम्' इति प्रामाणिकाः। अत्र वार्तिकानि। 'पुच्छाच्च' ( वा २४८९ )। सुपुच्छी, सुपुच्छा। 'कबरमणिविषशरेभ्यो नित्यम्' ( वा २४९० )। कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरीत्यादि। 'उपमानात्पक्षाच्च पुच्छाच्च' (वा २४९१)। नित्यमित्येव। उलूकपक्षी शाला। उलूकपुच्छी सेना। ५१२ न क्रोडादिबह्वचः

---

इति निषेधोऽप्यनेन बाध्यतामित्यत आह—**मध्येऽपवादेति**। 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति न्यायादित्यर्थः। ननु 'नासिकोदर–' इति ङीष्विकल्पस्तुङ्गनासिकी इत्यादौ सावकाशः, 'सहनञ्–' इति निषेधस्तु सहकेशेत्यादौ सावकाशः, सहनासिकेत्यादौ तु उभयप्राप्तौ कतरस्य बाध इत्यत आह—**सहनञ्लक्षणस्त्विति**। **अस्येति**। 'नासिकोदर–' इति ङीष्विकल्पविधेरित्यर्थः। **तुङ्गनासिकी, तुङ्गनासिकेति**। 'न क्रोडादिबह्वचः' इति बह्वज्लक्षणङीष्निषेधं बाधित्वा 'नासिकोदर–' इति विकल्पः। **इत्यादीति**। कुम्भोदरी, कुम्भोदरा। अत्र बह्वज्लक्षणङीष्निषेधं बाधित्वा ङीष्विकल्पः। बिम्बोष्ठी, बिम्बोष्ठा। सुजङ्घी, सुजङ्घा। शुभ्रदन्ती, शुभ्रदन्ता। सुकर्णी, सुकर्णा। सुश्टङ्गी, सुश्टङ्गा। ओष्ठादिषु संयोगोपधत्वेऽपि ङीष्विकल्पः। **नेह सहनासिकेति**। सहशब्दो विद्यमानवचनः, सह नासिका यस्या इति विग्रहः। अविद्यमाना नासिका यस्या इति च विग्रहः। इह उभयत्रापि 'सहनञ्विद्यमान–' इति ङीष्निषेधः, न तु 'नासिकोदर–' इति ङीष्विकल्प इत्यर्थः। **वक्तव्यमिति**। वा ङीषिति–इति शेषः। संयोगोपधत्वाद्वचनम्। **स्वङ्गीति**। सु–शोभनानि अङ्गानि यस्या इति विग्रहः। सुगात्री, सुगात्रा। सुकण्ठी, सुकण्ठा। वृत्तिग्रन्थस्य मूलं दर्शयति—**एतच्चेति**। **प्रामाणिका इति**। एवं च तन्वङ्गी, सुगात्री, कलकण्ठी इत्यपभ्रंशा एवेति भावः। **पुच्छाच्चेति**। संयोगोपधत्वेऽपि पुच्छशब्दान्ताद् ङीष्वेति वक्तव्यमित्यर्थः। **कबरमणीति**। कबरादिभ्यः परो यः पुच्छशब्दः तदन्ताद् नित्यं ङीषिति वक्तव्यमित्यर्थः। पुच्छाच्चेत्युक्तविकल्पापवादः। कबरमित्यस्य व्याख्यानं चित्रमिति। **इत्यादीति**। मणिपुच्छी। वृश्चिकी विषपुच्छी। शरपुच्छी पक्षिजातिविशेषः। **उपमानादिति**। उपमानात् परौ यौ पक्षपुच्छशब्दौ तदन्तादपि ङीषित्यर्थः। **नित्यमित्येवेति**। नित्यमित्यनुवर्तत

---

त्यर्थः। **मध्येऽपवादेति**। 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्' इति न्याया-

---

१ नास्ति क।

(४-१-५६) क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना । **५१३ सहनञ्विद्यमानपूर्वाच्च ।** (४-१-५७) सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका । **५१४ नखमुखात्संज्ञायाम् ।** (४-१-५८) ङीष् न स्यात् । शूर्पणखा । गौर-

एवेत्यर्थः । विकल्पापवादः । **उलूकपक्षी शालेति ।** उलूकः पक्षिविशेषः, उलूकपक्षाविव पक्षौ पार्श्वे यस्या इति विग्रहः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति समासः । संयोगोपधत्वादप्राप्ते विधिः । **उलूकपुच्छी सेनेति ।** उलूकपुच्छमिव पुच्छं पश्चिमान्तो यस्या इति विग्रहः । पूर्ववदेव बहुव्रीहिः । 'पुच्छाच्च' इति विकल्पस्यापवादः । **न क्रोडादिबह्वचः ।** क्रोडा आदिर्यस्येति, बहवः अचः यस्येति च विग्रहः । क्रोडादिश्च बह्वच् च इति समाहारद्वन्द्वः । **क्रोडादेरिति ।** क्रोडादिर्गणः, बह्वच् च यत् स्वाङ्गं तदन्ताद् ङीष नेत्यर्थः । **कल्याणक्रोडेति ।** कल्याणी क्रोडा यस्या इति विग्रहः । 'स्त्रियाः पुंवत्–' इति कल्याणशब्दस्य पुंवत्त्वम् । **अश्वानामिति ।** हरदत्तादिमते क्रोडाशब्दो नित्यस्त्रीलिङ्गः । उपसर्जनह्रस्वत्वे अदन्ततया 'स्वाङ्गाच्चोपसर्जनात्–' इति प्राप्तो ङीष् निषिध्यते । अमरस्तु 'न ना क्रोडं भुजान्तरम्' इति स्त्रीत्वं नपुंसकत्वं चाह । क्वचित् कोशे पुंस्त्वमपि दृश्यते । क्रोडादिगणे क्रोडेति प्रातिपदिकं पठ्यते । एवं च लिङ्गत्रयेऽपि उदाहरणं निर्बाधम् । **आकृतिगणोऽयमिति ।** क्रोडादिरिति शेषः । **सुजघनेति ।** बह्वच उदाहरणम् । सु–शोभनं जघनं यस्या इति विग्रहः । **सहनञ् । त्रिकपूर्वादिति ।** स्वाङ्गादिति शेषः । **सकेशेति ।** सह केशा यस्या इति बहुव्रीहिः । सहशब्दो विद्यमानवचनः । 'वोपसर्जनस्य' इति सभावविकल्पः । 'स्वाङ्गाच्च–' इति प्राप्तस्य निषेधः । 'नासिकोदर–' इति ङीष्विकल्पोऽप्यनेन बाध्यत इत्युक्तं स्मारयितुमुदाहरति । **विद्यमाननासिकेति ।** विद्यमाना नासिका यस्या इति बहुव्रीहिः । **नखमुखात् संज्ञायाम् ।** नखमुखादिति समाहारद्वन्द्वः । शेषपूरणेन सूत्रं व्याचष्टे—**ङीष् नेति ।** 'स्वाङ्गाच्च–' इति प्राप्तस्य निषेधोऽयम् । **शूर्पणखेति ।** राक्षसीविशेषस्य नाम । शूर्पाणीव कररुहा यस्या इत्यस्वपदविग्रहः, संज्ञात्वेन नित्यसमासत्वात् । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् । केवलयौगिकत्वे तु

दित्यर्थः । **उरःक्रोडेति ।** स्त्रीलिङ्गोऽयमिति हरदत्तादयः । तत्रोपसर्जनह्रस्वत्वे कृते अदन्तत्वाद् ङीषः प्राप्तिः । अमरस्तु 'न ना क्रोडं भुजान्तरम्' इत्याह । रत्नपतिस्तु पुँल्लिङ्गतामाह । गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते न तु टाबन्तमिति गणरत्नमहोदधिकारः । एवं चाविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम् । माधवस्तु—तुदादिगणे 'कुड निमज्जने' इति धातावाह–क्रोडः । घञ् । क्रोडा अश्वानामुरः । टाबन्तोऽयं स्वभा-

मुखा। संज्ञायाम् किम्-ताम्रमुखी कन्या। **५१५ दिक्पूर्वपदान्ङीप्।** (४-१-६०) दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात्। प्राङ्मुखी। आद्युदात्तं पदम्। **५१६ वाहः।** (४-१-६१) वाहन्तात् प्रातिपदिकान्ङीष् स्यात्। ङीषेवानुवर्तते न ङीप्। 'दित्यवाट् च मे दित्यौही च मे'।

---

ङीष् भवत्येव। णत्वं तु न। **गौरमुखेति।** कस्याश्चिन्नाम। श्वेतं मुखं यस्या इत्यस्वपदविग्रहः। **ताम्रमुखीति।** यौगिकोऽयम्। ताम्रं मुखं यस्या इति विग्रहः। **दिक्पूर्वपदान्ङीप्।** दिक् पूर्वपदं यस्येति विग्रहः। स्वाङ्गादित्यनुवर्तते। प्रातिपदिकादिति च। 'अन्यतो ङीष्' इत्यतो ङीषित्यनुवृत्तं षष्ठ्या विपरिणम्यते। तदाह— **दिक्पूर्वेत्यादिना। प्राङ्मुखीति।** प्राग् मुखं यस्या इति विग्रहः। ङीषो ङीब्विधेः फलमाह—**आद्युदात्तं पदमिति।** ङीपः पित्त्वादनुदात्तत्वे बहुव्रीहिप्रकृतिस्वरेणाद्युदात्तत्वम्। ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वं स्यादित्यर्थः। न च स्वतन्त्रो ङीबेव विधीयतामिति वाच्यम्, तथा सति प्राग्गुल्फेत्यादावपि 'असंयोगोपधात्' इति निषेधं बाधित्वा ङीप्प्रसङ्गात्। ङीषो ङीबादेशविधौ तु 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विहितङीषो ङीब्विधानान्न दोषः। 'असंयोगोपधात्' इत्यस्यानुवृत्त्यङ्गीकारे तु प्रतिपत्तिगौरवमिति भावः। **वाहः।** वाह इति पञ्चम्यन्तं प्रातिपदिकादित्यनुवृत्तस्य विशेषणम्, तदन्तविधिः। तदाह—**वाहन्तादिति। ङीषेवानुवर्तत इति।** 'अन्यतो ङीष्' इत्यत इति शेषः। **न ङीबिति।** 'दिक्पूर्वपदात्-' इति पूर्वसूत्रे संनिहितमपि ङीब्ग्रहणमिह नानुवर्तते, अस्वरितत्वादित्यर्थः। स्वरे विशेषः। **दित्यौहीति।** गवां

---

वतो विशेषविषयः। क्रोडादिषु टाबन्तमात्रस्य पाठात्। भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्पो भवत्येव। कल्याणक्रोडी, कल्याणक्रोडा मयूरीति। केशैः सह वर्तत इति-**सकेशा**। अविद्यमानाः केशा यस्याः सा-**अकेशा**। **शूर्पणखेति।** 'पूर्वपदात्संज्ञायाम्-' इति णत्वम्। यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते, न तु संज्ञा, ततोऽसंज्ञात्वान्न ङीष्निषेधो न वा णत्वम्, तेन राक्षस्यपि योगवृत्त्या शूर्पनखीति भवतीत्याहुः। **ङीषो ङीबादेश इति।** 'अन्यतो ङीष्' इत्यतो ङीषित्यनुवर्तते। 'दिक्पूर्वपदात्-' इति पञ्चम्या ङीषिति प्रथमायाः षष्ठी कल्प्यत इति भावः। यदि तु स्वतन्त्रो ङीप् स्यात्तर्हि प्राग्गुल्फा प्राक्क्रोडेत्यत्रापि प्रसज्येत। पूर्वोक्तासंयोगोपधादित्यस्य निषेधानां चानुवृत्तौ प्रतिपत्तिगौरवमिति भावः। **प्राङिति।** 'निपाता आद्युदात्ताः' इति पूर्वपदे उदात्ते सति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरे सिद्धे ङीष् प्रत्ययस्वरेणोदात्त इति शेषनिघातः स्यात्, तन्माभूदिति ङीषो ङीबनुदात्तो विधीयत इति प्राङ्मुखीति पदमाद्युदात्तमिति भावः।

**५१७ सख्यशिश्वीति भाषायाम्। ( ४-१-६२ )** इतिशब्दः प्रकारे भाषायाम् इत्यस्यानन्तरं द्रष्टव्यः। तेन छन्दस्यपि क्वचित्। सखी। अशिश्वी। 'आ धेनवो धुनयन्तामशिश्वीः।' **५१८ जातेरस्त्रीविषयादयोपधात्। (४-१-६३)** जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष्स्यात्।

---

तावत् षण्मासात्मकमेकैकं वयः। 'गर्भाश्च मे वत्साश्च मे' इत्यनुवाके अनुक्रान्तानि वयांसि। तत्र तृतीयं वयो दित्यशब्देनोच्यते–इति यजुर्वेदभाष्ये भवस्वामिधूर्तस्वाम्यादिकृतकल्पभाष्येषु च स्पष्टम्। दित्यं वहतीति विग्रहे 'च्छन्दसि सहः' 'वहश्च' इति ण्विः, उपधावृद्धिः, उपपदसमासः। दित्यवाह्शब्दाद् ङीष्, 'वाह ऊठ्' 'एत्येधत्यूठ्सु' इति वृद्धिः, दित्यौहीति रूपम्। ण्विप्रत्ययस्य छन्दोमात्रविषयत्वाद्वेदवाक्यमुदाहृतम्। लोके तु वाहयतेः क्विपि, वाह्शब्दाद् ङीषि, दित्यौहीति रूपमस्ति। वैदिकप्रक्रियायामुपन्यसनीयमप्येतत् सूत्रमेतदर्थमिहोपन्यस्तम्। **सख्यशिश्वी।** सखिशब्दाद् अशिशुशब्दाच्च स्त्रियां ङीष् निपात्यते भाषायाम्। लौकिकप्रयोगो भाषा। तर्हि वेदे नैव स्यादित्यत आह—**इतिशब्द इति**। प्रकारे इत्यनन्तरं वर्तते इति शेषः। प्रकारः सजातीयता। **भाषायामित्यस्येति**। स च इतिशब्दो भाषायामित्यस्यानन्तरं संनिवेश्यते इत्यर्थः। ततश्च भाषायां वेदे चेति फलितम्। नन्वेवं सति भाषायामिति व्यर्थमित्यत आह—**तेनेति**। भाषाग्रहणेन भाषायां सर्वत्र भवति, वेदे तु क्वचिदिति लभ्यत इत्यर्थः। **सखीति**। सखिशब्दाद् ङीषि 'यस्येति च' इति खकारादिकारस्य लोपः। भाषायां किम्–'सखा सप्तपदा भव'। **अशिश्वीति**। न विद्यते शिशुर्यस्या इति विग्रहः। अशिशुशब्दाद् ङीषि उकारस्य यण्। 'अशिश्वी शिशुना विना' इत्यमरः। छन्दस्यपि क्वचिदित्यस्योदाहरणमाह—**आ धेनवो धुनयन्तामशिश्वीरिति।** अशिश्वीशब्दाद् जसि 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधाभावश्छान्दसः। **जातेरस्त्री।** अर्थे कार्यासंभवाच्छब्दे कार्यं विज्ञायत इत्याह—**जातिवाचीति। न च स्त्रियां नियतमिति।** स्त्री विषयः–नियमेन वाच्या यस्या इति बहुव्रीहिणा

---

**वाहः।** ण्विप्रत्ययान्तस्य वहेरनुकरणमिदम्। 'वहेश्च' इत्यनेन कर्मण्युपपद एव वहेर्ण्विप्रत्ययविधानात्केवलस्य संभवो नास्तीति सामर्थ्यात्तदन्तविधिरित्यभिप्रेत्याह—**वाहन्तादिति। न ङीबिति।** अस्वरितत्वादिति भावः। **दित्यौहीति।** ङीषि भसंज्ञायां 'वाह ऊठ्', 'संप्रसारणाच्च' इति पूर्वरूपम्। 'एत्येधत्यूठ्सु' इति वृद्धिः। **सख्यशिश्वीति।** सखिशब्दादशिशुशब्दाच्च ङीष् निपात्यते। न विद्यते शिशुर्यस्याः सा अशिश्वी। भाषायां किम्, सखा सप्तपदी भव। **जातेरस्त्री।** जात्या स्ववाचकशब्दो लक्ष्यते, अर्थे कार्यासंभवात्। स्वरूपं तु न गृह्यते, अस्त्रीविषयत्वादित्यादेर्वैयर्थ्या-

'आकृतिग्रहणा जातिः—
अनुगतसंस्थानव्यङ्ग्येऽर्थः । तटी ॥
—'लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या—'

---

स्त्रीविषयशब्दो नियतस्त्रीलिङ्गपरः । तथा च अस्त्रीविषयादित्यनेन अनियतस्त्रीलिङ्गादिति विवक्षितम्, नैयत्यलाभायैव विषयग्रहणम् । अन्यथा अस्त्रिया इत्येवावक्ष्यदिति भावः । ननु यदि 'नित्यमेकमनेकानुगतं सामान्यम्' इति तार्किकोक्ता जातिः, तर्हि शुक्लादिगुणस्य नित्यत्वैकत्वपक्षे शुक्लेत्यादावतिव्याप्तिः, औपगवी कठी इत्यादावव्याप्तिश्च । 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इत्यादिस्मृत्या जननेन यत् प्राप्यते ब्राह्मणत्वादि सा जातिश्चेद्युवत्वादावव्याप्तिः, तथा च युवतितरेत्यत्र 'जातेश्च' इति पुंवत्त्वनिषेधो न स्यात्-इति चेत्, न—'आकृतिग्रहणा जातिः, लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह ॥' इति भाष्योक्तत्रिविधजातेर्विवक्षितत्वाद् इत्यभिप्रेत्य भाष्योक्तत्रैविध्यं प्रपञ्चयति—**आकृतिग्रहणा जातिरिति** । प्रथमेति शेषः । आकृतिः-अवयवसंनिवेशविशेषः । गृह्यते अनेनेति ग्रहणं व्यञ्जकम्, करणे ल्युट्, सामान्ये नपुंसकम्, आकृतिः ग्रहणं यस्या इति विग्रहः । उपसर्जनत्वात् 'टिड्ढाणञ्-' इति ङीन्न । फलितमाह—**अनुगतेति** । सर्वासु घटादितत्तद्व्यक्तिषु एकरूपतत्तदाकारव्यङ्ग्येति यावत् । गृह्यत इति कर्मणि ल्युट्, आकृत्या ग्रहणा आकृतिग्रहणेति तु न व्याख्येयम्, 'टिड्ढाणञ्-' इति ङीप्प्रसङ्गात् । **तटीति** । 'तटं त्रिषु' इत्यमरः । जलसमीपप्रदेश आकृतिविशेषविशिष्टस्तटः, अतस्तटत्वमाकृतिव्यङ्ग्यत्वाज्जातिः, अतस्तटशब्दस्य जातिवाचित्वादनियतस्त्रीलिङ्गत्वादयोपधत्वाच्च ङीषिति भावः । युवत्वादिकमप्याकृतिव्यङ्ग्यत्वाद् जातिरेव । अनेन प्रथमलक्षणेन अनुगताकारप्रत्ययसिद्धा तटत्वादिजातिरुक्ता । नन्वेवं सति वृषलत्वादीनां जातित्वं न स्यात्, तदवयवसंनिवेशस्य ब्राह्मणादिसाधारणत्वेन वृषलत्वादीनां तद्व्यङ्ग्यत्वाभावादित्याशङ्क्याह—**लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्येति** । अन्या जातिरिति शेषः। लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि लिङ्गानि न भजत इत्यर्थः । अस-

---

पत्तेरित्याशयेनाह—**जातिवाचि यदिति** । **आकृतिग्रहणेति** । ग्रहणमिति करणे ल्युट् । सामान्ये नपुंसकम् । आकृतिर्ग्रहणं यस्या इति बहुव्रीहिस्तदेतत्फलितमाह—**अनुगतसंस्थानेत्यादि** । वृषले ब्राह्मणादिव्यावृत्तसंस्थानाभावादव्याप्तिरिति लक्षणान्तरमाह—**लिङ्गानां चेत्यादि** । चकारो भिन्नक्रमो निर्ग्राह्येत्यस्यानन्तरं बोध्यः । लिङ्गानामिति कर्मणि षष्ठी । **न सर्वभागिति** । सर्वाणि लिङ्गानि न भजतीत्यर्थः । सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्भजो ण्विः समासश्च भवत्येवेति नात्र सामर्थ्या-

**'असर्वलिङ्गत्वेन सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिः' इति लक्षणान्तरम् । वृषली । सत्यन्तं किम्–शुक्ला । सकृदित्यादि किम्–देवदत्ता ।**

**—'गोत्रं च चरणैः सह ।'**

---

मर्थसमास आर्षः । सकृदित्यतः पूर्वम् एकस्यां व्यक्ताविति शेषः । आख्यातेति भावे क्तः, उपदेश इत्यर्थः । निर्ग्राह्येत्यस्य व्यक्त्यन्तरे उपदेशं विनापि सुगमेत्यर्थः, निरित्युपसर्गवशात् । निर्ग्राह्येत्यनन्तरमन्या जातिरिति शेषः । फलितमाह—**असर्वेति । एकस्यामिति ।** एकस्यां व्यक्तौ वृषल इत्युपदेशाद् व्यक्त्यन्तरे तदुपदेशं विनापि सुगमेति यावत् । **लक्षणान्तरमिति ।** जात्यन्तरमित्यर्थः । अन्यथा उक्ततटत्वादिजातेरेव 'आकृतिग्रहणा जातिः' इत्युक्तलक्षणादन्यदिदं लक्षणमिति स्यात्, नहीदं युज्यते, तटस्य सर्वलिङ्गत्वात् । **वृषलीति ।** वृषलत्वं ह्यसर्वलिङ्गम्, नपुंसकत्वाभावात्, एकस्यां व्यक्तौ वृषलत्व उपदिष्टे सति तदपत्यसहोदरादिषु तदुपदेशं विना तस्य सुग्रहत्वात् सकृदाख्यातनिर्ग्राह्यं चेति भावः । ब्राह्मणत्वं तु पुत्रपौत्रादौ यद्यपि न सुगमम्, ब्राह्मणात् क्षत्रियायामुत्पन्नस्य ब्राह्मणत्वाभावात् । तथापि पित्रादौ सुगममेव । एवं क्षत्रियत्वं वैश्यत्वं च तत्पित्रादावेव सुग्रहम् । **सत्यन्तं किमिति ।** असर्वलिङ्गत्वे सतीति किमर्थमित्यर्थः । **शुक्लेति ।** बलाकेति शेषः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशाद् विशेष्यनिघ्नतया त्रिलिङ्गत्वादसर्वलिङ्गत्वाभावात् शुक्लत्वं न जातिः । अवयवसंस्थानव्यङ्ग्यत्वाभावान्न पूर्वलक्षणमपि । **देवदत्तेति ।** संज्ञात्वेन नपुंसकलिङ्गहीनतया असर्वलिङ्गत्वेऽपि न सकृदाख्यातनिर्ग्राह्यत्वमिति भावः । अनेन द्वितीयलक्षणेन जननिमित्तकब्राह्मणत्वादिजातिसङ्ग्रहः । नन्वेवमपि औपगवी कठीत्याद्यसंग्रहः, औपगवत्वादेरनुगतसंस्थानव्यङ्ग्यत्वाभावात्, सर्वलिङ्गत्वाच्चेत्यत आह—**गोत्रं च चरणैः सहेति ।** जातिरित्यनुषज्यते । गोत्रशब्देन अपत्यं विवक्षितम्,

---

भावः शङ्क्यः । **वृषलीति ।** एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनापि तस्य सुग्रहत्वादिति भावः । **देवदत्तेति ।** नन्वत्र परिणामभेदेन द्रव्यभेदाभ्युपगमे स्यादेवातिप्रसङ्गः । एकस्यां व्यक्तौ देवदत्तत्वे कथिते व्यक्त्यन्तरे कथनं विनापि तस्य सुग्रहत्वात् । मैवम् । परिणामभेदेन द्रव्यभेदस्य प्रामाणिकैरनभ्युपगमात् । अभ्युपगमे वा समानकालतया व्यक्त्यन्तरस्य विशेषणात्, तथा च यस्यां व्यक्तौ देवदत्तत्वं कथ्यते तत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः । वृषलत्वादिस्तु भवत्येव तदीयपितृभ्रात्रादिषु तस्य सुग्रहत्वादिति दिक् ।

---

१ नास्ति क ।

अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः। **औपगवी। कठी। कलापी। बह्वृची। ब्राह्मणीत्यत्र तु शार्ङ्गरवादिपाठान्ङीना**

---

न तु '-पौत्रप्रभृति-' इति पारिभाषिकम्, व्याख्यानात्। अत एवानन्तरापत्यप्रत्ययान्ते अवन्तीत्यत्र जातिप्रयुक्तो ङीषिति 'अनुपसर्जनात्' इति सूत्रस्थभाष्यं संगच्छते। शब्देन्दुशेखरे तु पारिभाषिकमेव गोत्रमिह विवक्षितमिति प्रपञ्चितम्। चरणशब्दस्तु शाखाध्येतरि प्रसिद्धः। चरणैः सह गोत्रं जातिरिति लभ्यते। गोत्रं चरणाश्च जातिरिति यावत्। यद्यपि अनुगताकारप्रत्ययवेद्या जननविशेषप्रयुक्ता चेति द्विविधैव जातिर्लोके प्रसिद्धा, तत्र गोत्रचरणा नान्तर्भवन्ति, तथापि 'अतस्मिन् तच्छब्दस्तद्वाचिषु शब्देषु तत्कार्यार्थः' इत्यभिप्रेत्य व्याचष्टे—**अपत्यप्रत्ययान्त इत्यादिना**। गोत्रमुदाहरति—**औपगवीति**। उपगोरपत्यं स्त्री इत्यर्थे 'तस्यापत्यम्' इत्यणि 'टिड्ढाणञ्-' इति ङीपं बाधित्वा परत्वादनेन ङीष्। स्वरे भेदः। चरणमुदाहरति—**कठीति**। कठेन प्रोक्तमधीयानेत्यर्थः। **कलापीति**। वैशम्पायनान्तेवासित्वनिबन्धनो णिनिः। 'कठचरकाल्लुक्' इति तस्य लुक्। ततः 'तदधीते' इत्यणः 'प्रोक्ताल्लुक्-' इति लुक्, ततो ङीष्। चरणविषये उदाहरणान्तरमाह—**बह्वृचीति**। बह्व ऋचः अध्येया यस्या इति विग्रहः 'ऋक्पूरब्धूः पथामानक्षे' 'अनृचबह्वृचावध्येतर्येव' इत्यकारः समासान्तः, ततो ङीष्। 'पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं तथा।' इति यमादिस्मृतिः। ननु 'लिङ्गानां च न सर्वभाक्' इति 'गोत्रं च चरणैः सह' इति च जातिलक्षणे ब्राह्मणीति परित्यज्य वृषली औपगवी इत्येवं कुत उदाहृतमित्यत आह—**ब्राह्मणीत्यत्रेति**। ब्रह्मणः अपत्यमित्यर्थे 'तस्यापत्यम्' इत्यणि 'ब्राह्मोऽजातौ'

---

उक्तलक्षणद्वयानाक्रान्तत्वात्तृतीयं लक्षणमाह—**गोत्रं च चरणैः सहेति**। अपत्याधिकारादन्यत्र लौकिकं गोत्रम्। चरणः शाखाध्येता। तदेतत् फलितमाह—**अपत्यप्रत्ययान्त इति**। अत्र व्याचख्युः—नाडायनं बह्वृचमिदमिति नपुंसकप्रयोगदर्शनात् सर्वलिङ्गौ गोत्रचरणौ, अतः पृथग्लक्षणं कृतम्। तेनात्र 'लिङ्गानां च न सर्वभाक्' इति द्वितीयलक्षणेन गतार्थता न शङ्क्येति। **औपगवीति**। अणन्तलक्षणं ङीपं परत्वादयं बाधते। एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय 'टिड्ढाणञ्-' इत्यादिना ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः। केचित्तु अपत्याधिकारादुत्तरत्रैव लौकिकं गोत्रं गोत्रशब्देन गृह्यते नान्यत्रेति पारिभाषिकगोत्रप्रत्ययान्त एव जातिकार्यं लभते न त्वपत्यप्रत्ययान्तः। 'गोत्रं च चरणैः सह' इति वचनस्यापत्याधिकारात्पूर्वभावित्वात्। तथा चापत्यार्थे औपगवीति ङीबन्त इति प्राचामुक्तिः सम्यगेवेत्याहुः। **कठीति**। कठेन प्रोक्तमधीयाना वा 'कलापिवैशंपायनान्तेवासिभ्यश्च' इति

ङीष्बाध्यते। जातेः किम्-मुण्डा। अस्त्रीविषयात् किम्-बलाका। अयोपधात् किम्-क्षत्रिया। 'योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः' (वा २४१५)। हयी। गवयी। मुकयी। 'हलस्तद्धितस्य' (सू ४७२) इति यलोपः।

---

इति टिलोपाभावे आदिवृद्धौ ब्राह्मणशब्दः। स्त्रियां तु जातिलक्षणं ङीषं बाधित्वा 'शार्ङ्गरवाद्यञो ङीन्–' इति ङीन्, शार्ङ्गरवादिगणे तत्पाठस्य निरवकाशत्वादिति भावः। तदेवं जातिस्वरूपमुक्त्वा ङीष्विधौ तद्ग्रहणस्य प्रयोजनं पृच्छति—**जातेः किमिति**। **मुण्डेति**। मुण्डत्वं नाम विलुप्तसर्वकेशत्वम्। तत्तु नाकृतिव्यङ्ग्यम्, केशदशायामपि तदाकृतेः सत्त्वात्। नापि 'लिङ्गानां च–' इति लक्षणलक्षितम्, सर्वलिङ्गत्वात्। नापि गोत्रचरणान्तर्भूतम्। अतो न जातिरिति भावः। **अस्त्रीविषयात् किमिति**। विषयग्रहणलभ्यं नियतत्वं प्रवेश्य अनियतस्त्रीलिङ्गादिति किमर्थमित्यर्थः। **बलाकेति**। पक्षिवर्गे 'बलाका बिसकण्ठिका' इत्यमरः। बलाकात्वस्य आकृतिव्यङ्ग्यतया जातित्वेऽपि नियतस्त्रीलिङ्गत्वान्न ङीषित्यर्थः। यद्यपि बलं कायतीति यौगिकत्वे त्रिलिङ्गत्वमस्ति, तथापि प्रवृत्तिनिमित्तैक्ये स्त्रीलिङ्गान्यलिङ्गरहितभिन्नादित्यर्थो विवक्षित इति न दोषः, जातिविशेषे नियतस्त्रीलिङ्गत्वात्। भाष्ये तु अनियतस्त्रीलिङ्गत्वमङ्गीकृत्य अजादित्वाट्टाबिति समाहितम्। **क्षत्त्रियेति**। 'लिङ्गानां च न सर्वभाक्' इति जातिलक्षणसत्त्वेऽपि योपधत्वान्न ङीषिति भावः। **योपधप्रतिषेधे हयगवयेति**। वार्तिकमिदम्। हयादीनां योपधत्वेऽपि ङीष् वाच्य इत्यर्थः। **हयीति**। अश्वा प्रसिद्धा। **गवयीति**। गोसदृशश्चतुष्पाज्जातिविशेषः। **मुकयीति**। चतुष्पाज्जातिविशेषः। **हल इति**। मनुष्यशब्दात् स्त्रियां ङीषि मनुष्य ई इति स्थिते 'हलस्तद्धितस्य' इति यकारस्य लोपे 'यस्येति च' इत्यकारलोपे मनुषीति रूपमित्यर्थः। 'हलस्तद्धितस्य'

---

वैशंपायनान्तेवासित्वाणिनिस्तस्य 'कठचरकाल्लुक्' इति लुक्। अध्येत्रणस्तु 'प्रोक्ताल्लुक्' इत्यनेन। **बह्वृचीति**। बह्व्य ऋचोऽध्येतव्या यया सेति बहुव्रीहिः। 'अनृचबह्वृचावध्येतर्येव' इति वचनाद् 'ऋक्पूरब्धूः–' इति अप्रत्ययः समासान्तः। यद्यपि स्त्रीणामध्ययनं प्रतिषिद्धम्, तथापि पुराकल्पे ह्येतदासीत्। तदाह यमः—'पुराकल्पे तु नारीणां[1] मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं[2] तथा।' इति। यद्वा–मा नामाध्यगीष्ट तद्वंश्यत्वात्ताच्छब्द्यं भविष्यति, यथाऽनधीयानेऽपि माणवके। **ब्राह्मणीत्यत्रेति**। एवं च प्राचो ङीबुदाहरणं प्रामादिकमिति भावः। **मुण्डेति**। मुण्डगुणयोगान्मुण्डा। 'बलाका बिसकण्ठिका'। **क्षत्त्रियेति**। 'क्षत्राद्घः' इत्यपत्ये घविधानाद्गोत्रलक्षणा, 'लिङ्गानां च न सर्व–' इत्यादिलक्षणा वा जातिः। **योपधप्रतिषेध इत्यादि**। गौरादिषु गवयादय इदानीन्तनैः प्रक्षिप्ता इत्यस्मादेव वार्तिकाद्वि-

---

१ 'कुमारीणाम्' इति क्वचित् पाठः। २ 'वाचनम्' इति क्वचित्।

[ 'मनोर्जातावञ्यतौ षुक्च' (सू ११८९) ]। मनुषी। 'मत्स्यस्य ङ्याम्' (वा ४११८)। मत्सी। **५१९ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च।** (४-१-६४) पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष्स्यात्। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। ओषधिविशेषे रूढा एते। **५२० इतो मनुष्यजातेः।** (४-१-६५) ङीष्स्यात्। दाक्षी। योपधादपि, उदमेयस्यापत्यं स्त्री औदमेयी। मनुष्येति किम्-तित्तिरिः।

---

इति लोपप्रवृत्तये यकारस्य तद्धितावयवत्वं दर्शयितुमाह—**मनोर्जाताविति**। तद्धिताधिकारे अपत्याधिकारस्थमिदं सूत्रम्। मनुशब्दादपत्ये अञ्यतौ प्रत्ययौ स्तः, प्रकृतेः षुक्च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामिति तदर्थः। मत्स्यशब्दाद् ङीषि यकारस्य तद्धितावयवत्वाभावादप्राप्ते लोपे आह—**मत्स्यस्य ङ्यामिति**। 'सूर्यतिष्य-' इति सूत्रे वार्तिकमिदम्। मत्स्यस्यावयवस्य यकारस्य लोपः स्याद् ङ्यामेवेति नियमार्थमिदम्। **मत्सीति**। ङीषि यकारलोपे 'यस्येति च' इति लोप इति भावः। ङ्यां किम्-मात्स्योऽवतारः। **पाककर्ण**। 'जातेरस्त्रीविषयात्-' इति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह—**स्त्रीविषयादपीति**। नियतस्त्रीलिङ्गादपीत्यर्थः। नियतस्त्रीलिङ्गत्वात् पूर्वेणाप्राप्तिरिति भावः। जातिवाचित्वं दर्शयितुमाह—**ओषधिविशेषे रूढा इति**। अवयवव्युत्पत्तिरहिता इत्यर्थः। **इतो मनुष्यजातेः**। शेषपूरणेन सूत्रं व्याचष्टे—**ङीष् स्यादिति**। इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष्स्यादित्यर्थः। स्त्रीप्रत्ययविधिषु अत इत्यनुवृत्तेरिदन्ताद् 'जातेरस्त्रीविषयात्-' इत्यप्राप्तौ वचनम्। **दाक्षीति**। दक्षस्यापत्यं स्त्री इत्यर्थे अत इञ्, अल्लोपः, आदिवृद्धिः, ङीष्, 'यस्येति च-' इति इकारलोपः। 'गोत्रं च चरणैः सह' इति जातिवाचित्वम्। दक्षः प्रजापतिविशेषः। **योपधादपीति**। अयं ङीषिति शेषः। पुनर्जातिग्रहणेन योपधग्रहणस्य अनुवृत्त्यभावबोधनादिति भावः। **औदमेयीति**। उदमेयो नाम कश्चित्, तस्यापत्यं स्त्री इत्यर्थे 'अत इञ्', 'यस्येति च' इत्यल्लोपः, आदिवृद्धिः, औदमेयिशब्दाद् ङीष्, 'यस्येति च' इति इकारलोपः। **तित्तिरिरिति**। तित्तिरिः पक्षिजातिविशेषः। स्त्रियां

---

ज्ञायत इति कैयटादयः। **पाककर्ण**। जातेरित्यनुवृत्तेर्नेह। बहुपुष्पा, बहुफला शाखा। एवं हि पूर्वेणैव सिद्धे किमनेन सूत्रेणेत्याशङ्क्याह—**स्त्रीविषयादपीति**। **इतो मनुष्य**। इतः किम्, विट्। दरद्। विट्शब्दात् 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ्, दरच्छब्दात्तु 'द्व्यञ्मगध-' इत्यण्। तयोः 'अतश्च-' इति लुक्। यस्तु

---

१ सूत्रमिदमत्र मूलेऽन्यकौमुदीपुस्तकेषु न दृश्यते, नाप्यन्यटीकाकृतां संमतम्, किन्तु बालमनोरमानुरोधादिह निवेशितम्।

**५२१ ऊङुतः । (४-१-६६)** उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । 'कुरुनादिभ्यो ण्यः' (सू ११६०) । तस्य 'स्त्रियामवन्ति-' (सू ११६५) इत्यादिना लुक् । अयोपधात् किम्-अध्वर्युः । 'अप्राणिजातेश्चारज्ज्वा-

---

ङीष् न, अमनुष्यजातिवाचित्वादिति भावः । 'स्त्रीपुंसयोरपत्यान्तद्विचतुष्षट्पदोरगाः ।' इत्यमरकोशादयं स्त्रियामपि भवति, द्विपात्त्वात् । **ऊङुतः** । 'अयोपधाद्' इति 'मनुष्यजातेः' इति चानुवर्तते, उत इति तद्विशेषणम्, तदन्तविधिः । तदाह—**उकारान्तादित्यादिना** । **कुरूरिति** । कुरुक्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्रीत्यर्थः । 'गोत्र च चरणैः सह' इति जातित्वम् । कुरुशब्दाद् ऊङि सवर्णदीर्घः । ऊङि दीर्घोच्चारणस्य प्रयोजनं भाष्ये स्पष्टम् । 'तस्यापत्यम्' इत्यणमाशङ्क्याह—**कुरुनादिभ्यो ण्य इति** । अपत्याधिकारस्थमिदं सूत्रम् । अनेन सूत्रेण अणपवादो ण्यप्रत्यय इत्यर्थः । तर्हि स श्रूयेतेत्यत आह—**तस्येति । अध्वर्युरिति** । अध्वर्युशाखाध्यायिनीत्यर्थः । चरणत्वाद् जातित्वम् । 'पुरायुगेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा ।' इति यमादिस्मृतिः । **अप्राणिजातेश्चेति** । वाचकानामिति शेषः । रज्ज्वादिभिन्नानामप्राणिजातिवाचकानामपि ऊङ उपसंख्यानमित्यर्थः । नन्वत्र उत इति संबध्यते वा ? न वा, नाद्यः, अलाबूरिति भाष्योदाहरणविरोधात्, अलाबूशब्दस्य ऊदन्तत्वात् । न द्वितीयः, अदन्तादपि अप्राणिजातिवाचिन ऊङापत्तेरित्यत

---

वैश्यपर्यायो विट्शब्दः सोऽपि प्रत्युदाहरणमित्याहुः । **दाक्षीति** । 'अत इञ्' गोत्रलक्षणा जातिः । अदन्तत्वाभावादप्राप्तो ङीष् विधीयते । **योपधादपीति** । 'जातेः' इत्यनुवर्तमाने पुनर्जातिग्रहणादिति भावः । **उदमेयस्येति** । उदकं मेयं यस्य उदमेयः । 'उदकस्योदः संज्ञायाम्' इत्युदादेशः । इञ उपसंख्यानमजात्यर्थम् । सौतंगमी । निवृत्ताद्यर्थे 'वुञ्छण्-' आदिसूत्रेण सुतंगमादिभ्य इञ्, न चायमिञन्तो जातिः । **ऊङुतः** । ङकारो 'नोङ्धात्वोः-' इति विशेषणार्थः । अन्यथा यवाग्वा यवाग्वै इत्यत्रापि स निषेधः स्यात् । दीर्घोच्चारणं तु श्वश्रूशब्दार्थम् । अन्यत्र सवर्णदीर्घेणापि सिद्धेः । **कुरूरिति** । लिङ्गविशिष्टपरिभाषया स्वादयः । अत्र व्याचक्षते—'यद्येकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय इति व्याख्यायेत तर्हि काण्डे कुड्ये इत्यादावपि एकवचनमुत्सर्गतः' इति सुः प्रवर्तेत 'तद्वारणाय 'अप्रत्ययः' इति प्रसज्यप्रतिषेधाभ्युपगमे तु प्रकृते दोषः । श्वश्रूरित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया आवश्यकत्वाच्च । अत एव रमा इत्यत्र 'एकादेशस्य पूर्वान्तत्वेन ग्रहणात् स्वादयः' इति मनोरमादौ न व्याख्यातमिति । **अध्वर्युरिति** । अध्वर्युशाखाध्येत्री, अध्वर्युशाखाध्यायिवंशोद्भवेति वार्थः । चरणलक्षणेयं जातिः । अध्वरं यातीति विग्रहे 'मृगय्वादयश्च' इत्यौणादि-

दीनामुपसंख्यानम्' (वा २५०२) रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव। अलाब्वा। कर्कन्ध्वा। अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वोः' (सू ३७२१) इति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम्। प्राणिजातेस्तु कृकवाकुः। रज्ज्वादेस्तु रज्जुः, हनुः। **५२२ बाह्वन्तात्संज्ञायाम्।** (४-१-६७) स्त्रियामूङ् स्यात्। भद्रबाहूः। संज्ञायां किम्-वृत्तबाहुः। **५२३ पङ्गोश्च।** (४-१-६८) पङ्गूः। 'श्वशुरस्योकारा-

---

आह—**रज्ज्वादिपर्युदासादिति**। उत इति न संबध्यते। अदन्तेषु नातिप्रसङ्गः, 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति न्यायेन रज्ज्वादिसदृशानामुवर्णान्तानामेव ग्रहणादिति भावः। **अलाब्वेति**। अलाबूशब्दादूङि सवर्णदीर्घे अलाबूशब्दाद् ऊङन्तात् सुबुत्पत्तिः। टायां यणादेशे अलाब्वा इति रूपम्। एवं कर्कन्धूशब्दादूङन्तात् टायां कर्कन्ध्वा इति रूपम्। 'कर्कन्धूर्बदरी' इत्यमरः, 'तुम्ब्यलाबूरुभे समे' इति च। ननु ऊदन्तत्वादनयोरूङ्विधिर्व्यर्थ इत्यत आह—**अनयोरिति। कृकवाकुरिति**। पक्षिजातिविशेषः। अत्र मनुष्यजातित्वाभावात् पूर्वेणापि न ङीष्। **बाह्वन्तात्संज्ञायाम्**। 'ऊङुतः' इत्यत ऊङित्यनुवर्तते, 'स्त्रियाम्' इत्यधिकृतम्, प्रातिपदिकादिति च। तदाह—**स्त्रियामूङ् स्यादिति। भद्रबाहूरिति**। कस्याश्चित्संज्ञा। **संज्ञायां किमिति**। संज्ञायामित्येतत् किमर्थमिति प्रश्नः। **वृत्तबाहुरिति**। वृत्तौ बाहू यस्या इति विग्रहः। स्त्रियामपि नोङ्। **पङ्गोश्च**। ऊङिति सूत्रशेषः। भग्नपादत्वं पङ्गुत्वं न जातिः, आसीने शयाने च आकृत्या दुर्ग्रहत्वात्, एकस्यां व्यक्तौ विकलपादोऽयं पङ्गुरिति पङ्गुत्वस्योपदेशेऽपि व्यक्त्यन्तरेषु आसनशयनाद्यवस्थेषु तस्य दुर्ग्रहत्वात्, गोत्रचरणानन्तर्भावाच्च। ततश्च 'ऊङुतः' इत्यप्राप्तौ वचनमिदम्। **श्वशुरस्येति**। वृत्त्यादौ पठितमिदम्। चकाराद् ऊङनुकृष्यते। श्वशुरस्य स्त्री इत्यर्थे पुंयोगलक्षणे ङीषि प्राप्ते तदपवाद ऊङ्, तत्सन्नियोगेन रेफादकारस्य शकारादुकारस्य लोपश्चेत्यर्थः। न च वकारादकारस्य लोपः शङ्क्यः, 'अन्त्यबाधेऽ

---

केन अध्वरशब्दस्यान्तलोपो याधातोः कुप्रत्ययश्च। **पर्युदासादिति**। यदि सूत्रादुत इति गृह्यते तर्हि अलाब्वादावूङः संभवो नेति भावः। **अलाब्वेत्यादि**। प्रथमान्तं द्वितीयान्तं वा नोदाहृतम्। वक्ष्यमाणप्रयोजनस्य तत्रासंभवात्। **नोङ्धात्वोरिति**। ऊङ्धात्वोर्यणः परे शसादय उदात्ता न स्युरिति सूत्रार्थः। **पङ्गोश्च**। अजात्यर्थमिदम्। पङ्गुशब्दो हि गुणवाची। **श्वशुरस्येति**। पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् तत्संनियोगेन च विधीयमानो लोपः संनिहितत्वाद् अन्तस्यैवाकारस्य न त्वादेः। एतच्च

१ शकारादिति नास्ति क।

**कारलोपश्च' (वा २०३९)। चादूङ्। पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्ट-परिभाषया स्वादयः। श्वश्रूः। ५२४ ऊरूत्तरपदादौपम्ये। (४-१-६९) उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः। ५२५ संहितशफलक्षणवामादेश्च। (४-१-७०) अनौपम्यार्थे सूत्रम्। संहितोरूः।**

---

न्त्यसदेशस्य' इति वचनात्। 'यस्येति च' इति तु नात्र भवति, ईकारे तद्धिते च तद्विधानात्। ननु श्वश्रूरित्यत्र कथं स्वादयः, 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य तद्विधेः, अस्य च ङ्याबन्तत्वाभावात्, ऊङन्तस्य च प्रत्ययान्तत्वेन प्रातिपदिकत्वाभावादित्यत आह—**लिङ्गविशिष्टेति**। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषयेत्यर्थः। वस्तुतस्तु 'श्वशुरस्य-'इति वचनममूलकमेव, भाष्ये अदृष्टत्वाद् 'ङ्याप्प्रातिपदिकात्' इति सूत्रस्थभाष्यविरोधाच्च। तत्र हि 'ङ्याप्प्रातिपदिकात्' इत्यत्र ऊङोऽपि ग्रहणं कर्तव्यमित्याक्षिप्य उवर्णान्तादूङ् विधीयते, तत्र सवर्णदीर्घे एकादेशे कृते पूर्वान्तत्वेन प्रातिपदिकत्वलाभादेव सिद्धमित्युक्तम्। यदि ह्युक्तरीत्या श्वश्रूशब्दो व्युत्पाद्यते, तर्हि रेफादकारस्य लुप्तत्वेन एकादेशाप्रसक्तेरुतदसङ्गतिः स्पष्टैव। तथा च श्वश्रूरित्यव्युत्पन्नं प्रातिपदिकमिति शब्देन्दुशेखरे स्पष्टम्। **ऊरूत्तर।** ऊरुः उत्तरपदं यस्येति बहुव्रीहिः। प्रातिपदिकादित्यनुवर्तते। उत्तरपदेत्यनेन पूर्वपदमाक्षिप्तम्, औपम्ये इति तत्रान्वेति। उपमीयते अनयेत्युपमा उपमानम्, उपमैव औपम्यम्, स्वार्थे ष्यञ्। तदाह—**उपमानवाचीति। करभोरूरिति।** करभाविव ऊरू यस्या इति विग्रहः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। करभोरुत्वस्याजातित्वादप्राप्तौ वचनम्, ऊर्वाकृतेः करभसदृशपुरुषोरुसाधारणत्वेन करभसादृश्यघटितकरभोरुत्वस्य आकृतिग्राह्यत्वाभावात्, असर्वलिङ्गत्वाद्यभावाच्च। उपमानवाचीति किम्? वृत्तोरुः, करभोपमोरुरित्यादौ नोङ्, करभशब्दस्य करभसदृशे अवृत्त्या उपमानवाचित्वाभावात्। **संहितशफ।** संहित शफ लक्षण वाम एतत्पूर्वपदादप्यूरूत्तरपदादूङ् स्यादित्यर्थः। पूर्वेणैव सिद्धे किमर्थमित्यत आह—**अनौपम्यार्थमिति। संहितोरूरिति**

---

वचनं 'श्वशुरः श्वश्र्वा' इति निर्देशसिद्धार्थकथनपरम्। अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः। **ऊरूत्तरपदाद्।** उपमीयतेऽनयेत्युपमा, तस्या भाव औपम्यम्। उत्तरपदेन पूर्वपदमिहाक्षिप्यते, तदेतत्फलितमाह—**उपमानवाचिपूर्वपदमिति। करभोरूरिति।** 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः', तद्वदूरू यस्याः सा। 'धात्रीकराभ्यां करभोपमोरुः' इत्यत्र तूङ् न। करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात्। औपम्ये किम्, वृत्तोरुः। ऊर्वन्तादिति वक्तव्ये उत्तरपदग्रहणं हस्तिस्वाम्यूरुरित्यत्र माभूदित्येवमर्थम्। अत्र हि हस्तिन इव स्वाम्यूरू अस्या इति विग्रहः। तथा

सैव शफोरूः, शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात्। लक्षणशब्दादर्श आद्यच् लक्षणोरूः। वामोरूः। 'सहितसहाभ्यां चेति वक्तव्यम्' (वा २५०३)। हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः। सहेते इति सहौ ऊरू यस्याः सा सहोरूः।

---

संहितौ संश्लिष्टौ ऊरू यस्या इति विग्रहः। **सैव शफोरूरिति**। संहितोरूरेव शफोरूरित्यनेनोच्यत इत्यर्थः। शफशब्दं विवृणोति—**शफौ खुराविति**। यद्यपि 'शफं क्लीबं खुरः पुमान्' इत्यमरः, तथापि 'शफः खुरे गवादीनाम्' इति चन्द्रकोशात् पुंस्त्वमिति भावः। ननु शफत्वमूर्वोः प्रत्यक्षविरुद्धमित्यत आह—**ताविवेति**। यतः शफाविव, अत ऊरू शफशब्देनोच्येते इत्यर्थः। कुतस्तत्सादृश्यमित्यत आह—**संश्लिष्टत्वादिति**। तर्ह्युपमानवाचिपूर्वपदत्वादेव सिद्धमित्यत आह—**उपचारादिति**। शफवद् वास्तवं संश्लिष्टत्वमवलम्ब्य शफत्वस्य आरोपादित्यर्थः। एवं च शफशब्दात् तत्सादृश्याप्रतीतेर्नोक्तदोष इति भावः। **लक्षणोरूरिति**। लक्षणौ ऊरू यस्या इति विग्रहः। ननु मार्दवादिगुणपर्यायस्य लक्षणशब्दस्य कथमूरुशब्दसामानाधिकरण्यमित्यत आह—**लक्षणशब्दादिति**। लक्षणमनयोरस्तीति विग्रहे लक्षणशब्दाद् 'अर्शआदिभ्योऽच्' इत्यच्प्रत्यय इत्यर्थः। तथा च लक्षणयुक्तौ इत्यर्थलाभादिह नोक्तदोष इति भावः। **वामोरूरिति**। वामौ सुन्दरौ ऊरू यस्या इति विग्रहः। 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः। **सहितेति**। सहित सह-आभ्यां परो य ऊरुशब्दः, तस्मादपि ऊङ् स्यादिति वक्तव्यमित्यर्थः। ननु संहितग्रहणेनैव एकदेशविकृतन्यायेन सिद्धे पुनः सहितग्रहणं व्यर्थमित्यत आह—**हितेनेति**। हितेन सहेति विग्रहे 'तेन सह-' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सभावे सहितशब्द इत्यर्थः। ननु सहशब्दस्य विद्यमानवचनत्वे सहोरूरित्यत्र सहशब्दप्रयोगो व्यर्थ इत्यत आह—**सहेते इति**। रतिका-

---

वोर्वन्तत्वेऽपि ऊरूत्तरपदत्वमिह नास्ति। स्वाम्यूरुशब्दस्यैवोत्तरपदत्वात्। **संहित**। संहितादिपूर्वपदमूरूत्तरपदं यत् प्रातिपदिकं तस्मादूङ् स्यात्। **शफाविति**। यद्यप्यमरेण 'शफं क्लीबे खुरः पुमान्' इति नपुंसकतोक्ता, तथापि शफशब्दस्य पुंस्त्वमपि प्रामाणिकमेव। 'शफाविव जर्भुराणा' इति श्रुतेः। 'शफः खुरे गवादीनां मूले विटपिनामपि' इति हेमचन्द्रकोशाच्च। **वामोरूरिति**। वामौ सुन्दरौ ऊरू यस्या इति विग्रहः। कथं तर्हि 'पीवरोरु पिबतीव बर्हिणः' इति कुमारः। ऊङभावे हि पीवरोरो इति स्यात्। ऊङश्चेह विधायकं नास्ति। अत्राहुः—संज्ञापूर्वकविधेरनित्यतया संबुद्धिगुणाभावादिति स्थितस्य गतिरुन्नेयेति। **हितेन सहेति**। 'समो वा हिततयोः' इति व्युत्पादितः सहितशब्दस्तु नेह गृह्यते, एकदेशविकृततया संहित-

रुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं

---

ग्रहणानुकूलव्यापारार्थकः। ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः। ताडनादिव्यापारप्रयोज्यग्रहणविषयत्वात् शतं प्रधानकर्म। गर्गाणां तु तद्ग्रहणावधित्वाद् गुणकर्मत्वम्। ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम्। तत्र स्वत्वविश्लेषे गर्गाणामवधित्वादपादानत्वम्, ग्रहणघटकतादृशविश्लेषप्रतियोगिभूतस्वत्वाश्रयत्वात् कर्मत्वं च। तत्रापादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया। गर्गसम्बन्धिकमिति तु प्राञ्चः। **व्रजमवरुणद्धि गामिति।** निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलबन्धनद्वारकपिधानादिव्यापारो रुधेरर्थः। गां निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिकां करोतीत्यर्थः। अत्र चिरस्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया कर्मत्वविवक्षायां द्वितीया। व्रजसम्बन्धिनं गोकर्मकं चिरस्थित्यनुकूलव्यापारं करोतीत्यर्थ इति प्राचीनाः। **माणवकं पन्थानं पृच्छतीति।** जिज्ञासितव्यार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपव्यापारः पृच्छेरर्थः। तत्र विषयतया ज्ञानरूपफलाश्रयत्वात् पन्थाः प्रधानकर्म। तज्ज्ञानं प्रति जनकतया आश्रयत्वाद् माणवको गुणकर्म। माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः। अत्र माणवके करणत्वाविवक्षायां द्वितीया। पथिविषयकं माणवकसंबन्धि ज्ञानमिच्छतीत्यर्थ इति प्राञ्चः। **वृक्षमवचिनोति फलानीति।** वृक्षात् प्रच्याव्य फलान्यादत्त इत्यर्थः। प्रच्याव्यादानानुकूलव्यापारो लोष्टप्रहारादिरूपः अवपूर्वकचिञ्धातोरर्थः। तत्र प्रच्याव्यादानविषयत्वात् फलानि प्रधानकर्म। प्रच्यवावधित्वाद् वृक्षोऽपादानम्। तस्यापादानत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया, वृक्षस्य फलप्रच्यवाश्रयत्वेन कर्मत्वात् प्रच्यवस्य विभागस्य द्विनिष्ठत्वात्। वृक्षसंबन्धि यत् प्रच्युतफलादानं तत् करोतीत्यर्थ इति प्राचीनाः। **माणवकं धर्मं ब्रूते शास्ति वेति।** बोधनानुकूलव्यापारः 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिशब्दप्रयोगात्मको ब्रूञोऽर्थः। माणवकाय धर्मं बोधयतीत्यर्थः। व्यापारप्रयोज्यबोधविषयत्वाद्धर्मः प्रधानकर्म। बोधविषयेण

---

तादर्थ्याविवक्षायाम् 'अकथितं च इति कर्मसंज्ञा। **तण्डुलानिति।** निर्वर्तनार्थस्य पचेरोदनो मुख्यं कर्म, ओदनं निर्वर्तयतीत्यर्थः। तण्डुलास्तु करणत्वाविवक्षायामकथितं कर्म। अन्ये त्वाहुः—'द्व्यर्थः पचिः' इति भाष्यपर्यालोचनया तण्डुलानोदनं पचतीत्यस्य तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः। दुह्यादिषु पचेः परिगणनमप्रामाणिकं भाष्यकैयटयोरनुक्तत्वादिति। **गर्गानिति।** ग्रहणार्थस्य दण्डेः शतं मुख्यं कर्म, गर्गास्त्वपादानत्वाविवक्षायामकथितं कर्म। **व्रजमिति।** अत्र गौर्मुख्यं कर्म, व्रजं त्वधिकरणत्वाविवक्षायाम् 'अकथितं च' इति कर्म भवति। एवमग्रेऽप्यूह्यम्।

**धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं**

---

कर्मणाऽभिप्रेयमाणत्वान्माणवकः संप्रदानम् । तस्य संप्रदानत्वमुपेक्ष्य धर्मद्वारा बोधाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । धर्मविषयकं माणवकसंबन्धिनं बोधं जनयतीत्यर्थ इति तु प्राञ्चः । शासेस्तु धर्मं कुर्वित्यादिविधिघटितशब्दप्रयोगरूपो बोधनानुकूलव्यापारोऽर्थः । इतरत् प्राग्वत् । **शतं जयति देवदत्तमिति** । जि अभिभवे । ग्रहणानुकूलताडनादिव्यापारो जयतेरर्थः । गर्गान् शतं दण्डयतीतिवद्व्याख्येयम् । **सुधां क्षीरनिधिं मथ्नातीति** । मन्थ विलोडने । द्रवद्रव्यगतसारोद्भवनानुकूलः मन्थानदण्डभ्रमजनितसंक्षोभात्मक आस्फालनपर्यायो व्यापारो मन्थेरर्थः । क्षीरोदधेः सकाशात् सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः । व्यापारप्रयोज्योद्भवाश्रयत्वात् सुधा प्रधानकर्म । क्षीरोदधिस्तु उद्भवं प्रत्यपादानम् । तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । सुधाश्रयं क्षीरोदधिसंबन्धिनम् उद्भवं करोतीत्यर्थ इति तु प्राचीनाः । **देवदत्तं शतं मुष्णातीति** । अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयादत्त इत्यर्थः । परस्वामिकद्रव्यस्य स्वामिनः सकाशादपनीयादानानुकूलः स्वाम्यज्ञातो निशासंचारभित्तिच्छिद्रकरणादिरूपव्यापारो मुषेरर्थः । व्यापारप्रयोज्यापनयनपूर्वकादानाश्रयत्वाच्छतं प्रधानकर्म । अपनयनावधित्वाद्देवदत्तोऽपादानम् । अपादानत्वमनादृत्यापनीयादेयद्रव्यस्वामितया देवदत्तस्यापनीयादानाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । शतकर्मकं देवदत्तसंबन्ध्यपनीयादानं करोतीत्यर्थ इति तु प्राञ्चः । **ग्राममजां नयतीति** । ग्रामे अजां प्रापयतीत्यर्थः । णीञ् प्रापणे । देशान्तरसंयोगानुकूलश्चलनगमनपर्यायो व्यापारः प्राप्तिः, न तु देशान्तरसंयोगमात्रम् । ग्रामं प्रति चलनदशायामेव प्राप्नोति गच्छतीति प्रयोगदर्शनात् । चलनेन संयोगे जाते अजा ग्रामं गता प्राप्तेत्येव दर्शनात् । तादृशप्राप्त्यनुकूलो दण्डोद्यमनमार्गान्तरगतिप्रतिबन्धपूर्वकयोग्यमार्गसंयोजनादिरूपव्यापारो नीधातोरर्थः । एतादृशव्यापारप्रयोज्यग्रामसंयोगतदनुकूलगमनोभयाश्रयत्वादजा प्रधानकर्म । तादृशाजाधारत्वाद् ग्रामोऽधिकरणम् । अधिकरणत्वमनादृत्य ग्रामस्यापि तथाविधसंयोगाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । अजाकर्मकं ग्रामसंबन्धि नयनमित्यर्थ इति तु प्राचीनाः । एवमेव ग्रामम् अजां हरति कर्षति वहतीत्यपि व्याख्येयम् । तत्र देशान्तरसंयोगानुकूलम् अजाचलनं वाहकद्वारकम्, तादृशाचलनानुकूलव्यापारः स्कन्धग्रहणादिरूपो हरतेरर्थः, रज्जुबन्धनादिना बलाच्चालनं कृषेरर्थः शकटाद्यारोपणादिरूपदेशान्तरसंयोगानुकूलप्राप्त्यनुकूलो वहेरर्थ इति विशेषः । **अर्थनिबन्धनेयं संज्ञेति** । कैयटादिभिस्तथा व्याख्यातत्वादिति भावः । तथा च **एतदर्थ-**

**संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि । कारकं किम्–माणवकस्य पितरं पन्थानं पृच्छति । 'अकर्मकधातुभिर्योगे देशः**

---

कधात्वन्तरसंयोगेऽपि द्विकर्मकत्वं लभ्यते । वस्तुतस्तु भाष्ये याचिरुधीत्याद्युदाहृत-श्लोकद्वयपरिगणिता दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रूञ्शासय इत्यष्टावेव धातवो द्विकर्मकाः । न तु पचिदण्डिजिप्रभृतयस्तद्बहिर्भूता अपि । अर्थनिबन्धनेयं संज्ञेत्यपि न युक्तम्, भाष्ये अदर्शनात्, भाष्ये याचिग्रहणेनैव सिद्धे भिक्षिग्रहणवैयर्थ्याच्च । नन्वेवं सति 'अहमपीदमचोद्यं चोद्ये' इति 'तद्राजस्य बहुषु' इति सूत्रस्थभाष्यविरोधः, तत्र हि चुदधातुः चौरादिकः प्रच्छिपर्यायः, कर्मणि लट्, उत्तमपुरुषैकवचनम् । अप्रष्टव्य-महं पृच्छ्ये इत्यर्थः । अत्र चुदेर्द्विकर्मकत्वदर्शनाद् अर्थनिबन्धनेयं संज्ञेति विज्ञायत इति चेत्, न—तावता चुदधातोरपि द्विकर्मकत्वलाभेऽपि तदन्येषां द्विकर्मकत्वे माना-भावात् । अत एव 'कर्तुरीप्सिततमम्–' इति सूत्रभाष्ये ह्यर्थः पचिः तण्डुलानोदनं पचतीति तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीति गम्यते । तण्डुलानोदनं पचतीति तण्डुलविकारमोदनं निर्वर्तयतीति गम्यते । ओदनं पचतीति ओदनार्थान् तण्डुलान् विक्लेदयतीति गम्यत इत्युदा-हृतम् । कर्तुरीप्सिततममित्येव तण्डुलानामपि कर्मत्वमिति पचेरेतदुदाहरणत्वमनुपपन्नमेव । तस्माद्भाष्यपरिगणितबहिर्भूतधातूनामन्तर्भावितण्यर्थकत्व एव द्विकर्मकत्वमिति शब्दे-[illegible]

त्वात् 'कर्तुरीप्सिततमम्–' इति [illegible]

'तथायुक्तम्–' इत्यपि न कर्मत्वमित्यत आह—**अकर्मकधातुभिरिति** । ग्रामसमूहा-त्मककुरुपञ्चालाऽवन्त्यादिपरोऽत्र देशशब्दः, न तु ग्रामादिरपि । तेन ग्रामे स्वपिती-

---

**अर्थनिबन्धनेति** । न तु स्वरूपाश्रया । 'अहमपीदमचोद्यं चोद्ये' इति 'तद्राज' सूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः । अत एव 'स्थाणुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्' इति भट्टिः प्रायुङ्क्त । एवं च नाथ-त्यादयो बहवो द्विकर्मका ज्ञेयाः । स्यादेतद्—यद्यर्थनिबन्धनेयं संज्ञा तर्हि नीवह्योरन्य-तरो न पठनीयः, उभयोरप्येकार्थत्वादिति चेत्सत्यम् । भारं वहति भारं नयतीत्यत्र यदि विलक्षणोऽर्थोऽनुभूयते तदा द्वयमपि पठनीयमेव, यदि तु नानुभूयते तर्ह्यन्यतरो न पठनीयः, उभयथापि लक्ष्यस्य निर्बाधत्वात् । अत्र वदन्ति—'जग्राह द्युतरुं शक्रम्' इत्युदाहरणमप्ययुक्तमिति मनोरमोक्तं चिन्त्यमेव । संज्ञाया अर्थनिबन्धनत्वाद्दण्डेर्ग्रहणा-र्थत्वाच्चेति । **बलिं भिक्षत इति** । 'भिक्ष भिक्षायामलाभे लाभे च' भिक्षते याचत इत्यर्थः । **देश इति** । कुरुपञ्चालादिरेवेह गृह्यते । तेन 'अधिशीङ्स्थासाम्–' इत्यस्य न वैयर्थ्यम्, अधिपूर्वाणामेवैषामाधारः कर्मेति नियमार्थत्वाभ्युपगमेऽपि वैकुण्ठे वर्तते

**कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' (वा ११०३—११०४)। कुरून् स्वपिति। मासमास्ते। गोदोहमास्ते। क्रोशमास्ते॥**

---

त्यत्र न द्वितीया। अत्र च 'अधिशीङ्स्थासां कर्म' इति लिङ्गम्। अन्यथा 'अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः' इत्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्योदाहरति—**कुरून् स्वपितीति**। देवदत्त इति शेषः। कुरुषु निद्रां करोतीत्यर्थः। देवदत्तात्तु न तृतीया, तिङा अभिहितत्वादिति भावः। कुर्वादिशब्दा जनपदविशेषेषु स्वभावान्नित्यबहुवचनान्ताः। **मासमास्ते इति**। मासस्याधिकरणसञ्ज्ञां बाधित्वा कर्मत्वम्। **गोदोहमिति**। दोहनं दोहः, भावे घञ्। भावो धात्वर्थः। गोदोहनकालोऽत्र विवक्षितः। नचेह कालत्वादेव सिद्धिः शङ्क्या, अहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात्। गन्तव्यत्वेनाध्वनो विशेषितत्वाद् नियतपरिमाणः क्रोशादिरेव गृह्यत इत्यभिप्रेत्योदाहरति—**क्रोशमास्त इति**। गन्तव्यत्वविशेषणादध्वन्यास्ते इत्यत्र न भवति। अनत्यन्तसंयोगार्थमिदं वार्तिकम्। अत्यन्तसंयोगे तु 'कालाध्वनोरत्यन्तसंयोगे' इत्येव सिद्धमिति प्राचीनानुसारी पन्थाः। वस्तुतस्तु 'अकर्मकधातुभिर्योगे-' इत्यादिवचनं भाष्ये न दृश्यते। किंतु अकर्मकधातूनां कथं द्विकर्मकत्वमित्याशङ्कायां 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्। देशश्च' इत्युक्तम्। हिशब्दघटितत्वादिदं न विधायकम्, किं तु अनुवादकमेव। तथाहि 'कुरून् स्वपिति' इत्यादौ स्वापादिक्रियया कुर्वादीन् व्याप्नोतीत्यर्थः, धातूनामनेकार्थतया कदाचित् तेषां स्वापादिकरणकव्यापनेऽपि वृत्तेः। ततश्च 'कर्तुरीप्सिततमम्-' इत्येव सिद्धम्। यदा तु स्वपादिधातूनां स्वापादावेव वृत्तिः, न तु व्याप्तिपर्यन्ते, तदा कुरुषु स्वपिति, मासे आस्ते इत्यधिकरणत्वमेव। एतच्च 'अकथितं च' इत्यत्र 'कालाध्वनोरत्यन्तसंयोगे' इत्यत्र च भाष्ये स्पष्टम्।

---

इत्यादिष्वतिप्रसङ्गः स्यादेवेत्याशयेन तथैवोदाहरति—**कुरूनिति। गोदोहमिति।** न चेह कालत्वात्सिद्धिः, लोके कालत्वेन प्रसिद्धस्य मासादेरेव कालशब्देन ग्रहणात्। तेन घटमास्त इत्यादि न भवति, जन्यमात्रं कालोपाधिरिति घटादेरपि कालत्वात्। यत्तु प्राचा 'अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो द्वितीयेति केचित्' इत्युक्त्वा नदीमास्त इत्युदाहृतम्, तदसंगतम्। ग्रामसमूहः कुर्वादिरेव देशो गृह्यते, न तु प्रदेशमात्रम्, तेन ग्रामं स्वपितीति न भवतीत्याकरात्, अध्वेति च न्यूनम्, अध्वानं स्वपितीत्यस्यापि प्रसङ्गात्। अत एव आकरेऽध्वा गन्तव्यत्वेन विशेषितः। गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति च व्याख्यातम्। द्वितीयेत्यप्यसङ्गतम्, कर्मसंज्ञाया अविहितत्वात्कर्मणि लादयो न स्युरित्यास्यते मास इत्यादिप्रयोगाभावप्रसङ्गात्। केचिदित्युक्तिस्तन्मतदौर्बल्यसूचनायेति कथंचिद्व्याख्याय पूर्वोक्तदोषपरिहारेऽपि

**५४० गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ। (१-४-५२)** गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात्।

---

अत एव 'समां समां विजायते' इति सूत्रे समायां समायां विजायत इति विग्रहकथनं भाष्ये संगच्छते। अन्यथा द्वितीयाप्रसङ्गात्। अत एव च लकारार्थप्रक्रियायाम् 'अत्यन्तापह्नवे लिङ् वक्तव्यः' इत्यत्र 'कलिङ्गेष्ववात्सीः' नाहं कलिङ्गान् जगाम' इति मूलकृदुदाहृते वाक्ये कलिङ्गेष्विति सप्तमी संगच्छते।

उक्तं च हरिणा—'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥' इति।

इति शब्देन्दुशेखरे प्रपञ्चितम्।

**गतिबुद्धि।** गतिश्च बुद्धिश्च प्रत्यवसानं च तानीति द्वन्द्वः। प्रत्यवसानं भक्षणम्। गतिबुद्धिप्रत्यवसानानि अर्थो येषामिति विग्रहः। शब्दः कर्म येषां ते शब्दकर्माणः, तेषामिति बहुव्रीहिः। अविद्यमानं कर्म येषां ते अकर्मकाः। उभयत्रापि कर्मशब्दः कारकपरः। गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च तेषामिति द्वन्द्वः। अणौ कर्ता अणिकर्ता। यच्छब्दोऽध्याहार्यः। तदाह—**गत्याद्यर्थानामित्यादिना।** णौ अनुत्पन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्त-

---

नदीमास्त इत्युदाहरणस्यासांगत्यदोषस्तदवस्थ एवेति ध्येयम्। **गतिबुद्धि।** प्रत्यवसानं भक्षणम्। **शब्दकर्मकाणामिति।** शब्दः कर्म कारकं येषां तेषामित्यर्थः। कर्मशब्दो ह्यत्र कारकपरो न तु 'कर्तरि कर्मव्यतिहारे' इत्यत्रेव क्रियापरः, कृत्रिमे कार्यसंप्रत्ययात् कर्मग्रहणसामर्थ्याच्च। अन्यथा हि 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणाम्' इत्येव ब्रूयात्। **अणौ यः कर्तेति।** अनुत्पन्ने णिचि शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्तधातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादित्यर्थः। नियमार्थमेतत्सूत्रमिति प्राञ्चः। णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेव कर्तुरिति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये कर्तरि प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात्तृतीया सिध्यति। उक्तं च—'गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः। नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते' इति। कर्तुः स्वधर्मेण तृतीययेत्यर्थः। ननु णिजर्थं प्रति कर्तृत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम्। अन्तरङ्गत्वाच्च स्वकारकविशिष्टा हि क्रिया णिजर्थेन संबध्यते, हेतुमति णिज्विधानात्, कर्तृप्रयोजकस्य हेतुत्वात्। अत एव उपजीव्यापि कर्तृसंज्ञा। एवं च—'परत्वादन्तरङ्गत्वादुपजीव्यतयापि च प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता'। यद्यपि विधि-

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्।

धातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकः स्यादित्यर्थः। क्रमेणोदाहरति—**शत्रूनिति**। 'शत्रूनगमयत् स्वर्गम्' इति गत्यर्थकस्योदाहरणम्। शत्रवो युद्धे मृताः स्वर्गमगच्छन्, तान् यः शस्त्रघातेनागमयत् स्वर्गं स श्रीहरिर्मे गतिरित्यत्रान्वयः। अत्र गमेरण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः, स्वर्गस्तु कर्म। ण्यन्तावस्थायां तु णिज्वाच्यां योजकव्यापारात्मिकां शस्त्रघातक्रियां प्रति घातयिता हरिः कर्ता। शत्रवस्तु कर्म, शस्त्रघातजन्या या क्रिया स्वर्गप्राप्तिस्तदाश्रयत्वात्। एवं च हरिः प्रयोजककर्ता, शत्रवस्तु प्रयोज्यकर्तारः। प्रयोजककर्तुर्हरेः शाब्दं प्राधान्यम्, अन्यानधीनत्वलक्षणं चार्थप्राधान्यमस्ति। शत्रूणां तु अन्याधीनस्वर्गप्राप्तिकर्तृत्वं प्रयोजकाधीनत्वाद् गुणभूतमेव। शेषित्वलक्षणमार्थप्राधान्यं तु प्रयोज्यशत्रुगतकर्तृत्वस्यैव, प्रयोजकव्यापारस्य प्रयोज्यस्वर्गप्राप्त्यर्थत्वादिति स्थितिः। तत्रान्यानधीनत्वलक्षणस्यार्थप्राधान्यस्य शाब्दप्राधान्यस्य च प्रयोजकव्यापारे सत्त्वात् तदनुरोधि शत्रुगतं कर्मत्वं 'कर्तुरीप्सिततमम्–' इत्येव सिद्धम्। अतो नियमार्थमिदं सूत्रम्। णिजर्थेनाप्यमानस्य प्रयोज्यकर्तुर्यदि कर्मत्वं भवति तर्हि गत्यर्थादीनामेवेति। तेन पाचयति देवदत्तेन इत्यादौ प्रयोज्यकर्तुर्न कर्मत्वम्, किं तु कर्तृत्वमेव। तदेतत् 'हेतुमति च' इति सूत्रे भाष्यकैयटयोः स्पष्टम्। उक्तं च हरिणा। 'गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते।' इति। स्वधर्मेणेति तृतीययेत्यर्थः। एवं च स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः। एवमग्रेऽप्यूह्यम्। **वेदार्थं स्वानवेदयदिति**। बुद्ध्यर्थधातोरुदाहरणम्।

---

पक्षेऽपि लक्ष्यं निर्बाधमेव, तथापि नियमसूत्रमिदमिति प्राचां ग्रन्थो विरुध्यत इति चेत्। अत्राहुः—णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसंज्ञायाः प्राबल्याद्विप्रतिषेध एव नास्तीति परत्वात्कर्तृत्वसिद्धिरित्येतन्न संगच्छते। अन्तरङ्गत्वोपजीव्यत्वे अपि प्रधानं प्रति न प्राबल्यं प्रयोजयतः, ततश्च नियमार्थत्वोक्तिः प्राचां निर्बाधैवेति। गत्यादिण्यन्तान् क्रमेणोदाहरति—**शत्रूनिति**। शत्रवः स्वर्गमगच्छन्, तान् श्रीहरिः स्वर्गमगमयदिति। गमेरण्यन्तावस्थायां शत्रवः कर्तारस्ते ण्यन्तावस्थायां कर्म अभवन्। स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः। एवमग्रेऽप्यूह्यम्। **वेदार्थमिति**। स्वे स्वकीया वेदार्थमविदुस्तान् श्रीहरिर्वेदार्थमवेदयत्। तथा देवा अमृतम् आश्नन् तानाशयत्। विधिः वेदमध्यैत तं ब्राह्मणं वेदमध्यापयद् अपाठयत्। सलिले पृथ्वी आस्ते तां यो हरिरासयत् स्थापयति स्म स हरिर्मे गतिरित्यन्वयः। ननु शत्रूणामनेन कर्मत्वे कृते कर्मण

आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।

गतीत्यादि किम्-पाचयत्योदनं देवदत्तेन । अण्यन्तानां किम्-गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः । 'नीवह्योर्न' ( वा ११०१ ) । नाययति वाहयति वा भारं भृत्येन

---

स्वशब्द आत्मीयपरः, स्वे स्वकीया विधिप्रमुखा वेदार्थमविदुः, तान् हरिः वेदार्थमवेदयदित्यर्थः । अत्र स्वेषां प्रयोज्यकर्तॄणां कर्मत्वम् । **आशयच्चामृतं देवानिति ।** शब्दकर्मण उदाहरणम् । देवा अमृतमाश्नन्, तान् हरिराशयदित्यर्थः । **वेदमध्यापयद्विधिमिति ।** शब्दकर्मण उदाहरणमेतत् । विधिः ब्रह्मा वेदमधीतवान्, तं हरिः अध्यापयदित्यर्थः । अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम् । **आसयत्सलिले पृथ्वीमिति ।** अकर्मकस्योदाहरणम् । सलिले पृथ्वी आस्त, तां हरिरासयदित्यर्थः । अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम् । यः स मे श्रीहरिर्गतिरिति प्रतिवाक्यमन्वयः । **नीवह्योर्नेति ।** णीञ् प्रापणे, वह प्रापणे इत्यनयोः ण्यन्तयोः प्रयोज्यकर्तुः 'गतिबुद्धि-' इत्युक्तं नेति वक्तव्यमित्यर्थः । **नाययति वाहयति वेति ।** भृत्यो भारं नयति वहति

---

ईप्सिततमः स्वर्गो न तु कर्तुरिति कर्तुरीप्सिततमत्वाभावात् स्वर्गस्य कर्मत्वं न स्यात् । अत्र केचित्—'गतिबुद्धि-' इति कर्मत्वस्य बहिरङ्गत्वेन ततः पूर्वमेव धात्वर्थव्यापारप्रयुक्तं कर्मत्वं स्वर्गस्य निर्बाधमित्यदोष इति । अन्ये तु—कर्तुरीप्सिततमम्-' इत्यत्र कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम् । स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेव । तच्च प्रयोजकसंनिधानेऽपि प्रयोज्यस्यास्त्येवेति न काप्यनुपपत्तिः । न च स्वतन्त्रे संकेतितस्य कर्तृपदस्य तत्रैव लक्षणा न संगच्छते, एकस्यैकस्मिन्नेवार्थे शक्तिलक्षणोभयाभ्युपगमस्य शास्त्रकारासंमतत्वादिति वाच्यम्, संज्ञान्तरानुपहितस्वतन्त्रे संकेतितस्य संज्ञान्तरोपहितानुपहितसाधारणे स्वतन्त्रे लक्षणाभ्युपगमे बाधकाभावात् । अत एव जिधातोर्जये शक्तिः, प्रकृष्टजये लक्षणा । 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति । तेन प्रजयतीत्यत्र प्रशब्दो द्योतकः, प्रकृष्टजयस्तु जिधातोरेवार्थ इति नैयायिकोक्तिः संगच्छते । नापि कर्तृपदस्य स्वतन्त्रलक्षणायां प्रमाणाभावः शङ्क्यः, 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम्' इत्युक्त्वा 'ण्यन्ते कर्तुश्च कर्मणः' इति वदतो भाष्यकारस्यैव प्रमाणत्वात् । न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन 'ण्यन्ते कर्तुः' इति वचनं सावकाशं स्यादित्याहुः । **नीवह्योरिति ।** यद्यप्यनयोः प्रापणमर्थः, न गतिः, तथापि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः । **नियन्त्रिति ।** नियन्ता पशुप्रेरकः, न तु

**'नियन्तृकर्तृकस्य वहेरनिषेधः, (वा ११११०)। वाहयति रथं वाहान् सूतः। 'आदि-खाद्योर्न' ( वा ११०६ )। आदयति खादयति वान्नं बटुना। 'भक्षेरहिंसार्थस्य**

वा, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य णिच्प्रकृत्यर्थं नयनं वहनं च प्रति कर्तुः प्रयोजकव्यापारं प्रति कर्मत्वे निवृत्ते णिच्प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनाव-स्थानात् तृतीया बोध्या। यद्यपि नीवह्योः प्रापणमर्थः, तथापि गत्यनुकूलव्यापारार्थके प्रापणे गतेर्विशेषणत्वेन प्रविष्टतया गत्यर्थत्वात् प्राप्तिरिति भावः। **नियन्तृकर्तृकस्य वहेरनिषेध इति**। एवं च तत्र प्रयोज्यकर्तुरुक्तस्य 'नीवह्योर्न' इति प्रतिषेधस्याभावे सति प्रयोज्यस्य कर्मत्वं वक्तव्यमिति फलितम्। **वाहयतीति**। वाहा अश्वा वहन्ति, तान् सूतः प्रेरयतीत्यर्थः। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः।' इत्यमरः। 'वहन्ति बलीवर्दा यवान्, वाहयति बलीवर्दान् देवदत्तः' इति भाष्योदाहरणाद् नियन्ता पशुप्रेरक एव विवक्षितः। **आदिखाद्योर्नेति**। अद भक्षणे, खादृ भक्षणे, अनयोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। प्रत्यवसानार्थकत्वात् प्राप्तिः। **आदयति खादयति वेति**। अत्ति खादति वा अन्नं बटुः, तं प्रेरयतीत्यर्थः। **भक्षेरिति**। अहिंसार्थकस्य भक्षधातोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। ननु 'गतिबुद्धि-' इति सूत्रे अणौ कर्तुः णौ कर्मत्वमुक्तम्। भक्षधातुस्तु चुरादित्वाद् नित्यं स्वार्थिकण्यन्तः। तस्याणिकर्ता नास्त्येव। अतस्तस्य कर्मत्वनिषेधोऽनुपपन्नः, अप्रसक्तत्वादिति चेत्, न—अत एव निषेधाल्लिङ्गाद् 'गतिबुद्धि-' इति सूत्रे णिग्रहणेन हेतुमत एव विवक्षितत्वात्। एवं च हेतुमण्णिचि अनुत्पन्ने सति अण्यन्तभक्षिधातु-वाच्यां क्रियां प्रति कर्तुः हेतुमण्ण्यन्तवाच्यां क्रियां प्रति कर्मत्वमित्यर्थः पर्यवस्य-

---

सारथिरेवेति। तेन वाहयति बलीवर्दान् यवानिति सिध्यति। अस्मादेव भाष्योदाहरणाद् 'रूढिर्योगमपहरति' इति न्यायोऽत्र न स्वीक्रियते। **अनिषेध इति**। प्रयोज्यः कर्मेति वक्तव्यमिति फलितोऽर्थः। यैस्तु प्रापणं गतिशब्देन गृह्यते यैर्वा न गृह्यते उभयेषामपीदं वचनमावश्यकम्। नीवह्योर्नेति वचनं तु यैः प्रापणं गतिशब्देन न गृह्यते तेषामनावश्यकमिति बोध्यम्। **सूत इति** 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। प्रत्यवसानार्थत्वात्कर्मत्वे प्राप्ते निषेधमाह—**आदिखाद्योरिति**। 'अद भक्षणे' 'खादृ भक्षणे'। प्राचा तु आदीति पठ्यते, तत्तु णयन्तावस्थानुकरणमिति बोध्यम्। **आदयतीति**। इह 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदनियमो न प्रवर्तते, 'अदेः प्रतिषेधः' इति तस्य निषिद्धत्वात्। तेनाकर्त्रभिप्राये क्रियाफले 'शेषा-त्कर्तरि-' इति परस्मैपदम्, कर्त्रभिप्राये तु 'णिचश्च' इत्यात्मनेपदं भवत्येवेति बोध्यम्। **भक्षेरिति**। ननु 'गतिबुद्धि-' इति सूत्रेणाणौ कर्तुर्णौ कर्मत्वं विधीयते,

---

१ एतेन ज्ञायते यद् मूले 'आदिखाद्योर्न' इत्येवं पाठस्तत्त्वबोधिनीसंमतः।

न' ( वा ११११ ) भक्षयत्यन्नं बटुना । अहिंसार्थस्य किम्–भक्षयति बलीवर्दान् सस्यम् । 'जल्पतिप्रभृतीनामुपसंख्यानम्' ( वा ११०७ ) । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः । 'दृशेश्च' ( वा ११०८ ) । दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणम्, न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरति जिघ्रतीत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन । 'शब्दायतेर्न' (वा ११०९)।

---

तीति न दोषः । **भक्षयत्यन्नं बटुनेति** । चुरादिणयन्ताद् भक्षधातोर्हेतुमण्णिचि पूर्वणेर्लोपे हेतुमण्णयन्तात्तिबादौ सति भक्षयतीति रूपम् । एवं च भक्षयत्यन्नं बटुः, खादतीत्यर्थः । तं प्रेरयतीति णयन्तस्यार्थः । **भक्षयति बलीवर्दान् सस्यमिति** । क्षेत्रे प्ररूढमलूनं सस्यमिह विवक्षितम् । तस्य तदानीमन्तःप्रज्ञजीवत्वात् तद्भक्षणं हिंसैवेति भावः । **जल्पतिप्रभृतीनामिति** । एतेषामणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । **जल्पयति भाषयति वेति** । धर्ममिति शेषः । पुत्रो धर्मं जल्पति भाषते वा, तं देवदत्तः प्रेरयतीत्यर्थः । गत्यर्थादिष्वनन्तर्भावाद्वचनम् । न च शब्दनक्रियार्थत्वादेव सिद्धे वचनमिदं व्यर्थमिति वाच्यम्, अत एव 'शब्दकर्माकर्मकाणाम्' इत्यस्य शब्दः कर्मकारकं येषामित्यर्थात् । अन्यथा वेदमध्यापयद्विधिमित्यसिद्धेः । वार्तिके आदिना व्याहरतिवदत्यादीनां संग्रहः । भाष्ये तु 'के पुनर्जल्पतिप्रभृतयः, जल्पति विलपति आभाषते' इत्येवोक्तम् । परिगणनमित्येके, उदाहरणमात्रप्रदर्शनमित्यन्ये । **दृशेश्चेति** । 'दृशिर् प्रेक्षणे' अस्याप्यणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । **दर्शयतीति** । हरिं भक्ताः पश्यन्ति, तान् गुरुः प्रेरयतीत्यर्थः । ननु दृशेर्बुद्धिविशेषात्मकत्वादेव सिद्धे किमर्थमिदं वचनमित्यत आह—**सूत्र इति** । 'गतिबुद्धि' इति सूत्रे बुद्धिग्रहणेन ज्ञानसामान्यवाचिनां 'विद ज्ञाने, ज्ञा अवबोधने' इत्यादीनामेव ग्रहणम्, न तु ज्ञानविशेषवाचिनामित्येतद् 'दृशेश्च' इत्यनेन विज्ञायते । अन्यथा 'दृशेश्च' इत्यस्य वैयर्थ्यप्रसङ्गात् । **तेनेति** । ज्ञापनेनेत्यर्थः । **स्मरति जिघ्रतीत्यादीनामिति** । आदिना प्रेक्षत इत्यादीनां संग्रहः । **स्मारयतीति** । स्मरति प्रियां देवदत्तः, जिघ्रति चन्दनं देवदत्तः,तं यज्ञदत्तः प्रेरयतीत्यर्थः । **शब्दायतेर्नेति** । शब्दं करोतीत्यर्थे 'शब्दवैर–'

---

न तु णौ कर्तुरिति प्राप्तेरेवाभावान्निषेधोऽयं व्यर्थ इति चेत्, अत्राहुः—हेतुमण्णिजन्ते विधिरिति निषेधोऽप्यणावित्ययं संनिधानाद्धेतुमण्णिज्विषय एव, तेन चुरादिणिजन्तेऽपि भक्षयतौ प्राप्तिसत्त्वात्तन्निषेध उपसंख्यात इति । **भक्षयतीति** । बलीवर्दाः सस्यं भक्षयन्ति, तान् भक्षयतीत्यर्थः । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा ज्ञेया, तस्यामवस्थायां तेषां चेतनत्वात् । **जल्पतिप्रभृतीनामिति** । 'जप जल्प व्यक्तायां वाचि' । पुत्रो धर्मं जल्पति तं देवदत्तो जल्पयतीत्यण्यन्तावस्थायां पुत्रः

**शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तिः । येषां देशकाला-दिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः, न त्वविवक्षितकर्माणोऽपि । तेन 'मास-**

---

इत्यादिना क्यङि, 'अकृत्सार्वधातुकयोः–' इति दीर्घे, 'सनाद्यन्ताः–' इति धातुत्वे, श्तिपा निर्देशोऽयम् । शब्दायेति क्यङन्तधातोः अणौ कर्ता णौ कर्म नेति वक्तव्यमित्यर्थः । **शब्दाययति देवदत्तेनेति** । शब्दायते देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः । देवदत्तस्य कर्मत्वाभावात् प्रयोज्यकर्तृत्वमादाय तृतीयैव । अत्र शब्दकर्मकत्वात् प्राप्तिरिति भ्रमं निरस्यति—**धात्वर्थेति** । शब्दकर्मकमुत्पादनं शब्दायेति क्यङन्तस्य धातोरर्थः, एवं च शब्दात्मकं कर्म धात्वर्थे अन्तर्भूतम् , अतः शब्दायेति क्यङन्तधातुरकर्मकः, 'धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्वम्' इति 'सुप आत्मनः–' इति सूत्रे भाष्ये प्रपञ्चितत्वात् , तस्मादकर्मकत्वादेवात्र प्राप्तिरित्यर्थः । एवं च 'शब्दाययति सैनिकै रिपून्' इति कर्म प्रयुञ्जानाः परास्ताः । ननु मासमास्ते देवदत्तः, तं प्रेरयति मासमासयति देवदत्तं यज्ञदत्त इत्यत्र देवदत्तस्य प्रयोज्यकर्तुः कर्मत्वं न स्यात् , आसधातोर्गत्यादिष्वनन्तर्भावात् । नचाकर्मकत्वात्तदन्तर्भाव इति वाच्यम् , 'अकर्मकधातुभिर्योगे–' इति मासस्य कर्मतया आसेरकर्मकत्वासंभवात् । किं च ओदनादिकर्मणः अविवक्षायां देवदत्तः पचति, पाचयति देवदत्तेन यज्ञदत्त इत्यत्र प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वं स्यात् , तदानीं पचेरकर्मकत्वेन गत्यादिष्वन्तर्भावादित्यत आह—**येषामिति** । इदं च प्रकृत-

---

कर्ता णयन्तावस्थायां कर्म अभवत् । तथा पुत्रो धर्मं भाषते, तं भाषयति देवदत्तः । न च जल्पतिभाषत्योः शब्दक्रियत्वेन 'गतिबुद्धि–' इति सूत्रेणैव सिद्धे उपसंख्यानमिदं व्यर्थमिति भ्रमितव्यम् , शब्दकर्मणामित्यस्य शब्दः कर्म कारकं येषामित्यर्थात् । अन्यथा 'वेदमध्यापयद्विधिम्' इत्यादेरसिद्धिप्रसङ्गात् । एवं पुत्रो यत्किंचिद्विलपति तं विलापयतीत्याद्यप्यूह्यम् । **स्मारयतीति** । आध्यानार्थकस्यैव स्मरतेः 'घटादयो मितः' इति मित्त्वम् , न चिन्तार्थकस्येति भावः । **देवदत्तेनेति** । स्मारयत्येनं वनगुल्म इत्यत्र तु 'णेरणौ–' इति सूत्रे भाष्ये प्रयोगादेव कर्मत्वं बोध्यम् । **शब्दाययतीति** । शब्दं करोतीत्यर्थे 'शब्दवैर–' इत्यादिना क्यङ् । ततो हेतुमण्णिच् । **धात्वर्थसंगृहीतेति** । एतेन शब्दाययति सैनिकै रिपूनिति कर्म प्रयुञ्जानाः परास्ताः । **न त्वविवक्षितकर्माणोऽपीति** । यथा 'लः कर्मणि च–' इति सूत्रे अविवक्षितकर्माणोऽप्यकर्मका इति गृह्यन्ते तथैवेहापि यदि गृह्येरन् तदा ओदनादिकर्मणोऽविवक्षायां पाचयति देवदत्तमिति स्यात् , न तु देवदत्तेन पाचयतीति । एवं 'गत्यर्थाकर्मक–' इति सूत्रेऽप्यविवक्षितकर्माणोऽकर्मका इति न गृह्यते । दत्तवान् पक्कवान् इत्यर्थे दत्तः पक्क इत्यापत्तेः । यत्तु प्राचा—'अयक्रन्दशब्दायह्वेञां न' इत्युक्तं तदयुक्तम् । अयतेर्निषेधस्य

मासयति देवदत्तम्' इत्यादौ कर्मत्वं भवति, 'देवदत्तेन पाचयति' इत्यादौ तु न।

**५४१ हृक्रोरन्यतरस्याम्। (१-४-५३)** हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात्। हारयति कारयति वा भृत्यं भृत्येन वा कटम्। 'अभिवादिदृशो-

---

सूत्रे भाष्यकैयटयोः स्पष्टम्। **हृक्रो**। हृ च कृ च हृकरौ तयोरिति विग्रहः। **हारयति कारयति वेति**। हरति करोति वा कटं भृत्यः, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः। हृक्रोर्गत्यर्थादिष्वनन्तर्भावादप्राप्ते विभाषेयम्। हृक्रोरर्थान्तरे तु प्राप्तविभाषा। अभ्यवहारयति सैन्धवान् सैन्धवैर्वा, विकारयति सैन्धवान् सैन्धवैर्वा। अत्र अभ्यवहरतेर्भक्षणार्थत्वाद् विकारयतेरकर्मकत्वाच्च प्राप्तिः। **अभिवादीति**। हेतुमण्ण्यन्तस्याभिपूर्वकवदधातोर्दृशिप्रकृतिकण्यन्तस्य चात्मनेपदिनोऽणौ

---

निर्मूलत्वेन अणौ कर्तुर्णौ कर्मत्वस्य तत्रेष्टत्वात्। क्रन्दह्वेञोस्तु शब्दक्रियत्वेऽपि शब्दः कर्म कारकं नेति प्राप्तेरेवाभावाच्चेति स्थितं मनोरमायाम्। यदपि 'श्रुग्रहदृशाम्' इति कर्मत्वमुक्तम्, तत्र दृशिग्रहणं प्रामाणिकमेव। शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम्। ग्राहेर्द्विकर्मकत्वं यद्यपि 'अजिग्रहत्तं जनको धनुस्तत्' इति भट्टिप्रयोगस्य, 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति कालिदासप्रयोगस्य चानुगुणम्, तथापि बहूनामसंमतमेव। अत एव 'तं धनुरजिग्रहद्बोधितवान्, सुतां ग्राहयितुमुद्वाह्यत्वेन बोधयितुम्' इत्येवमुक्तप्रयोगं समर्थयांचक्रिरे। न च बुद्ध्यर्थत्वं विनापि यथाश्रुतार्थ एव ग्राहेर्द्विकर्मकत्वमस्त्विति वाच्यम्, तथा हि सति 'जायाप्रतिग्राहितगन्धमाल्याम्' इत्यत्र क्तप्रत्ययेनाभिधानं प्रयोज्यकर्मीभूतधेनोः स्यात्, न तु गन्धमाल्यकर्मणः, 'ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तेः। जायाप्रेरिता हि धेनुर्गन्धमाल्ये प्रतिगृह्णातीति भवत्येव धेनुः प्रयोज्यकर्म। ततश्च जायया गन्धमाल्ये प्रतिग्राहितामिति स्यात्। क्तप्रत्ययानभिहितत्वेन गन्धमाल्यकर्मणि द्वितीयायाः प्रवृत्तेः। सिद्धान्ते तु जायया प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः, द्विकर्मकत्वाभावेन गन्धमाल्यस्यैव क्तप्रत्ययेनाभिहितत्वात्। ययेति तृतीया तु णिजर्थं प्रति जायायाः कर्तृत्वेऽपि णिच्प्रकृत्यर्थं प्रति धेनोः कर्तृत्वादुपपद्यते। एवं चेह जायानिष्ठप्रेरणाविषयीभूतं गन्धमाल्यकर्मकं यत् प्रतिग्रहणं तत्कर्त्रीमिति वृत्त्यर्थः। यद्यपि धेनुकर्तृकं जायानिष्ठप्रेरणाविषयीभूतं यत्प्रतिग्रहणं तत्कर्मीभूते गन्धमाल्ये इति विग्रहार्थः, तथाप्यन्यपदार्थान्तर्भावेणैव विशेषणविशेष्यभाववैपरीत्येन एकार्थीभावः कल्प्यत इति नास्त्यत्रानुपपत्तिरिति दिक्। **हृक्रो**। हृ च कृ च हृकरौ तयोरिति विग्रहः, हृश्च कृश्च हृक्रोरिति वा। प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात्। 'गतिबुद्धि-' इत्यादीह नानुवर्तते। तेन उभयत्र विभाषेयम्। अभ्यवपूर्वस्य हरतेर्भक्षणार्थकत्वाद् विकारार्थस्य करोतेश्चाकर्मकत्वाद् 'गतिबुद्धि-' इत्या-

रात्मनेपदे वेति वाच्यम्' ( वा १११४ )। अभिवादयते दर्शयते देवं भक्तं भक्तेन वा। **५४२ अधिशीङ्स्थाऽऽसां कर्म।** (१-४-४६) अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः। **५४३ अभिनिविशश्च।** (१-४-४७) अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मार्गम्। 'परिक्रयणे संप्रदानम्—' (सू ५८०) इति सूत्रादिह

---

कर्ता णौ कर्म वेत्यर्थः। **अभिवादयत इति।** अभिवदति नमस्करोति देवं भक्तः, तं गुरुः प्रेरयतीत्यर्थः। कर्तृगामिनि फले 'णिचश्च' इत्यात्मनेपदम्। अत्र भक्तस्य प्रयोज्यकर्तुः कर्मत्वविकल्पः। अप्राप्तविभाषेयम्। परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव। पश्यति देवं भक्तः, तं गुरुः प्रेरयति, दर्शयते देवं भक्तं भक्तेन वा। 'गतिबुद्धि-' इत्यत्र बुद्धिग्रहणेन ज्ञानसामान्यवाचिन एव ग्रहणमित्युक्तम्, तथापि 'दृशेश्च' इति नित्यं प्राप्ते विकल्पः। **अधिशीङ्स्थासां कर्म।** शीङ्, स्था, आस् एषां द्वन्द्वः। अधिपूर्वाः शीङ्स्थास इति विग्रहे शाकपार्थिवादित्वादुत्तरपदलोपः। तदाह—**अधिपूर्वाणामिति।** अधिकरणसंज्ञापवादोऽयम्। **अधिशेत इति।** अधिशेते वैकुण्ठं हरिः, अधितिष्ठति वैकुण्ठं हरिः, अध्यास्ते वैकुण्ठं हरिरित्यन्वयः। अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः। वैकुण्ठे शेते तिष्ठत्यास्ते वेत्यर्थः। **अभिनिविशश्च।** आधार इति कर्मेति चानुवर्तते। अभिनीति संघातग्रहणम्, तदाह—**अभिनीत्येतत्संघातपूर्वस्येति। अभिनिविशते सन्मार्गमिति।** आग्रहवानित्यर्थः। अप्रतिहतप्रवृत्तिमानिति यावत्। नन्वेवं सति पापेऽभिनिवेश इत्यत्रापि कर्मत्वाद् द्वितीया स्यादित्यत आह—**परिक्रयण इति।** 'परिक्रयणे-' इति सूत्रादन्यतरस्यांग्रहणा-

---

दिना अणौ कर्तुः णौ कर्मत्वे प्राप्ते, अर्थान्तरे चानयोः सकर्मकत्वादप्राप्ते अस्यारम्भात्। अप्राप्तावुदाहरणमाह—**हारयतीति।** हरति करोति वा कटं भृत्य इत्यण्यन्तावस्थायां भृत्यः कर्ता, स एव ण्यन्तावस्थायां कर्मभूत्। प्राप्ते तूदाहरणम्—तृणमभ्यवहारयति सैन्धवान्, तृणमभ्यवहारयति सैन्धवैः, विकारयति सैन्धवान्, विकारयति सैन्धवैरिति बोध्यम्। ननु यदि गतिबुद्धि-' इत्यादिरिह नानुवर्तेत तदैतदेवं स्यात्, तत्रैव मानं न पश्याम इति चेन्मैवम्। 'न वेति विभाषा' इति सूत्रे उभयत्र विभाषासु भाष्यकृताऽस्यापि सूत्रस्य गणितत्वेनोक्तशङ्काया अनवतारात्। **अभिवादीति।** 'वद संदेशवचने' चुरादिराधृषीयः। अभिपूर्वकत्वान्नमस्कारार्थता। अभिवादयतेरप्राप्तौ दृशेस्तु प्राप्तावयं विकल्पः। अभिवदति देवं भक्तस्तं प्रेरयत्यन्यः-अभिवादयते। 'णिचश्च' इत्यात्मनेपदम्। परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव। तथा पश्यति देवं भक्तः, दर्शयते देवं भक्तमित्यादि। **अभिनिवि।** नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विप-

मण्डूकप्लुत्या अन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न। पापेऽभिनिवेशः। **५४४ उपान्वध्याङ्वसः।** ( १-४-४८ ) उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः। '**अभुक्त्यर्थस्य न**' ( वा १०८७ )। वने उपवसति।

**'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।**

---

मनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्नेत्यन्वयः। तर्हि अभिनिविशते सन्मार्गमित्यत्रापि विकल्पः स्यादित्यत आह—**व्यवस्थितेति**। ननु 'परिक्रयणे संप्रदानमन्यतरस्याम्' 'आधारोऽधिकरणम्' 'अधिशीङ्स्थासां कर्म' 'अभिनिविशश्च' इति सूत्रक्रमः। तत्र 'अभिनिविशश्च' इत्यत्र कथमन्यतरस्यांग्रहणानुवृत्तिः, 'आधारोऽधिकरणम्' 'अधिशीङ्स्थासां कर्म' इत्यत्र च तदनुवृत्तेरभावादित्यत आह—**मण्डूकप्लुत्येति**। तुल्यमिति शेषः। मण्डूका यथा मध्ये पदानि सन्ततमप्रक्षिपन्त एव उत्प्लुत्य गच्छन्ति, तद्वदनुवर्त्येत्यर्थः। 'एष्वर्थेष्वभिनिविष्टानाम्' इति समर्थसूत्रे भाष्यप्रयोगोऽत्र मानम्। **उपान्वध्याङ्वसः।** उप अनु अधि आङ् इत्येतेषां द्वन्द्वः। उपान्वध्याङ्पूर्वो वस् इति विग्रहे शाकपार्थिवादित्वात् समासः, तदाह—**उपादिपूर्वस्येति। उपवसतीत्यादि।** वैकुण्ठे वसतीत्यर्थः। उपसर्गा आधारत्वद्योतकाः। अत्र 'वसेरश्यर्थस्य प्रतिषेधः' इति वार्तिकम्। तत्रार्थशब्दो निवृत्तिवचनः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। भोजनस्यार्थो निवृत्तिर्यस्मात् प्रतीयते सोऽश्यर्थः, भोजननिवृत्तिवाचकस्य वसेराधारस्य कर्मत्वप्रतिषेध इति यावत्। तदेतदर्थतः संगृह्णाति—**अभुक्त्यर्थस्य नेति।**

**अथोपपदविभक्तयः। उभसर्वतसोरिति।** वार्तिकम्। उभशब्दसर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति द्वितीया कार्येत्यर्थः। **धिगिति।** धिक्शब्दस्य

---

रीतोच्चारणमीदृशसंघातविवक्षार्थमित्याह—**संघातपूर्वस्येति**। तेनेह न—'निविशते यदि शूकशिखा पदे' इति। **क्वचिन्नेति।** 'एष्वर्थेष्वभिनिविष्टानाम्' इति समर्थसूत्रस्थभाष्यप्रयोगोऽत्र मानमिति भावः। **उपान्व।** लुग्विकरणादलुग्विकरणं बलीय इति 'वस निवासे' इति भौवादिक एव गृह्यते, न तु 'वस आच्छादने' इत्यादादिक इत्यभिप्रेत्य शपा निर्देशमाह—**उपादिपूर्वस्य वसतेरिति।** 'वसेरश्यर्थस्य प्रतिषेधः, इति वार्तिकमर्थतो व्याचष्टे—**अभुक्त्यर्थस्य नेति।** वार्तिके अर्थशब्दो निवृत्तिवचनः। भोजननिवृत्तिवाचकस्य वसेराधारः कर्म नेत्यर्थः। **वने उपवसतीति।** कथं तर्हि 'गत्यर्थाकर्मक—' इति सूत्रे 'हरिदिनमुपोषितः' इत्युदाहरणं संगच्छत इति चेत्। अत्राहुः—वसेरत्र स्थितिरर्थः, भोजननिवृत्तिस्त्वार्थिकीति न दोष इति। उपपदविभक्तिमाह—**उभसर्वतसोरित्यादिना।** उभसर्वयोस्तसौ उभसर्वतसौ, तदन्त-

द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥' (वा १४४४)
उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्युपरि

---

प्रयोगे सति द्वितीया कार्या। 'प्रकृतिवदनुकरणम्' इत्यव्ययत्वात्सुपो लुक्। **उपर्यादिष्विति**। अनेन 'उपर्यध्यधसस्सामीप्ये' इति सूत्रोपात्तान्यव्ययानि गृह्यन्ते। **आम्रेडितान्तेष्विति**। द्विरुक्तस्य परमाम्रेडितम्, तदन्तेषु कृतद्विर्वचनेष्विति यावत्। तथा च कृतद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु द्वितीयेत्यर्थः। **तत इति**। उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यत इत्यर्थः। **उभयतः कृष्णं गोपा इति**। कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। आद्यादित्वात् तसिः। 'उभयोऽन्यत्र' इत्ययच्। षष्ठ्यर्थे द्वितीया। **सर्वतः कृष्णमिति**। कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः। **धिक् कृष्णाभक्तमिति**। धिक् निन्दायाम्। कृष्णाभक्तस्य निन्देत्यर्थः। केचित्तु कृष्णाभक्तो निन्द्य इत्यर्थः, प्रथमार्थे द्वितीयेत्याहुः। धिङ्मूर्खेत्यत्र तु निषिद्धाचरणमित्यध्याहार्यम्। **उपर्युपरीति**। 'उप-

---

योर्योगे द्वितीया कार्येत्यर्थः। प्रकृतिद्वित्वेन तसोरिति द्वित्वनिर्देशः। अत्र उभशब्दादयच् न कृतः, अनुकरणशब्दत्वेनासंख्यावाचित्वात्। तथा च उभशब्देन उभयशब्दो लभ्यते, केवलात् परत्र तसिलोऽसंभवादित्येके। वस्तुतस्तु वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्वेवेति यथाश्रुतं साधु इति तु मनोरमायां स्थितम्। **धिगिति**। धिक्शब्दयोगेऽपि द्वितीया कार्येत्यर्थः। अत्र प्राञ्चः—धिगित्यविभक्तिको निर्देशो गदित्ययमाहेतिवद् इत्याहुः। तन्न, तथा सत्यपदान्ततया दृष्टान्ते 'लोपः शाकल्यस्य' इत्यस्येव दार्ष्टान्तिके जश्त्वस्याप्यप्रवृत्तिप्रसङ्गात्। न चायं गकारान्त एवास्त्विति शङ्क्यम्, 'कस्य च दः' इति सूत्रे 'धकित्' इत्युदाहरणस्यासंगतिप्रसङ्गात्। 'कस्य च दः' इत्यनेन हि कान्ताव्ययस्याकच्संनियोगेन दत्वं विधीयते, तस्माद्धिगिति विभक्त्यन्तमेव। परं तु 'प्रकृतिवदनुकरणम्' इत्यतिदेशेनाव्ययत्वात्सुपो लुक्। यदि तु धिगित्यविभक्तिको निर्देश इत्येतावानेव प्राचां ग्रन्थस्तदा सम्यगेव। अव्ययत्वात्सुपो लुक्यविभक्तिको निर्देश इति वक्तुं शक्यत्वात्। **उभयतः कृष्णमिति**। कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। आद्यादित्वात्तसिः, षष्ठ्यर्थे द्वितीया। एवमुपपदविभक्तौ सर्वत्र बोध्यम्। अत्र व्याचक्षते—उभसर्वतसोरित्यत्र उभसर्वयोर्गणे परस्परसाहचर्यात्तसिलेव गृह्यते, न त्वाद्यादिभ्य इति तसिः, तथा चोभयत इत्यादौ 'तसेश्च' इत्यनेन तसिलादेशोऽवगन्तव्यः, तेन यत्र संज्ञायां तसेस्तसिलादेशाभावस्तत्र न द्वितीया, किं तु षष्ठ्येवेति। तसिलभावस्तु 'तसेश्च' इत्यत्र 'किंसर्वनामबहुभ्यः' इत्यनुवर्तनादिति। **धिक् कृष्णाभक्तमिति**। तस्य निन्द्यत इत्यर्थः। षष्ठ्यर्थे द्वितीया। स निन्द्य

---

१ एतत् प्रतीकं पुस्तकान्तरेषु नास्ति, लेखकप्रमादात् त्रुटितमनुमीयते। ग्रन्थकारशैल्यनुरोधादस्माभिः स्थापितम्।

**लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । 'अभितः परितः समया निकषा-हा प्रति योगेऽपि' (वा १४४२—१४४३) । अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाभक्तम्, तस्य शोच्यत इत्यर्थः । 'बुभु-**

---

र्येध्यधसस्सामीप्ये' इति द्विर्वचनम् । लोकस्य समीपे उपरि हरिरस्तीत्यर्थः । **अध्य-धीति** । लोकस्य समीपदेशे हरिरस्तीत्यर्थः । **अधोऽध इति** । लोकस्य समीपे अधो हरिरस्तीत्यर्थः । **अभितःपरित इति** । 'ततोऽन्यत्रापि दृश्यते' इत्यस्य प्रपञ्चोऽयम् । योगेऽपीत्यनन्तरं द्वितीयेति शेषः । **अभितः कृष्णमिति** । गोपा इति शेषः । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । **परितः कृष्णमिति** । कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः । 'पर्यभिभ्यां च' इति तसिल् । **ग्रामं समया निकषेति** । समया निकषा इति च आकारान्ते अव्यये । ग्राममित्यस्य प्रत्येकमन्वयः । ग्रामस्य समीप इत्यर्थः । 'निकषान्तिके' 'समयान्तिकमध्ययोः' इति चामरः । 'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति माघः । **हा कृष्णाभक्तमिति** । हा इत्याकारान्तमव्ययं खेदे । 'हा विषाद-शुगर्तिषु; इत्यमरः । तदाह—**तस्य शोच्यत इत्यर्थ इति** । कृष्णाभक्तः शोच्य

---

इत्यर्थः । प्रथमार्थे द्वितीयेत्येके । कथं धिङ् मूर्खेति, संबोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाभावाद् द्वितीया न प्रवर्तत इति 'संबोधने च' इति प्रथमैव भवतीति । क्रियापदं च क्वचिच्छ्रुतं क्वचिदाक्षिप्तम् । तथा च धिङ् मूर्ख निषिद्धाचरणमिदमित्येतदिह कल्प्यम् । मूर्खसंबोध्यकनिषिद्धाचरणस्य निन्द्यत इति तु वाक्यार्थः । प्रथमार्थे धिग्योगे द्वितीयेति वादिमते तु मूर्खसंबोध्यकं निषिद्धाचरणं निन्द्यमिति वाक्यार्थः । यत्तु 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति संबोधने प्रथमैव भवति, संबोधनपदस्य कर्तृकारकवाचित्वादित्याहुः । तच्चिन्त्यम्, संबोधनस्य कर्तृकारकत्वे उक्तिसंभवाभावात् । न च देव प्रसीदेत्यादौ वस्तुगत्या देव एव कर्तेत्यस्त्येवोक्तिसंभव इति वाच्यम्, वास्तवकर्तृत्वेऽपि कारकविभक्तित्वस्यालाभात् । किं च देव त्वां भजे, त्वां भजन्ति भक्ता इत्यादौ संबोध्यस्य देवस्य वास्तवमपि कर्तृत्वं नास्तीति आस्तां तावत् । **उपर्युपरीति** । कथं तर्हि 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' इति । अत्राहुः—उपरिबुद्धीनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः । तेनात्राम्रेडितत्वाभावान्न द्वितीया । यद्वा प्रतिपदोक्तस्य 'उपर्यध्यधसः सामीप्ये' इति कृतद्वित्वस्य वार्तिके ग्रहणादिह च वीप्साद्विर्वचनत्वान्नास्ति द्वितीयाप्रसक्तिरिति । **अभितः परित इति** । एतच्च 'अन्यत्रापि दृश्यते' इति पूर्वोक्तस्यैव प्रपञ्चभूतमिति व्याचख्युः । **अभितः कृष्णमिति** । 'पर्यभिभ्यां च' इति तसिल् । समयानिकषाशब्दौ सामीप्यवचनावव्यये । 'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति माघः । हेति खेदे, तदेतदाह—

क्षितं न प्रतिभाति किञ्चित्'। **५४५ अन्तराऽन्तरेण युक्ते। (२-३-४)** आभ्यां योगे द्वितीया स्यात्। अन्तरा त्वां मां हरिः। अन्तरेण हरिं न सुखम्।

**५४६ कर्मप्रवचनीयाः। ( १-४-८३ )** इत्यधिकृत्य। **५४७ अनुर्ल-**

---

इत्यर्थ इत्यन्ये। प्रतियोगमुदाहरति—**बुभुक्षितमिति**। क्षुधार्तस्य किंचिदपि न स्फुरतीत्यर्थः। 'भा दीप्तौ' इह तु उपसर्गबलात् स्फुरणे वर्तते। ततो लक्षणादौ अवृत्तेः प्रतेर्न कर्मप्रवचनीयत्वम्। एवं च 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन गतार्थत्वं न भवति। **अन्तरान्तरेण युक्ते**। अन्तरा इत्याकारान्तमव्ययम्, न तु टाबन्तम्। अन्तरेणेत्यप्यव्ययमेव, नतु तृतीयान्तम् इति भाष्ये स्थितम्। **अन्तरा त्वां मां हरिरिति**। तव च मम च मध्ये हरिरित्यर्थः 'अन्तरा मध्ये' इत्यमरः। **अन्तरेण हरिमिति**। हरेर्वर्जने सुखं नास्तीत्यर्थः। 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने' इत्यमरः। किमनयोरन्तरेण गतेनेत्यत्र तु अन्तरशब्दो विशेषवाची। अनयोर्विशेषेण ज्ञातेनेत्यर्थः। अत्र अन्तरेणेत्यस्य तृतीयान्तत्वादव्ययत्वाभावान्न तद्योगे द्वितीया। नचैवं सति 'हलोऽनन्तराः संयोगः' इत्यत्र 'द्वयोश्चैवान्तरा कश्चित्' इति भाष्यप्रयोगः कथमिति शङ्क्यम्, मध्यत्वनिमित्तमवधित्वं हि ययोर्निर्णीतं तत्र द्वितीया, ययोस्तु न तन्निर्णयस्तत्र संबन्धसामान्ये षष्ठ्येव भवति, युक्तग्रहणादिति कैयटः। **कर्मप्रवचनीयाः। इत्यधिकृत्येति**। 'प्राग्रीश्वरान्निपाताः' इति पर्यन्तमिति

---

**तस्य शोच्यत इति। बुभुक्षितमिति**। बुभुक्षितस्येत्यर्थः। एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः। न तु कर्मप्रवचनीयः। तेनात्र 'कर्मप्रवचनीययुक्ते–' इत्यनेन गतार्थता न शङ्क्या। **अन्तरान्तरेण**। प्रतिपदोक्तत्वान्निपातयोरेव ग्रहणं न तु टाबन्ततृतीयान्तयोः, परस्परसाहचर्याच्च। तद्यथा गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्न त्वाचार्यपरशुरामयोः। तेन किमनयोरन्तरेणागतेनेति सिद्धम्, किमनयोर्विशेषेण ज्ञातेनेत्यर्थः। **अन्तरा त्वां मामिति**। तव मम च मध्ये इत्यर्थः। हरिशब्दात्तु द्वितीया न भवति, अन्तरङ्गतया प्रथमाया एवोत्पत्तेः। **अन्तरेण हरिमिति**। हरिं विनेत्यर्थः। मध्ये इत्यर्थेऽप्यन्तरेणशब्दो वर्तते 'मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः' इति। चलच्चामरयोर्द्वयस्य मध्ये इत्यर्थः। युक्तग्रहणान्नेह—अन्तरा त्वां मां कृष्णस्य मूर्तिः। इह कृष्णान्न द्वितीया, अन्तराशब्दप्रयोगेऽपि अन्तरेत्यनेनानन्वयात्। **कर्मप्रवचनीया इत्यधिकृत्येति**। रीश्वरात्प्रागिति बोध्यम्। गुरुसंज्ञाकरणमन्वर्थत्वाय। कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः। बाहुलकाद् भूते कर्तर्यनीयर्। तेन संप्रति क्रियां न द्योतयन्तीति लभ्यते। तथा च हरिः—'क्रियाया द्योतको नायं संबन्धस्य न वाचकः। नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः' इति।

क्षणे। ( १-४-८४ ) लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात्। गत्युपसर्गसंज्ञापवादः।
**५४८ कर्मप्रवचनीययुक्ते द्वितीया।** (२-३-८) एतेन योगे द्वितीया स्यात्।
पर्जन्यो जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः। परापि हेतौ तृतीया

---

बोध्यम्। **अनुर्लक्षणे। लक्षणे द्योत्य इति।** लक्ष्यलक्षणभावसंबन्धे द्योत्ये इत्यर्थः। **उक्तसंज्ञ इति।** कर्मप्रवचनीयसंज्ञ इत्यर्थः। लक्ष्यते—ज्ञायतेऽनेनेति लक्षणम्, तच्च हेतुभूतं विवक्षितम्, न तु वृक्षं प्रति विद्योतते विद्युदितिवत् चिह्नमात्रम्, तथा सति 'लक्षणेत्थम्–' इत्येव सिद्धेरिति वक्ष्यते। **गत्युपसर्गसंज्ञापवाद इति।** अनेन क्रियायोग एव कर्मप्रवचनीयसंज्ञेति सूचितम्। 'कर्मप्रवचनीयाः' इति महासंज्ञाकरणसामर्थ्यादन्वर्थत्वम्। कर्मेति क्रियोच्यते, तां प्रोक्तवन्तः कर्मप्रवचनीयाः, भूते कर्तरि बाहुलकादनीयर्प्रत्ययः, ततश्च क्रियामेव न द्योतयन्ति किंतु क्रियानिरूपितसंबन्धविशेषं द्योतयन्ति। एवं च अनुप्रत्यादिषु क्रियानिरूपितसंबन्धस्य द्योत्यत्वेन अन्वयात् तत्र गत्युपसर्गसंज्ञयोः प्राप्तिर्बोध्या। **कर्मप्रवचनीय।** युक्त इति भावे क्तः। तदाह—**एतेन योग इति। पर्जन्यो जपमन्विति।** कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम्। अत्र वृष्टिकाल उपदेश्यः, स च दुर्ज्ञानत्वात् शाखाग्रं प्रति द्विकलश्चन्द्र इतिवत् प्रज्ञानं किंचिदवलम्ब्यैव ज्ञाप्यः। जपोऽत्र प्रज्ञानम्, तत्र जपकाले पर्जन्यः प्रावर्षदिति संभवति। हेतुभूतजपो ह्यत्र लक्षणम्। हेतुत्वं च पूर्वकालवृत्तित्वघटितम्। एवं च वर्षहेतुभूतवरुणजपोत्तरकाले पर्जन्यः प्रावर्षदित्युत्तरं पर्यवस्यति। तत्र लक्षणत्वं हेतुत्वं चेति द्वयं द्वितीयार्थः। तदुभयमनुना द्योत्यते। लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वम्। जपज्ञानेन तदुत्तरकालविशिष्टा वृष्टिर्ज्ञाप्यते। ततश्च जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः। तदाह—**हेतुभूतेति।** अनभिहिताधिकारान्न पर्जन्यात् तृतीया, तस्य तिङा अभिहितत्वात्। ननु हेतुत्वांशस्य कथमिह लाभः, 'अनुर्लक्षणे' इत्यत्र तदनुपादानात्। एवं च हेतुत्वाविवक्षायां वृक्षमनु विद्योतते विद्युदित्यत्र 'अनुर्लक्षणे' इति सावकाशम्। 'हेतौ' इति तृतीया तु धनेन कुलमित्यादौ सावकाशा। पर्जन्यो जपमनु प्रावर्षदित्यत्र तु तदुभयमपि प्रसक्तम्। तत्र परत्वाद् हेतुतृतीयैव स्यादित्यत आह—**परापीति।** 'अनुर्लक्षणे' इति कर्मप्रवच-

---

तथाहि–जपमनुप्रावर्षदित्यत्र अनुना न क्रियाविशेषो द्योत्यते, अनुभूयते सुखमित्यादौ यथा। नापि षष्ठ्येव संबन्ध उच्यते, द्वितीययैव तस्योक्तत्वात्। नापि प्रादेशं विपरिलिखति विमाय परिलिखतीत्यत्र विशब्देन मानक्रियेव क्रियान्तरमाक्षिप्यते, कारकविभक्तिप्रसङ्गात्। किं तु जपसंबन्धि वर्षणमिति द्वितीययावगतः संबन्धो लक्ष्यलक्षणभाव एवेत्यवगमात् संबन्ध एवानुना विशेषेऽवस्थाप्यते। क्वचित्तु क्रियागतविशेष-

अनेन बाध्यते । 'लक्षणेत्थंभूत—' ( सू ५५२ ) इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात् । ५४६ तृतीयार्थे । ( १-४-८५ ) अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह संबद्धेत्यर्थः । 'षिञ् बन्धने' क्तः ।

---

नीयत्वप्रयुक्तद्वितीयाविधिनेत्यर्थः । **पुनस्संज्ञेति** । वृक्षमनु विद्योतते विद्युद् इत्यत्र हि 'अनुर्लक्षणे' इत्यस्य न प्रयोजनम् , 'लक्षणेत्थम्–' इत्येव सिद्धेः । ततश्च 'अनुर्लक्षणे' इत्यारम्भसामर्थ्याद् हेतुभूते लक्षणे अनोः कर्मप्रवचनीयत्वलब्धया द्वितीयया हेतौ तृतीया बाध्यत इति विज्ञायत इत्यर्थः । ततश्च हेतुत्वमपि शाब्दबोधे विषय इति फलति । **तृतीयार्थे** । अनुरित्यनुवर्तते । कर्मप्रवचनीया इत्यधिकृतम् । **अस्मिन् द्योत्य इति** । 'सहयुक्तेऽप्रधाने' इति तृतीयार्थे साहित्ये द्योत्य इत्यर्थः । अत्र 'तृतीयार्थे' इत्यनेन कर्तृकरणे न गृह्येते, रामेण शरेणानुहतो वालीत्यत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन तृतीयाया एव प्रवृत्त्या अस्याः संज्ञायाः फलाभावात् । नापि 'येनाङ्गविकारः ' इति तृतीयार्थोऽत्र विवक्षितः, 'अनन्तरस्य–' इति न्यायेन 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यस्य 'सहयुक्तेऽप्रधाने' इत्यस्यैव बाधकत्वात् । तदाह—**नद्या सह संबद्धेति** । साहित्यं द्वितीयार्थः, अनुस्तद्द्योतक इति भावः । ननु अवसितशब्दस्य अवपूर्वात् 'षो अन्तकर्मणि' इति धातोरुत्पन्नत्वात्कथमुक्तार्थलाभ इत्यत आह—**'षिञ् बन्धने' क्त इति** । उपसर्गबलेन संबन्धवृत्तेरस्मात् क्तप्रत्यय

---

द्योतकेऽपि इयं संज्ञा वचनात् प्रवर्तते । 'सुः पूजायाम्' 'अतिरतिक्रमणे च' इति यथा । **उक्तसंज्ञ इति** । कर्मप्रवचनीयसंज्ञ इत्यर्थः । **गत्युपसर्गसंज्ञापवाद इति** । ननु जपमनु प्रावर्षदित्यत्र वृष्टिं प्रत्यनोर्योगाभावेन क्रियायोगाभावादेतयोः संज्ञयोः प्राप्त्यभावात् कथं तदपवादत्वमस्याः संज्ञाया इति चेत् । अत्राहुः—गम्यमाननिशमनक्रियामपेक्ष्य तयोः प्राप्तिरस्तीति संभावनामात्रेण मूलस्य निर्बाधत्वात् । न चैवं कर्मत्वादेव द्वितीयासिद्धौ किमनया संज्ञयेति वाच्यम्, जपस्य निशमनप्रयुक्तहेतुत्वाख्यसंबन्धविवक्षया कर्मत्वाभावेन तृतीयायां प्राप्तायां तदारम्भात् । न चैवमपि 'जपमनु निशम्य देवः प्रावर्षत्' इत्यर्थावगमाल्ल्यबन्तलोपे पञ्चम्यपवादार्थैवेयं संज्ञास्त्विति वाच्यम्, ल्यबन्तलोपे हि कर्मणि अधिकरणे च पञ्चमी, जपस्य तु कर्मत्वादिना विवक्षाभावादिति । **परापि हेताविति तृतीयेत्यादि** । अयं भावः—लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशः, यो न हेतुः वृक्षमनु विद्योतते विद्युदिति, हेतुतृतीयाया अवकाशो धनेन कुलमित्यादि । जपमनुप्रावर्षदित्यत्र तु हेतुभूते लक्षणे परत्वात्तृतीया स्यात्तां बाधित्वा 'अनुर्लक्षणे' इति पुनः संज्ञाविधानसामर्थ्याद् द्वितीयैव भवतीति । न च 'तृतीयार्थे' इति सूत्रेणेह गतार्थता शङ्क्या, तस्य पुरस्तादपवादन्यायेन 'सहयुक्तेऽप्रधाने' इत्येताव-

**५५० हीने। (१-४-८६)** हीने द्योत्येऽनुः प्राग्वत्। अनु हरिं सुराः। हरेर्हीना इत्यर्थः। **५५१ उपोऽधिके च। (१-४-८७)** अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात्। अधिके सप्तमी वक्ष्यते। हीने-उप हरिं सुराः। **५५२ लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः। (१-४-९०)** एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः। लक्षणे वृक्षं प्रति परि अनु वा विद्योतते

---

इत्यर्थः। अत्र यदवश्यं पुनःपुनर्लक्ष्यस्य ज्ञापकं तदेव न लक्षणम्। किंतु सकृद् ज्ञापकमपि। यथा यं कमण्डलुना भवान् अद्राक्षीत्, स छात्र इति। सकृदेव हि कमण्डलुपाणिर्दृष्टः, तस्य कमण्डलुर्लक्षणमिति 'अनुर्लक्षणे' इत्यत्र भाष्ये स्पष्टम्। तेन व्याप्यात्मकलिङ्गमेवात्र लक्षणमिति न भ्रमितव्यम्। **हीने। हीने द्योत्य इति।** निकर्षे द्योत्य इत्यर्थः। हीन इति भावे क्तः। 'ओहाक् त्यागे' इति धातोरोदित्त्वाद् 'ओदितश्च' इति निष्ठानत्वम्। **अनुः प्राग्वदिति।** कर्मप्रवचनीयसंज्ञ इत्यर्थः। **अनु हरिं सुरा इति।** अत्र निकृष्टभावोऽनुद्योत्यो द्वितीयार्थः। तदाह– **हरेर्हीना इत्यर्थ इति।** हरेरिति षष्ठी प्रतियोगितायाम्, हरिप्रतियोगिकनिकर्षवन्त इत्यर्थः। **उपोऽधिके च।** चकाराद् हीन इति समुच्चीयते, तदाह— **अधिके हीने चेति।** आधिक्ये निकर्षे चेत्यर्थः। **प्राक्संज्ञमिति।** प्रागुक्तकर्मप्रवचनीयसंज्ञकमित्यर्थः। अधिके संज्ञाविधानं न द्वितीयार्थमित्याह—**अधिके सप्तमी वक्ष्यत इति।** 'यस्मादधिकम्–' इत्यनेन कर्मप्रवचनीयसंज्ञाकार्यं सप्तमी वक्ष्यत इत्यर्थः। **हीन इति।** उदाहरणं वक्ष्यत इति शेषः। **उप हरिं सुरा इति।** हरेर्हीना इत्यर्थः। **लक्षणेत्थंभूत।** लक्षणं ज्ञापकम्, अयं प्रकार इत्थम्, तं प्राप्त इत्थंभूतः, तस्याख्यानमुपपादकमित्थंभूताख्यानम्, भागः स्वीकार्योंऽशः, तत्स्वामी विवक्षितः। व्याप्तुं कार्त्स्न्येन संबन्धुमिच्छा वीप्सा। लक्षणं च इत्थंभूताख्यानं च भागश्च वीप्सा चेति द्वन्द्वाद्विषयसप्तमी, तदाह—**एष्विति।** एष्वर्थेषु द्योत्येष्विति तु नाश्रितम्, व्याप्तुमिच्छायास्तद्द्योत्यार्थत्वाभावादिति भावः। **लक्षण इति।** उदाहरणं वक्ष्यत इति शेषः। **वृक्षं प्रतीति।** लक्ष्यलक्षणभावसंबन्धो द्वितीयार्थः। स च प्रत्यादि-

---

न्मात्रबाधकत्वात्। **सामर्थ्यादिति।** अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियत इति भावः। **नदीमन्विति।** द्वितीयायाः संबन्धोऽर्थः, षष्ठ्यपवादत्वादेतद्द्वितीयायाः, स चेह संबन्धः साहित्यरूप एवेत्यनुना द्योत्यते। **हीने।** उत्कृष्टादेव द्वितीया, न त्वपकृष्टाच्छक्तिस्वभावादित्यशयेनोदाहरति—**अनु हरिमिति। उपोऽधिके च।** चकारेण हीन इत्यनुकृष्यते, तदाह—**अधिके हीने चेति।** अधिक संज्ञाविधानं न द्वितीयार्थमित्याह—**सप्तमी वक्ष्यत इति।** 'यस्मादधि-

विद्युत्। इत्थंभूताख्याने भक्तो विष्णुं प्रति परि अनु वा। भागे—लक्ष्मीर्हरिं प्रति परि अनु वा। हरेर्भाग इत्यर्थः। वीप्सायाम्, वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किम्—परिषिञ्चति। ५५३ अभि-

---

द्योत्यः। वृक्षेण लक्ष्यमाणा विद्युद् विद्योतत इत्यर्थः। उत्पन्नविनष्टा विद्युत्, तदुत्पादितो वृक्षप्रकाशोऽपि उत्पन्नविनष्ट एव। तथा च वृक्षप्रकाशोत्तरं विद्युतोऽसत्त्वेन प्रत्यक्षाभावादनुमेया सा। ततश्च प्रकाशितेन वृक्षेण विद्युज्ज्ञानाद् वृक्षो लक्षणम्। **इत्थंभूताख्यान इति**। उदाहरणं वक्ष्यत इति शेषः। **भक्तो विष्णुं प्रतीति**। 'भज सेवायाम्'। भक्तिरस्त्यस्येति भक्तः, मत्वर्थीयोऽर्शआद्यच्, विषयतासंबन्धः प्रत्यादिद्योत्यो द्वितीयार्थः, तस्य भक्तावेकदेशेऽन्वयः, विष्णुविषयकभक्तिमानित्यर्थः। अत्र भक्तो भक्तिरूपं प्रकारविशेषं प्राप्तत्वाद् इत्थंभूतः, तस्य विष्णुविषयकतया उपपाद्यत्वाद्विषयतासंबन्धस्तदुपपादकः प्रतिद्योत्य इति ज्ञेयम्। **भाग इति**। उदाहरणं वक्ष्यत इति शेषः। **लक्ष्मीर्हरिं प्रतीति**। स्वामित्वं द्वितीयार्थः प्रत्यादिद्योत्यः, तदाह—**हरेर्भाग इत्यर्थ इति**। हरेः स्वभूतेति यावत्। **वीप्सायामिति**। उदाहरणं वक्ष्यत इति शेषः। **वृक्षं वृक्षं प्रतीति**। 'नित्यवीप्सयोः' इति द्विर्वचनम्। अत्र सन्वाच्या इच्छा स्वरूपसती व्याप्तिरेव तु विवक्षिता, सा च कार्त्स्न्येन संबन्धात्मिका। तथा च प्रकृत्यर्थगतकार्त्स्न्यमेव व्याप्तिः, सा यद्यपि द्विर्वचनद्योत्या, तथापि प्रतिपर्यनुयोगे तद्द्योत्यत्वमपि। तथा च कृत्स्नं वृक्षं सिञ्चतीत्यर्थः। व्यक्तिकार्त्स्न्यमिह विवक्षितम्, नत्ववयवकार्त्स्न्यमिति 'नित्यवीप्सयोः' इत्यत्र भाष्ये स्पष्टम्। ननु सेचने वृक्षस्य कर्मत्वादेव द्वितीयासिद्धेः किमिह कर्मप्रवचनीयसंज्ञयेत्यत आह—**अत्रेति**। गत्युपसर्गसंज्ञापवादः कर्मप्रवचनीयसंज्ञेत्युक्तम्, अतोऽत्र प्रतेः कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधाद् 'उपसर्गात् सुनोति—' इति षत्वं न भवति। कर्मप्रवचनीयत्वाभावे तु प्रतेरुपसर्गत्वात्ततः परस्य सिञ्चतेः सस्य षत्वं स्यादित्यर्थः। भाष्ये तु 'किमर्थमिदमुच्यते, कर्मत्वादेव द्वितीया सिध्यति, उपसर्गसंज्ञानिवृत्तिस्तु न प्रयोजनम्, क्रियायोगाभावे तदप्रसक्तेरित्याक्षिप्य द्वितीयार्थमेवैतत् कर्मप्रवचनीयसंज्ञाविधा-

---

कम्—' इत्यनेनेति भावः। तस्मिन्नपि सूत्रे 'कर्मप्रवचनीययुक्ते' इत्यनुवृत्तेरधिके संज्ञाविधानमावश्यकमेवेति ज्ञेयम्। **उप हरिमिति**। पूर्ववदुत्कृष्टादेव द्वितीया। **लक्षणेत्थम्। वृक्षं प्रतीति**। वृक्षसंबन्धि द्योतनमर्थः, संबन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति। **भक्तो विष्णुं प्रतीति**। विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः। भक्तः कंचित् प्रकारं प्राप्त इत्यर्थः। **लक्ष्मीर्हरिं प्रतीति**। लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः संबन्धः। **वृक्षं वृक्षमिति**। इह वीप्सा द्विर्वचन-

गुणेषु दोषाविष्करणम्। द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते। अतो विशेषणं सामान्येन 'यं प्रति कोपः' इति। **५७६ क्रुधद्रुहोरुपसृष्टयोः कर्म (१-४-३८)** सोपसर्गयोरनयोर्योगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति अभिद्रुह्यति। **५७७ राधीक्ष्योर्यस्य विप्रश्नः। (१-४-३९)** एतयोः कारकं संप्रदानं स्यात्, यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः। **५७८ प्रत्याङ्भ्यां श्रुवः**

---

त्यर्थः। नात्र भार्यां प्रति कोपः, किन्तु परेण दृश्यमानां तां न सहत इत्येव विवक्षितमिति बोध्यम्। एवं च क्रोधद्रोहेर्ष्यासूयानां कोपमूलकत्व एवेदमिति भाष्ये स्थितम्। तथा च कुप्यति कस्मैचिदित्याद्यसाध्वेव, कोपस्य कोपमूलकत्वाभावात् क्रुधार्थकत्वाभावाच्च। प्ररूढकोप एव हि क्रोधः, 'नह्यकुपितः क्रुध्यति' इति भाष्यात्। **क्रुधद्रुहोः।** उपसृष्टयोरित्येतद् व्याचष्टे—**सोपसर्गयोरिति**। पूर्वसूत्रापवादोऽयम्। हरेः क्रोधद्रोहोद्देश्यत्वाभावात् 'क्रियया यमभिप्रैति—' इति संप्रदानत्वस्य न प्रसक्तिः। नापि तादर्थ्यचतुर्थ्याः। क्रुधद्रुहोरकर्मकत्वाद् न हरेः कर्मत्वम्। अतः शेषषष्ठ्यां प्राप्तायां वाचनिकं कर्मत्वम्। **राधीक्ष्योः। यदीय इति।** यद्विषयक इत्यर्थः। विप्रश्न इत्येतद्व्याचष्टे—**विविधः प्रश्न इति। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्ग इति।** गर्गो नाम ज्योतिश्शास्त्रविद् ऋषिविशेषः, स कृष्णाय राध्यति ईक्षते वेत्यन्वयः। 'राध संसिद्धौ' 'ईक्ष दर्शने'। इह तु प्रश्नविषयशुभाशुभपर्यालोचनमर्थः, यस्य विप्रश्न इति लिङ्गात्, तदाह—**शुभाशुभं पर्यालोचयतीत्यर्थ इति।** अत्र शुभस्याशुभस्य च प्रश्नविषयस्य धात्वर्थोपसंग्रहादकर्मकावेतौ। अत एव राध्यतीति श्यन्नुपपद्यते। अन्यथा 'राधोऽकर्मकात्—' इति नियमात् श्यन् न स्यात्। एवं च किं कृष्णस्य शुभमशुभं वेति पृष्टो गर्गः कृष्णविषयकं शुभाशुभं पर्यालोचयतीत्यर्थः। कृष्णस्य संप्रदानत्वं षष्ठ्यपवादः। **प्रत्याङ्भ्याम्।** प्रत्याङ्भ्यामिति दिग्योगे

---

प्राप्ता। अन्ययोस्तु सकर्मकत्वाद् द्वितीया प्राप्ता। ननु चित्तदोषार्थानामित्येवास्तु किं क्रोधादीनां विशिष्योपादानेनेति चेत्, अत्राहुः—द्वेषादावतिप्रसङ्गवारणाय विशिष्योपादानम्। तेन 'योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इत्यत्र चतुर्थी न भवति। तत्र ह्यनभिनन्दनं द्विषेरर्थः। अत एवाचेतनेष्वपि द्विषधातुः प्रयुज्यते—औषधं द्वेष्टीति। **कोपप्रभवा एवेति।** कथं तर्हि 'कुप्यसि कस्मैचित्' इति। न हि कोपः कोपप्रभवः। अत्र व्याचख्युः—कुपिरत्र द्रोहार्थ इति। पत्ये शेत इतिवत् 'क्रियया यम्—' इत्येव सिद्धेः क्रुधद्रुहोर्ग्रहणं चिन्त्यप्रयोजनमित्याहुः। **राधीक्ष्योः।** 'राध संसिद्धौ' 'ईक्ष दर्शने'। अनयोस्त्विह शुभाशुभपर्यालोचनमर्थः, तच्च प्रश्नपूर्वकमित्या-

**पूर्वस्य कर्ता।** (१-४-४०) आभ्यां परस्य श्रृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता संप्रदानं स्यात्। विप्राय गां प्रतिश्रृणोति आश्रृणोति वा। विप्रेण मह्यं देहीति प्रवर्तितस्तं प्रतिजानीत इत्यर्थः। **५७६ अनुप्रतिगृणश्च।** (१-४-४१) आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात्। होत्रेऽनुगृणाति प्रतिगृणाति वा। होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः।

---

पञ्चमी। परस्येत्यध्याहार्यं श्रुव इत्यस्य विशेषणम्। 'श्रु श्रवणे'। इह तु प्रेरणापूर्वकाभ्युपगमे वर्तते। पूर्वशब्दः प्रेरणात्मकव्यापारं परामृशति, तदाह—**आभ्यामित्यादिना।** पूर्वस्येत्यस्य व्याख्यानम्—**प्रवर्तनारूपस्येति।** प्रेरणारूपस्येत्यर्थः। प्रत्याङ्भ्यामित्यनेन समुदिताभ्यां परस्येति नार्थो विवक्षितः, किन्तु प्रत्येकमेव तयोर्निमित्तत्वम्, अन्यथा 'अभिनिविशश्च' इतिवत् 'प्रत्याङ्श्रुवः' इत्येव ब्रूयादित्यभिप्रेत्योदाहरति—**विप्राय गां प्रतिश्रृणोति आश्रृणोति वेति।** अत्र प्रतिपूर्वक आङ्पूर्वकश्च श्रुधातुः प्रेरणापूर्वकाभ्युपगमे वर्तते, ततश्च प्रवर्तितः प्रतिजानीत इति लभ्यते। केन प्रवर्तित इत्याकाङ्क्षायां विप्रः कर्तृत्वेनान्वेति। तत्र विप्रस्य प्रेरणाकर्तृत्वात् संप्रदानत्वं कर्तृतृतीयापवाद इत्यभिप्रेत्याह—**विप्रेणेति।** मह्यं गवादिद्रव्यं देहीति विप्रेण पृष्टः सन् देवदत्तः तुभ्यं ददामीत्यभ्युपगच्छतीति योजना। **अनुप्रतिगृणश्च।** पूर्वस्य कर्तेत्यनुवर्तते। 'गॄ शब्दे' इत्यस्य श्नान्तस्य अनुकरणशब्दाद् गृण इति षष्ठी। अत्र गॄधातुः शंसितृकर्मके शंसनविषयकप्रोत्साहने वर्तते। तत्र पूर्वव्यापारस्य शंसनस्य कर्ता संप्रदानमित्यर्थः, तदाह—**आभ्यामिति।** पूर्वसूत्रे प्रत्याङ्भ्यामिति द्विवचननिर्देशबलात् प्रत्येकमेव धातुसंबन्धावधारणात् तत्साहचर्याद् इहापि प्रत्येकमेव धातुसंबन्ध इत्यभिप्रेत्योदाहरति—**होत्रे अनुगृणाति प्रतिगृणाति वेति। होता प्रथममिति।** शंसितारं होतारम् उत्तरोत्तरशंसनविषये प्रोत्साहयतीति यावत्। 'ओऽथ मोदै व' इति प्रतिगरमन्त्रः। ओ इति संबोधने, मोदै इति लोडुत्तमपुरुषैकवचनम्। व इत्येवकारार्थे। हे होतः अथ त्वदीयशंसनानन्तरं तुष्याम्येवेति तदर्थः। प्रोत्साहने होतुः कर्मत्वं प्राप्तम्, पूर्वव्यापारं शंसनं प्रति कर्तृत्वाद्धोतुः संप्रदान-

---

शयेन विवृणोति—**पृष्टो गर्ग इति।** शुभाशुभरूपयोः कर्मणोर्धात्वर्थेनोपसंग्रहादकर्मकावेतौ। अत एव राध्यतीति श्यन्, 'राधोऽकर्मकाद् वृद्धावेव' इति दिवादिषु वक्ष्यमाणेन गणसूत्रेणाकर्मकादेव तद्विधानात्। कृष्णसंबन्धि शुभाशुभमित्यर्थाभ्युपगमात् षष्ठ्यां प्राप्तायां वचनमिदम्। **अनुप्रति।** गृण इति श्नान्तस्यानुकरणशब्दात् षष्ठी। 'प्रत्याङ्भ्याम्–' इति पूर्वसूत्रे द्विवचननिर्देशात् प्रत्येकमेव धातुसंबन्ध इति निर्धारिते तत्साहचर्यादिहापि प्रत्येकमेव धातुसंबन्ध इति सूचयन्नाह—**आभ्यां गृणातेरिति।**

५८० परिक्रयणे संप्रदानमन्यतरस्याम्। ( १-४-४४ ) नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन्साधकतमं कारकं संप्रदानसंज्ञं वा स्यात् । शतेन-शताय वा परिक्रीतः। 'तादर्थ्ये चतुर्थी वाच्या' (वा १४५८) । मुक्तये हरिं भजति। 'क्लृपि संपद्यमाने च' (वा १४५९)। भक्तिर्ज्ञानाय कल्पते संपद्यते जायते

---

त्वम् । परिक्रयणे । नियतकालमिति । तुभ्यमेतावद्वेतनं दीयते, तद् गृह्णन् एतावन्तं कालं त्वं मम कर्मकरो भव इत्येवं परिमितकालं भृत्या स्वीकरणं परिक्रयणमित्यर्थः । साधकतममित्यनुवर्तते, तदाह—तस्मिन् साधकतममिति । संप्रदानत्वाभावे करणसंज्ञा । शतेनेति । सुवर्णादियत्किञ्चिद्द्रव्यशतेनेत्यर्थः । तादर्थ्ये चतुर्थी वाच्येति । 'चतुर्थी संप्रदाने' इति सूत्रभाष्ये पठितमेतत् । तस्मै इदं तदर्थम् । अर्थेन नित्यसमासः । तदर्थस्य भावस्तादर्थ्यम् । ब्राह्मणादित्वात् ष्यञ् । तेन च उपकार्योपकारकभावसंबन्धो विवक्षितः । तत्र उपकार्यादेव चतुर्थी, भाष्ये यूपाय दारु, कुण्डलाय हिरण्यम् , इत्युदाहृतत्वादित्यभिप्रेत्योदाहरति—मुक्तय इति। मुक्त्यर्थमित्यर्थः । उपकार्यत्वं च बहुविधं जन्यत्वादि । यथा मुक्तये हरिं भजतीति, मुक्तिर्जन्येति गम्यते । प्राप्यत्वं वा, ब्राह्मणाय दधीति ब्राह्मणस्योपकार्यत्वं गम्यते इत्यादि । नचैवमपि अनेनैव सिद्धे 'चतुर्थी संप्रदाने' इति सूत्रं संप्रदानसंज्ञाविधानं च व्यर्थमिति वाच्यम् , 'हरये रोचते भक्तिः' इत्यादौ 'रुच्यर्थानां प्रीयमाणः' इत्याद्यर्थं तदावश्यकत्वादिति भाष्ये स्पष्टम्। क्लृपि संपद्यमाने चेति । क्लृपीति सप्तमी, संपत्तिः-विकारात्मना उत्पत्तिः, परिणाम इति यावत्। क्लृपिधातौ प्रयुज्यमाने सति संपद्यमानेऽर्थे वर्तमानाच्चतुर्थी वाच्येत्यर्थः । भक्तिरिति । ज्ञानात्मना परिणमते

---

होत्र इति । कर्मत्वे प्राप्ते वचनम् । परिक्रयणे । द्रव्यदानेनात्यन्तस्वीकारः क्रयः, तस्य समीपं परिशब्द आचष्टे । अनियतकालात् क्रयणात् परिक्रयणस्य न्यूनकालत्वादित्याशयेनाह—नियतेति । भृत्या वेतनादिना । तादर्थ्य इति । तस्मै कार्यायेदं तदर्थं कारणम् ,तस्य भावस्तादर्थ्यम्। ब्राह्मणादित्वात् ष्यञ् । 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्तात् ष्यञा संबन्धोऽभिधीयते । स च संबन्धोऽनेकविधः, न तु कार्यकारणभाव एव, तेन ब्राह्मणाय दधीत्याद्यपि सिद्धम् । ब्राह्मणस्य दध्यजन्यत्वेऽपि तत्संस्कार्यत्वात् । न चैवं दधिशब्दादपि चतुर्थी स्यादिति शङ्क्यम्, संबन्धस्य द्विनिष्ठत्वेऽपि षष्ठीवद्विशेषणादेव भवतीत्याकरे अभ्युपगमात्। एवं यूपाय दारु इत्यत्र दारुशब्दादपि न भवति, 'हेतौ' इति तृतीयापि षष्ठीविषय एव भवतीति सापीह न भवति, किंतु प्रातिपदिकार्थे प्रथमैव । न चैतद्वार्तिकस्यावश्यकत्वे 'चतुर्थी संप्रदाने' इति सूत्रं व्यर्थमिति भ्रमितव्यम् , हरये रोचते इत्याद्यर्थं तस्याप्यावश्यकत्वात् । विप्राय

**इत्यादि। 'उत्पातेन ज्ञापिते च' (वा १४६०)। वाताय कपिला विद्युत्। 'हितयोगे च' (वा १४६१)। ब्राह्मणाय हितम्। ५८१ क्रियार्थोपपदस्य च कर्मणि**

---

इत्यर्थः। क्लृपीत्यर्थग्रहणमित्यभिप्रेत्योदाहरति—**संपद्यते, जायत इत्यादीति।** आदिना परिणामत इत्यादिसंग्रहः। परिणामत्वप्रकारकबोधार्थमिदं वचनम्। अन्यथा तादर्थ्यचतुर्थ्यैव सिद्धमित्याहुः। **उत्पातेन ज्ञापिते चेति।** अशुभसूचक आकस्मिको भूतविकार उत्पातः, तेन सूचितेऽर्थे विद्यमानाच्चतुर्थी वाच्येत्यर्थः। **वातायेति।** महावातस्य सूचिकेत्यर्थः। **हितयोगे चेति।** चतुर्थी वाच्येति शेषः। **ब्राह्मणाय हितमिति।** ब्राह्मणस्य सुखकृदित्यर्थः। याजनादीति शेषः। **क्रियार्थ।** क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था। क्रियेति विशेष्यमध्याहार्यम्। क्रियाफलकक्रियावाचकमिति यावत्। क्रियार्था क्रिया उपपदं यस्येति विग्रहः। तुमुनो विशेषणमेतत्। उपोच्चारितं पदम् उपपदम्। स्थानिन इत्यपि तद्विशेषणम्। स्थानं प्रसक्तिरस्यास्तीति स्थानी, तस्येति विग्रहः। अप्रयुज्यमानस्येति यावत्। तादृशस्य तुमुन्नन्तस्य कर्मणि चतुर्थीति फलितम्। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमु-

---

गामित्यत्रापि तादर्थ्यचतुर्थ्याः प्राप्तिर्नास्तीति प्रागेवोक्तत्वाच्चेति दिक्। **क्लृपीति।** संपदादित्वाद् भावे क्विपि तदन्तात्सप्तमी। संपत्तिरिहाभूतप्रादुर्भावः, क्लृप्त्यर्थकधातुप्रयोगे यः संपद्यते तत्र चतुर्थी, विकारवाचकाच्चतुर्थीत्यर्थः। स हि संपद्यते—प्रादुर्भवति। तदुदाहरति—**भक्तिर्ज्ञानायेति।** ज्ञानात्मना परिणामत इत्यर्थः। प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी। अभेदविवक्षायां तु परत्वात् प्रथमैव 'भक्तिर्ज्ञानं कल्पते'। यदा तु 'जनिकर्तुः—' इति भक्तेरपादानत्वं विवक्ष्यते, तदापि ज्ञानस्याभिहितकर्तृत्वात् प्रथमैव 'भक्तिर्ज्ञानं कल्पते'। क्लृपीत्यर्थग्रहणमित्याशयेनाह—**संपद्यत इत्यादि।** यद्यपि तादर्थ्ये चतुर्थ्यैव भक्तिर्ज्ञानायेत्यादिप्रयोगाः सिध्यन्ति, तथापि परिणामत्वप्रकारकबोधार्थमिदं वचनमित्याहुः। **उत्पातेनेति।** प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः, तेन ज्ञापितेऽर्थे वर्तमानाच्चतुर्थी वाच्येत्यर्थः। **वातायेति।** वातस्य ज्ञापिकेत्यर्थः। **हितेति।** चतुर्थीसमासविधानाज्ज्ञापकादेतल्लब्धमिति भावः। एवं सुखयोगेऽपि चतुर्थी बोध्या। **क्रियार्थोपपद।** क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था, सा क्रिया उपपदं यस्य। यद्यपि क्रियाया उपपदत्वं न संभवति, तथापीह स्ववाचकशब्दद्वारा तद्बोध्यम्। क्रियाफलकं क्रियावाचकमित्यर्थः। क्रियावाचकस्यापि धातोरुपोच्चारितपदरूपोपपदत्वं यद्यपि न संभवति सुप्तिङन्तस्यैव पदत्वात्, तथापीह क्रियावचकप्रकृतिकमित्यर्थो विवक्षितः, तादृशमुपपदं यस्य तुमुन्नन्तस्य तस्य कर्मणि चतुर्थी भवतीति निष्कृष्टोऽर्थः। 'तुमुन्ण्वुलौ क्रियायाम्—' इति सूत्रमहिम्ना क्रियार्थक-

**स्थानिनः।** (२-३-१४) क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात्। फलेभ्यो याति। फलान्याहर्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितुमित्यर्थः। एवं, स्वयंभुवे नमस्कृत्य' इत्यादावपि। **५८२ तुमर्थाच्च भाववचनात्।** (२-३-१५) 'भाववचनाश्च'

---

न्विधिमहिम्ना क्रियाफलकमुपपदं क्रियावाच्येव लभ्यते, तदाह—**क्रियार्था क्रियेति।** स्थानिन इत्यस्य व्याख्यानम्—**अप्रयुज्यमानस्येति।** फलेभ्यो यातीत्यत्र कस्य तुमुन्नन्तस्य प्रसक्तिरित्यत आह—**फलान्याहर्तुमिति।** इह फलाहरणक्रियार्था यानक्रिया, तद्वाचके उपपदे आहर्तुमित्यध्याहारलभ्यतुमुन्नन्तार्थाहरणक्रियां प्रति फलानां कर्मत्वाच्चतुर्थी द्वितीयापवादः। न च तादर्थ्यचतुर्थ्या गतार्थता शङ्क्या, न हि यानक्रिया फलार्था, किन्तु फलकर्मकाहरणक्रियार्थैव, अतो न फलेभ्यस्तादर्थ्यचतुर्थीप्रसक्तिः। एवं च फलकर्मकाहरणक्रियार्था यानक्रियेति बोधः। उदाहरणान्तरमाह—**नमस्कुर्म इति।** तुमुन्नन्तार्थाध्याहारं दर्शयति—**नृसिंहमनुकूलयितुमिति।** न चात्र 'नमःस्वस्ति—' इत्येव चतुर्थी सिद्धेति वाच्यम्, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयापत्तेः। एतत्सूचनार्थमेवेदमुदाहरणान्तरं दर्शितम्। **तुमर्थाच्च।** 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति सूत्रम्। क्रियार्थायां क्रियायामुपपदभूतायां भविष्यति काले तुमुन्ण्वुलौ स्तः। भोक्तुं व्रजति, भोजको व्रजति, भविष्यद्भुजिक्रियार्थो व्रजतिरत्रोपपदम्। अस्य तुमुनः अर्थ इवार्थो यस्य तस्मादिति विग्रहः। भावः क्रिया, उच्यते अनेनेति वचनः, भावस्य वचनो भाववचनः, तस्मादिति विग्रहः। क्रियावाचिन इति यावत्। प्रत्ययादिति शेषः। तत्र 'अव्ययकृतो भावे' इति तुमुनो भाव एव विहितत्वेन तुमर्थकस्य प्रत्ययस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहणार्थमित्याह—**भाववचनाश्चेति।** भावे इत्यधिकृत्य ये घञादिप्रत्यया

---

_ दं क्रियावाच्येव फलतीत्याशयेनाह—**क्रियार्था क्रियेति।** स्थानिन इत्यस्यैवार्थकथनमप्रयुज्यमानस्येति। **तुमुन इति।** ण्वुलोऽप्युपलक्षणम्, फलेभ्यो यातीत्यस्य फलान्याहारक इति विवरणे बाधकाभावात्। **कर्मणीति।** तथा च द्वितीयापवादोऽयमिति भावः। यत्तु प्रसादकृता व्याख्यातम् 'अप्रयुज्यमानस्यैव कर्मणि यथा स्यात्, प्रयुज्यमानस्य कर्मणि माभूदिति नियमार्थं सूत्रमिति' तदसत्, अप्राप्तस्य नियमायोगात्। न चेह 'तादर्थ्ये—' इति प्राप्तिः शङ्क्या, यानक्रियायाः फलार्थत्वाभावात्। आहरणार्था हि यानक्रिया। आहरणं तु फलकर्मकमित्यन्यदेतत्। क्रियार्थोपपदस्य किम्, प्रविश पिण्डीम्। गृहप्रवेशनं यद्यपि भक्षणार्थं तथापि भक्षिं प्रति कृत्रिमोपपदत्वं नास्ति। न च तुमुनः कर्मणीत्युक्तत्वाद् भक्षिकर्मणि चतुर्थ्याः प्रसक्तिरेव नास्तीति

( सू ३१८० ) इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति यष्टुं यातीत्यर्थः ।

**५८३ नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च । ( २-३-१६ )**

एभिर्योगे चतुर्थी स्यात् । हरये नमः । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'

---

विहिताः ते क्रियार्थक्रियायामुपपदभूतायां भविष्यति स्युरिति तदर्थः । यागाय यातीत्याद्युदाहरणम् । एवं च क्रियार्थक्रियोपपदत्वलाभार्थं तुमर्थादिति विशेषणम् । अत्र तादर्थ्यस्य तुमुनेव घञा द्योतितत्वाद् 'उक्तार्थानामप्रयोगः' इति न्यायेन तादर्थ्यचतुर्थ्या अप्राप्तौ प्रथमायाः प्राप्ताविदं वचनम् । तुमर्थादिति किम् ? पाकः, त्याग इत्यादौ घञो 'भावे' इत्यधिकारस्थत्वेऽपि न चतुर्थी । क्रियार्थक्रियोपपदत्वाभावेन तुमर्थकत्वाभावात् । भाववचनादिति किम् ? पाचको व्रजति । पक्तुं व्रजतीत्यर्थः । 'तुमुन्ण्वुलौ–' इति ण्वुल् । तस्य तुमर्थकत्वेऽपि 'भावे' इत्यधिकारे विध्यभावान्न चतुर्थी । तादर्थ्यस्य ण्वुलैवोक्तत्वान्न तादर्थ्यचतुर्थी, किं तु प्रथमैव । **नमः स्वस्ति** । युज्यत इति योगः, कर्मणि घञ् । नमस् इत्यादिभिर्युक्तादित्यर्थः । फलितमाह—**एभिर्योग इति** । न च तादर्थ्यचतुर्थ्या गतार्थत्वं शङ्क्यम्, तादर्थ्यस्य शेषत्वविवक्षायां षष्ठीनिवारणार्थत्वात् । तादर्थ्यं हि उपकार्योपकारकभावः, तस्य यदा संबन्धत्वेन भानं, तदा षष्ठी यथा 'गुरोरिदं गुर्वर्थम्' इति भाष्ये स्पष्टम् । एवं च नमःस्वस्त्यादियोगे तादर्थ्यस्य शेषत्वविवक्षाया-

---

प्रत्युदाहरणमिदं न संगच्छत इति वाच्यम्, सति तु 'क्रियार्थोपपदस्य' इति पदे 'तुमुन्ण्वुलौ क्रियायाम्–' इत्येतद्विषयकमेवेदं सूत्रमिति 'तुमुनः' इति लभ्यते नान्यथेति प्रत्युदाहरणस्यासंगतत्वाभावात् । **तुमर्थात्** । 'अव्ययकृतो भावे' इति तुमुनो भाव एव विधानात् तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहार्थमित्याह—**भाववचनाश्चेतीति** । न च 'तादर्थ्ये' इत्येव गतार्थता शङ्क्या, क्रियार्थक्रियोपपदकेन 'भाववचनाश्च' इति घञा तुमुनेव तादर्थ्यस्य द्योतितत्वात्प्रातिपदिकार्थमात्रे प्रथमाप्राप्तावेतत्सूत्रारम्भात् । यत्तु प्रसादकृतोक्तम्—भाववचनादेव यथा स्यात्, पाचको व्रजतीति ण्वुलन्तान्मा भूदिति नियमार्थमिदं सूत्रमिति । तन्न, ण्वुलः कर्तृवाचकतया तुमर्थकत्वाभावेन नियमार्थत्वायोगाद् ण्वुलन्ते कर्तुः प्राधान्यात् कर्तारं प्रति च तादर्थ्याभावात्, गुणीभूततया पाकं प्रति तादर्थ्यसंभवेऽपि पाकवाचकधातोश्चतुर्थ्ययोगाच्च । तुमर्थात् किम्, पचनं वर्तते । भाववचनात् किम्, पाकः । त्यागः । अत्र वदन्ति—'क्रियार्थोपपदस्य–' इत्यनुवर्त्य पञ्चम्या विपरिणमय्य व्याख्याने बाधकाभावाद् भाववचनादिति त्यक्तुं शक्यम् । न चैवं 'तुमर्थात्–' इत्येव वक्तव्यमिति वाच्यम् । वर्णलाघवसंभवे गौरवाश्रयणायोगादिति । **बलीयसीति** । हरये नम इत्यत्र तूद्देशन-

( प १०३ ) । **नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । 'अलमिति पर्याप्त्यर्थग्रहणम्' ( वा १४६२ ) । तेन दैत्येभ्यो हरिरलं-प्रभुः-समर्थः-शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । 'तस्मै प्रभवति—'**

---

मपि चतुर्थ्येवेत्येतदर्थमिदं सूत्रम् । ननु नमस्करोति देवानित्यत्रापि चतुर्थी स्यादित्यत आह—**उपपदविभक्तेरिति** । पदान्तरयोगनिमित्तिका विभक्तिः उपपदविभक्तिः, तदपेक्षया कारकविभक्तिर्बलीयसीत्यर्थः । 'अन्तरान्तरेण–' इति सूत्रे भाष्ये पठितमिदं वचनम् । तच्च न्यायसिद्धम् । क्रियाकारकयोर्हि संबन्धः अन्तरङ्गः । उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः संबन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति कैयटः । अन्ये तु उपपदविभक्त्या संबन्धसामान्यमवगम्यते, विशेषावगमस्तु प्रकरणादिपर्यालोचनया लभ्यः । कारकविभक्त्या तु कर्मत्वादिसंबन्धविशेषो झटित्येवावगम्यत इति सा बलीयसीत्याहुः । **नमस्करोति देवानिति** । करशिरस्संयोगादिना तोषयतीत्यर्थः । करशिरस्संयोगादिमात्रार्थत्वे अकर्मकत्वापातात् । **प्रजाभ्यः स्वस्तीति** । प्रजासंबन्धि कुशलमित्यर्थः । **अग्नये स्वाहेति** । अग्न्युद्देश्यकं द्रव्यदानमित्यर्थः । **पितृभ्यः स्वधेति** । पित्रुद्देश्यकं द्रव्यदानमित्यर्थः । 'स्वं रूपं शब्दस्य–' इति अलंशब्दस्यैव ग्रहणे कुमारीणामलङ्कार इत्यत्रातिव्याप्तिः । किं च दैत्येभ्यो हरिरलमित्यत्रैव स्यात्, दैत्येभ्यो हरिः प्रभुरित्यादौ न स्यादित्यत आह—**अलमितीति** । वार्तिकमेतत् । अलमित्यनेन पर्याप्त्यर्थकशब्दानां ग्रहणमित्यर्थः । **तेनेति** । पर्याप्त्यर्थग्रहणेनेत्यर्थः । **इत्यादीति** । आदिना कुमारीणामलङ्कार इत्यत्रातिव्याप्तिनिराससंग्रहः । ननु 'प्रभुर्भुवनत्रयस्य' इत्यादौ कथं षष्ठीत्यत आह—**प्रभ्वादियोगे षष्ठ्यपि साधु-**

---

क्रियाद्वारा हरिनमस्कारयोः संबन्धः, हर्युद्देश्यको नमस्कार इति । एवं चोद्देशेन क्रियावगतौ विलम्ब इति कारकविभक्तेर्बलीयस्त्वमित्येके । अन्ये तूपपदविभक्त्या संबन्धसामान्यमवगम्यते, तद्विशेषावगमस्त्वर्थप्रकरणादिपर्यालोचनाधीनः । कारकविभक्त्या तु कर्मत्वादिसंबन्धविशेषो झटित्येवावगम्यत इति तस्या बलीयस्त्वमित्याहुः । **षष्ठ्यपीति** । ननु प्रभ्वादियोगे षष्ठ्येवास्तु, अलंशब्दस्तु पर्याप्तीतरार्थक एव गृह्यतामित्याशङ्क्याह—**तस्मै प्रभवतीति । न त्वां तृणमित्यादि** । ननु तृणादिवद् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम् । मैवम्, 'अनादरे' इत्यस्य कर्मविशेषणत्वेन अनादरद्योतकं यत् कर्म तत्र चतुर्थीति व्याख्यानात् । तृणं ह्यत्रानादरद्योतकं न तु युष्मदर्थः । स्यादेतत्—त्वां तृणं मन्ये तृणाय वेत्युदाह्रियताम्, किमनेन नञः प्रयोगेण, अत्राहुः—'प्रकृष्टकुत्सितग्रहणं कर्तव्यम्' इति वार्तिकमस्ति, तेन यद्वाचिनश्चतुर्थी विधीयते ततो निकृष्टत्वेन यदि कुत्सा प्रतिपाद्यते, तदा चतुर्थी भवति न तु साम्य-

( सू १७६९ ) 'स एषां ग्रामणीः' ( सू १८७८ ) इति निर्देशात् । तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इति सिद्धम् । वषडिन्द्राय । चकारः पुनर्विधानार्थः, तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषि—' ( सू ६३१ ) इति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् ।

**५८४ मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । ( २-३-१७ )** प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । श्यना निर्देशात्तानादिकयोगे न । न त्वां तृणं मन्वे । 'अप्राणिष्वित्यपनीय नौकाकान्न-

---

रिति । कुत इत्यत आह--**स एषां ग्रामणीरिति निर्देशादिति** । नन्वेवं सति दैत्येभ्यः प्रभुरिति चतुर्थी न स्यात् । अलंशब्दस्तु पर्याप्तीतरार्थक एव भविष्यतीत्यत आह--**तस्मै प्रभवतीति । वषडिन्द्रायेति** । इन्द्रोद्देश्यकं हविर्दानमित्यर्थः । ननु स्वस्ति गोभ्यो भूयाद् इत्याशीर्वाक्ये चतुर्थ्येवेष्यते। तत्र 'चतुर्थी चाशिष्यायुष्य-' इत्यादिना परत्वात् पक्षे षष्ठीप्रसङ्ग इत्यत आह--**चकारः पुनर्विधानार्थ इति । तेनेति** । पुनर्विधानसामर्थ्येनेत्यर्थः । **मन्यकर्मणि** । अप्राणिष्विति च्छेदः । 'मन ज्ञाने' दिवादिः श्यन्विकरणः, 'मनु अवबोधने' तनादिरुविकरणः । तत्र मन्येति श्यना निर्देशाद् दैवादिकस्य ग्रहणमित्याह--**मन्यतेरिति । कर्मणीति** । अतो द्वितीयां बाधित्वा पक्षे चतुर्थीति सूचितम् । **तिरस्कार इति** । अनादर इत्यस्य व्याख्यानमेतत् । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । **न त्वां तृणमिति** । हे देवदत्त त्वां तृणत्वेनापि न मन्य इत्यर्थः । नञुपादानादयमर्थो लभ्यते । तृणादप्यधमत्वप्रतीतेस्तिरस्कारातिशयः फलितः । तृणं त्वां मन्ये तृणाय वेत्युक्तौ तु तृणसाम्यमेव प्रतीयेत । न तु ततोऽप्यपकृष्टत्वम् । एतदेवाभिप्रेत्य भाष्येऽपि नञुपात्तः । न च मन्यकर्मत्वाविशेषात् त्वामिति युष्मच्छब्दादपि चतुर्थी शङ्क्या, अनादरद्योतके कर्मणि इत्यर्थस्य विवक्षितत्वात् । तृणमेव ह्यत्रानादरद्योतकम् , न तु युष्मदर्थः । **श्यनेति** । तानादिकमनुधातुकर्मणि द्वितीयैव, न तु पक्षे चतुर्थीति भावः । **न त्वां तृणं मन्व इति** । मनुधातोरुविकरणस्य लडुत्तमपुरुषैकवचनम् । ननु 'न त्वां नावमन्नं मन्ये' इत्यत्रापि चतुर्थीविकल्पः स्यादित्यतिव्याप्तिः । न त्वां शुने मन्य इत्यादौ तु प्राणित्वाच्चतुर्थीविकल्पो न स्यादित्यव्याप्तिः, कर्मणः प्राणित्वादित्यत आह--**अप्राणिष्वित्य-**

---

विवक्षायाम् । तादृशी च कुत्साप्रतीतिर्नञः प्रयोगे झटित्येव भवतीति न त्वामित्युक्तमिति । **श्यना निर्देशादिति** । न च मन्य इति यका निर्देशः किं न स्यादिति वाच्यम् , अनभिहित इत्यधिकारात् । न हि यका योगे अनभिहितं कर्म संभवति । श्यन्नपि दैवादिकधातूपलक्षणमात्रम्, न तु स्वयं विवक्षितः । तेन 'तृणाय मत्वा रघुन-

शुकसृगालवर्जेष्विति वाच्यम्' ( वा १४६४ ) । तेन 'न त्वां नावं मन्ये' इत्यत्रा-ऽप्राणित्वेऽपि चतुर्थी न । 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव ।

**५८५ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । ( २-३-१२ )**

अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति । चेष्टायाम् किम्-मनसा हरिं व्रजति । अनध्वनि इति किम्-पन्थानं गच्छति । गन्त्रा-ऽधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव, उत्पथेन पथे गच्छति ।

---

**पनीयेति । न त्वां नावं मन्य इति ।** जीर्णां नावं प्रति वाक्यमेतत् । न त्वामन्नं मन्य इत्यप्युदाहार्यम् । कुत्सितमन्नं प्रति वाक्यमेतत् । उभयत्राप्यप्राणित्वेऽपि न चतुर्थीविकल्पः, किंतु द्वितीयैवेति भावः । **न त्वां शुने मन्य इति ।** हे देवदत्त त्वां श्वत्वेनापि न मन्य इत्यर्थः । न त्वां काकं मन्ये, न त्वां शुकं मन्ये, न त्वां सृगालं मन्ये इत्यप्युदाहार्यम् । एषु प्राणित्वेऽपि न चतुर्थीविकल्प इति भावः । **गत्यर्थ ।** शारीर-परिस्पन्दश्चेष्टा । **मनसेति ।** अत्र शारीरचेष्टाया अभावान्न द्वितीयाचतुर्थ्यौ, किंतु द्वितीयैवेति भावः । 'आस्थितप्रतिषेधो वक्तव्यः' इति वार्तिकमर्थतः संगृह्णाति—**गन्त्रा-ऽधिष्ठित इति ।** गन्त्राक्रान्ते अध्वन्येव अनध्वनीत्ययं निषेध इत्यर्थः । यथा—पन्थानं गच्छतीति । पन्थानं प्राप्नोतीत्यर्थः । अत्र पथः प्राप्त्याश्रयत्वेन गन्त्राधिष्ठितत्वा-न्निषेधः । अस्य वार्तिकस्य प्रयोजनमाह—**यदा त्विति । उत्पथादिति ।** अमार्गा-दित्यर्थः । ल्यब्लोपे पञ्चमी । उज्जयिनीं प्राप्तुं प्रस्थितो मोहात्तन्मार्गात् प्रच्युतो मार्गा-न्तरं प्रविष्टः । तं परित्यज्य पुनरुज्जयिनीमार्गं आक्रमितुमिष्यते, तदा अनध्वनीति निषेधाभावाच्चतुर्थ्यपि भवत्येवेत्यर्थः । तादृशं लक्ष्यं दर्शयति—**उत्पथेन पथे गच्छ-तीति ।** उत्पथेनेत्यनन्तरं गन्तुमशक्त इति शेषः । उत्पथेन उज्जयिनीं प्राप्तुमशक्त उत्पथं परित्यज्य उज्जयिनीमार्गं प्रवेष्टुं तदीयं मार्गमनुसरतीत्यर्थः । अत्र उज्जयिनी-मार्गस्य गन्त्राधिष्ठितत्वाभावाद् अनध्वनीति निषेधो न भवति, अतश्चतुर्थी भवति, पक्षे द्वितीया चेति भावः । इति चतुर्थी विभक्तिः ।

---

न्दनोऽपि बाणे न रक्षः प्रधनान्निरास्थत्' इति भट्टिप्रयोगः संगच्छते । **नौकाका-न्नेति ।** व्यवस्थितविभाषा विज्ञातव्येति भावः । **गत्यर्थकर्मणि ।** गत्यर्थेति किम्, ओदनं पचति । कर्मणीति किम् , अश्वेन व्रजति । 'अनध्वनि' इत्यत्राध्वनीति न स्वरूपग्रहणम् । तथा हि सति 'अनध्वनः' इत्येवावक्ष्यत् । किं त्वर्थग्रहणं सप्तमी-निर्देशात् , कर्मणीत्यनेन सामानाधिकरण्यात् । अर्थस्यैव हि कर्मत्वं संभवति न शब्द-स्वरूपस्य, तेनाध्ववाचिनां सर्वेषामेव निषेधः । तथा च वार्तिकम्—**अध्वन्यर्थग्रह-**

**५८६ ध्रुवमपायेऽपादानम्।** (१-४-२४) अपायो विश्लेषः, तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात्। **५८७ अपादाने पञ्चमी।** (२-३-२८) ग्रामादायाति। धावतोऽश्वात्पतति। कारकं किम्-वृक्षस्य पर्णं पतति। 'जुगु-

---

**अथ पञ्चमी विभक्तिः। ध्रुवमपाये।** अपायपदं व्याचष्टे—**अपायो विश्लेष इति।** वियोग इत्यर्थः। ध्रुवपदं व्याचष्टे—**अवधिभूतमिति।** द्वयोः संयुक्तयोरन्यतरस्य चलनाद्विश्लेष इति स्थितिः। तत्र तादृशचलनानाश्रयभूतं ध्रुवम्। तच्चेहार्थादवधिभूतं विवक्षितमिति भावः। **अपादाने पञ्चमी।** स्पष्टत्वान्न व्याख्यातम्। **ग्रामादायातीति।** आगच्छतीत्यर्थः। कस्मादित्याकाङ्क्षाविषयत्वाद् ग्रामोऽवधिरिति अपादानत्वात् पञ्चमी। माथुराः पाटलीपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितविशेषावधित्वमादाय अपादानत्वमिति भाष्ये स्पष्टम्। ननु विश्लेषानुकूलचलनानाश्रयभूतं यत् तदेव ध्रुवमिति व्याख्यायताम्, किमवधित्वविवक्षयेत्यत आह—**धावतोऽश्वात् पततीति।** अश्वस्य चलनाश्रयत्वेऽपि पतनक्रियां प्रति कस्मा-

---

**णम्**-इति। **गन्त्राधिष्ठित एवेति।** 'आस्थितप्रतिषेधो वक्तव्यः' इति वार्तिकादिति भावः। आस्थितः संप्राप्तः। पन्थानं गच्छतीत्यत्र हि पन्थाः प्राप्त एवेति न पक्षे चतुर्थी। यदा त्वप्राप्तत्वेन विवक्षा तदा पक्षे भवत्येव सा। इह अनध्वनीत्यपनीय 'असंप्राप्ते' इति पूर्यते। तेन स्त्रियं गच्छतीत्यत्र स्त्री प्राप्तैवेति न चतुर्थीति। अत्र व्याचक्षते—अजां नयति ग्राममित्यत्र तु न भवत्येव चतुर्थी, अगत्यर्थत्वात्। आक्षेपादिना ह्यत्र प्रतीयते गतिर्न त्वसौ नयतेरर्थः, प्रापणवाचित्वादिति। 'गत्यर्थकर्मणि चतुर्थी वा' इति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीया यथा स्यादित्येतदर्थम्, तेन ग्रामं गन्तेत्यत्र कृद्योगलक्षणा षष्ठी न भवतीति वृत्तिकृतोक्तम्। इति चतुर्थी। **ध्रुवमपाये।** 'ध्रु गतिस्थैर्ययोः' अस्मात् पचाद्यचि कुटादित्वान्ङित्वे उवङ्। 'ध्रुव स्थैर्ये' इति केचित्पठन्ति। तत्र 'इगुपध-' इति कः। ध्रुवं स्थिरम्। अपायशब्देन विवक्षितमाह—**विश्लेष इति।** एवं च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयो ध्रुवमिति फलितम्। तच्चार्थादवधिरेवेत्याह—**अवधिभूतमिति। धावत इति।** इह धावनक्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते। 'परस्परस्मान्मेषावपसरतः' इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठां गतिं प्रति इतरस्याप्यपादानत्वं न विरुध्यते। उक्तं च हरिणा—'अपाये यदुदासीनं चलं वा यदि वाऽचलम्। ध्रुवमेवातदावेशात्तदपादानमुच्यते॥ 'पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ। तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते॥ मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्॥' इति। पर्वतात्प-

प्साविरामप्रमादार्थानामुपसंख्यानम्' ( वा १०७१ ) । पापाज्जुगुप्सते, विरमति। धर्मात्प्रमाद्यति । ५८८ भीत्रार्थानां भयहेतुः । (१-४-२५) भयार्थानां त्राणा-

---

दित्याकाङ्क्षाविषयत्वलक्षणमवधित्वं न विरुद्धमिति भावः । **जुगुप्सेति** । जुगुप्सा-द्यर्थकधातुभिर्योगे जुगुप्सादिविषयस्यापादानत्वमित्यर्थः । **पापाज्जुगुप्सत इति** । पापविषये कुत्सितत्वबुद्ध्या न रमत इत्यर्थः । **विरमतीति** । पापादित्यनुषज्यते । पापविषये न प्रवर्तत इत्यर्थः । **धर्मात् प्रमाद्यतीति** । धर्मविषये मुह्यतीत्यर्थः । वास्तवसंयोगविश्लेषयोरभावाद् वचनमिदम् । यदा तु जुगुप्सत इत्यादेर्जुगुप्सादिभिर्नि-वर्तत इत्यर्थ आश्रीयते, तदा बुद्धिकृतविश्लेषावधित्वमादाय अपादानत्वादेव सिद्धमिति

---

ततोऽश्वात्पततीत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं देवदत्तादिनिष्ठं पतन-मर्थः, पञ्चम्यर्थेऽवधौ अभेदेन संसर्गेण प्रकृत्यर्थः पर्वतादिर्विशेषणम् , प्रत्ययार्थस्तु पतनक्रियायाम् , स चावधिरूपो धर्मी, न तु धर्ममात्रम् , उद्धृतौदना स्थालीत्यत्रौ-दनकर्मकोद्धरणावधिभूता स्थालीति सामानाधिकरण्यदर्शनात् । एतच्च मनोरमायां स्थितम् । नन्विह ध्रुवग्रहणं किमर्थम् । न च ग्रामादागच्छति शकटेनेत्यत्र शकटेऽति-व्याप्तिवारणाय तदिति वाच्यम् , परत्वात्तत्र करणसंज्ञाप्रवृत्तेः । न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम् , कारकाधिकारात् कारकमिति लभ्यत इति ध्रुवग्रहणं चिन्त्यप्रयोजनमिति चेत् । अत्र वदन्ति—कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेन विवक्षा-भावदशायां करणसंज्ञाप्रसङ्गेन शकटस्यापादानत्वं स्यात्तन्मा भूदित्येतदर्थं ध्रुवग्रहणमिति। **जुगुप्सेति** । जुगुप्सा निन्दा, विरामो विरतिः, प्रमादोऽनवधानता, एतदर्थकानां धातूनां कारकमपादानसंज्ञं स्यादित्यर्थः । संयोगपूर्वको विश्लेषो विभागः, स चेह नास्ति, बुद्धि-कृतस्तु गौणत्वान्नेह गृह्यत इति सूत्रेणाप्राप्तौ वार्तिकारम्भः । भाष्यकारस्तु—कारक-प्रकरणे गौणमुख्यन्यायो नाश्रीयत इति तमब्ग्रहणेन ज्ञापितत्वाज्जुगुप्सादीनां तत्पूर्व-कनिवृत्तिवाचित्वमाश्रित्येदं वार्तिकं 'भीत्रार्थानाम्–' इत्यादि सूत्राणि च प्रत्याचख्यौ । पूर्वं हि बुद्ध्यापायं संप्राप्य ततो दोषदर्शनान्निवर्तत इत्यस्त्येवात्र बुद्धिकृतोऽपायः । **भीत्रा** । 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इति रामायणे तु कस्येत्यस्य संयुगेनान्वयान्नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः संगच्छत एव । न चैवं संयुगस्यापादा-नत्वापत्तिरिति वाच्यम् , परया अधिकरणसंज्ञया अपादानसंज्ञाया अबाधात् । अधि-करणत्वाविवक्षायां तु इष्टापत्तेः । भीत्रार्थेति किम् , व्याघ्रं पश्यति । न च कर्मत्वेन बाधः शङ्क्यः, कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमीप्रसङ्गादित्याहुः । भयहेतु-ग्रहणं चिन्त्यप्रयोजनम् , अरण्ये बिभेतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेरिति चेत् । अत्र वदन्ति—भयहेतुग्रहणाभावे कारकशेषत्वविवक्षायामतिप्रसङ्गः स्यात् । तथा च

र्थानां च प्रयोगे भयहेतुरपादानं स्यात्। चोराद्बिभेति। चोरात्त्रायते। भयहेतुः किम् अरण्ये बिभेति, त्रायते वा। **५८९ पराजेरसोढः। (१-४-२६)** पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात्। अध्ययनात्पराजयते। ग्लायतीत्यर्थः। असोढः किम्-शत्रून्पराजयते। अभिभवतीत्यर्थः। **५९० वारणार्थानामीप्सितः। (१-४-२७)** प्रवृत्तिविघातो वारणम्, वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात्। यवेभ्यो गां वारयति। ईप्सितः किम्-यवेभ्यो गां वारयति क्षेत्रे।

---

वार्तिकमिदं भाष्ये प्रत्याख्यातम्। **भीत्रा। चोराद्बिभेतीति।** चोरेण हेतुनेत्यर्थः। हेतुतृतीया प्राप्ता। **चोरात्त्रायत इति।** चोरेण हेतुना आत्मानं तत्कृतवधबन्धनादिनिवृत्त्यै रक्षतीत्यर्थः। यदा तु चोराद् बिभेति-भीत्या निवर्तते, चोरात्त्रायते-आत्मानं त्रातुं निवर्तयतीत्यर्थ आश्रीयते, तदा बुद्धिकल्पितविश्लेषावधित्वमादायापादानत्वं सिद्धमितीदं सूत्रं भाष्ये प्रत्याख्यातम्। **पराजेरसोढः।** सहधातोः क्तप्रत्यये धत्वढत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य' इत्योत्त्वे सोढ इति रूपम्। तत्र क्तार्थो भूतकालो न विवक्षितः, तदाह—**असह्योऽर्थ इति।** सोढुमशक्य इत्यर्थः। हेतुतृतीयाऽपवादोऽयम्। **ग्लायतीत्यर्थ इति।** असहनादिति शेषः। यदा तु असहनान्निवर्तत इत्यर्थ आश्रीयते, तदा ध्रुवमित्यपादानत्वादेव सिद्धमिति भाष्यम्। **अभिभवतीति।** तिरस्करोतीत्यर्थः। अत्र शत्रूणामभिभवनीयतया असह्यत्वाभावान्नापादानता। **वारणार्थानामीप्सितः।** प्रवृत्तिविमुखीकरणं वारणम्। **यवेभ्य इति।** यवेषु प्रवर्तितुकामां गां प्रवृत्तिविमुखीकरोतीत्यर्थः। संयोगपूर्वकविश्लेषाभावाद् 'ध्रुवमपाये' इत्यप्राप्ताविदं वचनम्। तत्र यवानां स्वकीयतया संरक्षणीयत्वेन ईप्सितत्वादपादानत्वं न तु गोः, तस्याः परकीयत्वेनानीप्सितत्वात्, वारणीयतया ईप्सितत्वव्याघाताच्च। तथा च 'तथायुक्तं च' इति गोः कर्मत्वाद् द्वितीया। यदा तु यवाः परकीयाः, गौस्तु

---

अरण्यस्य चोराद्बिभेतीति प्रयोगो न स्यादिति। **पराजेः। अध्ययनादिति।** अध्ययनसंबन्धिनी ग्लानिरित्यर्थः। कारकशेषत्वेन षष्ठ्यां प्राप्तायामिदम्। **पराजयत इति।** 'विपराभ्यां जेः' इति तङ्। असोढ इति क्तार्थो भूतकालो न विवक्षितः। तेनाध्ययनात् पराजेष्यत इत्यादि सिद्धम्। नन्वसोढग्रहणं व्यर्थम्, शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः। अत्रापि वदन्ति—कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमी स्यात्, सा मा भूदिति कर्तव्यमेवासोढग्रहणम्। **वारणार्था। यवेभ्य इति।** यवसंयोगात्प्रागेव गां निवारयतीति 'ध्रुवमपाये-' इत्यनेनासिद्धावयमारम्भः। बुद्धिपरिकल्पितापायमङ्गीकुर्वतो भाष्यकारस्य मते तु वैयर्थ्यमेतस्य स्फुटमेव। **गां वारयतीति।** 'वृञ् वरणे' चुरादिः। गामित्यत्र ईप्सितत्वप्रयुक्तापादानसंज्ञा न भवति।

स्वकीया, तदा वारणमसंभावितमेव । वस्तुतस्तु यवानां परकीयत्वेऽपि तद्विनाशादधर्मः स्यात् । यवस्वामी गामपहृत्य बध्नीयात् । गोस्वामिनं च यवस्वामी दण्डयेत् । अतो यवानां रक्षितुमिष्टत्वाद् ईप्सितत्वादपादानत्वमस्त्येव । गोस्तु स्वकीयत्वेऽपि बाधकनिवृत्त्यै वारयितुमिष्टतमत्वात् कर्मत्वम् । न च गोरीप्सिततमत्वेऽपि ईप्सितत्वस्यापि सत्त्वादपादानत्वं किं न स्यादिति वाच्यम्, ईप्सिततमत्वे 'वारणार्थानाम्–' इत्यपादानत्वं बाधित्वा 'कर्तुरीप्सिततमम्' इति कर्मत्वस्यैव परत्वात् प्राप्तेः । न च 'वारणार्थानामीप्सितः' इत्यपादानत्वस्य 'कर्तुरीप्सिततमम्' इति कर्मत्वापवादत्वं शङ्क्यम्, 'कर्तुरीप्सिततमम्' इति कर्मत्वं हि ईप्सिततममात्रविषयम् । वारणार्थानामित्यपादानत्वं तु ईप्सितविषयम् । तस्य प्रकृते ईप्सितेषु यवेषु परकीयेषु सावकाशत्वान्न 'कर्तुरीप्सिततमम्' इति कर्मत्वापवादत्वम् । अतः परत्वाद् गोः स्वकीयायाः परकीययवापेक्षया ईप्सिततमत्वात् कर्मत्वमेव । न च अग्नेर्माणवकं वारयतीत्यत्र अग्नेरीप्सितत्वाभावात् कथमपादानत्वमिति वाच्यम्, इष्टत्वभ्रमादग्नौ विषये स्पर्शफलकप्रवृत्त्यभिमुखं माणवकं प्रवृत्तिविमुखीकरोतीति हि तदर्थः । तत्राग्निस्पर्शे माणवकस्य दाहप्रसङ्गात् तद्विषयप्रवृत्तिविमुखीकरणात्मकवारणक्रियया आप्तुमिष्टतमत्वेन वारयितुरीप्सिततमत्वान्माणवकस्य कर्मत्वम् । अग्नेस्तु वारणक्रियेप्सिततममाणवकीयस्पर्शक्रियया आप्तुमिष्टतमत्वेऽपि वारयितुरीप्सितत्वाद् अपादानत्वम् । एतेन कर्तुर्व्यापारजन्यफलाश्रयः कर्मेत्येवास्तु, 'कर्तुरीप्सिततमं कर्म' 'तथायुक्तं चानीप्सितम्' इति किमीप्सिततमानीप्सितयोः पृथग्ग्रहणेन । एतावतैव हरिं भजति, ग्रामं गच्छन् तृणं स्पृशति, विषं भुङ्क्ते–इत्यादिसर्वलक्ष्यसंग्रहादिति निरस्तम् । कर्तृव्यापारजन्यफलाश्रयः कर्म इत्युक्तौ हि 'वारणार्थानाम्' इति सूत्रमस्यापवादः स्यात्, विशेषविहितत्वात् । तथा च माणवकस्य कर्मत्वं न स्यात् । नचाग्नौ 'वारणार्थानाम्–' इति सावकाशमिति वाच्यम्, वारयतेरत्र स्पर्शफलकप्रवृत्तिविघटनमर्थः । तच्चान्यतो नयनादिरूपम् । तादृशव्यापारप्रयोज्यफलं माणवककर्तृकस्पर्शफलकप्रवृत्तिविरहः । तत्र स्पर्शांशोऽग्निनिष्ठो माणवकनिष्ठश्च, संयोगरूपस्य स्पर्शस्य द्विनिष्ठत्वात् । प्रवृत्तिविरहश्च विषयतया अग्निनिष्ठः, आश्रयतया माणवकनिष्ठश्च । तथा च कर्तृव्यापारप्रयोज्यफलाश्रयत्वलक्षणकर्मत्वस्य परत्वादुभयत्रापि प्राप्तौ 'वारणार्थानाम्–' इत्यपादानत्वं निर-

---

ईप्सिततमत्वविवक्षायां परत्वात् कर्मसंज्ञाप्रवृत्तेः । नन्वेवमीप्सितग्रहणमेव व्यर्थम्, क्षेत्रे वारयतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेः । सत्यम्, अधिकरणस्य शेषत्वविवक्षायामिदं प्रत्युदाहरणमिति पूर्वोक्तरीत्या पदप्रयोजनस्येहापि कल्पयितुं शक्यत्वात् । **अन्तर्धौ ।** येनेति कर्तरि तृतीया । न च कृद्योगषष्ठीप्रसङ्गः, उभयप्राप्तौ कर्मण्येवेति नियमात् ।

**५६१ अन्तर्धौ येनादर्शनमिच्छति। ( १-४-२८ )** व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात्। मातुर्निलीयते कृष्णः। अन्तर्धौ किम्-चौरान् न दिदृक्षते। इच्छतिग्रहणं किम्-अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। (देवदत्ताद्यज्ञदत्तो निलीयते)। **५६२ आख्यातोपयोगे। (१-४-२९)** नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्या-

---

वकाशत्वादपवादः स्यादिति माणवकादपि पञ्चमी स्यात्, तद्बाधनार्थं 'कर्तुरीप्सिततमं कर्म' इत्यारब्धव्यम्। एवं च ईप्सितमात्रे अप्राप्तौ सावकाशस्यापादानत्वस्य परत्वादीप्सिततमे माणवके बाधः सिध्यति। 'कर्तुरीप्सिततमम्-' इत्यारब्धे च द्वेष्योदासीनसंग्रहार्थं 'तथायुक्तम्-' इत्यप्यारब्धव्यमित्यास्तां तावत्। भाष्ये तु बुद्धिकल्पितसंयोगविश्लेषकृतमपादानत्वमाश्रित्य प्रत्याख्यातमिदं सूत्रम्। **अन्तर्धौ**। अन्तर्धावित्येतद् व्याचष्टे—**व्यवधाने सतीति**। व्यवधानेनेति यावत्। **यत्कर्तृकस्येति**। येनेति कर्तृतृतीयेति भावः। **आत्मनो दर्शनस्येति**। आत्मन इति दर्शनशब्दयोगे कर्मणि षष्ठी। आत्मन इत्यध्याहारलभ्यम्। अत एव येनेति कर्तरि तृतीया संगच्छते। अन्यथा कृद्योगषष्ठीप्रसङ्गात्। आत्मन इत्यध्याहारे तु उभयप्राप्तौ कर्मण्येवेति नियमान्न कृद्योगषष्ठी। आत्मशब्देन इच्छतिकर्ता विवक्षितः। व्यवधानेन स्वविषये यत्कर्तृकदर्शनस्य अभावमिच्छतीति यावत्। **मातुर्निलीयते कृष्ण इति**। 'लीङ् श्लेषणे' श्यन्विकरणः। इह तूपसर्गवशाद् व्यवधानेन परकर्तृकस्वविषयकदर्शनविरहानुकूलव्यापारे वर्तते। ततश्च कृष्णो मातृकर्तृकस्वविषयकदर्शनविरहाय कुड्यादिना प्रच्छन्नो भवतीत्यर्थः। अत्र व्यवधानमाश्रित्य मातृकर्तृकस्वविषयकदर्शनविरहस्य कृष्णेनेष्यमाणतया मातुरपादानत्वात् पञ्चमी। कर्तृतृतीयापवादोऽयं षष्ठ्यपवादो वा। भाष्ये तु बुद्धिकृतमपादानत्वमाश्रित्य इदमपि प्रत्याख्यातम्। **आख्यातोपयोगे।** आख्याता उपयोगे इति छेदः। आख्यातेति तृजन्तात् प्रथमैकवचनम्। उपयोगपदं व्याचष्टे—**नियमपूर्वकेति**। भाष्ये तथोक्तेरिति भावः। आख्यातेति तृजन्तं व्याचष्टे—**वक्तेति**। अध्यापयितेत्यर्थः।

---

अत्र ह्यात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः। **निलीयत इति**। 'लीङ् श्लेषणे' दैवादिकः। नन्वन्तर्धाविति व्यर्थम्, न दिदृक्षते चोरानित्यत्र परत्वात्कर्मसंज्ञासिद्धेः। अत्राहुः—चोरा आत्मानं मा द्राक्षुरिति बुद्ध्या चोरान्न दिदृक्षत इत्ययमर्थोऽत्र विवक्षितः, तत्र कर्मणः शेषत्वविवक्षायामिदं पूर्ववत् प्रत्युदाहरणमिति। शब्दकौस्तुभे तु 'अन्तर्धौ' इत्येतच्चिन्त्यप्रयोजनमिति स्थितम्। **आख्यातोप। नियमपूर्वकेति**। तत्रैवोपयोगशब्दो रूढ इति भावः। आख्यातेत्येतत् तृजन्तमित्याह—**वक्तेति**।

---

१ कोष्ठान्तर्गतः पाठो बहुत्र मूले नास्ति।

याद्धीते। उपयोगे किम्—नटस्य गाथां शृणोति । **५६३ जनिकर्तुः प्रकृतिः।** (१-४-३०) जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते । **५६४**

---

**उपाध्यायादधीत इति** । नियमविशेषपूर्वकमुपाध्यायस्योच्चारणम् अनूच्चारयतीत्यर्थः। षष्ठ्यपवादोऽयम्। भाष्ये तु उपाध्यायान्निर्गतं वेदं गृह्णातीत्यर्थमाश्रित्य प्रत्याख्यातमिदम्। **जनिकर्तुः प्रकृतिः**। जनिर्जननमुत्पत्तिः। 'जनी प्रादुर्भावे' दैवादिकोऽकर्मकः। 'इणजादिभ्यः' इति भावे इण्। 'जनिवध्योश्च' इति निषेधान्नोपधावृद्धिः। जनेः कर्तेति विग्रहः। शेषषष्ठ्या समासः। 'तृजकाभ्यां कर्तरि' इति निषेधस्तु कारकषष्ठ्या एवेति वक्ष्यते। **जायमानस्येति** । जनधातोः कर्तरि लटश्शानच्, श्यन्, 'ज्ञाजनोर्जा' 'आने मुक्' उत्पत्त्याश्रयस्येत्यर्थः। प्रकृतिशब्दं व्याचष्टे—**हेतुरिति**। **ब्रह्मण इति**। हिरण्यगर्भादित्यर्थः। घटादिषु कुलालादिवत् तस्य प्रजोत्पत्तौ निमित्तकारणत्वमिति भावः। वृत्तिकृन्मतमेतदयुक्तम्, संयोगविश्लेषसत्त्वेन 'ध्रुवमपाये—' इत्येव सिद्धत्वात्। अतोऽत्र मूले हेतुशब्द उपादानकारणपर एव। अत एव भाष्यकैयटयोः 'गोमयाद् वृश्चिका जायन्ते' 'गोलोमाविलोमभ्यो दूर्वा जायन्ते' इत्युदाहृत्य परिणामेषु प्रकृतिद्रव्यावयवानुस्यूतिसत्त्वेऽपि बुद्धिकृतविश्लेषसत्त्वाद् 'ध्रुवमपाये—' इत्येव सिद्धमिति प्रत्याख्यानं संगच्छते। एवं च 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र ब्रह्मशब्देन मायोपहितमीश्वरचैतन्यमेव विवक्षितम्। तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः।

---

**उपाध्यायादिति**। उपेत्य अस्मादधीयत इति उपाध्यायः, 'इङश्च' इति घञ्। अध्ययनं तु गुरूच्चारणानूच्चारणं नियमपूर्वकम्। **नटस्येति**। गाथाकर्मकं नटसंबन्धि श्रवणमित्यर्थः। नटस्य गाथान्वये तु कारकत्वाभावादेवाप्राप्तेरुपयोगग्रहणं समर्थितं न स्यात्। **जनिकर्तुः** । जननं जनिरुत्पत्तिः। 'इणजादिभ्यः' इति जनेर्भावे इण्। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ्या समास; न तु कारकषष्ठ्या, 'तृजकाभ्याम्—' इति निषेधात्। एवं चोत्पत्त्याश्रयस्य यो हेतुस्तदपादानमित्यर्थाद्धात्वन्तरयोगेऽप्यपादानत्वं भवत्येव। 'अन्नादन्नात्संभवति—' इति यथा। तदेतदाह—**जायमानस्येति**। एतेन 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्देशोऽयं जनिरित्याश्रित्य 'गमहन—' इत्युपधालोपमर्थासंगतिं समासानुपपत्तिं चोद्भाव्य व्याकरणाधिकरणे गर्जन्तो मीमांसकाः समाहिता इति भावः। इह प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्। पुत्रात् प्रमोदो जायत इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटमतम्, तदुभयसाधारणमुदाहरणमाह—**ब्रह्मण इति**। ब्रह्मा हिरण्यगर्भः। स च हेतुरेव न तूपादानम्। किंच मायोपहितं चैतन्यं ब्रह्म, तद्धि सर्वकार्योपादान-

---

१ 'गुरूच्चारणोत्तरोच्चारणम्' इति क्वचित् पाठः।

**भुवः प्रभवः ।** (१-४-३१) भवनं भूः । भूकर्तुः प्रभवस्तथा, हिमवतो गङ्गा प्रभवति । तत्र प्रकाशत इत्यर्थः ।

'ल्यब्लोपे कर्मण्यधिकरणे च' ( वा १४७४-१४७५ ) । प्रासादात्प्रेक्षते,

---

**भुवः प्रभवः ।** पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमेकदेशे स्वरितत्वप्रतिज्ञाबलादिहानुवर्तते, तदाह—**भूकर्तुरिति ।** भवनं भूः, संपदादित्वात् क्विप् । भुवः कर्ता भूकर्ता, तस्येत्यर्थः । **प्रभव इति ।** प्रभवति–प्रथमं प्रकाशतेऽस्मिन्निति प्रभवः, प्रथमप्रकाशस्थानमित्यर्थः । प्रभवतीत्यस्य उत्पद्यते इत्यर्थे तु असंगतिः, गङ्गायास्तत्रानुत्पत्तेः । तदाह—**प्रकाशत इत्यर्थ इति ।** प्रथमं प्रकाशत इति यावत् । अत एव 'हिमवति प्रकाशते' इत्यत्र न भवति । एतेन 'जनिकर्तुः–' इत्यनेन 'ध्रुवमपाये–' इत्यनेन च गतार्थत्वं निरस्तम् । भाष्ये तु अपक्रामतीत्यर्थमाश्रित्य 'ध्रुवमपाये–' इत्यनेनैव सिद्धमिति स्थितम् । **ल्यब्लोप इति ।** ल्यबन्तस्य लोपे अदर्शने–अप्रयोगे सति गम्यमानतदर्थं प्रति

---

मिति वेदान्तसिद्धान्तः । **भुवः । भवनं भूरिति ।** संपदादित्वाद्भावे क्विप् । पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते स्वरितत्वादित्याह—**भूकर्तुरिति ।** प्रभवत्यस्मादिति प्रभवः, 'अकर्तरि च कारके' इत्यधिकारादपादानार्थे 'ॠदोरप्' । जनिकर्तुरित्येव सिद्धे निरर्थकमिदमित्याशङ्कां परिहरन्नाह—**तत्र प्रकाशत इति ।** प्रथमं दृश्यत इत्यर्थः । एष चार्थो धातूनामनेकार्थत्वाल्लभ्यते। तथा चाभूतप्रादुर्भावो जनिः । अन्यतः सिद्धस्य प्रथममुपलम्भः प्रभव इत्यर्थभेदोऽस्तीति भावः । 'भीत्रार्थानाम्–' इत्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता । तत्रेत्थमुपपत्तिसंभवः । चौरेभ्यो बिभेति, भयान्निवर्तत इत्यर्थः, त्रायते रक्षणेन चौरेभ्यो निवर्तयतीत्यर्थः, पराजयते ग्लान्या निवर्तत इत्यर्थः, वारयतीति, प्रवृत्तिं प्रतिबध्नन्[1] निवर्तयतीत्यर्थः, निलीयते निलयनेन वर्तत इत्यर्थः, अधीते उपाध्यायान्निःसरन्तं शब्दं गृह्णातीत्यर्थः, ब्रह्मणः प्रपञ्चो जायत इत्यत्रापि ततोऽपक्रामति, निर्गच्छतीत्यर्थः, प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थः, तथा च 'ध्रुवमपाये–' इत्यनेनैवेष्टरूपसिद्धिरिति । वस्तुतस्तु निवृत्तिविस्मरणादिधात्वन्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथाकथंचिदुक्तप्रयोगाणां समर्थनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः, नटस्य शृणोतीतिवत् । न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे विशेषो वक्तुं शक्यः । अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यानं तु नातीवमनोरमम् । एवं 'जुगुप्साविराम–' इत्यादिवार्तिकमप्यारम्भणीयम् । तथा च सूत्रवार्तिकमतमेवेह प्रबलम् । तथा 'ध्रुवम्' 'भयहेतुः' 'असोढः' इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः । परत्वात्तत्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां 'न माषाणामश्नीयात्' इत्यादाविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वात् । एतच्च शब्दकौस्तुभे स्पष्टम् । **ल्यब्लोप**

---

१ 'प्रतिबन्धान्' इति क्वचित् पाठः ।

आसनात्प्रेक्षते । प्रासादमारुह्य, आसन उपविश्य, प्रेक्षत इत्यर्थः । श्वशुराज्जिह्रेति । श्वशुरं वीक्ष्येत्यर्थः । 'गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्' (वा १०४१) कस्मात्त्वम्, नद्याः । 'यतश्चाध्वकालनिर्मानं तत: पञ्चमी' (वा १४७७) । 'तद्युक्तादध्वनः प्रथमासप्तम्यौ' (वा १४७६) । 'कालात्सप्तमी च वक्तव्या' (वा १४७८) । वनाद् ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ।

---

कर्मणि अधिकरणे च पञ्चमी वाच्येत्यर्थः । **जिह्रेतीति** । लज्जत इत्यर्थः । नन्वत्र ल्यबन्तस्य प्रयोगाभावात् कथं तदर्थं प्रति कर्मत्वावगतिरित्यत आह—**गम्यमानापीति**। प्रकरणादिनेत्यर्थः । गम्यमानापीत्यस्य प्रयोजनान्तरमाह—**कस्मात्त्वमिति**। आगतोऽसीति गम्यमानक्रियापेक्षमपादानत्वमिति भावः । नद्या इत्युत्तरम् । आगतोऽस्मीति गम्यमानक्रियापेक्षमपादानत्वमिति भावः । **यतश्चेति** । यत इति तृतीयार्थे तसिः । येनावधिना अध्वनः कालस्य वा निमानं परिच्छेदः—इयत्ता गम्यते, ततः पञ्चमी वाच्येत्येकं वाक्यम् । तत्र पञ्चमीति पाठेऽप्ययमेवार्थः । **तद्युक्तादिति** । तेन पञ्चम्यन्तेन युक्तादन्विताद् अध्ववाचिनः प्रथमासप्तम्यौ वाच्ये इति द्वितीयं वाक्यम् । 'कालात्सप्तमी च वक्तव्या' इति वाक्यान्तरम् । तद्युक्तादित्यनुषज्यते । तेन पञ्चम्यन्तेन अन्वितात् कालवाचिनः सप्तमी वक्तव्येत्यर्थः । **वनादिति** । अत्र योजनात्मकमध्वपरिमाणं वनेन पूर्वावधिना परिच्छिद्यते, कस्मादारभ्य योजनमित्याकाङ्क्षोत्थानात् । योजने योजनमिति प्रथमासप्तम्योरपि स्वोत्तराव्यवहितदेशवृत्तित्वमर्थः । वनात्मकपूर्वावधिकयोजनोत्तरदेशे ग्राम इत्यर्थः । अवधित्वसत्त्वेऽपि विश्लेषाप्रतीतेर्ध्रुवमित्यपादानत्वाभावाद्वचनम् । **कार्तिक्या इति** । कार्तिक्या मासे आग्रहायणीत्यन्वयः । अत्र मासात्मकं कालपरिमाणं कार्तिक्या पूर्वावधिना परिच्छिद्यते, कस्मादारभ्य मास इत्याकाङ्क्षोत्थानात् । मास इति सप्तम्यास्तु स्वोत्तराव्यवहितकालवृत्तित्वमर्थः । कार्तिकपौर्णमास्यात्मकपूर्वावधिकमासोत्तरकाले मार्गशीर्षपौर्णमासीत्यर्थः

---

**इति** । ल्यबन्तस्य गम्यमानार्थत्वादप्रयोग इत्यर्थः । ल्यब्ग्रहणमिह ल्यबर्थपरम् । तेन क्त्वोऽपि लोपे सिध्यति । आसने स्थित्वा प्रेक्षते आसनात्प्रेक्षत इति । **यतश्चेति**। यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते ततः पञ्चमीत्यर्थः । तेन पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः । **कालादिति** । इहापि तद्युक्तादित्यपेक्ष्यते । **आग्रहायणीति** । अग्रे हायनमस्याः सा ।

---

१ अयं पाठो बालमनोरमानुरोधेन, अन्यत्र तु 'निर्माणम्' इति पाठः ।

२ 'तत्र' इति क्वचित् ।

**५६५ अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। (२-३-२९)** एतैर्योगे पञ्चमी स्यात्। अन्येत्यर्थग्रहणम्। इतरग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद्वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः

---

**अन्यारात्।** युक्त इति भावे क्त इत्याह—**एभिर्योग इति।** अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि एतैरष्टभिर्योगे सतीत्यर्थः। भिन्नादिशब्दयोगे पञ्चमीं साधयितुमाह—**अन्येत्यर्थग्रहणमिति।** व्याख्यानादिति भावः। अन्यार्थकशब्दयोगे पञ्चमीति फलितम्। तर्हीतरग्रहणं व्यर्थमन्यार्थकत्वादेव सिद्धेरित्यत आह—**इतरग्रहणं प्रपञ्चार्थमिति।** 'पचि विस्तारे'। अन्यशब्दस्य अन्यार्थकशब्दग्रहणोपलक्षणार्थत्वकथनस्य प्रयोजनकथनार्थमिति यावत्। **अन्यो भिन्न इतरो वेति।** भेदवान् विलक्षण इत्याद्युपलक्षणमिदम्। कृष्णप्रतियोगिकभेदवानित्यर्थः। षष्ठ्यपवादोऽयम्। अन्यादिशब्दानामवधिनियमसत्त्वेऽपि संयोगविश्लेषाभावादपादानत्वस्य न प्रसक्तिः। एवमग्रेऽपि। **आराद्वनादिति।** वनस्य दूरं समीपं वेत्यर्थः। 'आराद् दूरसमीपयोः' इत्यमरः। **ऋते कृष्णादिति।** ऋते इत्येकारान्तमव्ययम्। 'ऋते वर्जने' इत्यमरः। कृष्णस्य वर्जने सुखं नास्तीत्यर्थः। 'क्व कर्मप्रध्वंसः फलति पुरुषाराधनमृते' इति शिवरहस्यान्तर्गतस्तुतिगतः प्रयोगस्त्वार्षः। 'ततोन्यत्रापि दृश्यते' इति वा द्वितीया। 'ऋते द्वितीया च' इति चान्द्रं सूत्रम्। अथ दिक्छब्दयोग उदाहरति—**पूर्वो ग्रामादिति।** ग्रामावधिकपूर्वदिग्वर्ती ग्राम इत्यर्थः। ननु चैत्रात् पूर्वः फाल्गुन इत्यत्र पूर्वशब्दस्य कालवाचकतया दिग्वाचकत्वाभावात् कथं तद्योगे पञ्चमीत्यत आह—**दिशि दृष्ट इति।**

---

प्रज्ञादेराकृतिगणत्वात्स्वार्थिकोऽण्। 'पूर्वपदात्संज्ञायाम्–' इति णत्वम्। **अन्याराद्। अर्थग्रहणमिति।** व्याख्यानादिति भावः। **प्रपञ्चार्थमिति।** न च 'इतरस्त्वन्यनीचयोः' इत्यमरोक्तेर्नीचार्थस्येदं ग्रहणमस्त्विति वाच्यम्, 'अस्मात्तारो मन्द्रो वा' इतिवत् 'पञ्चमी विभक्ते' इत्यनेनैव सिद्धत्वात्। **अन्यो भिन्न इतरो वेति।** न चैवं घटः पटो नेत्यत्रातिप्रसङ्गः, नञोऽपि भेदे शक्तत्वादिति वाच्यम्, निपातानां द्योतकत्वमेव न तु वाचकत्वमित्यभ्युपगमात्। **आराद्वनादिति।** इह 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति प्राप्तम्। **ऋते कृष्णादिति।** कथं तर्हि 'फलति पुरुषाराधनमृते' इति प्रयोग इति चेत्, प्रमादोऽयमिति हरदत्तः। अन्ये तु—'ततोऽन्यत्रापि दृश्यते' इति दृशिग्रहणाच्चैत्रं यावच्छीतमित्यादाविव ऋतेयोगे द्वितीयापि साधुरित्याहुः। अस्मिन् व्याख्याने 'ऋते द्वितीया च' इति चान्द्रसूत्रमनुकूलम्। **दिशि दृष्ट इति।** रूढ्येति शेषः। तेनैन्द्र्यादयो नात्र गृह्यन्ते। नन्वेवं ककुबादिग्रहणप्रसङ्ग इति चेत्, अत्राहुः—

शब्दो दिक्शब्दः। तेन संप्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगे तु न। 'तस्य परमाम्रेडितम्' (सू ८३) इति निर्देशात्। पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि षष्ठ्यतसर्थ-' (सू ६०९) इति षष्ठीं बाधितुं पृथग्ग्रहणम्। प्राक् प्रत्यग् वा ग्रामात्। आच्-दक्षिणा ग्रामात्। आहि-दक्षिणाहि ग्रामात्। 'अपादाने पञ्चमी' (सू ५८७) इति सूत्रे 'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्प्रभृत्यर्थयोगे पञ्चमी। भवात् प्रभृति आरभ्य

---

रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते। नत्वैन्द्रीककुबादयः। **संप्रतीति**। कदाचिद्दिग्वाचकानामिदानीं कालवाचकानामपि योगे पञ्चमी भवतीत्यर्थः। नन्वेवं सति पूर्वं कायस्येत्यत्रापि स्यादित्यत आह—**अवयववाचीति**। **तस्य परमिति**। तस्येति हि प्रकृतं द्विरुक्तं परामृशति। द्विरुक्तस्य परं परावयवभूतमाम्रेडितमिति तदर्थः। **पूर्वं कायस्येति**। शरीरस्य पूर्वावयव इत्यर्थः। अञ्चुधातुः उत्तरपदं यस्य सः अञ्चूत्तरपदः प्रागादिदिक्छब्दः, न तु सध्र्यङ् इत्यादिशब्दोऽपि, दिक्शब्दसाहचर्यात्। तेन सध्र्यङ् देवदत्तेनेत्यत्र न पञ्चमी। ननु दिक्शब्दत्वादेव सिद्धे अञ्चूत्तरपदग्रहणं व्यर्थमित्यत आह—**अञ्चूत्तरपदस्येति**। षष्ठ्यतसर्थेत्यनन्तरं परत्वात् प्राप्तामिति शेषः। **प्राक् प्रत्यग् वा ग्रामादिति**। ग्रामावधिक इत्यर्थः। **आजिति**। आच्-प्रत्ययान्तयोगे उदाहरणं वक्ष्यत इति सूचनमिदम्। **दक्षिणा ग्रामादिति**। ग्रामावधिकायां दक्षिणस्यां दिशीत्यर्थः। **आहीति**। आहिप्रत्ययान्तयोगे उदाहरण-सूचनमिदम्। **दक्षिणाहि ग्रामादिति**। ग्रामावधिकायां दक्षिणस्यां दिशि दूर इत्यर्थः। 'आहि च दूरे' इत्याहिप्रत्ययः। आजाहिप्रत्ययान्तयोर्दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ-' इति षष्ठीं बाधितुं पृथग् ग्रहणम्। नन्वेवमपि 'भवात्प्रभृत्यारभ्य वा सेव्यो हरिः' इत्यादौ कथं पञ्चमी। अन्यादिशब्दयोगाभावादित्यत आह—**अपादान इति**। **प्रभृतियोग इति**। प्रभृत्यर्थकशब्दयोग इत्यर्थः। तथा हि—'अपादाने पञ्चमी' इति सूत्रे भाष्ये 'यतश्चाध्वकालनिमानम्-' इति वार्तिकं पठित्वा 'कार्तिक्याः आग्रहायणी मासे' इत्युदाहृत्य 'इदं न वक्तव्यम्' इति तद्वार्तिकप्रत्याख्यानमुपक्षिप्य 'इदमत्र प्रयोक्तव्यं सश्च प्रयुज्यते, कार्तिक्याः प्रभृत्याग्रहायणी मासे' इत्युक्तम्। प्रभृति-

---

अन्यतरसाहचर्याद्व्याख्यानाद्वा दिग्भिन्नेऽर्थे यो न दृष्टः सोऽत्र गृह्यत इति। **दिक्शब्दत्वेऽपीति**। यद्यप्यदिक्शब्दोऽप्यञ्चूत्तरपदमस्ति सध्र्यङ्ङित्यादिः, तथापि दिक्-शब्दसाहचर्यादञ्चूत्तरपदेन प्रागित्यादिदिक्शब्द एव गृह्यते। तेन सध्र्यङ् देवदत्तेने-त्यत्र नातिप्रसङ्ग इति भावः। **दक्षिणा ग्रामादिति**। दिक्शब्दत्वेनैव सिद्धे आजाहिग्रहणं चिन्त्यप्रयोजनमित्याहुः। **प्रभृतियोग इति**। प्रभृत्यर्थैर्योग इत्यर्थः।

वा सेव्यो हरिः। 'अपपरिबहिः—' ( सू ६६६ ) इति समासविधानाद् ज्ञापकाद्बहिर्योगे पञ्चमी। ग्रामाद्बहिः। **५९६ अपपरी वर्जने।** (१-४-८८) एतौ वर्जने कर्मप्रवचनीयौ स्तः। **५९७ आङ्मर्यादावचने।** ( १-४-८९ ) आङ् मर्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिविधावपि। **५९८ पञ्चम्यपाङ्-**

---

शब्दाभावेऽपि तदर्थसत्तया पञ्चमी सिद्धेत्यर्थः। एवं वदता भाष्यकृता 'प्रभृत्यर्थकशब्दयोगे पञ्चमी' इति वचनं ज्ञाप्यते। अन्यथा पञ्चम्यर्थं वार्तिकस्यावश्यकत्वात्तदसंगतिः स्पष्टैव। एवं च प्रभृतिशब्दपर्यायशब्दयोगेऽपि पञ्चमी भवति। अत एव च 'कार्तिक्याः प्रभृति' इति भाष्यव्याख्यावसरे तत आरभ्येत्यर्थ इति कैयट आह। तत्र हि तत इति पञ्चम्यास्तसिः। एतत् सर्वमभिप्रेत्योदाहरति—**भवात् प्रभृति आरभ्य वेति।** भव उत्पत्तिः, आरभ्येत्यस्यावधिं परिगृह्येत्यर्थः। प्रभृतीत्यव्ययमप्येतदर्थकमेव। भवमवधिं परिगृह्य हरिः सेव्य इत्यर्थः। उत्पत्तिक्षणात्मकपूर्वावधिकोत्तरकाले सर्वदा आमरणं हरिः सेव्य इति यावत्। अत्रारभ्येति क्रियापेक्षया कर्मत्वविवक्षायां द्वितीयैव, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तेः। यथा 'सूर्योदयमारभ्य आस्तमयाद् जपति' इत्यादौ। शेषत्वविवक्षायां तु षष्ठीं बाधित्वा भवशब्दात् पञ्चमी। प्रभृतिशब्दयोगे तु आरभ्येत्यर्थे कदापि न द्वितीया, प्रभृतिशब्दार्थस्यावधिं परिगृह्येत्यस्यावध्यादिघटितत्वेन क्रियात्वाभावात्। **अपपरीति।** बहिश्शब्दयोगे पञ्चमीं सिद्धवत्कृत्य 'अपपरिबहिरञ्चवः पञ्चम्या' इति समासविधानाद् बहिश्शब्दयोगे पञ्चमी विज्ञायत इत्यर्थः। इदं च 'अपपरि—' इति सूत्रे भाष्ये स्पष्टम्। 'करस्य करभो बहिः' इति त्वसाध्वेव। 'ज्ञापकसिद्धं न सर्वत्र' इति वा कथञ्चित्समाधेयम्। **अपपरी वर्जने। कर्मप्रवचनीयौ स्त इति।** 'कर्मप्रवचनीयाः' इत्यधिकृतस्य द्विवचनेन विपरिणाम इति भावः। वर्जने किम्? परिषिञ्चति। सर्वतः सिञ्चतीत्यर्थः। अत्रोपसर्गत्वाद् 'उपसर्गात्सुनोति—' इति षत्वम्। **आङ्मर्यादावचने। उक्तसंज्ञ इति।** कर्मप्रवचनीयसंज्ञक इत्यर्थः। ननु 'आङ् मर्यादायाम्' इत्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह—**वचनग्रहणादिति।** तेन विनेति मर्यादा, तेन सहेत्यभिविधिः। मर्यादाशब्दो यत्रोच्यते तन्मर्यादावचनम् 'आङ्मर्यादाभिविध्योः' इति सूत्रम्। तत्र य आङ् दृष्टः स कर्मप्रवचनीयसंज्ञकः स्यादित्यर्थः। तथा च मर्यादाभिविध्योराङ् कर्मप्रवचनीय इति फलतीति भावः

---

तथा च 'कार्तिक्याः प्रभृति' इति भाष्यं विवृणवता कैयटेन 'तत आरभ्य' इत्यर्थ इति प्रयुक्तम्। **ग्रामाद्बहिरिति।** 'ज्ञापकसिद्धं न सर्वत्र'। तेन 'करस्य करभो बहिः' इति सिद्धम्। **अपपरीति।** वर्जने किम्, परिषिञ्चति। सर्वत्रेत्यर्थः। अत्रोपसर्गत्वात् षत्वम्। **वचनग्रहणादिति।** विना तेनेति मर्यादा, सह तेनेत्यभिविधिः,

परिभिः । (२-३-१०) एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप हरेः, परि हरेः संसारः । परिरत्र वर्जने । लक्षणादौ तु हरिं परि । आ मुक्तेः संसारः । आ सकलाद् ब्रह्म । ५९९ प्रतिः प्रतिनिधिप्रतिदानयोः । (१-४-९२) एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् । ६०० प्रतिनिधिप्रतिदाने च यस्मात् । (२-३-११) अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्नः कृष्णात् प्रति । तिलेभ्यः

---

**पञ्चम्यपाङ्परिभिः । एतैरिति ।** अप आङ् परि इत्येतैरित्यर्थः । **कर्मप्रवचनीयैरिति ।** 'कर्मप्रवचनीययुक्ते–' इत्यतस्तदनुवृत्तेरिति भावः । **अप हरेः, परि हरेः संसार इति ।** अप हरेः संसारः, परि हरेः संसार इत्यन्वयः । हरिं वर्जयित्वा जनिमृतिचक्रात्मकं संसरणमित्यर्थः । ननु 'वृक्षं प्रति विद्योतते, भक्तो हरिं प्रति' इत्यादौ 'लक्षणेत्थंभूत–' इति कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीयां परत्वाद् अपवादत्वाच्च बाधित्वा 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी स्यादित्यत आह— **परिरत्रेति ।** 'पञ्चम्यपाङ्परिभिः' इत्यत्र वर्जनार्थकेनापेन साहचर्यात् परिरपि वर्जनार्थक एव गृह्यत इत्यर्थः । **आ मुक्तेरिति ।** मुक्तेः प्रागिति यावत् । **आसकलादिति ।** ब्रह्म सकलमभिव्याप्य वर्तत इत्यर्थः । **प्रतिः प्रतिनिधि ।** सदृशः प्रतिनिधिः, दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । **उक्तसंज्ञ इति ।** कर्मप्रवचनीयसंज्ञक इत्यर्थः । **प्रतिनिधि । अत्रेति ।** सूत्रोक्तविषय इत्यर्थः । सूत्रे यस्मादिति षष्ठ्यर्थे पञ्चमी, अस्मादेव निर्देशात् । 'कृष्णस्य प्रतिनिधिः' इति तु 'ज्ञापकसिद्धं न सर्वत्र' इति समाधेयम् । तथा च यत्सम्बन्धिनी प्रतिनिधिप्रतिदाने तस्मात् कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः फलति । **प्रद्युम्नः कृष्णात्प्रतीति ।** युद्धादौ प्रद्युम्नः कृष्णनिरूपितसादृश्यवानित्यर्थः । पञ्चम्यर्थः सादृश्यम् । प्रतिस्तु तद्द्योतकः । **तिलेभ्य इति ।** ऋणत्वेन गृहीतान् तिलान् स्वरूपेण मूल्याद्यात्मना वा प्रत्यर्पयतीत्यर्थः । कर्मणि

---

इत्यत्र य उपात्तो विशेषो विशेषणांशरूपः सोऽत्र न गृह्यते, वचनग्रहणसामर्थ्यात्, किं तु अवधिमात्रं विवक्ष्यत इत्यर्थद्वयसंग्रहः । यद्वा मर्यादाशब्दो यस्मिन्नुच्यते तन्मर्यादावचनम्, तद्धि 'आङ् मर्यादाभिविध्योः' इति सूत्रम्, तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः । **परि हरेरिति ।** हरिं वर्जयित्वेत्यर्थः । 'परेर्वर्जनेर्थे वा वचनम्' इति वार्तिकात् पक्षे द्विर्वचनाभावः । **परिरत्रेति ।** अत्र पञ्चमीविधौ वर्जनार्थेनापेन साहचर्यादिति भावः । **आ मुक्तेरिति ।** मुक्तिं मर्यादीकृत्येत्यर्थः । **आ सकलादिति ।** सकलमभिव्याप्येत्यर्थः । **प्रतिनिधिप्रतिदाने ।** अस्मादेव निर्देशाल्लिङ्गादाभ्यां योगे पञ्चमी । 'ज्ञापकसिद्धं न सर्वत्र' इति कृष्णस्य प्रतिनिधिरित्यपि सिद्धमित्याहुः । मुख्यस्याभावे सति तत्सदृश उपादीयते स प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् ।

प्रतियच्छति माषान्। ६०१ **अकर्तर्यृणे पञ्चमी।** (२-३-२४) कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात्। शताद्बद्धः। अकर्तरि किम्-शतेन बन्धितः। ६०२ **विभाषा गुणेऽस्त्रियाम्।** (२-३-२५) गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्याद् जाड्येन वा बद्धः। गुणे किम्-धनेन कुलम्। अस्त्रियां किम्-बुद्ध्या मुक्तः। 'विभाषा' इति योगविभागाद् अगुणे स्त्रियां च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः। ६०३ **पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।**

---

पञ्चमी। **अकर्तर्यृणे।** 'हेतौ' इति सूत्रमनुवर्तते। अकर्तरि हेतुभूते ऋणे विद्यमानादित्यर्थः। फलितमाह—**कर्तृवर्जितमिति।** कर्तृसंज्ञारहितमित्यर्थः। **शताद्बद्ध इति।** नियमितकाले प्रत्यर्पणाभावे सति सुवर्णादिशतेन ऋणेन हेतुना अधमर्णो बद्ध इत्यर्थः। हेतुतृतीयापवादः। **शतेन बन्धित इति।** अधमर्ण उत्तमर्णेनेति शेषः। बन्धेर्हेतुमण्ण्यन्तात्कर्मणि क्तः। अधमर्णो उत्तमर्णेन बद्ध इत्यण्यन्तस्यार्थः। शतेन ऋणेन प्रयोजककर्त्रा उत्तमर्णेन प्रयोज्यकर्त्रा बन्धनं कारितः अधमर्ण इति ण्यन्तस्यार्थः। अत्र शतमृणं प्रयोजकत्वात् कर्तृसंज्ञं हेतुसंज्ञं च, 'तत्प्रयोजको हेतुश्च' इत्यत्र चकारेण कर्तृसंज्ञाया अपि विधानात्। ततश्च शतशब्दात् कर्तरि तृतीयां बाधित्वा अपवादत्वात् पञ्चमी स्यात्। अतः अकर्तरीत्युक्तमिति भावः। शतस्य हेतुत्वेऽपि कर्तृत्वाश्न ततः पञ्चमीति भावः। **विभाषा।** हेतावित्यनुवर्तते। तदाह—**गुणे हेतावस्त्रीलिङ्ग इति।** विद्यमानादिति शेषः। **जाड्यादिति।** जडस्य भावो जाड्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्। ननु धूमादग्निमानित्यादौ कथं पञ्चमी, धूमादेरगुणत्वादित्यत आह—**योगविभागादिति।** 'विभाषा-' इति योगो विभज्यते। हेतावित्यनुवर्तते पञ्चमीति च। हेतौ पञ्चमी वा स्यादित्यर्थः। ततश्च धूमादग्निमानित्यादि सिद्धम्। ततः गुणेऽस्त्रियामिति। तत्र विभाषेत्यनुवर्तते पञ्चमीति च। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यादित्युक्तोऽर्थः। ततश्च जाड्याद्बद्ध इत्यादि सिद्धम्। ननु विभाषेत्येव सिद्धे गुणेऽस्त्रियामिति व्यर्थमित्यत आह—**अगुणे स्त्रियां च क्वचिदिति।** योगविभागस्य इष्टसिद्ध्यर्थत्वादिति भावः। अत्रागुणे उदाहरति—**धूमादिति।** अग्निमानित्यनन्तरं ज्ञायत इति शेषः, धूमस्य अग्निज्ञानहेतुत्वाद्। अत्र धूमस्य अगुणत्वेऽपि हेतुत्वात् ततः पञ्चमीति भावः। स्त्रियामुदाहरति—**नास्ति घट इति।** घट इत्यनन्तरम् इति ज्ञायत इति शेषः। **अनुपलब्धेरिति।** उपलब्धिः ज्ञानम्, तस्या

---

**अकर्तरि।** **हेतुभूतमिति।** 'हेतौ' इत्यनुवर्तत इति भावः। **पञ्चमी स्यादिति।** तृतीयापवादोऽयम्। **शतेनेति।** शतमिह उत्तमर्णाय धार्यमाणत्वाद् ऋणम्, 'तत्प्रयोजको हेतुश्च' इति चकारात् कर्तृसंज्ञं च। **बन्धित इति।** ण्यन्ते प्रयोजककर्तुः शतस्य

(२-३-३२) एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च। अन्यतरस्यांग्रहणं समुच्चयार्थम्, पञ्चमीद्वितीये चानुवर्तेते। पृथग् रामेण रामाद् रामं वा। एवं विना, नाना। ६०४ **करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य।** (२-

---

अभावः अनुपलब्धिः। नञ्तत्पुरुषः। न चार्थाभावेऽव्ययीभावः शङ्क्यः, अर्थाभावे तयोर्विकल्पस्य वक्ष्यमाणत्वात्। **पृथग्विना। पञ्चमीद्वितीये चेति।** तृतीयाभावपक्ष इति शेषः। 'अपादाने पञ्चमी' 'षष्ठ्यतसर्थप्रत्ययेन' 'एनपा द्वितीया' 'पृथग्विना–' इति सूत्रक्रमः। तत्र षष्ठीत्यस्वरितत्वान्नानुवर्तते, पञ्चमी द्वितीयेति चानुवर्तते। तथा च तृतीयाभावपक्षे पञ्चमी द्वितीया चेति भावः। ननु तृतीयाभावपक्षे द्वितीयैव संनिहितत्वात् स्यात्, न तु पञ्चम्यपि, 'षष्ठ्यतसर्थ–' इत्यत्र तदनुवृत्तेरभावात्। अतोऽत्र पञ्चम्याः समावेशोऽनुपपन्न इत्यत आह—**अन्यतरस्यांग्रहणमिति।** तृतीया चेत्येतावतैव संनिहितद्वितीयासमुच्चयसिद्धेरन्यतरस्यामिति गुरुयत्नकरणं व्यवहिताया अपि पञ्चम्याः समुच्चयार्थम्, अव्ययानामनेकार्थकत्वादिति भावः। ननु पञ्चम्याः 'षष्ठ्यतसर्थ–' इत्यत्राननुवृत्ताया इहानुवृत्तेरसम्भवात् कथमिह तदुपस्थितिरित्यत आह—**पञ्चमीद्वितीये चानुवर्तेते।** मण्डूकप्लुत्येति शेषः। **पृथग् रामेणेति।** रामप्रतियोगिकभेदवानित्यर्थः। **एवं विना नानेति।** विना रामेण रामाद् रामम्। नाना रामेण रामाद् रामं वा। पृथग्विनानानात्रयोऽपि भेदार्थका इति केचित्। 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने' इत्यमरः। रामस्य वर्जने सुखं नास्तीत्यर्थः। **करणे**

---

हेतुसंज्ञाप्यस्तीति पञ्चम्यत्र स्यादेवातोऽत्राकर्तरीत्युक्तमिति भावः। **योगविभागादिति।** एतच्च 'हेतुमनुष्येभ्यः–' इति सूत्रे पदमञ्जर्यां स्पष्टम्। **स्त्रियां चेति।** 'बाहुलकं प्रकृतेस्तनुदृष्टेः' इति वार्तिकनिर्देशोऽपीह ज्ञापकः। **पृथग्विना।** ननु तृतीयाभावपक्षे 'एनपा द्वितीया' इति प्रकृता द्वितीयैव स्यात्। यदि तु द्वितीया विकल्पेन भवेत्, तदा पञ्चम्यपि स्यात्। सा तु नित्यैव तस्माद्विभक्तित्रयसमावेशो दुरुपपाद इत्यत आह—**अन्यतरस्यांग्रहणं समुच्चयार्थमिति।** निपातानामनेकार्थत्वादिति भावः। **पञ्चमीति।** तत्र मण्डूकप्लुत्या पञ्चमी, द्वितीया तु संनिहितैव। इह पृथगर्थैरिति सूत्रयितव्ये पर्यायत्रयोपादानं पर्यायान्तरनिवृत्त्यर्थम्, तेन हिरुग् देवदत्तस्येत्यत्र नेत्याहुः। 'पृथङ्नानाभिस्तृतीयान्यतरस्याम्' इति सुवचम्। नानाभिति प्रत्ययग्रहणे तदन्तयोर्विनानानाशब्दयोर्लाभात्। **नानेति।** 'हिरुङ् नाना च वर्जने' इत्यमरः। 'नाना नारीं निष्फला लोकयात्रा' इति प्रयोगः। **करणे च।** अन्यतरस्यामिति वर्तते पञ्चमीति च, तेन करणे तृतीयायां प्राप्तायां पक्षे पञ्चमी विधीयते,

३-३३ ) एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु स्तोकेन विषेण हतः। ६०५ **दूरान्तिकार्थेभ्यो द्वितीया च**। (२-३-३५) एभ्यो द्वितीया स्यात्, चात् पञ्चमीतृतीये च। प्रातिपदिकार्थमात्रे विधिरयम्। ग्रामस्य दूरं दूराद् दूरेण वा, अन्तिकम् अन्तिकाद् अन्तिकेन वा। असत्त्ववचनस्य इत्यनुवृत्तेर्नेह—दूरः पन्था:। ६०६ **षष्ठी शेषे**। (२-३-५०) कारक-

---

**च। एभ्य इति**। स्तोक अल्प कृच्छ्र कतिपय एभ्यश्चतुर्भ्य इत्यर्थः। असत्त्वपदं व्याचष्टे—**अद्रव्येति**। अन्यतरस्यामित्यनुवर्तते पञ्चमीति च। ततश्च करणे पञ्चमी वेति लभ्यते। तदभावे तु तृतीया सिद्धैव। तदाह—**तृतीयापञ्चम्याविति। स्तोकेन स्तोकाद्वा मुक्त इति**। लघुना आयासेन मुक्त इत्यर्थः। आयासो न द्रव्यमिति भावः। **द्रव्ये त्विति**। द्रव्ये वृत्तौ स्तोकेन विषेण हत इति तृतीयैवेत्यर्थः। अल्पेनाल्पाद्वा मुक्तः, कृच्छ्रेण कृच्छ्राद्वा मुक्तः। कष्टेनेत्यर्थः। कतिपयेन कतिपयाद्वा मुक्तः। अकृत्स्नेन साधनेनेत्यर्थः। **दूरान्तिक। एभ्य इति**। दूरार्थकेभ्यः अन्तिकार्थकेभ्यश्चेत्यर्थः। चकारो व्यवहितयोरपि पञ्चमीतृतीययोः समुच्चयार्थः, न तु 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति संनिहितषष्ठ्या अपि, व्याख्यानात्। तदाह—**चात्पञ्चमीतृतीये चेति। प्रातिपदिकार्थमात्रे विधिरयमिति**। व्याख्यानादिति भावः। तथा च प्रथमापवाद इति फलितम्। 'दूरादावसथान्मूत्रं दूरात्पादावनेजनम्'[1] इति भाष्यप्रयोगात् सप्तम्यर्थेऽधिकरणेऽप्ययं विधिः। ननु दूरः पन्था इत्यत्र कथं न पञ्चमीत्यत आह—**असत्त्ववचनस्येति**। दूरः पन्था इत्यत्र पन्था द्रव्यम्। तद्विशेषणं दूरशब्दः सत्त्ववचन इति भावः॥ इति पञ्चमी विभक्तिः॥

**अथ षष्ठी विभक्तिः। षष्ठी शेषे**। उक्तादन्यः शेषः। 'कर्मणि द्वितीया'

---

तया मुक्ते करणत्वादेव तृतीया सिद्धेत्याशयेनाह—**तृतीयापञ्चम्यौ स्त इति। स्तोकेनेति**। अनायासेन मुक्त इत्यर्थः। **दूरं दूराद् दूरेण वेति**। इह सप्तम्यपि वक्ष्यते। किंच 'दूरान्तिकार्थेभ्यः–' इति सूत्रस्य 'सप्तम्यधिकरणे च' इत्युत्तरसूत्रेऽप्यनुवर्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोध्यम्। तथा च प्रयुज्यते—'दूरादावसथान्मूत्रं दूरात्पादावसेचनम्' इति। आवसथस्य दूरे इत्यर्थः। **असत्त्ववचनस्येति**। सत्त्ववचनत्वमिह सत्त्वविशेषकत्वम्। एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते, तदाह—**दूरः पन्था इति**। एतेन 'करणे च स्तोका–' इति सूत्रे, करणे किम्, क्रियाविशेषणे कर्मणि मा भूत्। स्तोकं पचति। क्रिया न द्रव्यम्' इति प्राचां ग्रन्थोऽपि व्याख्यातः। न च क्रियाया विशेष्यत्वेन द्रव्यत्वावश्यंभावाद् नैतत् प्रत्युदाहरणं युक्तमिति वाच्यम्, धातुवाच्यायाः क्रियाया असत्त्वरूपत्वस्याकरे

---

१ काशीमुद्रितभाष्यपुस्तके तु 'सेचनम्' इति पाठः।

**प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषः, तत्र षष्ठी स्यात् । राज्ञः पुरुषः। कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते।**

---

इत्यादिसूत्रेषु द्वितीयादिविधिषु हि कर्मकर्तृकरणसंप्रदानापादानाधिकरणकारकाण्यनुक्रान्तानि । प्रथमाविधौ प्रातिपदिकार्थोऽनुक्रान्तः । एतेभ्योऽन्यः स्वस्वामिभावादिसंबन्धः शेषपदार्थ इत्यर्थः । तत्रासति बाधके संबन्धो विशेषरूपेण सामान्यरूपेण च भासते, 'न हि निर्विशेषं सामान्यम्' इति न्यायात् । सति तु बाधके मातुः स्मरतीत्यादौ संबन्धत्वेनैव भानम् । कर्मत्वादिविशेषरूपेणापि भाने द्वितीयादिप्रसङ्गादिति स्थितिः। राज्ञः पुरुष इत्यत्र स्वस्वामिभावरूपविशेषात्मना संबन्धत्वरूपसामान्यात्मना च संबन्धः षष्ठ्यर्थः। राजाश्रितस्वामित्वनिरूपितस्वत्वात्मकसंबन्धाश्रयः पुरुष इति बोधः। आश्रयत्वादि तु संसर्गमर्यादया भासते । तत्र पुरुषो मुख्यं विशेष्यम्। संबन्धस्त्वाधेयतया पुरुषविशेषणम् । राजा तु आश्रयतया संबन्धविशेषणम्। संबन्धस्त्वाधेयतया राजानं प्रति विशेष्यम्, 'प्रधानप्रत्ययार्थवचनम्–' इति वचनेन प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यावगमात् । अत एव पुरुषशब्दादपि न षष्ठी, राजनिरूपितसंबन्धाश्रयः पुरुष इति बोधे संबन्धस्य प्रकृत्यर्थपुरुषं प्रति विशेषणत्वेन विशेष्यत्वेन च भानानुपपत्तेः। यदा तु पुरुषगतस्वत्वनिरूपितस्वामित्वरूपसंबन्धाश्रयो राजेति बोधः, तदा पुरुषस्य राजेति पुरुषशब्दात् षष्ठी भवत्येवेत्यन्यत्र विस्तरः। सतां गतमित्यादौ कर्तृतृतीयादिकमाशङ्क्याह—**कर्मादीनामपीति** । कर्मत्वकर्तृत्वादीनामपि संबन्धत्वसामान्यात्मना विवक्षायां षष्ठ्येव, न तु कारकविभक्तय इत्यर्थः। तथा च। 'क्तस्य च वर्तमाने' इति सूत्रे भाष्यम्—'कर्मत्वादीनामविवक्षा शेषः' इति। **सतां गतमिति**। भावे क्तः। सत्संबन्धि गमनमित्यर्थः। कर्तृत्वविवक्षायां तु सद्भिः गतमिति तृतीया भवत्येव। कृद्योगलक्षणा षष्ठी तु न भवति, 'न लोके–' इति निषेधात्। **सर्पिषो जानीत इति** । करणत्वविवक्षायां सर्पिषा उपायेन प्रवर्तत इत्यर्थः।

---

प्रसिद्धत्वात्। न च विशेष्यत्वे तदनुपपत्तिः, कर्तृकर्मेतरकारकलिङ्गानन्वयित्वमात्रेणासत्त्वरूपत्वोपपत्तेः। उक्तं च—'क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः। असत्त्वरूपता तस्या इयमेवावधार्यताम्' इति। फलं व्यापारश्च क्रिया, फलाधारकारकं कर्म, व्यापाराधारकारकं कर्तेति विवेकः इति पञ्चमी। **षष्ठी शेषे** । उपयुक्तादन्यः शेषः। कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्ताः, तत्र द्वितीयादीनां विधानादतो व्याचष्टे—**कारकप्रातिपदिकार्थव्यतिरिक्त इति। राज्ञः पुरुष इति** । प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव षष्ठी। प्रत्ययार्थस्त्विह पुरुषविशेषणम्। राजनिरूपितसेवकत्वसंबन्धवान् पुरुष इत्यर्थविवक्षायां प्रधानात् पुरुषशब्दान्न षष्ठी। उक्त-

**मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शंभोश्चरणयोः । फलानां तृप्तः ।**

करणत्वस्य संबन्धत्वविवक्षायां तु षष्ठी, कर्त्राश्रिता सर्पिस्सम्बन्धिनी प्रवृत्तिरिति बोधः। **मातुः स्मरतीति** । कर्मत्वविवक्षायां मातरं स्मरतीत्यर्थः । कर्मत्वस्य शेषत्वविवक्षायां तु देवदत्तकर्तृकं मातृसम्बन्धि स्मरणमित्यर्थः । **एधोदकस्योपस्कुरुत इति** । एधशब्द अकारान्तः पुँल्लिङ्गः, 'कारके' इति सूत्रे 'एधाः पच्यन्ते' इति भाष्यप्रयोगात्। एधाश्च उदकानि चेति द्वन्द्वात् षष्ठी। 'जातिरप्राणिनाम्' इत्येकवद्भावः। कर्मत्वविवक्षायाम् एधोदकं शोषणगन्धद्रव्याधानादिना परिष्कुरुत इत्यर्थः । कर्मत्वस्य शेषत्वविवक्षायां तु एधोदकसम्बन्धि परिष्करणमिति बोधः । एधश्शब्दस्साकारान्तोऽप्यस्ति नपुंसकलिङ्गः, 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्' इति कोशाद् 'यथैधांसि समिद्धोऽग्निः' इत्यादिदर्शनाच्च । तथा सति एधः दकस्येति छेदः, उदकशब्दसमावेशे एध उदकस्येत्यापत्तेः । उदकशब्दपर्यायो दकशब्दोऽप्यस्ति, 'भुवनममृतं जीवनं स्याद् दकं च' इति हलायुधकोशात् । तथा च एधः कर्तृ उदकं परिष्कुरुत इत्यर्थः । कर्मत्वस्य शेषत्वविवक्षायां तु षष्ठी । निम्बकरञ्जादिकाष्ठविशेषप्रज्वलिताग्नितप्तोदकस्य गुणविशेषो वैद्यशास्त्रप्रसिद्धः । **भजे शंभोश्चरणयोरिति** । अत्र चरणयोः कर्म-

---

न्यायविरोधात् शेषत्वाभावाच्च । राज्ञः पुरुषस्तिष्ठतीत्यादौ पुरुषशब्दो हि प्रातिपदिकार्थमात्रवृत्तिः । राज्ञः पुरुषेण कृतमित्यादौ तु कारकार्थकः । यदा तु पुरुषनिरूपितसेव्यत्वसंबन्धवान् राजेत्यर्थविवक्षा तदा पुरुषशब्दादपि षष्ठी भवत्येव पुरुषस्य राजेति। यत्तु अप्रधानं शेष इति कैश्चिदुक्तम् । तन्न, प्रातिपदिकार्थमात्रे शुक्लः पटः, श्यामो घट इत्यादौ विशेषणे षष्ठीप्रसङ्गात् । न च प्रथमया बाधः, तस्याः प्रधाने चरितार्थत्वात् । **कर्मादीनामपीति** । यथा विशेषाविवक्षायां रूपवानिति प्रयुज्यते, विशेषविवक्षायां तु नीलः पीत इत्यादि, तथेदमपि न्यायसिद्धमिति भावः । **सतां गतमिति** । सत्पुरुषसंबन्धि गमनमित्यर्थः । सन्तो गच्छन्तीत्यत्र त्वाख्यातेन कर्तृत्वसंबन्धस्योक्तत्वात् संबन्धमात्रविवक्षा कर्तुं न शक्यत इति षष्ठीह न भवति, किं तु प्रातिपदिकार्थमात्रे प्रथमैवेत्याहुः । **सर्पिषो जानीत इति** । वस्तुतः करणस्य संबन्धमात्रविवक्षायां षष्ठी । सर्पिःसंबन्धि प्रवर्तनमित्यर्थः । 'अकर्मकाच्च' 'अनुपसर्गाज्ज्ञः' इत्यनेन वा जानातेस्तङ् । अन्ये तु व्याचख्युः—कर्मणः शेषत्वविवक्षया षष्ठी । सर्पिःसंबन्धि ज्ञानमित्यर्थ इति । **एधोदकस्येति** । एधाश्च उदकं चैषां समाहार एधोदकम् । 'जातिरप्राणिनाम्' इत्येकवद्भावः । यद्वा एधांसि च दकं चेति विग्रहे पूर्ववदेकवद्भावः । उदकपर्यायो दकशब्दोऽप्यस्ति । तथा च हलायुधः—'भुवनममृतं जीवनीयं दकं च' इति । **उपस्कुरुत इति** । गन्धनादिसूत्रेणात्मनेपदम् । 'उपात्प्रति-

---

१ अमरकोशरामाश्रम्यां तु 'जीवनीयं दकं च' इति हलायुधपाठ उद्धृतः ।

**६०७ षष्ठी हेतुप्रयोगे।** (२-३-२६) हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्। **अन्नस्य हेतोर्वसति। ६०८ सर्वनाम्नस्तृतीया च।** (२-३-२७) सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च। केन हेतुना वसति।

---

त्वस्य शेषत्वविवक्षायां षष्ठी। शंभुचरणसंबन्धि भजनमित्यर्थः। **फलानां तृप्त इति।** अत्रापि करणत्वस्य शेषत्वविवक्षायां षष्ठी। फलसंबन्धिनी तृप्तिरिति बोधः। **षष्ठी हेतुप्रयोगे।** हेतावित्यनुवर्तते, तदाह—**हेतौ द्योत्य इति।** हेतुत्वे द्योत्य इत्यर्थः। हेतुवाचकात् षष्ठीति फलितम्। 'हेतौ' इति तृतीयां बाधित्वा षष्ठी। हेतुप्रयोगे किम्? अन्नेन वसति। हेतौ द्योत्य इति किम्? अन्नस्य हेतोस्तुभ्यं नमः। अत्र युष्मच्छब्दान्न भवति। **सर्वनाम्नस्तृतीया च।** सर्वनाम्न इति षष्ठी तदाह—**सर्वनाम्नो, हेतुशब्दस्य चेति।** कस्माद्भवतीत्यपेक्षायां सन्निहितत्वात् सर्वनामहेतुभ्यामिति गम्यते इत्यभिप्रेत्योदाहरति—**केन हेतुनेति।** सर्वनाम्न इति यदि पञ्चमी स्यात् तदा हेतु-

---

यत्न'' इति सुट्। न चैवं 'ज्ञोऽविदर्थस्य करणे' 'अधीगर्थदयेशां कर्मणि' 'कृञः प्रतियत्ने' 'रुजार्थानां भाववचनानामज्वरेः' 'आशिषि नाथः' 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' 'व्यवहृपणोः समर्थयोः' 'कृत्वोर्थप्रयोगे कालेऽधिकरणे' इति शेषषष्ठीविधानार्थेयमष्टसूत्री निष्फला स्यादिति वाच्यम्, सर्पिषो ज्ञानमित्यादौ तस्याः समासनिवृत्तिफलकत्वात्। तथा हि 'ज्ञोऽविदर्थस्य–' इत्यादौ शेष इत्यनुवर्तते, शेषत्वेन विवक्षिते तु करणादौ षष्ठी सिद्धैव। तदयमर्थः—इह षष्ठ्येव, न तु तल्लुक्। तथा च लुकः प्रयोजकीभूतः समास एव न भवतीति। न चाष्टसूत्र्या लुङ्मात्रनिवृत्तिफलकत्वमेवास्तु, समासस्तु स्वीक्रियतामिति वाच्यम्, इष्टानुरोधेन समास एव न भवतीति व्याख्यानस्योचितत्वात्। तथा च वार्तिकं 'प्रतिपदविधाना षष्ठी न समस्यते' इति। हरिश्चाह—'कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये' इति। एवं च शेषत्वविवक्षायां सर्पिषो ज्ञानम्, मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि। हरिस्मरणमित्यादीनि तु शेषत्वाविवक्षायां कृद्योगषष्ठ्याः समासे बोध्यानि। तत्र च कारकपूर्वकत्वाद् 'गतिकारक–' इत्यादिना कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं भवति। शेषषष्ठ्या समासे तु अन्तोदात्तत्वं स्यात्तच्चानिष्टम्। तथा च स्वरार्थेयमष्टसूत्रीति निष्कर्षः। किं च मातुः स्मृतमित्यादौ समासाभावोऽपि फलम्, न हि तत्र कारकषष्ठी लभ्यते, 'न लोका–' इति निषेधात्। आह च—'निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते। शेषलक्षणाया षष्ठ्या समासस्तत्र नेष्यते' इति। एतच्च मनोरमायां स्थितम्। **षष्ठी हेतु।** अत्र 'हेतौ' इत्यनुवर्तते, तदाह—**हेतौ द्योत्य इति। अन्नस्येति।** 'हेतौ' इति तृतीयायां प्राप्तायामनेन षष्ठी। हेतुप्रयोगे किम्,

कस्य हेतोः । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' ( वा १४७३ ) । किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय इत्यादि । एवं किं कारणम्, को हेतुः, किं प्रयोजनम् इत्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्ताय इत्यादि । ६०६ षष्ठ्यतसर्थप्रत्ययेन । (२-३-३०) एतद्योगे षष्ठी स्यात् । '-दिक्शब्द-' (सू ६११)

---

शब्दात् षष्ठी न स्यादिति बोध्यम् । **निमित्तपर्यायेति** । निमित्तपर्यायाणां प्रयोगे तेभ्यस्तत्समानाधिकरणेभ्यश्च सर्वासां विभक्तीनां प्रायेण प्रयोगो भवतीत्यर्थः । **किं निमित्तं वसतीति** । प्रथमान्तं द्वितीयान्तं च ज्ञेयम् । **इत्यादीति** । कस्मान्निमित्तात्, कस्य निमित्तस्य, कस्मिन्निमित्ते । पर्यायग्रहणस्य प्रयोजनमाह—**एवं किं कारणमित्यादि** । प्रायग्रहणस्य प्रयोजनमाह—**प्रायग्रहणादिति** । एवं च 'षष्ठी हेतुप्रयोगे' 'सर्वनाम्नस्तृतीया च' इति सूत्रद्वयं न कर्तव्यं भवतीति भावः । **षष्ठ्यतसर्थे** । **एतद्योग इति** । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इत्यारभ्य 'आहि च दूरे' 'उत्तराच्च' इत्यन्तैः सूत्रैर्दिग्देशकालवृत्तिभ्यः शब्देभ्यः स्वार्थे प्रत्यया विहिताः । तत्र 'दक्षिणोत्तराभ्यामतसुच्' इति विहितोऽतसुच्प्रत्ययः, तस्यार्थो दिग्देशकालरूपः, स एवार्थो यस्य सोऽतसर्थप्रत्ययः, तद्योग इत्यर्थः । यद्यप्यतसर्थप्रत्ययेषु अस्तातिरेव प्रथमः, तथापि लाघवादतसर्थेत्युक्तम्, न त्वस्तात्यर्थेति, संयुक्ताक्षरघटितत्वेन गौरवात् । **दिक्शब्देतीति** । 'अन्यारात्–' इति सूत्रे दिक्शब्देत्यनेन या पञ्चमी विहिता तदप-

---

अन्नेन वसति । हेतौ द्योत्ये किम्, अन्नशब्दात् षष्ठी यथा स्यादित्येके । अन्नस्य हेतोस्तुभ्यं नम इत्यत्र युष्मच्छब्दान्मा भूदित्यन्ये । **सर्वनाम्नस्तृतीया च** । इह सर्वनाम्न इति प्रयोगापेक्षया षष्ठी, पञ्चम्यां तु हेतुशब्दात् षष्ठीतृतीये न स्यातामित्याशयेनाह—**सर्वनाम्नो हेतुशब्दस्य चेति** । कस्माद्भवतीत्यपेक्षायाम् अर्थात् सर्वनामहेतुभ्यामिति संबध्यते । अत्र व्याचख्युः—यद्यपि सर्वनाम्न इति पदस्य पञ्चम्यन्तत्वेऽपि हेतुशब्दस्य विशेषणत्वे सामानाधिकरण्यादप्युपपद्यत इति न क्षतिः, तथापि विशेष्यत्वे त्वयं विधिर्न स्यादिति बोध्यमिति । **निमित्तपर्यायेति** । पर्यायग्रहणस्य फलमाह—**एवमित्यादिना** । एतद्वार्तिकेन 'षष्ठी हेतुप्रयोगे' 'सर्वनाम्नस्तृतीया च' इति सूत्रद्वयं गतार्थमिति बोध्यम् । **षष्ठ्यतसर्थे** । 'दक्षिणोत्तराभ्यामतसुच्' इत्यस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः, अस्तातिप्रभृतयः पञ्च, तदन्तेन योग इत्यर्थः । अतसुचोऽस्तात्यनन्तरत्वेऽपि लाघवानुरोधेन

इति पञ्चम्या अपवादः। ग्रामस्य दक्षिणतः पुरः पुरस्ताद् उपरि उपरिष्टात्।
**६१० एनपा द्वितीया। (२-३-३१)** एनबन्तेन योगे द्वितीया स्यात्।
'एनपा' इति योगविभागात्षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा। **६११ दूरान्ति-**

---

वाद इत्यर्थः। **दक्षिणत इति**। सप्तमीपञ्चमीप्रथमान्तात् स्वार्थे दिग्देशकालवृत्तेः दक्षिणशब्दाद् अतसुच्। दक्षिणस्याम्, दक्षिणस्याः, दक्षिणा वा दिगित्यर्थः। एवं देशे काले च। **पुर इति**। पूर्वाशब्दादस्तात्यर्थे 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसिप्रत्ययः प्रकृतेः पुरादेशश्च। पूर्वस्याम्, पूर्वस्याः, पूर्वा वेत्यर्थः। **पुरस्तादिति**। पूर्वशब्दादस्तातिप्रत्यये सति 'अस्ताति च' इति प्रकृतेः पुरादेशः। पुरश्शब्दसमानार्थकमिदम्। **उपरीति**। 'उपर्युपरिष्टात्' इति सूत्रेण ऊर्ध्वशब्दाद् रिल्प्रत्ययो रिष्टातिल्प्रत्ययः प्रकृतेरुपादेशश्च निपातितः। ऊर्ध्वायां दिशि, ऊर्ध्वाया दिशः, ऊर्ध्वा दिगिति वा अर्थः। एवं देशे कालेऽपि। **एनपा द्वितीया**। 'षष्ठ्यतसर्थ-' इति षष्ठ्या नित्यं बाधे प्राप्त आह—**योगविभागादिति**। एनपेति योगो विभज्यते। 'षष्ठ्यतसर्थ-' इति पूर्वसूत्रात् षष्ठीत्यनुवर्तते। एनबन्तेन योगे षष्ठी स्यादित्यर्थः। द्वितीयेति योगान्तरम्। एनपेत्यनुवर्तते। एनबन्तेन योगे द्वितीया स्यादित्युक्तोऽर्थः। **दक्षिणेनेति**। 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्येनप्। **एवमुत्तरेणेति**। उत्तरेण ग्रामं ग्रामस्य वेत्युदाहरणमित्यर्थः। पूर्वेण ग्रामं ग्रामस्य वेत्याद्यपि बोध्यम्, दिक्शब्देभ्य एनब्विधेः। भाष्ये तु 'षष्ठ्यतसर्थ-' इति सूत्रात् प्राग् 'एनपा द्वितीया' इत्यस्य पाठ इति

---

अस्तात्यर्थेति नोक्तमित्याहुः। **पञ्चम्या अपवाद इति**। 'ततः पश्चात् स्रस्यते ध्वंस्यते च' इति भाष्यप्रयोगात् पश्चाच्छब्दयोगे तु पञ्चम्यपि साधुः। अस्मादेव भाष्यप्रयोगात् पश्चाच्छब्देनाव्ययीभावो न भवतीति वक्ष्यते। प्रत्ययग्रहणं किम्, इह मा भूत्—प्राग् ग्रामात्। प्रत्यग् ग्रामात्। कृतेऽपि प्रत्ययग्रहणे कुतो नेति चेत्। अत्राहुः कैयटादयः—प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्ते अस्तातौ षष्ठ्यभावः। 'अन्यारात्-' इत्यत्राञ्चूत्तरपदस्यापीदं प्रयोजनमुक्तम्। तत्रान्यतरच्छक्यमवक्तुमेकप्रयोजनत्वादिति। प्रत्ययग्रहणं चिन्त्यप्रयोजनमिति तु मनोरमायां स्थितम्। **पुर इति**। 'पूर्वाधरावराणाम्-' इत्यसिप्रत्यये पुरादेशः। **पुरस्तादिति**। 'दिक्शब्देभ्यः-' इत्यादिनास्तातिः, 'अस्ताति च' इति पूर्वस्य पुरादेशः। **एनपा**। कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्' इति, उत्तरेणेत्येतद् 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन' इति तोरणसमानाधिकरणं तृतीयान्तम्, न त्वेनबन्तमित्याहुः। 'धनपतिगृहानुत्तरेणास्मदीयम्' इति कैश्चित्पठ्यते, तदा तु सम्यगेव। **दक्षिणेनेति**। दक्षिणस्यामदूर इत्यर्थे 'एनबन्यतरस्याम्' इत्यादिना एनप्। **दूरा-**

**कार्थैः षष्ठ्यन्तरस्याम्**। (२-३-३४) एतैर्योगे षष्ठी स्यात्पञ्चमी च। दूरं निकटं ग्रामस्य ग्रामाद्वा। ६१२ **ज्ञोऽविदर्थस्य करणे**। (२-३-५१) जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। सर्पिषो ज्ञानम्। ६१३ **अधीगर्थदयेशां कर्मणि**। (२-३-५२) एषां कर्मणि शेषे षष्ठी स्यात्। मातुः स्मरणम्। सर्पिषो दयनम् ईशनं वा। ६१४ **कृञः प्रतियत्ने**। (२-३-५३) प्रतियत्नो गुणाधा-

---

'पृथग्विना–' इति सूत्र उक्तम्। अतोऽत्र सत्यपि योगविभागे षष्ठीग्रहणानुवृत्तेरसंभवादेनपा योगे षष्ठ्यसाधुरेवेति युक्तम्। **दूरान्तिकार्थैः**। **एतैरिति**। दूरार्थकैरन्तिकार्थकैश्च शब्दैर्योग इत्यर्थः। **पञ्चमी चेति**। षष्ठ्यभावे 'अपादाने पञ्चमी' इत्यतोऽनुवृत्ता पञ्चमीति भावः। 'एनपा द्वितीया' इति 'पृथग्विनानानाभिस्तृतीया–' इति द्वितीयातृतीये संनिहिते अपि न समुच्चीयेते, व्याख्यानात्। **ज्ञोऽविदर्थस्य**। ज्ञः अविदर्थस्येति च्छेदः। ज्ञ इति ज्ञाधातोरनुकरणात् षष्ठ्येकवचनम्। विद्–ज्ञानम् अर्थः यस्य विदर्थः, स न भवतीति अविदर्थः, ज्ञानार्थकभिन्नस्येति यावत्, तदाह— **जानातेरज्ञानार्थस्येति**। **शेषत्वेनेति**। संबन्धत्वेनेत्यर्थः। शेष इत्यनुवृत्तेरिति भावः। **सर्पिषो ज्ञानमिति**। वस्तुतः करणीभूतं यत्सर्पिः तत्संबन्धिनी प्रवृत्तिरित्यर्थः। अविदर्थस्येति लिङ्गादेव 'ज्ञा अवबोधने' इति धातोः प्रवृत्तौ वृत्तिः। 'षष्ठी शेषे' इति सिद्धेऽपि 'प्रतिपदविधाना षष्ठी न समस्यते' इत्येतदर्थं वचनम्। **अधीगर्थ**। **एषामिति**। 'इक् स्मरणे' नित्यमधिपूर्वः, तस्यार्थ इवार्थो यस्य सोऽधीगर्थः, स्मरणार्थक इति यावत्। **शेष इति**। 'षष्ठी शेषे' इत्यतस्तदनुवृत्तेरिति भावः। **मातुः स्मरणमिति**। वस्तुतः कर्मीभूतमातृसंबन्धि स्मरणमित्यर्थः। **सर्पिषो दयनमिति**। वस्तुतः कर्मीभूतसर्पिस्संबन्धि दयनमित्यर्थः। 'दय दानगतिरक्षणहिंसादानेषु'। दीनान् दयत इत्यत्र दुःखाद्वियोजयितुमिच्छतीत्यर्थः। परदुःखापहरणेच्छा दया। **ईशनं वेति**। सर्पिष इत्यनुषज्यते। वस्तुतः कर्मीभूतसर्पिस्संबन्धी यथेष्टविनियोग इत्यर्थः। इदमपि समासनिषेधार्थमेव। लोकानीष्टे इत्यत्र तु यथास्वेच्छमाज्ञापयतीत्यर्थः। **कृञः प्रति**। कर्मणीति शेष इति चानुवर्तते। प्रतियत्नो

---

**न्तिकार्थैः**। पष्ठ्यां प्राप्तायां पक्षे पञ्चम्यर्थं वचनम्। इहान्यतरस्यांग्रहणं समुच्चयार्थम्, तेन विप्रकृष्टापि पञ्चमी समुच्चीयते, व्याख्यानात्, न तु संनिहिते अपि द्वितीयातृतीये, तदाह— **पञ्चमी चेति**। **सर्पिषो ज्ञानमिति**। वस्तुतः करणीभूतं यत्सर्पिः तत्संबन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा। **अधीगर्थ**। अधिशब्दोच्चारणम् 'इङिकावध्युपसर्गं न व्यभिचरतः' इति ज्ञापनार्थम्। अन्यथा 'स्मृत्यर्थदयेशाम्' इत्येव

**नम्।** कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने। एधोदकस्योपस्करणम्। ६१५ **रुजार्थानां भाववचनानामज्वरेः।** (२-३-५४) भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात्। चौरस्य रोगस्य रुजा। 'अज्वरिसन्ताप्योरिति

---

गुणाधानम्, तदाह—**कृञः कर्मणीति। एधोदकस्योपस्करणमिति।** एध-श्शब्दस्सकारान्तो नपुंसकलिङ्गः। दकशब्द उदकवाची। एधश्च दकं चेति द्वन्द्वः। यद्वा एधशब्दोऽकारान्तः पुँल्लिङ्गः। एधश्च उदकं चेति द्वन्द्व इत्यनुपदमेवोक्तम्। वस्तुतः कर्मीभूतैधोदकसंबन्धि परिष्करणमित्यर्थः। **रुजार्थानाम्।** रुजा–पीडा रोग इत्यर्थो येषामिति विग्रहः। भाववचनानामित्येतद्व्याचष्टे–**भावकर्तृकाणामिति।** वक्तीति वचनः, कर्तरि ल्युट्। प्रकृत्यर्थो न विवक्षितः। भावो धात्वर्थो वचनः कर्ता येषामिति विग्रहः। भावकर्तृकाणामिति फलितमिति भाष्ये स्पष्टम्। शेष इति कर्मणीति चानु-वर्तते, तदाह—**कर्मणि शेष इति।** इदमपि समासाभावार्थमेव। **चौरस्य रोगस्य रुजेति।** अत्र रुजेति व्याधिकृतसंतापादिपीडोच्यते। रोगश्चौरं संतापादिना पीडय तीति पर्यवसन्नोऽर्थः। रोगकर्तृका वस्तुतः कर्मीभूतचौरगता संतापादिपीडेत्यर्थः। अत्र भावघञन्तेन रोगशब्देन शारीरक्षयादिविकारविशेषो विवक्षितः। स च रुजायां कर्ता। तत्कर्मणश्चौरस्य शेषत्वविवक्षायां षष्ठी। रोगस्य चौररुजेति समासो न भवतीति बोध्यम्। **अज्वरिसंताप्योरिति।** 'रुजार्थानां भाववचनानां ज्वरिसंतापि-

---

ब्रूयात्, 'इगर्थे–' इति वा। इङंशे नेदं ज्ञापकमिति चेत्तर्हि तदंशे 'गोरध्ययने वृत्तम्' इत्यत्राधिशब्दोच्चारणं ज्ञापकमस्तु। अत्र व्याचख्युः—कर्मणि किम्, करणे शेषत्व-विवक्षायां मा भूत्। मातुर्गुणस्मरणम्। अत्र माता कर्म, गुणास्तु करणम्, उभयत्र शेषत्वविवक्षायामपि मातृशब्दादेवानेन सूत्रेण षष्ठी, गुणशब्दात्तु 'षष्ठी शेषे' इत्यनेन। तेन गुणस्मरणमिति समासो भवतीति। **रुजार्थानाम्।** 'रुजो भङ्गे' भिदादिपाठादत एव निपातनाद्वा अङि टाप्। रुजा व्याधिरर्थो येषां तेषां रुजार्थानां धातूनां भाव-वाचकत्वाव्यभिचाराद् भावशब्देनात्र घञादिवाच्यः सिद्धरूपो भाव उच्यते। वक्तीति वचनः। बाहुलकात् कर्तरि ल्युट्। प्रकृत्यर्थस्तु न विवक्षितः, न हि भावो वक्ता संभवति, तस्मात् प्रत्ययस्य साधुत्वनिर्वाहायैव वचिरिति बोध्यम्। तथा चायमर्थः–भावो वचनः कर्ता येषां तेषां भाववचनानामिति, तदेतद्व्याचष्टे—**भावकर्तृकाणामिति।** 'रुजा-र्थानां भावकर्तृकाणाम्' इत्येव सूत्रयितुं युक्तम्। **चौरस्येति।** चुरा शीलमस्य चौरः। अत्र कर्मणि शेषत्वविवक्षायामनेन षष्ठी। **रोगस्येति।** 'पदरुज–' इति घञा रोगो भावोऽभिधीयते, स च रुजायां कर्ता, 'कर्तृकर्मणोः–' इति रोगशब्दात् षष्ठी। भाव-

वाच्यम्' ( वा १५०७ )। रोगस्य चौरज्वरः चौरसन्तापो वा। रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः। ६१६ **आशिषि नाथः।** ( २-३-५५ ) आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। आशिषि इति किम्-माणवकनाथनम्। तत्संबन्धिनी याच्ञेत्यर्थः। ६१७ **जासिनिप्रहणनाटक्राथपिषां हिंसायाम्।** ( २-३-५६ ) हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनं प्रणि-

---

वर्जितानाम्' इति सूत्रं वक्तव्यमित्यर्थः। **रोगस्य चौरज्वर इति।** अत्र चौरज्वरशब्दे शेषषष्ठ्याः समासो भवत्येव, शेषषष्ठ्याः पुनर्विध्यभावात्। एवं रोगस्य चौरसंताप इत्यत्रापि बोध्यम्। अत्राज्वरिसंताप्योरित्यनुक्तौ तु रुजार्थानां भाववचनानां कर्मणि शेषे चौरशब्दात् षष्ठी स्यादित्यतिव्याप्तिं दर्शयितुमाह—**रोगकर्तृकमिति।** रोगकर्तृको वस्तुतः कर्मीभूतचौरसंबन्धी ज्वरः संतापो वेति यावत्। एवं च ज्वरिसंताप्योः रुजार्थकत्वाद् रोगात्मकभावकर्तृकत्वाच्च तत्कर्मणश्चौरस्य शेषत्वविवक्षायां नानेन षष्ठी, किन्तु कृद्योगे षष्ठी, 'षष्ठी शेषे' इत्येव षष्ठी वा। अतः चौरज्वरः, चौरसंताप इति समासो भवत्येवेति भावः। **आशिषि नाथः।** शेषे, कर्मणि इति चानुवर्तते, तदाह—**आशीरर्थस्येति।** इदमपि समासाभावार्थमेव। **सर्पिषो नाथनमिति।** इदं मे भूयादितीच्छा आशासनम्। तदेवाशीः नाथतेरर्थः। वस्तुतः कर्मीभूतसर्पिस्सम्बन्धि आशासनमित्यर्थः। **जासिनिप्र।** कर्मणि शेषे इत्यनुवर्तते, तदाह—**हिंसार्थानामित्यादिना।** इदमपि समासाभावार्थमेव। **चौरस्योज्जासनमिति।** 'जसु ताडने' 'जसु हिंसायाम्' इति चुरादौ। वस्तुतः कर्मीभूतचौरसंबन्धिनी हिंसेत्यर्थः। 'जसु मोक्षणे' इति दैवादिकस्य तु न ग्रहणम्, हिंसार्थत्वाभावाद् जासीति निर्देशाच्च। **निप्राविति।** निप्रहणेतिं निप्रपूर्वस्य हनधातोः निर्देशः। तत्र नि प्र इत्येतौ समस्तौ गृह्येते, प्रनीत्येवं व्युत्क्रमेण च गृह्येते, प्रेति नीति च पृथगपि गृह्येते, व्याख्यानादित्यर्थः। समस्तावुदाहरति—**चौरस्य निप्रहणनमिति।**

---

कर्तृकाणां किम्, श्लेष्मणश्चौररुजा। 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः। **चौरज्वर इति।** इह चौरशब्दाद् 'रुजार्थानाम्–' इति षष्ठ्या अप्रवृत्तौ 'षष्ठी शेषे' इत्यनेन षष्ठीति समासो भवत्येवेति भावः। **सर्पिषो नाथनमिति।** सर्पिर्मे भूयादित्याशासनमित्यर्थः। **माणवकनाथनमिति।** यद्यपि कर्मत्वविवक्षायां 'कर्तृकर्मणोः–' इति यदा षष्ठी, तदा आशिष्यपि समासोऽस्त्येव, तथापि तत्र 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरः, समासान्तोदात्तत्वं तु याच्ञादावेव, न त्वाशिषीति निष्कर्ष इति कौस्तुभे स्थितम्। **जासि।** 'जसु ताडने' 'जसु हिंसायाम्' इति च चुरादि-

हननं निहननं प्रहणनं वा । 'नट अवस्कन्दने' चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् । हिंसायाम् किम्-धानापेषणम् । ६१८ व्यवहृपणोः समर्थयोः।(२-३-५७) शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता। शतस्य व्यवहरणं पणनं वा । समर्थयोः किम्-

---

वस्तुतः कर्मीभूतचौरसंबन्धि हननमित्यर्थः । 'हन्तेरत्पूर्वस्य' इति णत्वम् । विपर्यस्तावुदाहरति—प्रणिहननमिति । 'नेर्गद-' इति णत्वम् । हन्तेर्नकारस्य तु न णत्वम्, 'अट्कुप्वाङ्-' इति नियमान्नेर्नकारस्य तदनन्तर्भावात् । व्यस्तावुदाहरति—निहननं प्रहणनं वेति । निमित्ताभावान्निहननमित्यत्र 'हन्तेरत्पूर्वस्य' इति णत्वं न । चुरादिरिति । 'नट नृत्तौ' इति तु न गृह्यते, नाटेति दीर्घोच्चारणादिति भावः । चौरस्योन्नाटनमिति । उपसर्गवशान्नाटेर्हिंसायां वृत्तिरिति भावः । चौरस्य क्राथनमिति । 'क्रथ हिंसायाम्' इति घटादौ । 'घटादयो मितः' इति तस्य मित्त्वेऽपि 'मितां ह्रस्वः' इति न भवति, इह दीर्घनिपातनात् । वृषलस्य पेषणमिति । हिंसेत्यर्थः । व्यवहृपणोः । शेषपूरणेन सूत्रं व्याचष्टे—शेषे कर्मणि षष्ठी स्यादिति । समौ तुल्यौ अर्थौ ययोरिति विग्रहः । शकन्ध्वादित्वात् पररूपम् । एकार्थकस्य व्यवपूर्वकहृञ्धातोः पणधातोश्च कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थः । इदमपि समासनिवृत्त्यर्थमेव । ननु 'पण व्यवहारे स्तुतौ च' इति पणधातुः स्तुतावपि वर्तते, न तु व्यवहार एव, तत्कथमनयोरेकार्थकत्वमित्यत आह—द्यूत इति । द्यूते—अक्षैः क्रीडने क्रयविक्रयविषयकमूल्यसंवादे चानयोर्व्यवहृपणो रेकार्थकत्वमित्यर्थः । तथा च एतादृशव्यवहारार्थकयोरिति फलतीति भावः । शतस्य व्यवहरणं पणनं वेति । द्यूतव्यवहारेण क्रयविक्रयव्यवहारेण वा गृह्णातीत्यर्थः । केवलव्यवहारार्थकत्वे अकर्मकत्वापातात् । तथा च वस्तुतः कर्मीभूतशतसंबन्धि अक्षक्रीडनेन ग्रहणं क्रयविक्रयविषयकमूल्यसंवादेन ग्रहणं वेत्यर्थः । समर्थयोः किमिति । व्यवहारार्थकयो-

---

स्तस्येदं ग्रहणं न तु दैवादिकस्य 'जसु मोक्षणे' इत्यस्य, जासीति निर्देशाद् 'हिंसायाम्' इति वचनाच्च । निप्रहणनमिति । 'हन्तेरत्पूर्वस्य' इति णत्वम् । प्रणीति । 'नेर्गद-' इति णत्वम् । चुरादिरिति । 'नट नृत्तौ' इति तु न गृह्यते, दीर्घनिर्देशादिति भावः । क्राथनमिति । 'क्रथ हिंसायाम्' इति घटादौ पठ्यते, तस्य मित्त्वेऽपि इह निपातनाद् वृद्धिः । मित्त्वफलं तु निपातनात्परत्वात् 'चिण्णमुलोः-' इति दीर्घे चरितार्थमिति घटादौ वक्ष्यति । यत्तु हरदत्तेनोक्तम्—घटादिपाठो 'घटादयः षितः' इत्यातिदेशिकत्वे अङ् यथा स्यादित्येतदर्थ इति । तन्मन्दम्, 'घटादयः षितः' इति हि मध्ये सूत्रितम् । तेन पूर्वेषां त्वरत्यन्तानामेव षित्त्वम्, न तु ज्वरादीनां परेषामिति । अत एव

शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनं स्तुतिरित्यर्थः । ६१६ **दिवस्तदर्थस्य** । (२-३-५८) द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । तदर्थस्य किम्-ब्राह्मणं दीव्यति । स्तौतीत्यर्थः । ६२० **विभाषोपसर्गे** । (२-३-५९) पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

---

रिति किमर्थमित्यर्थः । **शलाकाव्यवहार इति** । प्रत्युदाहरणे व्यवहरतेर्न व्यवहारार्थकत्वमित्याह—**गणनेत्यर्थ इति** । वस्तुतः कर्मीभूतशलाकासंबन्धिगणनेति फलितम् । अत्र षष्ठ्याः पुनर्विध्यभावादस्त्येव समास इति भावः । **ब्राह्मणपणनमिति** । पणतेः प्रत्युदाहरणम् । अत्र पणिर्न व्यवहारार्थ इत्याह—**स्तुतिरित्यर्थ इति** । वस्तुतः कर्मीभूतब्राह्मणसंबन्धिनी स्तुतिरित्यर्थः । अत्रापि अस्त्येव समास इति भावः । **दिवस्तदर्थस्य** । पूर्वसूत्रे निर्दिष्टव्यवहृपणौ तच्छब्देन परामृश्येते । तयोः व्यवहृपणोः अर्थ एवार्थो यस्येति विग्रहः । तदाह—**द्यूतार्थस्येति** । द्यूतमक्षक्रीडनेन ग्रहणमर्थो यस्य दिव इति विग्रहः । **क्रयेति** । क्रयविक्रयविषयकमूल्यसंवादोऽर्थो यस्य दिव इति बहुव्रीहिः । **कर्मणि षष्ठीति** । इह शेष इति नानुवर्तते, व्याख्यानादिति भावः । तथा च कर्मणः शेषत्वविवक्षाभावात् 'षष्ठी शेषे' इत्यप्राप्तौ इदं वचनम्, न तु कृदन्तयोगे समासनिवृत्त्यर्थम् । तद् ध्वनयन्नुदाहरति-**शतस्य दीव्यतीति** । शतमक्षक्रीडनेन क्रयविक्रयविषयकमूल्यसंवादेन वा गृह्णातीत्यर्थः । अत्र शेष इत्यननुवृत्तेः कर्मत्वप्रकारक एव बोधः । अत्र एवं 'द्वितीया ब्राह्मणे' इत्युत्तरसूत्रे 'गामस्य तदहः सभायां दीव्येयुः' इत्यत्र नित्यषष्ठीप्राप्तौ द्वितीयार्थमित्युक्तं भाष्यकैयटयोः संगच्छत इत्यन्यत्र विस्तरः । **विभाषोपसर्गे** । उपसर्गे सति व्यवहृपणार्थस्य दिवः

---

'त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च' इति घटादौ वक्ष्यति । **पणनमिति** । 'स्तुतावेव' इति वक्ष्यमाणत्वादायस्याभावः । **ब्राह्मणपणनमिति** । 'आयादय आर्धधातुके वा' इत्यायस्य विकल्पः । **दिवस्तद** । तच्छब्देन व्यवहृपणौ परामृश्येते तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीताविलाशयेनाह—**द्यूत इति** । पूर्वसूत्र एव दिवेः पाठे तदर्थस्येति न कर्तव्यमिति यद्यपि लाघवम्, तथापि योगविभाग उत्तरार्थः । **कर्मणीति** । इह शेष इति न संबध्यते, उत्तरसूत्रे विकल्पारम्भसामर्थ्यात् । अन्यथा षष्ठ्यां विकल्पितायां तथा मुक्ते शेषे विभक्त्यन्तरस्याप्राप्त्या वृथैव विकल्पारम्भः स्यादिति भावः । अन्ये त्वाहुः—लाघवात् पूर्वसूत्र एव दिवोग्रहणे कर्तव्ये पृथग्योगकरणसामर्थ्यादत्र शेष इति न संबध्यते । न चोत्तरार्थत्वात्पृथग्योगस्य नोक्तार्थज्ञापकत्वमिति वाच्यम्, संकोचे मानाभावेन फलद्वयस्यापि सुवचत्वादिति शेष इत्यस्यासंबन्धादिह

**६२१ प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने। ( २-३-६१ )** देवतासंप्रदानकेऽर्थे[1] वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविषो[2] वाचकाच्छब्दात्षष्ठी स्यात्। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा। **६२२ कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। ( २-३-६४ )** कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी

कर्मणि षष्ठी वा स्यादित्यर्थः। **प्रेष्यब्रुवोः। देवतासंप्रदानक इति।** देवता संप्रदानं यस्य तस्मिन्नित्यर्थः। **प्रेष्यब्रुवोरिति।** 'इष गतौ' दिवादिः श्यन्नन्तः, उपसर्गवशात् प्रेरणे वर्तते। प्रेष्यश्च ब्रूश्च तयोरिति विग्रहः। **कर्मण इति।** 'अधीगर्थ–' इत्यतः कर्मणीत्यनुवृत्तं षष्ठ्या विपरिणम्यत इति भावः। **हविष इति।** हविश्शब्दो न स्वरूपपरः किंतु, हविर्विशेषवाचकशब्दपरः, व्याख्यानात्। तथा च देवतासंप्रदानकक्रियावाचिनोः प्रेष्यब्रुवोः कर्मीभूतो यो हविर्विशेषः तद्वाचकाच्छब्दात् षष्ठीति फलितम्। अत्रापि शेष इति नानुवर्तते, व्याख्यानात्। तथा च द्वितीयापवादोऽयम्। **अग्नये छागस्येति।** मैत्रावरुणं प्रति अध्वर्युकर्तृकोऽयं सम्प्रैषः। हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद्धविः वपाख्यं मेदोरूपं तत् प्रेष्य। 'होता यक्षदग्निं छागस्य वपाया मेदसो जुषतां हविर्होतर्यज' इति प्रैषेण प्रकाशयेत्यर्थः। अत्र यद्यपि 'अग्नये छागस्य वपाया मेदसः प्रेष्य' इत्येव कल्पसूत्रेषु दृश्यते, न तु हविष इत्यपि। तथापि तथाविधः प्रैषो भाष्योदाहरणात् क्वचिच्छाखायां ज्ञेयः। मेदश्शब्देन वस्त्रखण्डतुल्यो मांसविशेष उच्यते। **अनुब्रूहि वेति।** अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहीत्युदाहरणम्। हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद्धविः वपाख्यं मेदोरूपं तत्पुरोऽनुवाक्यया प्रकाशयेत्यर्थः। प्रेष्यब्रुवोः किम्? अग्नये छागस्य हविर्वपां मेदो जुहुधि। हविषः किम्? अग्नये गोमयानि प्रेष्य। देवतासंप्रदाने किम्? माणवकाय पुरोडाशं प्रेष्य। 'हविषः प्रस्थितत्वविशेषणे प्रतिषेधो वक्तव्यः'। इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य। प्रस्थितमिति अव्यक्तमित्यर्थः। **कृत्वोऽर्थ। कृत्वोऽर्थानामिति।** कृत्वसुच्प्रत्ययस्यार्थ एवार्थो येषां ते कृत्वोऽर्थाः, तेषां प्रयोग इत्यर्थः। **शेषे षष्ठीति।** 'दिवस्तदर्थस्य' इत्यादित्रिसूत्र्यां तिङन्तमुदाहरति—**शतस्य दीव्यतीति।**

**प्रेष्यब्रवोः।** इष्यतेर्दैवादिकस्य लोटो मध्यमपुरुषैकवचनं प्रेष्येति। तत्साहचर्याद् ब्रुविरपि तथाभूत एव गृह्यते। अत एवेह शेषग्रहणं न संबध्यते। तिङन्तेन सह समासस्याप्रसक्तत्वात्। प्रेष्यब्रुवोः किम्, अग्नये छागस्य हविर्वपां मेदो जुहुधि। हविषः किम्, अग्नये गोमयानि प्रेष्य। देवतासंप्रदाने किम्, माणवकाय पुरोडाशान् प्रेष्य। हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो

१ 'संप्रदाने' इति क्वचित् पाठः। २ 'हविर्विशेषस्य इति क्वचित् पाठः।

**स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम्-द्विरहन्यध्ययनम् ।**

**६२३ कर्तृकर्मणोः कृति । ( २-३-६५ ) कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । 'गुणकर्मणि वेष्यते' (वा ५०४२)। नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वा । कृति किम्-तद्धिते मा भूत् , कृतपूर्वी कटम् ।**

पूर्वसूत्रे विच्छिन्नमपि शेषग्रहणं मण्डूकप्लुत्या इहानुवर्तते, व्याख्यानात् । **पञ्चकृत्वोऽह्नो भोजनमिति।** पञ्चवारं वस्तुतः अधिकरणीभूतं यदहः तत्संबन्धि भोजनमित्यर्थः 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' । इह षष्ठ्याः शेषे पुनर्विधानान्न समासः । **द्विरहन्यध्ययनमिति ।** 'द्वित्रिचतुर्भ्यः सुच्' इति कृत्वोऽर्थे सुच् । अत्र अधिकरणस्य विवक्षितत्वात्सप्तम्येव, न तु षष्ठी । **कर्तृकर्मणोः कृति ।** कृत्प्रत्यये प्रयुज्यमाने सतीत्यर्थः। फलितमाह—**कृद्योग इति ।** तत्र कर्तर्युदाहरति—**कृष्णस्य कृतिरिति ।** भावे स्त्रियां क्तिन् । कृष्णकर्तृका सृष्टिरित्यर्थः । कर्मण्युदाहरति—**जगत इति ।** जगत्कर्मकसृष्ट्यनुकूलव्यापारवानित्यर्थः । **गुणकर्मणीति ।** कृदन्तद्विकर्मकधातुयोगे अप्रधानकर्मणि षष्ठीविकल्प इष्यत इत्यर्थः। प्रधानकर्मणि तु नित्यैव षष्ठी। 'अकथितं च' इत्यत्र भाष्ये स्थितमेतत् । **नेता अश्वस्येति ।** 'अकथितं च' इत्यत्र 'ग्राममजां नयति' इत्युदाहरणे अजा प्रधानं कर्म, ग्रामस्तु गुणकर्मेति प्रपञ्चितं प्राक्। तद्रीत्या अत्र अश्वः प्रधानकर्म, स्रुघ्नस्तु गुणकर्मेति ज्ञेयम् । स्यादेतत्—कृतीति व्यर्थम् । न च तिङ्व्यावृत्त्यर्थं तदिति वाच्यम् , ओदनं पचतीत्यादौ 'न लोक-' इति लादेशयोगे षष्ठीनिषेधादेव षष्ठ्यभावसिद्धेः । शतेन क्रीतः शत्योऽश्व इत्यादौ तु तद्धितयत्प्रत्ययाभिहितत्वादेवाश्वादेः षष्ठी न भविष्यति। न च देवदत्तं हिरुगित्यादौ हिरुगाद्यव्ययबोध्यवर्जनादिक्रियां प्रति कर्मत्वादनेन षष्ठी शङ्क्या, 'न लोकाव्यय-' इति तन्निषेधात् । शेषत्वविवक्षायां तु षष्ठ्यत्र इष्यत एव । एवञ्च परिशेषात् कृद्योग एवेयं षष्ठी पर्यवस्यतीति किं कृद्ग्रहणेनेति पृच्छति—**कृति किमिति ।** उत्तरमाह—**तद्धित इति ।** तद्धितयोगे षष्ठीनिवृत्त्यर्थमिति यावत् । **कृतपूर्वी कटमिति**

वक्तव्यः । इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य । **कृत्वोर्थे ।** कृत्वसुचोऽइवार्थो येषां प्रत्ययानां ते कृत्वोर्थाः । **शेष इति ।** इह 'दिवस्तदर्थस्य' इत्यादिसूत्रषट्के विच्छिन्नमपि शेषग्रहणमनुवर्तते, व्याख्यानात् । **पञ्चकृत्व इति ।** 'संख्यायाः क्रिया-' इत्यादिना कृत्वसुच् । **द्विरिति ।** 'द्वित्रिचतुर्भ्यः सुच्' । **कर्तृकर्मणोः कृति ।** शेष इति निवृत्तम्, 'कर्तरि च कृति' इति सूत्रे कृते चकारेण 'अधीगर्थ-' इति सूत्रात् 'चतुर्थ्यर्थे बहुलं छन्दसि' इति पर्यन्तमनुवर्तमानस्य कर्मणीत्यस्यानुकर्षणसंभवेऽपि पुनरत्र कर्मग्रहणादित्याहुः । तन्मन्दम् , संनिहितस्याधिकरणस्यानुकर्षणप्रसङ्गेन तन्नि-

कटः पूर्वं कृतोऽनेनेति लौकिकविग्रहः । तत्र पूर्वमिति क्रियाविशेषणम् । 'सुप्सुपा' इति समासः । अनेनेत्यनुवृत्तौ कृतपूर्वशब्दात् 'पूर्वादिनिः' 'सपूर्वाच्च' इति इनिप्रत्ययस्तद्धितः । तत्र करोतिक्रियापेक्षया कटस्य कर्मत्वादनेन षष्ठीप्राप्तौ तद्धितयोगान्न भवति। ननु कृतः कटः पूर्वमनेनेति विग्रहे कृतशब्दस्य पूर्वशब्देन समासो न संभवति। कृतशब्दस्य कटशब्दापेक्षत्वेन सामर्थ्यविरहात्। अत एव तद्धित इनिप्रत्ययोऽपि दुर्लभः। किञ्च कृत इति क्तप्रत्ययेन कटस्य कर्मणोऽभिहितत्वेन ततः षष्ठ्याः प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन कृद्ग्रहणेन। क्तप्रत्ययेन कृता अभिहितत्वादेव कटाद् द्वितीयापि दुर्लभेति चेत्, मैवम्, कृत अम् पूर्व अम् इत्यलौकिकविग्रहवाक्ये कटस्यासंनिहिततया कर्मत्वेनान्वयासंभवेन कृञ्धातोस्तदानीमकर्मकतया कर्मणि क्तप्रत्ययस्यासंभवे सति 'नपुंसके भावे क्तः' इति भावे क्तप्रत्यये कृते सति कृतशब्दस्य कटशब्दसापेक्षत्वाभावात् समासतद्धितौ निर्बाधौ। ततश्च कृतपूर्वीति तद्धितान्तस्य पूर्वं कृतवानित्यर्थः पर्यवस्यति। किं कृतवानिति कर्मजिज्ञासायां कटमित्यन्वेति, गुणभूतयापि क्रियया कारकसंबन्धस्य कटं कृतवानित्यादौ दर्शनात्। तच्च कर्मत्वं न क्तप्रत्ययेनाभिहितम्, तस्य भावे विधानात्। नापीनिप्रत्ययेन, तस्य कर्तरि विधानात्। तथा च असति कृद्ग्रहणे षष्ठी स्यात्। तन्निवृत्त्यर्थं कृद्ग्रहणमिति भाष्ये स्पष्टम्। न च निष्ठायोगे निषेधादेवात्र षष्ठी न भविष्यतीति वाच्यम्, 'नपुंसके क्ते भावे षष्ठ्या उपसंख्यानम्' इति 'क्तस्य च वर्तमाने' इति सूत्रस्थवार्तिकेन निष्ठायोगे षष्ठीनिषेधस्यात्राप्रसक्तेः। तथा च षष्ठ्यभावे उक्तरीत्या अनभिहितत्वाद् द्वितीया सुलभैव। न च कृतेऽपि कृद्ग्रहणे षष्ठी दुर्वारा, कृतेति क्तप्रत्यगात्मकक्कृद्योगस्य सत्त्वादिति वाच्यम्, कृद्ग्रहणसामर्थ्येन भाष्योदाहरणेन च वृत्त्यन्तर्भावानापन्नकृद्योगस्य विवक्षितत्वात्। प्रकृते च कृतेत्यस्य तद्धितवृत्त्यन्तर्भूतत्वान्न

वृत्तये कर्मग्रहणसंभवात्। तस्माद् व्याख्यानमेवात्र शरणमित्यपरे।

किम्, शस्त्रेण भेत्ता। **कृतिरिति**। करणं कृतिः 'स्त्रियां क्तिन्', कृष्णोऽत्र कर्ता। कर्मण्युदाहरति—**जगत इति**। कृष्णस्य तृचाभिहितत्वात् ततः षष्ठी न भवति। **कृति किमिति**। नन्विह कर्तृकर्मभ्यां क्रिया आक्षिप्यते, तद्वाची तु धातुरेव, धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च। तत्र तिङ्प्रयोगे कटं करोतीत्यादौ 'न लोका—' इति प्रतिषेधेन भाव्यम्। ततश्च परिशेषात् कृद्योग एव षष्ठी भविष्यति, तस्मात्किं कृद्ग्रहणेनेति प्रश्नः। **कृतपूर्वी कटमिति**। अत्र करोतिक्रियापेक्षमनभिहितं कर्मत्वं कटस्यास्त्येवेति षष्ठी स्यात्, तद्धिताधिक्ये तु सा मा भूदित्येतदर्थं कृद्ग्रहणमिति भावः। ननु कृतः कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तस्य कर्मणि विधानात्तेनैवाभिहितं कर्मेति नैव द्वितीया प्राप्नोति, नापि तदपवादभूता षष्ठी, इहाप्यनभिहिताधिकारात्।

तद्योगः षष्ठीनिमित्तम्। न चैवं सति ओदनस्य पाचकतमः, ओदनस्य पाचकग्रहणम् इत्यादौ षष्ठी न स्यात्, वृत्त्यनन्तर्भूतकृद्योगाभावात्। तथा च ओदनं पाचकतमः, ओदनं पाचकग्रहणम् इति द्वितीयैव स्यादिति वाच्यम्, इष्टापत्तेः। अत एव मतुबधिकारे 'प्रज्ञाश्रद्धार्चाभ्यो णः' इत्यत्र 'प्राज्ञो व्याकरणम्' इत्युदाहरिष्यते मूलकृता। न चैवं घटः क्रियत इत्यत्रापि कर्मणो विवक्षाभावमाश्रित्य भावलकारे सति अनन्तरं घटस्य कर्मत्वेनान्वयसंभवाद् अनभिहितत्वाद् द्वितीया दुर्वारेति वाच्यम्, वैषम्यात्। कृतपूर्वीत्यत्र हि अलौकिकविग्रहदशायां कटशब्दस्यासंनिधानात् कर्मणो विवक्षा न संभवतीति भावे क्तप्रत्यय इति युक्तमाश्रयितुम्। क्रियते इत्यत्र तु न संभवत्येवाविवक्षा, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपवृत्तिपञ्चकानन्तर्भूतत्वेन वृत्तिशून्यतया विग्रहाभावात्। तथा च वृत्तिविषय एवायं व्युत्पत्तिप्रकार इति प्राचीनमतानुसारी पन्थाः। शब्देन्दुशेखरे तु ओदनं पाचकतम इत्यादौ द्वितीया असाधुरेव, षष्ठ्येव साधुरिति प्रपञ्चितम्। विस्तरभयान्नेह तल्लिख्यते। ननु भट्टिकाव्ये 'ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्। लिम्पैरिव तनोर्वातैश्चेतयः स्याज् ज्वलो न कः।' इति श्लोकोऽस्ति। श्रीरामस्य विरहार्तस्य वाक्यमेतत्। अत्र दुःखस्येति तनोरिति च कर्मणि षष्ठी। मादृग्भ्यो (दुःखस्य) दुःखं ददैर्ददद्भिः, पुष्पादीनाम् आमोदं परिमलं धायैः पोषकैः, तनोः तनुं शरीरं लिम्पैः लिम्पद्भिः कः चेतयः प्राणी ज्वलः ज्वलन्निव न स्यादित्यर्थः। अत्रामोदस्योत्तमस्येति कर्मणि षष्ठ्या भाव्यम्। धायशब्दस्य पोषणार्थकधाञ्धातोः 'ददातिदधात्योः–' इति णप्रत्ययात्मककृदन्तत्वादिति चेत्, न—उत्तममामोदं पुष्पादीनां

किंच कृतशब्दस्य कटसापेक्षतया समासो दुर्लभ एव, एवं तद्धितोऽपीति चेत्। अत्राहुः—पूर्वं कृतमनेनेति विग्रहे अविवक्षितकर्मतया भावे क्तप्रत्यये कृते कृतशब्दस्य कटसापेक्षत्वाभावात्समासतद्धितौ भवत एव। तथा च कृतपूर्वीत्ययं 'पूर्वं कृतवान्' इत्यनेन समानार्थः संपद्यते, गुणभूतयापि क्रियया कारकाणां संबन्धस्य कटं कृतवानित्यादौ दर्शनादत्रापि करोतिक्रियापेक्षं कर्मत्वं कटस्याभ्युपगम्यते। तच्च कर्मत्वं न केनाप्यभिहितम्। भावे क्तस्य, कर्तरि इनिप्रत्ययस्य च विधानात्। अतोऽसति कृद्ग्रहणे षष्ठी स्यादेवेति। एवं च ओदनस्य पाचकतम इत्यत्र षष्ठ्या असाधुत्वे इष्टापत्तिरेव शरणम्। कृतपूर्वीत्यत्र समासतद्धितौ भवत एवेत्युक्तम्। तत्र समासः 'सुप्सुपा' इति बोध्यः। तद्धितस्तु 'पूर्वादिनिः' 'सपूर्वाच्च' इति कर्तरि इनिः। तद्विधौ 'श्राद्धमनेन–' इति सूत्रादनेनेत्यनुवृत्तेः। स्यादेतत्—भिदेर्ण्यन्तात् 'पर्यायार्हर्णोत्पत्तिषु' इति ण्वुचि भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्युभाभ्यामप्यनेन कृद्योगषष्ठी जायते, तत्र मुख्यामुख्यसंनिधौ मुख्यस्यैव कार्यसंप्रत्ययात् प्रयोजककर्तृवाचकादेव स्यात्। अन्यथा पाचयत्योदनं देव-

१ अयं पाठोऽसंगतः, 'ददातिदधात्योर्विभाषा' इत्यनेन हि 'पाघ्राध्मा–' इत्यतोऽप्राप्तः शो विभाष्यते, णस्तु शप्रत्ययाभावे 'श्याद्व्यधा–' इत्यादिना भवति।

**६२४ उभयप्राप्तौ कर्मणि । ( २-३-६६ )** उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । 'स्त्रीप्रत्ययोरकाकारयोर्नायं नियमः' ( वा १५१३ ) । भेदिका बिभित्सा वा रुद्रस्य जगतः । 'शेषे विभाषा'

---

गृहीत्वा दुःखस्य पोषकैरित्येवं गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीयाया उपपत्तेः । **उभयप्राप्तौ कर्मणि** । पूर्वसूत्राद् कृतीत्यनुवर्तते । उभयप्राप्ताविति बहुव्रीहिः । अन्यपदार्थः कृत् , तदाह—**उभयोः प्राप्तिर्यस्मिन् कृतीति** । एकस्मिन् कृति उभयोः कर्तृकर्मणोः षष्ठीप्रसक्तौ कर्मण्येव षष्ठी स्यात्, न तु कर्तरीति यावत् । **आश्चर्य इति**। अगोपकर्तृको गोकर्मको यो दोहः सोऽद्भुत इत्यर्थः । उभयोः प्राप्ताविति षष्ठीसमासाश्रयणे तु ओदनस्य पाको ब्राह्मणानां च प्रादुर्भाव इत्यत्रापि कर्मण्येव षष्ठी स्यान्न तु कर्तरि । बहुव्रीह्याश्रयणे तु एकस्यैव कृतो निमित्तत्वलाभाद् भिन्नक्रियानिरूपितकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति फलति । **स्त्रीप्रत्यययोरिति** । वार्तिकमेतत् । 'स्त्रियां क्तिन्' इत्यधिकारविहितयोः अकाकारप्रत्यययोः कृतोः प्रयोगे कर्मण्येवेत्युक्तनियमो नास्तीत्यर्थः । कर्तर्यपि षष्ठी भवतीति फलितम् । **भेदिकेति** । धात्वर्थनिर्देशे ण्वुल् । अकादेशः, टाप्, 'प्रत्ययस्थात्–' इतीत्त्वम् । **बिभित्सेति** । भिदेः सन्नन्ताद् 'अ प्रत्ययात्' इत्यकारप्रत्ययः टाप् । रुद्रकर्तृकं जगत्कर्मकं भेदनं भेदनेच्छा वेत्यर्थः । **शेषे विभाषेति** । इदमपि वार्तिकम् । अकाकारप्रत्ययव्यतिरिक्त-

---

दत्तेन यज्ञदत्त इत्यत्र प्रयोज्यप्रयोजकयोरुभयोरपि लकारवाच्यत्वे उभाभ्यामपि कर्तृवाचकाभ्यां प्रथमा स्यात् । मैवम् , प्रयोज्यप्रयोजकवाचकाभ्यां भेदेन षष्ठी जायते न त्वेकैवेति नेह मुख्यामुख्यन्यायप्रवृत्तिः । तत्र तु लकारस्यैकत्वात् कर्तुस्तद्वाच्यत्वकल्पनायामुक्तन्यायः प्रवर्तत इति वैषम्यात् । एवं च ओदनः पाच्यते वदत्तेन यज्ञदत्तेनेत्यादावुभाभ्यामपि तृतीया स्यादेवेति बोध्यम् । अत्र याचक्षते—'तदर्हम्' इति निर्देशात् 'कर्तृकर्मणोः कृति ' इत्येतदनित्यम् । तथा च 'धायैरामोदमुत्तमम्' इति भट्टिप्रयोगः संगच्छत इति । **उभयप्राप्तौ** । कृतीत्यनुवर्तते, तेनान्यपदार्थलाभाद्बहुव्रीहिरित्याह—**उभयोः प्राप्तिर्यस्मिन्निति** । उभयशब्देन कर्तृकर्मणी परामृश्येते । तेनैकस्मिन् कृति कर्तृकर्मणोः प्राप्तिलाभादाश्चर्यमिदमोदनस्य पाको ब्राह्मणानां च प्रादुर्भाव इत्यत्र नायं नियमः प्रवर्तते । तत्पुरुषे तु स्यादेवात्रातिप्रसङ्ग इति भावः । पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमिति ध्वनयति—**कर्मण्येवेति**। एवं च कर्तरि षष्ठीप्रतिषेधोऽस्य सूत्रस्य फलम् , न तु कर्मणि षष्ठीविधानमिति स्थितम् । **स्त्रीप्रत्यययोरिति** । 'स्त्रियां क्तिन्' इत्यधिकारे विहितयोरित्यर्थः । **नायं नियम इति** । अकाकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीति यो नियम उक्तः स न

(वा १५१३) । स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिद्-विशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येण आचार्यस्य वा । ६२५ **क्तस्य च वर्तमाने । ( २-३-६७ )** वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । 'न लोक-' ( सू ६२७ ) इति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा । ६२६ **अधिकरणवाचिनश्च । ( २-३-६८ )** क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा ।

---

प्रत्यययोगे 'उभयप्राप्तौ' इति नियमो विकल्प्यत इत्यर्थः । **स्त्रीप्रत्यय इत्येक इति ।** उक्तो विकल्पः स्त्रीप्रत्यययोगे सत्येव भवतीति केचिन्मन्यन्त इत्यर्थः । **विचित्रेति ।** हरिकर्तृका जगत्कर्मिका कृतिरित्यर्थः । **केचिदविशेषेणेति ।** अकाकारभिन्नस्त्रीप्रत्यये अस्त्रीप्रत्यये च कृति प्रयुज्यमाने उक्तविकल्प इत्यर्थः । **शब्दानामिति ।** आचार्यकर्तृकं शब्दकर्मकमनुशासनमित्यर्थः । अनुशासनमसाधुभ्यो विवेचनम् । **क्तस्य च वर्तमाने ।** ननु 'कर्तृकर्मणोः कृति' इत्येव सिद्धे किमर्थमिदमित्यत आह—**न लोकेति । राज्ञां मतो बुद्धः पूजितो वेति ।** मनुधातोः बुधधातोः पूजधातोश्च 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्ययः । तत्र मतिरिच्छा, बुद्धेः पृथग् ग्रहणात् । राजकर्तृकवर्तमानेच्छाविषयो राजकर्तृकवर्तमानज्ञानविषयः राजकर्तृकवर्तमानपूजाश्रय इति क्रमेणार्थः । 'पूजितो यः सुरासुरैः' 'त्वया ज्ञातो घटः' इत्यत्र तु भूते क्तप्रत्ययो बोध्यः । न च 'मतिबुद्धि-' इत्यनेन भूतक्तस्य बाधः शङ्क्यः, 'तेन' इत्यधिकारे 'उपज्ञाते' इति लिङ्गात् तदबाधज्ञापनादित्याहुः । **अधिकरणवाचिनश्च ।** शेषपूरणेन सूत्रं व्याचष्टे—**क्तस्य योगे षष्ठीति । शयितमिति ।** शेतेऽस्मिन्निति शयितम् । 'शीङ्

---

प्रवर्तते, किं तु कर्तर्यपि षष्ठी प्रवर्तत इति फलितोऽर्थः । कथं तर्हि 'सुट् तिथोः' इति सूत्रे 'सुटा सीयुटो बाधा न' इति वृत्तिः । अत्राहुः—कर्तुः करणत्वविवक्षायां तृतीया बोध्येति । **भेदिकेति ।** भेदनं भेदिका । 'पर्यायार्हणोत्पत्तिषु' इति ण्वुच् । 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इत्यनेन ण्वुलित्येके । 'युवोरनाकौ-' स्त्रियां टापि 'प्रत्ययस्थात्-' इति इत्वम् । **बिभित्सेति ।** भेत्तुमिच्छा । भिदेः सनि 'हलन्ताच्च' इति कित्वाद् गुणाभावः । 'अ प्रत्ययात्' इत्यकारप्रत्यये टाप् । **शेष इति ।** अकाऽकाराभ्यामन्यस्मिन् क्तिनादावित्यर्थः । कर्तरि षष्ठीनिषेधफलकस्य 'उभयप्राप्तौ-' इति सूत्रस्य तथैव कर्तरि षष्ठीसंपादनफलकस्य 'स्त्रीप्रत्यययोरकाकारयोः-' इति वचनस्य च प्राक् स्थितत्वात् कर्तर्येव विभाषा अनेन शेषवचनेन क्रियते, न तु कर्मणीत्याशयेनोदाहरति—**जगतः कृतिर्हरेर्हरिणा वेति । अविशेषेणेति ।** अकाकारभिन्ने क्तन्मात्र इत्यर्थः । **अनुशासनमिति ।** अनुशिष्यते असाधुशब्देभ्यः प्रविभज्य बोध्यते येनेति

**६२७ न लोकाव्ययनिष्ठाखलर्थतृनाम्।** (२-३-६९) एषां प्रयोगे षष्ठी न स्यात्। लादेश-कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उ-हरिं दिदृक्षुः-अलङ्करिष्णुर्वा।

स्वप्ने' 'क्तोऽधिकरणे च ध्रौव्य-' इति क्तप्रत्ययः। तत्र एषामिति कर्तरि षष्ठी। 'न लोक-' इति निषेधापवादः। भुजेस्तु प्रत्यवसानार्थकत्वाद् अधिकरणे क्तप्रत्ययः। 'इदमेषां भुक्तमोदनस्य' इत्यत्र तु कर्तृकर्मणोर्द्वयोरपि षष्ठी। 'उभयप्राप्तौ-' इति नियमस्तु न प्रवर्तते, मध्येऽपवादन्यायेन 'कर्तृकर्मणोः कृति' इति षष्ठ्या एव तन्नियमाभ्युपगमात्। **न लोक। एषामिति।** ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन् एषामित्यर्थः। उ, उक इत्यत्र सवर्णदीर्घे सति ऊकेति भवति। ततो ल ऊकेत्यत्र आद्गुणे लोकेति भवति। **लादेशेति।** अविभक्तिकनिर्देशोऽयं लादेशोदाहरणसूचनार्थः। ल इति लडादीनां सामान्येन ग्रहणम्। तेषां च साक्षात्प्रयोगाभावात् तदादेशग्रहणमिति भावः। **कुर्वन् कुर्वाणो वेति।** लटः शतृशानचौ। इह कर्मणि षष्ठीनिषेधाद् द्वितीया। **उ इति।** तदुदाहरणसूचनमिदम्। उ इत्यनेन कृतो विशेषणात्तदन्तविधिः। **हरिं दिदृक्षुरिति।** दृशेस्सन्नन्तात् 'सनाशंसभिक्ष उः' इति उप्रत्ययः कृत्। व्यपदेशिवत्त्वेन उकारान्तोऽयं कृत्। हरिकर्मकदर्शनेच्छावानित्यर्थः। **अलङ्करिष्णुर्वेति।** हरिमित्यनुषज्यते। 'अलंकृञ्-' इत्यादिना ताच्छील्यादाविष्णुच्।

करणे ल्युट्। **राज्ञां मत इत्यादि।** 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'पूजितो यः सुरासुरैः' इत्यादौ तु भूते क्तः, न तु वर्तमाने। तेन तृतीया तत्रोपपद्यते। न च 'मतिबुद्धि-' इति सूत्रेण भूते क्तस्य बाधः शङ्क्यः। 'तेन' इत्यधिकारे 'उपज्ञाते' इति लिङ्गेनाबाधज्ञापनात्। **अधिकरण।** अयमपि निषेधापवादः। **आसितमिति।** आस्यते अस्मिन्नित्यासितम् 'क्तोऽधिकरणे च-' इत्यधिकरणे क्तः। **इदमेषामिति।** कर्तरि षष्ठीयम्। सकर्मकेभ्यस्त्वधिकरणे क्ते कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाविशेषाद्-इदमेषां भुक्तमोदनस्य। 'उभयप्राप्तौ कर्मणि' इत्ययं नियमस्तु नेह प्रवर्तते, 'कर्तृकर्मणोः कृति' इत्यनन्तरस्या एव षष्ठ्यास्तन्नियमाभ्युपगमात्। एतच्च कौस्तुभे स्पष्टम्। **न लोका।** जिघृक्षितरूपविनाशप्रसङ्गात् तृनामित्यत्र णत्वं न कृतम्। उश्च उकश्च ऊकौ, लश्च ऊकौ चेति विग्रहः। ल इति लडादीनां सामान्यग्रहणम्, तेषां च साक्षात्प्रयोगो न संभवतीति तदादेशा गृह्यन्त इत्याह—**लादेशा इति।** उदाह्रियन्त इति शेषः। कटं कारयांचकारेत्यत्र कृत्संज्ञकलिडन्तामन्तेन योगेऽपि कटस्य 'कर्तृकर्मणोः कृति' इति षष्ठी न भवति, 'आमः' इति लुकोऽपि लादेशत्वादित्याहुः। नन्वेवमपि 'बभ्रिर्वज्रं पपिः सोमं ददिर्गाः' इत्यत्र 'न लोका-' इति निषेधाप्रवृत्तेः षष्ठी दुर्वारैव, न हि किकिनौ लकारौ, नापि तदादेशौ। नैष दोषः, '-किकिनौ

१ निर्विभक्तिकपाठो बालमनोरमानुरोधी, इतरत्र तु 'लादेशाः' इति विभक्त्यन्तपाठ एव। एवमेतत्सूत्रीयान्यप्रतीकेष्वपि बोध्यम्।

उक-दैत्यान्घातुको हरिः । 'कमेरनिषेधः' ( वा १५११ ) । लक्ष्म्याः कामुको हरिः । अव्ययम्-जगत्सृष्ट्वा, सुखं कर्तुम् । निष्ठा-विष्णुना हता दैत्याः, दैत्यान्हतवान्विष्णुः । खलर्थाः-ईषत्करः प्रपञ्चो हरिणा । तृन् इति प्रत्याहारः 'शतृशानचौ' इति तृशब्दादारभ्य आ तृनो नकारात्। शानन्-सोमं पवमानः । चानश्-

---

उवर्णस्यैव ग्रहणे त्वत्र निषेधो न स्यात् । **उक इति** । इदमपि तदुदाहरणसूचनार्थम् । **दैत्यान् घातुको हरिरिति** । 'आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकारे 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्' इति तच्छीलादिषु हनधातोः कर्तरि उकप्रत्ययः, उपधावृद्धिः । 'हो हन्तेः-' इति हस्य घत्वम् । 'हनस्तोऽचिण्णलोः' इति नकारस्य तकारः । घातनशीलो घातनधर्मा घातनसाधुकारी वेत्यर्थः । **कमेरिति** । वार्तिकमिदम् । उकान्तकमेर्योगे षष्ठ्या निषेधो नास्तीत्यर्थः । **लक्ष्म्याः कामुक इति** । 'लषपत-' इत्यादिना उकञ् । **अव्ययमिति** । उदाहरणसूचनमिदम् । **जगत्सृष्ट्वेति** । हरिरास्त इति शेषः । 'समानकर्तृकयोः-' इति क्त्वाप्रत्ययः, 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वम् । **सुखं कर्तुमिति** । भक्तस्य हरिः प्रभवतीति शेषः । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन् । 'कृन्मेजन्तः' इत्यव्ययत्वम् । इह कृदव्ययमेव गृह्यत इति केचित् । वस्तुतस्तु अविशेषाद् अकृदन्तमपीति तत्त्वम् । देवदत्तं हिरुक् । तत्कर्मकं वर्जनमित्यर्थः । **निष्ठेति** । उदाहरणसूचनमिदम् । 'क्तक्तवतू निष्ठा' । **विष्णुना हता इति** । अत्र भूते इति कर्मणि क्तः । कर्तरि षष्ठीनिषेधात्तृतीया । **दैत्यान् हतवानिति** । भूते कर्तरि क्तवतुः । कर्मणि षष्ठीनिषेधाद् द्वितीया । **खलर्था इति** । उदाहरणसूचनमिदम् । **ईषत्कर इति** । 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति कर्मणि खल् । अर्थग्रहणाद् 'आतो युच्' इति खलर्थको युजपि गृह्यते । ईषत्पानः सोमो भवता । ननु तृन्नित्यनेन यदि तृनेव गृह्येत, तर्हि सोमं पवमान इत्यादौ न स्यादित्यत आह—**तृन्निति प्रत्याहार इति** । कुत आरभ्य किमन्तानामित्यत आह—**शतृशानचाविति तृशब्दादारभ्य आ तृनो नकारादिति** । लटः शतृशानचावित्यत्र शत्रादेशस्य एकदेशस्तृशब्दः, तत आरभ्य 'तृन्' इति सूत्रस्थनकारपर्यन्ता-

---

लिट् च' इत्यनेन लिट्कार्यातिदेशः क्रियते, न तु लिट्संज्ञा । तथा च विशेषातिदेशे च सामान्यमप्यतिदिश्यत इति नानुपपत्तिः । **दिदृक्षुरिति** । 'सनाशंसभिक्ष उः' । उकारेण कृतो विशेषणात्तदन्तमपि लभ्यत इत्याशयेनाह—**अलंकरिष्णुरिति** । 'अलंकृञ् निराकृञ्-' इत्यादिना इष्णुच् । **घातुक इति** । 'लषपत-' इत्यादिना उकञ् । **ईषत्कर इति** । 'ईषद्दुस्सुषु-' इत्यादिना खल् । अर्थग्रहणादीषत्पानः सोमो भवतेत्यप्युदाहार्यम् । अव्याप्तिं परिहर्तुमाह—**प्रत्याहार इति** । **पवमान**

आत्मानं मण्डयमानः। शतृ—वेदमधीयन्। तृन्—कर्ता लोकान्। 'द्विषः शतुर्वा' (वा १५२२)। मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः। ६२८ अकेनोर्भवि-

---

नामित्यर्थः। 'लटः शतृशानचावप्रथमासमानाधिकरणे' 'सम्बोधने च' 'तौ सत्' 'पूङ्यजोश्शानन्' 'ताच्छील्यवयोवचनशक्तिषु चानश्' 'इङ्धार्योश्शत्रकृच्छ्रिणि' 'द्विषोऽमित्रे' 'सुञो यज्ञसंयोगे' 'अर्हः प्रशंसायाम्' 'आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' 'तृन्' इति सूत्रक्रमः। अत्र शानन्नादितृन्नन्तानां ग्रहणम्, न तु 'लटः शतृ–' इति तृशब्दस्यापि शत्रादेशैकदेशस्य, तस्य क्वापि पृथक् प्रयोगानर्हत्वात्। नापि शानचः, लादेशत्वादेव सिद्धेः, इति स्थितिः। **शानन्निति**। उदाहरणसूचनमिदम्। **सोमं पवमान इति**। 'पूङ्यजोश्शानन्'। **आत्मानं मण्डयमान इति**। 'मडि भूषायाम्' 'ताच्छील्यवयोवचन–' इति चानश्। **शतृ इति**। उदाहरणसूचनमिदम्। **वेदमधीयन्निति**। 'इङ्धार्योः–' इति शतृप्रत्ययः। **तृन्निति**। उदाहरणसूचनमिदम्। **कर्ता लोकानिति**। तृन्निति सूत्रेण तच्छीलादिषु तृन्प्रत्ययः। शानन्नादितृन्नन्तानां लादेशत्वाभावात् प्रत्याहाराश्रयणमिति बोध्यम्। **द्विषश्शतुर्वेति**। शत्रन्तद्विषधातुयोगे षष्ठीनिषेधो वा वक्तव्य इत्यर्थः। **मुरस्य मुरं वा द्विषन्निति**। 'द्विषोऽमित्रे' इति शतृप्रत्ययः। तस्य तृन्प्रत्याहारप्रविष्टत्वान्नित्यनिषेधे प्राप्ते विकल्पोऽयम्। **सर्वोऽयमिति**। 'अनन्तरस्य–' इति न्यायादिति भावः। **शेषे षष्ठी त्विति**। शाब्दबोधे प्रकारवैलक्षण्यं फलमिति भावः। **ब्राह्मणस्य कुर्वन्निति**। हरिरिति शेषः। लटश्शत्रादेशः। मुखतो ब्राह्मणसंबन्धिसृष्ट्यनुकूलव्यापारवानित्यर्थः। कर्मत्वविवक्षायां तु द्वितीयैव। **नरकस्य जिष्णुरिति**। 'ग्लाजिस्थश्च ग्स्नुः' इति तच्छीलादिषु ग्स्नुप्रत्ययः। नरकसंबन्धिजयवानित्यर्थः। कर्मत्वविवक्षायां तु द्वितीयैव। **अकेनो-**

---

**इति**। 'पूङ्यजोः शानन्'। **मण्डयमान इति**। 'मडि भूषायाम्' इदित्त्वान्नुम्, 'ताच्छील्यवयोवचन–' इति चानश्। **अधीयन्निति**। 'इङ्धार्योः–' इति शता। शानन्नादिषु 'लटः' इत्यननुवृत्त्या लादेश इत्यसिद्धेः प्रत्याहारग्रहणमाश्रीयत इति भावः। **तृन्निति**। तच्छीलादिषु 'तृन्' इति विहितस्तृन् प्रत्ययः। तृन्निति प्रत्याहारग्रहणान्नित्यं निषेधे प्राप्ते विकल्पमाह—**द्विष इति**। 'द्विष अप्रीतौ' इत्यस्माद् 'द्विषोऽमित्रे' इति विहितो यः शतृप्रत्ययस्तत्प्रयोगे वा षष्ठीनिषेध इत्यर्थः। **सर्वोऽयमिति**। 'अनन्तरस्य–' इति न्यायादिति शेषः। **शेषे षष्ठी त्विति**। शाब्दबोधे वैलक्षण्यमस्तीति भावः। एवं चाश्चर्यो गवां दोहोऽगोपेनेत्यत्र शेषत्वविवक्षायां कर्तर्यपि षष्ठी

**प्यदाधमर्ण्ययोः।** (२-३-७०) भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजं गामी। शतं दायी। ६२६ **कृत्यानां**

---

**भविष्य।** नेत्यनुवर्तते अकश्च इन् च तयोरिति विग्रहः। भविष्यच्च आधमर्ण्यं च तयोरिति द्वन्द्वः। यथासंख्यं नेष्यते, भाष्यात्। भविष्यति आधमर्ण्ये च वर्तमानयोः अकेनोः योगे षष्ठी नेति फलितम्। तत्र आधमर्ण्यांशः अकेन नान्वेति, 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्युक्तेः। अतो भविष्यदंश एवाके अन्वेति। इनेस्तु भविष्यदाधमर्ण्ययोरुभयोरप्यन्वयः, संभवात्। तदाह—**भविष्यत्यकस्येति। भविष्यदाधमर्ण्यार्थेनश्चेति।** भविष्यदर्थकस्य आधमर्ण्यार्थकस्य चेन इत्यर्थः। **सतः पालक इति।** सज्जनान् पालयिष्यन् हरिः प्रादुर्भवतीत्यर्थः। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति भविष्यति ण्वुल्, तत्र 'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवृत्तेः। ओदनस्य पाचक इत्यत्र तु न षष्ठीनिषेधः, 'ण्वुल्तृचौ' इत्यस्य भविष्यति विधानाभावात्। **व्रजं गामीति।** 'गमेरिनिः' इत्यौणादिक इनिः। स च भविष्यति विहितः, 'भविष्यति गम्यादयः' इत्युक्तेः। गोष्ठं गमिष्यन्नित्यर्थः। **शतं दायीति।** ऋणत्वेन गृहीतं शतं प्रत्यर्पयतीत्यर्थः। 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्याधमर्ण्ये णिनिः। तस्य भविष्यति विधानाभावाद् भविष्यदर्थकतया गतार्थत्वं न शङ्क्यम्। **कृत्यानाम्।**

---

भवत्येवेति बोध्यम्। **अकेनोः।** आधमर्ण्ये अ[कस्या]संभवादाह—**भविष्यत्यकस्येति।** इनस्तु उभयोः संभवादाह—**भविष्यदाधमर्ण्यार्थेनश्च योग इति।** यथासंख्यं तु न भवति। भाष्ये 'अकस्य भविष्यति' 'इन आधमर्ण्ये च' इति योगं विभज्य व्याख्यानात्। इह भविष्यदिति स्वर्यते तेन 'भविष्यति गम्यादयः' इत्यधिकारे विहितः 'तुमुन्ण्वुलौ-' इति ण्वुलेव गृह्यत इत्याशयेनोदाहरति—**सतः पालक इति।** सत इति शत्रन्तम्। यस्तु कालसामान्ये 'ण्वुल्तृचौ-' इति ण्वुलुक्तस्तत्र न निषेधः। ओदनस्य पाचकः, पुत्रपौत्राणां दर्शक इतीति भावः। **व्रजं गामीति।** 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिः। यद्यप्ययं कालसामान्ये विहितस्तथापि 'भविष्यति गम्यादयः' इत्युक्तेर्भविष्यदर्थकः। गम्यादयः केचिदुणादयः केचिदष्टाध्यायीगता इति हरदत्तः। ननु 'गत्यर्थकर्मणि चतुर्थी च' इत्येव सिद्धे द्वितीयाग्रहणमपवादविषयेऽपि द्वितीयाप्रवृत्त्यर्थमिति व्रजंगामीति सिध्यत्येवेति चेद्, अत्राहुः—इहैव सूत्रे ग्रामं गमीति भाष्योदाहरणात्तत्सूत्रं नाङ्गीक्रियते। तेन ग्रामस्य गन्तेति षष्ठ्येव साध्वी, न तु ग्रामं गन्तेति द्वितीयेति। **शतं दायीति।** 'आवश्यका-' इत्याधमर्ण्ये णिनिः। भविष्यदाधमर्ण्यार्थेनश्च योग इत्युक्तत्वान्नेह निषेधः—अवश्यं करोत्यवश्यंकारी कटस्य। गम्यादित्वाभावाद्वर्तमानेऽप्ययम्। **कृत्यानाम्।** 'कर्तृकर्मणोः-' इति नित्ये प्राप्ते

**कर्तरि वा ।** ( २-३-७१ ) षष्ठी वा स्यात् । मया मम वा सेव्यो हरिः । कर्तरि इति किम्-गेयो माणवकः साम्नाम् । 'भव्यगेय-' (सू २८६४) इति कर्तरि यद्विधानादनभिहितं कर्म । अत्र योगो विभज्यते-कृत्यानाम् । 'उभयप्राप्तौ' इति 'न' इति चानुवर्तते । तेन नेतव्या व्रजं गावः कृष्णेन । ततः कर्तरि वा । उक्तोऽर्थः ।

**६३० तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ।** ( २-३-७२ ) तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन

---

शेषपूरणेन सूत्रं व्याचष्टे—**षष्ठी वा स्यादिति** । कृत्या इत्यधिकृत्य विहिताः कतिपयकृत्प्रत्ययविशेषाः, तद्योगे कर्तरि षष्ठी वा स्यादित्यर्थः । 'कर्तृकर्मणोः-' इति नित्यं प्राप्ते विकल्पोऽयम् । **मया मम वा सेव्यो हरिरिति** । 'षेवृ सेवायाम्' 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत्प्रत्ययः । अस्मच्छब्दार्थस्य कर्तुः अनभिहितत्वात् षष्ठी-तृतीये । **गेय इति** । नन्विह साम्नः कर्मत्वस्य 'अचो यत्' इति यत्प्रत्ययाभिहितत्वात् कथं षष्ठीप्रसक्तिरित्यत आह—**भव्येति** । ननु 'नेतव्या व्रजं गावः कृष्णेन' इत्यत्र कृत्यसंज्ञकतव्यप्रत्यययोगाद् 'उभयप्राप्तौ-' इति बाधित्वा कृष्णात् षष्ठीविकल्पः स्यात्, व्रजात्तु 'कर्तृकर्मणोः कृति' इति नित्यं षष्ठी स्यादित्यत आह—**अत्र योगो विभज्यत इति** । विभागप्रकारं दर्शयति—**कृत्यानामिति** । **अनुवर्तत इति** । तथा च कृत्ययोगे कर्तृकर्मणोः उभयोः प्रसक्ता षष्ठी नेत्यर्थः फलति । **नेतव्या व्रजमिति** । 'गुणकर्मणि वेष्यते' इति व्रजाद्विकल्पस्तु न भवति । नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वेति उभयप्राप्तिरहिते कृत्यव्यतिरिक्ते चरितार्थस्य 'दोग्धव्या गावः पयः कृष्णेन' इत्यादौ गुणकर्मणा उक्तत्वेन प्रधानकर्मणि चरितार्थेनानेन परत्वाद् बाधात् । **ततः कर्तरि वेति** । 'कृत्यानाम्' इति सूत्रप्रणयनानन्तरं कर्तरि वेति पृथक् प्रणेतव्यमित्यर्थः । **उक्तोऽर्थ इति** । 'कृत्यानाम्' इत्यनुवर्त्य कृत्ययोगे कर्तरि षष्ठी वा स्यादिति व्याख्येयमित्यर्थः । अनुभयप्राप्तिविषये मया मम वा सेव्यो हरिरित्यादाविदमवतिष्ठते ।

**अथोपपदविभक्तयः । तुल्यार्थैः** । शेषषष्ठ्यां नित्यं प्राप्तायां तृतीया-विकल्पोऽयम् । तुल्यैरिति बहुवचनादेव पर्यायग्रहणे सिद्धे अर्थग्रहणं पदान्तरनिरपेक्षस्तुल्यार्थस्तेषां ग्रहणार्थम् । तेन गौरिव गवय इत्यादौ नेत्याहुः । अतुलोपमाभ्या-

---

भिभाषेयम् । **सेव्य इति** । 'षेवृ सेवायाम्' 'ऋहलोः-' इति कर्मणि ण्यत् । **योगो विभज्यत इति** । भाष्यकारैरिति शेषः । 'उभयप्राप्तौ-' इत्यनेन कर्तरि निषेधे सिद्धे कर्मणि निषेधार्थमिदम् । 'गुणकर्मणि वेष्यते' इति तूभयप्राप्तिरहितस्थले नेताश्वस्येत्यादौ चरितार्थमिति दिक् । **तुल्यार्थैः** । शेषषष्ठ्यां प्राप्तायां विकल्पेन तृतीया अनेन विधीयते, तया मुक्ते षष्ठ्येव भवेत्तदाह—**पक्षे षष्ठीति** । बहुवचननिर्देशादेव

वा। अतुलोपमाभ्यां किम्-तुला उपमा वा कृष्णस्य नास्ति। **६३१ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः।(२-३-७३)** एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी। आशिषि-आयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात्। आशिषि किम्-देवदत्तस्यायुष्यमस्ति। व्याख्यानात्सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः।

**६३२ आधारोऽधिकरणम्। (१-४-४५)** कर्तृकर्मद्वारा तन्निष्ठक्रियाया

---

मिति पर्युदासाद् अनव्ययोग एवेदमित्यन्ये। **चतुर्थी च। एतदर्थैरिति।** आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ, हित एतदर्थकैरित्यर्थः। **पक्षे षष्ठीति।** चकारेण तत्समुच्चयावगमादिति भावः। आयुष्यपर्यायश्चिरञ्जीवितमिति। कुशलं निरामयमिति मद्रभद्रपर्यायौ। शमिति सुखपर्यायः। प्रयोजनमित्यर्थपर्यायः। पथ्यमिति हितपर्यायः। 'हितयोगे च' इति नित्यचतुर्थी तु नाशिषि ज्ञेया। ननु 'स्वं रूपम्-' इति परिभाषया आयुष्यादिशब्दानामेव ग्रहणमुचितमित्यत आह—**व्याख्यानादिति।** ननु मद्रभद्रयोः पृथग्ग्रहणादेतदर्थैरिति व्याख्यानमयुक्तमित्यत आह—**मद्रभद्रयोरिति।।** इति षष्ठी विभक्तिः।।

**अथ सप्तमीविभक्तिः। आधारोऽधिकरणम्।** कारके इत्यधिकृतं प्रथमान्ततया विपरिणम्यते, तच्च आधारस्य विशेषणम्, आधारः कारकमधिकरणमिति लभ्यते। क्रियान्वयि कारकम्। एवञ्च कस्याधार इत्याकाङ्क्षायाम् उपस्थितत्वात् क्रियाया इति लभ्यते। क्रिया च कर्तृकर्मगता विवक्षिता। तदाधारत्वं च न साक्षात्, किं तु कर्तृकर्मद्वारैव, व्याख्यानात्, तदाह—**कर्तृकर्मद्वारेति। तन्निष्ठेति।** कर्तृकर्म-

---

पर्यायग्रहणे सिद्धे 'तुल्यार्थैः' इत्यर्थग्रहणं पदान्तरनैरपेक्ष्येण ये तुल्यार्थास्तेषां ग्रहणार्थम्, तेन गौरिव गवय इत्यादौ नेत्याहुः। कथं तर्हि 'तुलां यदारोहति दन्तवानसौ' इति कलिदासः, 'स्फुटोपमं भूतिसितेन शंभुना' इति माघश्च। उच्यते—'सह युक्तेऽप्रधाने' इति तृतीया। न चात्र सहशब्दयोगो नेति शङ्कयम्, विनापि तद्योगं तृतीयेत्यभ्युपगमात्। वेति वर्तमानेऽन्यतरस्यांग्रहणमुत्तरसूत्रे चकारेण स्वस्यानुकर्षणार्थम्। अन्यथा हि तृतीयैवानुकृष्येत संनिहितत्वात्। **तुल्य इति।** तुलया संमितस्तुल्यः। 'नौवयोधर्म-' इत्यादिना यत्। **तुला उपमा वेति।** तोलनं तुला। अस्मिन्नेव सूत्रे णिलुगङोर्निपातनात्साधुरिति माधवः। उपमितिरुपमा। 'आतश्चोपसर्गे' इत्यङ्। **हितमिति** 'हितयोगे च' इत्यनाशिषि चरितार्थमित्याशिष्ययं विकल्प इति भावः। **व्याख्यानादिति।** सूत्रेऽर्थशब्दोऽपि पृथङ् निमित्तम्, तथा च द्वन्द्व एवायं न त्वर्थशब्देन बहु-

आधारः कारकमधिकरणसंज्ञः स्यात् । **६३३ सप्तम्यधिकरणे च । ( २-३-३६)** अधिकरणे सप्तमी स्यात् । चकाराद् दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा । 'दूरान्तिकार्थेभ्यः–' ( सू ६०९ )

---

निष्ठेत्यर्थः । **सप्तम्यधिकरणे च । चकाराद् दूरेति** । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पूर्वसूत्राद् दूरान्तिकार्थेभ्य इत्यस्य चकारेणानुकर्षणादिति भावः । **औपश्लेषिक इति** । उपश्लेषः संयोगादिसंबन्धः । तत्प्रयोज्य आधारः प्रथम इत्यर्थः । **वैषयिक इति** । विषयतासंबन्धकृत आधारो द्वितीय इत्यर्थः । **अभिव्यापक इति** । सकलावयवव्याप्तिकृत आधारस्तृतीय इत्यर्थः । तत्र औपश्लेषिकं कर्तृद्वारकमाधारमुदाहरति—**कटे आस्त इति** । देवदत्त इति शेषः । तत्र साक्षाद्देवदत्तात्मककर्तृगतामासनक्रियां प्रति कटस्य संयोगसम्बन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वादधिकरणत्वम् । अथ कर्मद्वारकमौपश्लेषिकमाधारमुदाहरति—**स्थाल्यां पचतीति** । तण्डुलानिति शेषः । साक्षात्तण्डुलात्मककर्मगतां पाकक्रियां प्रति स्थाल्याः संयोगसम्बन्धं पुरकृत्य तण्डुलद्वारा आधारत्वादधिकरणत्वम् । रूपे रूपत्वमस्ति, शरीरे चेष्टास्तीत्यादौ समवायेन औपश्लेषिकमाधारत्वमित्यादि ज्ञेयम् । अथ वैषयिकमाधारमुदाहरति—**मोक्षे इच्छास्तीति** । अत्र कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाद्वाराधारत्वादधिकरणत्वम् । अथाभिव्यापकमाधारमुदाहरति—**सर्वस्मिन्नात्मास्तीति** । अत्र आत्मरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य आत्मद्वारा सत्ताधारत्वात्सर्वस्याधिकरणत्वम् ।

अथ चकारानुकृष्टदूरान्तिकार्थेभ्य उदाहरति—**वनस्य दूरे अन्तिके वेति** ।

---

व्रीहिरिति भावः ॥ इति षष्ठी ॥ **आधारः** । आध्रियतेऽस्मिन्नित्याधारः । 'अध्यायन्याय–' इति सूत्रे 'अवहाराधार–' इत्युपसंख्यानाधिकरणे घञ् । स चाधारः कस्येत्याकाङ्क्षायां कारकाधिकारात्क्रियाया इति इति लभ्यते । इयं च संज्ञा साक्षात् क्रियाधारयोर्न संभवति पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् । अतो व्याचष्टे—**कर्तृकर्मद्वारेति** । एवं च भूतले घट इत्यादौ अस्तीति क्रियाध्याहारो बोध्यः । **त्रिधेति** । एतच्च 'संहितायाम्' इति सूत्रे भाष्ये स्पष्टम् । नद्यामास्त इत्याद्यर्थं सामीपिकमधिकरणं चतुर्थमपि केचिदिच्छन्ति । **कटे आस्त इति** । कर्तृद्वारा क्रियाधारस्योदाहरणमिदम् , कर्मद्वारा क्रियाधारस्य तु—**स्थाल्यां पचतीति** । वैषयिकाधारमुदाहरति—**मोक्षे इच्छास्तीति** । अभिव्यापकस्य तु—**सर्वस्मिन्निति** । तिलेषु तैलमित्या-

इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः। 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' ( वा १४८६ )। अधीती व्याकरणे। अधीतमनेनेति विग्रहे 'इष्टादि-

---

दूरमन्तिकमित्यर्थः । प्रातिपदिकार्थमात्रे विधिरयम् । **विभक्तित्रयेणेति** । द्वितीयापञ्चमीतृतीयाभिरित्यर्थः । वस्तुतस्तु उप–समीपे श्लेषः–संबन्धः, तत्कृतमौपश्लेषिकमिति व्युत्पत्त्या सामीपिकमेवाधारत्वमौपश्लेषिकम् । अत एव 'अधिकरणं नाम त्रिप्रकारम्—व्यापकमौपश्लेषिकं वैषयिकमिति । शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति अन्यदत उपश्लेषात्। 'इको यणचि' अच्युपश्लिष्टस्य' इति 'संहितायाम्' इत्यत्र भाष्यं संगच्छते। अच्युपश्लिष्टस्य अच्समीपोच्चारितस्येत्यर्थ इति कैयटः। अत एव मासेऽतिक्रान्ते दीयत इत्यत्र मास औपश्लेषिकमधिकरणमिति 'तत्र च दीयते कार्यं भववत्' इत्यत्र भाष्यं संगच्छते । अत एव च 'तदस्मिन्नधिकमिति दशान्ताड्डः' इत्यत्र 'एकादश माषा अधिका अस्मिन् कार्षापणशते' इत्यत्राधिकानाम् एकादशानां कथं शतमधिकरणमित्याक्षिप्य व्यापकवैषयिकाधिकरणासंभवाद् 'औपश्लेषिकमधिकरणं विज्ञायते' इति भाष्यं संगच्छते। एवं च 'कटे आस्ते' इत्यादौ औपश्लेषिकाधारोदाहरणं मूलोक्तमनुपपन्नमेव, उक्तभाष्यविरोधात्। एवं च 'कटे आस्ते' इत्यादौ एकदेशव्याप्त्या गौणमभिव्यापकाधारत्वम्। सर्वावयवव्याप्तिकृताधिकरणत्वमेव मुख्यम्, वैषयिकमौपश्लेषिकं च गौणमित्यर्थस्य भाष्यसंमतत्वात्। अत एव 'स्वरितेनाधिकारः' इति सूत्रे 'साधकतमं करणम्' इति सूत्रे च भाष्ये "अधिकरणमाचार्यः किं मन्यते। यत्र कृत्स्नमाधारात्मा व्याप्तो भवति। तर्हि इहैव सप्तमी स्यात्—तिलेषु तैलं, दध्नि सर्पिः इति। गङ्गायां घोषः, कूपे गर्गकुलम् इत्यत्र तु न स्यात्, मुख्य एव कार्यसंप्रत्ययादित्याशङ्क्य स्वरितेनाधिकं कार्यं भवतीति वचनात् तमब्ग्रहणाच्च न दोषः" इति समाहितम्। एवं च 'कटे आस्ते, गङ्गायां घोषः' इत्यादौ गौणमप्यधिकरणं सप्तम्यर्थ एव। यदि तु 'गङ्गायां घोषः' इत्यादौ सामीपिकमधिकरणत्वं न विवक्ष्यते तदा लक्षणेति बोध्यम्। विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः । **क्तस्येन्विषयस्येति** । न च 'कृतपूर्वी कटम्' इत्यत्रापि सप्तमी शङ्क्या, इन्प्रत्ययान्तो यः क्तप्रत्ययान्तः तस्य

---

यप्यभिव्यापकस्योदाहरणमाहुः। **चतस्र इति**। प्रातिपदिकार्थमात्र इत्यर्थः। 'दूरान्तिकार्थेभ्य–' इत्यस्येहानुवर्तनादधिकरणेऽप्येता बोध्याः **क्तस्येन्विषयस्येति**। इन् इन्नन्तः शब्दो विषयो वर्तनभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अन्ये त्वाहुः—इनो विषय इति षष्ठीसमासः। विषयशब्देनेह प्रकृतिरुच्यते। क्तान्तस्येनः प्रकृतित्वादिति। **अधीती व्याकरण इति**। भावे क्तप्रत्यये तत 'इष्टादिभ्यश्च' इति कर्तरीनौ कृते पश्चाद् गुणभूतक्रियया संबध्यमानं व्याकरणमनभिहितं कर्मेति कृतपूर्वीकटमितिवद् द्वितीया प्राप्ता।

भ्यश्च' ( सू १८८८ ) इति कर्तरीनिः । 'साध्वसाधुप्रयोगे च' (वा १४८६ )। साधुः कृष्णो मातरि, असाधुर्मातुले । 'निमित्तात्कर्मयोगे' (वा १४९०) । निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ।

'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥' [ इति भाष्यम्[1] ]

हेतुतृतीयात्र प्राप्ता । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । योगविशेषे

---

कर्मणीत्यर्थाभ्युपगमात् । **कर्तरीनिरिति** । भावक्तान्ताद् अधीतशब्दात् कर्तरीनिप्रत्यये कृते अधीतीत्यस्याधीतवानित्यर्थः पर्यवस्यति । किम् अधीतवानिति कर्मविशेषजिज्ञासायां व्याकरणम् अध्ययने कर्मत्वेनान्वेति । तच्च व्याकरणकर्मत्वं न केनाप्यभिहितमिति कृतपूर्वी कटम् इतिवद् द्वितीयायां प्राप्तायामनेन सप्तमीति भावः । **साध्वसाधुप्रयोगे चेति** । सप्तमी वक्तव्येति शेषः । **साधुरिति** । हितकारीत्यर्थः । **असाधुरिति** । अहितकारीत्यर्थः । उभयत्र शेषषष्ठ्यपवादः । 'साधुनिपुणाभ्यामर्चायाम्-' इत्येव सिद्धे इह साधुग्रहणमनर्चार्थम् । यथा—साधुर्भृत्यो राजनि । इह तत्त्वकथने तात्पर्यम् । साधुनिपुणाभ्यामित्यत्र साधुग्रहणस्य प्रयोजनं वक्ष्यते । **निमित्तादिति** । कर्मयोगे हेतुवाचकाच्छब्दात् सप्तमी वाच्येत्यर्थः । ननु 'जाड्येन बद्धः' इत्यत्रापि सप्तमी स्यादित्यत आह—**निमित्तमिह फलमिति** । फलमेवेत्यर्थः । इष्टसाधनताज्ञानस्य प्रवर्तकतया फलस्यापि हेतुत्वं बोध्यम् । जन्यजनकत्वादिसंबन्धं व्यावर्तयितुमाह—**योगः संयोगसमवायात्मक इति** । अयुतसिद्धयोः संबन्धः समवायः । अन्ययोस्तु संयोगः । **चर्मणीति** । चर्मार्थं व्याघ्रं हन्तीत्यर्थः । अत्र द्वीपिना कर्मणा चर्मणः समवाय एव, अवयवावयविनोरयुतसिद्धत्वात् । **दन्तयोरिति** । दन्तार्थमित्यर्थः । अत्र कुञ्जरेण कर्मणा दन्तयोः समवाय एव । **केशेष्विति** । केशार्थमित्यर्थः । चमरी मृगविशेषः । **सीम्नीति** । सीमार्थमित्यर्थः । **हेतुतृतीया प्राप्तेति** । तादर्थ्यचतुर्थ्यपीति बोध्यम् । **सीमा अण्डकोश इति** । 'सीमा घट्टस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' इति मेदिनी । **पुष्कलको गन्धमृग इति** । 'अथ पुष्क-

---

मासमधीती व्याकरणे इत्यादौ त्वकर्मकैर्धातुभिर्योगे निमित्तस्य कालकर्मणोर्बहिरङ्गत्वादिहाग्रहणमिति सप्तम्यभावः । न चैवं तत्र द्वितीयापि न स्यादिति वाच्यम् । लक्ष्यानुरोधेन द्वितीयाविधाने व्यक्तिपक्षाश्रयणात् । एतच्च कौस्तुभे स्थितम् । **साध्वसाधुप्रयोगे च** । यत्रार्चा न विवक्षिता किं तु तत्त्वकथनमात्रं तत्रापि सप्तम्यर्थं वार्तिकेऽस्मिन् साधुग्रहणम्, साधुर्भृत्यो राज्ञीत्यादि यथा । 'साधुनिपुणाभ्याम्-' इति सूत्रे साधुग्रहणं त्वर्चायां विवक्षितायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः । **निमित्त-**

---

१ एष बन्धनीपतितः पाठः क्वचिन्नास्ति ।

**किम्**—वेतनेन धान्यं लुनाति। **६३४ यस्य च भावेन भावलक्षणम्। (२-३-३७)** यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः। अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च। सत्सु तरत्सु असन्त आसते। असत्सु तिष्ठत्सु सन्तस्तरन्ति। सत्सु तिष्ठत्सु असन्तस्तरन्ति। असत्सु

---

लक्को गन्धमृगे क्षेपणकीलयोः' इति मेदिनी। अत्रापि पुष्कलकेन कर्मणा सीम्नः समवाय एव। हरदत्तस्तु—सीमा ग्रामादिमर्यादा, तस्याः ज्ञानार्थं पुष्कलकः शङ्कुर्हतः निखात इति व्याचष्ट। अत्र पुष्कलकेन कर्मणा सीम्नः संयोगो बोध्यः। **वेतनेनेति।** अत्र वेतनं भृतिद्रव्यम्, तदर्थमित्यर्थः। अत्र वेतनस्य लूयमानस्य धान्यस्य च तादर्थ्यमेव संबन्धः, न तु संयोगः, नापि समवाय इति भावः। **यस्य च।** भावशब्दौ क्रियापर्यायावित्यभिप्रेत्य व्याचष्टे—**यस्य क्रिययेति।** क्रिया च कर्त्राश्रया कर्माश्रया च। तत्र कर्माश्रयामुदाहरति—**गोष्विति।** देवदत्तः कदा गत इति प्रश्ने उत्तरमिदम्। अत्र लक्षकत्वसंबन्धे सप्तमी। शेषषष्ठ्यपवादः। वर्तमानदोहनविशिष्टाभिर्गोभिर्ज्ञाप्यगमनवानित्यर्थः। अत्र दोहनक्रियायाः साक्षाल्लक्षकता। गवां तु तदाश्रयतया। ततश्च

---

**मिह फलमिति।** यदि तु कारणमित्युच्येत तर्हि जाड्येन बद्ध इत्यादावतिप्रसङ्गः स्यादिति भावः। **चर्मणीति।** चर्मद्वीप्यादीनां समवायः संबन्धः। **हेतुतृतीयेति।** तादर्थ्ये चतुर्थ्यपि बोध्यम्। **सीमाऽण्डकोश इति।** तथा च मेदिनीकारः—'सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' इति। 'अथ पुष्कलको गन्धमृगे क्षपणकीलयोः' इति च। हरदत्तस्तु—पुष्कलकः शङ्कुः, सीम्नि सीमज्ञानार्थं इतो निहतः निखात इत्याह। अस्मिंस्तु पक्षे सीमपुष्कलकयोः संयोगसंबन्धः। **यस्य च।** निर्ज्ञातकाला हि क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणम्, तत्र प्रसिद्धक्रियाश्रययोः कर्तृकर्मणोर्वाचकाद् ब्राह्मणादिशब्दाल्लक्ष्यलक्षणभावसंबन्धे षष्ठ्यां प्राप्तायामियं सप्तमी। लक्षकत्वमिह क्रियायाः साक्षात्, आश्रयस्य तु ब्राह्मणादेः क्रियाद्वारेणेति बोध्यम्। ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम्। कर्मण्याह—**गोष्विति। अर्हाणामित्यादि।** यस्यां क्रियायां ये उचितास्ते अर्हाः। तेषां कर्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या। तथा यस्यां क्रियायां येषां कर्तृत्वमनुचितं तेषामकर्तृत्वे विवक्षिते च सप्तमी वाच्या। तथा तद्वैपरीत्ये येषां कर्तृत्वमुचितं तेषामकर्तृत्वे येषां तु नोचितं तेषां कर्तृत्वे च सप्तमी वाच्येत्यर्थः। आद्यमुदाहरति—**सत्सु तरत्स्विति।** सन्तो हि तरणक्रियार्हाः कर्तारश्च। द्वितीयमुदाहरति—**असत्सु तिष्ठत्स्विति।** अत्र तरणक्रियायामसतामनर्हत्वमकर्तृत्वं च तिष्ठत्स्वित्यनेन प्रतीयते। तद्वैपरीत्ये प्रथममुदाहरति—**सत्सु तिष्ठत्स्विति।** सतां हि तरणमुचितं तेषां

तरत्सु सन्तस्तिष्ठन्ति। **६३५ षष्ठी चानादरे। (२-३-३८)** अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः। **६३६ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च। (२-३-३९)** एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां

---

गोदोहनदशायां गत इत्युत्तरं पर्यवस्यति। दुग्धासु गत इत्यत्र तु अतीतदोहनविशिष्टाभिः गोभिर्ज्ञाप्यमानगमनवानित्यर्थः। गोदोहोत्तरकाले गत इति फलितम्। कर्तृगतक्रियायास्तु ब्राह्मणेष्वधीयानेषु गत इत्युदाहार्यम्। अत्र यदवश्यं पुनः पुनर्लक्ष्यज्ञापकं तदेव न लक्षणम्। किं तु सकृज् ज्ञापकमपि। यथा—यं कमण्डलुपाणिं भवानद्राक्षीत् स छात्र इति। यद्यपि सकृदसौ कमण्डलुपाणिर्दृष्टः। तथापि तस्य कमण्डलुर्लक्षणं भवत्येवेति प्रकृतसूत्रे भाष्ये स्पष्टम्। 'उदिते आदित्ये जुहोति' इत्यत्र तु सामीपिकमधिकरणत्वं सप्तम्यर्थः। उदितादित्यसमीपकाल इत्यर्थः। आदित्योदयोत्तरसमीपकाल इति पर्यवसन्नोऽर्थः। 'उपरागे स्नायात्' इत्यत्र तु उपरागपदेन उपरागाश्रयकालो लक्ष्यत इत्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः। **षष्ठी चानादरे।** चात्सप्तमीत्यनुकृष्यते। अनादरे इति विषयसप्तमी। यस्य चेति पूर्वसूत्रमनुवर्तते। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी चेत्यर्थः। फलितमाह—**अनादराधिक इति।** अनादरः अधिको यस्मादिति विग्रहः। **रुदति रुदत इति।** कदा संन्यस्तवानिति प्रश्ने उत्तरमिदम्। अत्र लक्षकत्वं षष्ठीसप्तम्योरर्थः। अनादरविशिष्टं प्रव्रजनं धात्वर्थः। षष्ठीसप्तम्यौ तात्पर्यग्राहिके। अनादरश्च लक्षकक्रियाश्रयपुत्रादिविषयः। वर्तमानरोदनक्रियाविशिष्टपुत्रादिज्ञाप्यम् अनादरविशिष्टं प्रव्रजनमित्यर्थः। फलितमाह—**रुदन्तं पुत्रादिकमिति। स्वामीश्वर। षष्ठीसप्तम्याविति।** चकारेण तदुभयानुकर्षणादिति भावः। ननु शेषषष्ठ्यैव सिद्धे किमर्थमिह षष्ठीविधानमित्यत आह—**षष्ठ्यामेवेति। गवां गोषु वेति।** गोसंबन्धीत्यर्थः। गवां गोषु

---

चाकर्तृत्वं तिष्ठत्स्वित्यनेन द्योत्यते। द्वितीयमुदाहरति—**असत्सु तरत्स्विति।** असतां हि तरणमनुचितम्, तेषां च कर्तृत्वं तरत्सु इत्यनेन गम्यते। यद्यपीदं 'यस्य च भावेन–' इत्येव सिद्धम्, तथापि लक्ष्यलक्षणभावाविवक्षायां सप्तम्यर्थमिदमिति कैयटादयः। तत्त्वतस्तु व्यर्थमेवेदमित्यन्ये। **षष्ठी चानादरे। अनादर इति।** 'यस्य च भावेन–' इत्यनेन सप्तमी। अनादरे सति यो भावं लक्षयतीति। तदेतत्फलितमाह–**अनादराधिक्य इति।** केवलभावलक्षणे सप्तम्येव, अनादराधिक्ये तु षष्ठीसप्तम्याविति निष्कर्षः। **स्वामीश्वर।** 'स्वाम्यर्थ–' इति वक्तव्ये स्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम्। 'विरूपाणामपि समानार्थानाम्' इत्येकशेषोऽत्र न भवति, स्वरूप-

---

१ 'अनादराधिके' इति बालमनोरमासम्मतः पाठः।

पाक्षिकसप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः। गा एवानुभवितुं जात इत्यर्थः। ६३७ आयुक्तकुशलाभ्यां चासेवायाम्। (२-३-४०) आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे। आयुक्तो व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किम्-आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः। ६३८ यतश्च निर्धारणम्। (२-३-४१) जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां

---

वा ईश्वरः। गवां गोषु वा अधिपतिः। गवां गोषु वा दायादः। पुत्रादिभिर्ग्रहीतुं योग्यः पित्राद्यर्जितधनांशो दायः। तमादत्त इति दायादः। 'आतोऽनुपसर्गे-' इति कविधौ अनुपसर्गग्रहणे सत्यपि अत एव निपातनात् कः। गोसंबन्धिदायाद इत्यर्थः। गवां च दाये अन्वयः। नित्यसाकाङ्क्षत्वाद् वृत्तिः। गवात्मकस्यांशस्य आदातेति फलितोऽर्थः। 'यस्मादधिकम्-' इति सूत्रभाष्ये तु दायादशब्दः स्वामिपर्याय इति स्थितम्। **गवां गोषु वा प्रसूत इति।** गोसंबन्धीत्यर्थः। संबन्धश्च भोक्तृत्वरूपः। तदाह—**गा एवेति।** एवशब्दाद् महिषादिव्यावृत्तिः। **आयुक्त।** आसेवापदं व्याचष्टे—**तात्पर्य इति।** औत्सुक्ये इत्यर्थः। 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः' इत्यमरः। आयुक्तपदं व्याचष्टे—**व्यापारित इति।** प्रवर्तित इत्यर्थः। **आयुक्तः कुशलो वेति।** हरिपूजनविषये आयुक्तः प्रवर्तित इत्यर्थः। अत्र वैषयिकाधिकरणत्वविवक्षायां सप्तम्यामेव प्राप्तायाम्, संबन्धमात्रविवक्षायां तु षष्ठ्यामेव प्राप्तायां वचनम्। **आयुक्तो गौरिति।** आङीषदर्थे। 'युजिर्योगे'। तदाह—**ईषद्युक्त इत्यर्थ इति। यतश्च निर्धारणम्। जातिगुणेति।** यत इति तत इति च पञ्चम्यर्थे तसिः। यस्मात्समुदायाद् एकदेशस्य जातिगुणक्रियासंज्ञाभिः पृथक्करणं स्वेतरव्यावृत्तधर्मविशेषवत्त्वबोधनं निर्धारणशब्दवाच्यं गम्यते तस्मात् षष्ठीसप्तम्यावित्यर्थः। अत्र स्वशब्देन एकदेश उच्यते। तत्र जात्या पृथक्करणमुदाहरति—**नृणां नृषु वेति।** नृशब्दो मनुष्यसमुदाये वर्तते। उद्भूतावयवभेदविवक्षायां बहुवचनम्। द्विज इति तु जात्यभिप्रायमेकवचनम्। षष्ठीसप्तम्योः अवयवावयविभावः संबन्धोऽर्थ उदाहृतनिर्धारणविषयत्वरूपश्च। ततश्च मनुष्यसमुदायैकदेशभूतो द्विजः स्वेतरव्यावृत्तश्रैष्ठ्यरूपधर्मक इत्यर्थः। गुणेन पृथक्करणमुदाहरति—**गवां गोषु वेति।**

---

परत्वेन समानार्थकत्वाभावात्। **दायाद इति।** दायमादत्ते इति दायादः। सोपसर्गादप्यादन्ताद् अत एव निपातनात्कः। गवां गोषु वा दायाद इत्यत्र यद्यपि गवामित्येतत्समुदायस्य विशेषणम्, तथापि दीयतेऽसौ दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं

गच्छत्सु वा धावञ्छीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः। ६३९ **पञ्चमी विभक्ते।** (२-३-४२) विभागो विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। ६४० **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः।** (२-३-४३) आभ्यां योगे सप्तमी स्यादर्चायाम्, न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। अर्चायां किम्-निपुणो राज्ञो भृत्यः।

---

गोसमुदायैकदेशभूता कृष्णा गौः स्वेतरव्यावृत्तबहुक्षीरत्वरूपधर्मिकेत्यर्थः। क्रियया पृथक्करणमुदाहरति—**गच्छतां गच्छत्सु वेति।** गच्छत्समुदायैकदेशभूतो धावन् स्वेतरव्यावृत्तशैघ्र्यधर्मक इत्यर्थः। संज्ञया पृथक्करणमुदाहरति—**छात्राणामिति।** छात्रसमुदायैकदेशभूतो मैत्रनामा स्वेतरव्यावृत्तपटुत्वधर्मक इत्यर्थः।

**पञ्चमी विभक्ते।** **विभागो विभक्तमिति।** भावे क्तप्रत्ययाश्रयणादिति भावः। 'यतश्च निर्धारणम्' इत्यनुवर्तते। निर्धारणावधिभूतानां मनुष्यादीनां निर्धार्यमाणानां द्विजानां च सामान्यात्मना अभेदो विशेषात्मना भेदश्च स्थितः। एवं च निर्धारणे सर्वत्र कथंचिद्भेदस्य सत्त्वाद् विभक्त इत्यनेन भेद एवेत्यर्थो विवक्षितः। ततश्च यत्र निर्धारणावधेर्निर्धार्यमाणस्य च भेद एव, न तु केनाप्युपात्तरूपेण अभेदः, तत्रैवास्य प्रवृत्तिरित्यभिप्रेत्याह—**निर्धार्यमाणस्येति।** निर्धारणावधेरिति शेषः, 'यतश्च निर्धारणम्' इत्यनुवृत्तेः। अत्रावधिव्यावृत्तधर्मवत्त्वबोधनमेव, न तु समुदायादेकदेशस्येत्यंशो विवक्षितः, असंभवादित्यभिप्रेत्योदाहरति—**माथुरा इति।** अवधित्वं पञ्चम्यर्थः। मथुरादेशीयाः पाटलीपुत्रदेशीयापेक्षया अतिशयेनाढ्या इत्यर्थः। अत्र मथुरादेशीयत्वपाटलीपुत्रदेशीयत्वयोः गोत्वाश्वत्ववद्विरोधात् कथञ्चिदपि तद्रूपेण नाभेद इति निर्धारणावधेः पञ्चमीति भावः। **साधुनिपुणाभ्याम्।** शेषषष्ठ्यपवादः। **मातरि साधुरिति।** हितकारीत्यर्थः। **निपुणो वेति।** मातरि कुशल इत्यर्थः। शुश्रूषायामिति शेषः। **निपुणो राज्ञ इति।** साधुशब्दप्रयोगे तु अर्चां विनापि सप्तमी भव-

---

स्पृशत्येव, तथा चात्र गवात्मकस्यांशस्य आदातेति फलितोऽर्थः। **पञ्चमी विभक्ते।** **भेद एवेति।** न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः। **तत्र पञ्चमी स्यादिति।** नन्वेवं माथुरा इत्यत्रापि पञ्चमी स्यात्। मैवम्, पूर्वसूत्रमिहानुवर्तते तेन यतो निर्धार्यते तत एवेत्यर्थाद् निर्धारणावधेरेव पञ्चमीप्रवृत्तेः। अनभिहिताधिकारान्माथुरा इत्यत्र नातिप्रसङ्ग इत्यन्ये। **माथुरा इति।** न ह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य च गवां कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति, किं तु शब्दोपात्तयोर्धर्मयोर्विरोध एव। इदं च सूत्रं बुद्धिपरिकल्पितापायमाश्रित्यापादानप्रकरणे भाष्ये प्रत्याख्यातम्। **साधुनिपुणाभ्यामर्चायाम्।** 'पुण कर्मणि शुभे' अस्मादिगुपध-

इह तत्त्वकथने तात्पर्यम्। 'अप्रत्यादिभिरिति वक्तव्यम्' (वा १४१३)। साधुर्निपुणो वा मातरं प्रति परि अनु वा। **६४१ प्रसितोत्सुकाभ्यां तृतीया च।** (२-३-४४) आभ्यां योगे तृतीया स्यात् चात्सप्तमी। प्रसित उत्सुको वा हरिणा हरौ वा। **६४२ नक्षत्रे च लुपि।** (२-३-४५) नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे। 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्। मूले श्रवणे इति वा। लुपि किम्-पुष्ये शनिः। **६४३ सप्तमीपञ्चम्यौ कारकमध्ये।** (२-३-७) शक्तिद्वयमध्ये यौ काला-

---

त्येव, 'साध्वसाधुप्रयोगे च' इत्युक्तेः। इह साधुग्रहणं तु अर्चायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थम्। **अप्रत्यादिभिरिति।** प्रति, परि, अनु एतैर्योगे सति साधुनिपुणाभ्यां योगेऽपि न सप्तमीति भावः। **प्रसितोत्सुकाभ्याम्।** 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः' इत्यमरः। वैषयिकाधिकरणत्वे सप्तम्यामेव प्राप्तायामिदं वचनम्। **नक्षत्रे च लुपि।** नक्षत्र इत्यनन्तरं प्रकृत्यर्थे सतीति शेषः। लुप्शब्देन लुप्संज्ञया लुप्तप्रत्ययार्थो विवक्षितः, तदाह—**नक्षत्रे प्रकृत्यर्थ इति। अधिकरण इति।** 'सप्तम्यधिकरणे च' इत्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। **मूलेनेति।** मूलनक्षत्रयुक्तकाल इत्यर्थः। 'नक्षत्रेण युक्तः कालः' इत्यण्। 'लुबविशेषे' इति तस्य लुप्। अधिकरणे किम्? मूलं प्रतीक्षते। नक्षत्र इति किम्? पञ्चालेषु तिष्ठति। इह 'जनपदे—' इति लुप्। **सप्तमीपञ्चम्यौ।** कारकशब्दः कर्तृत्वादिशक्तिपरः, न तु कर्त्रादिपरः, व्याख्यानात्। मध्यस्यावधिद्वयसापेक्षत्वात् कारकयोर्मध्यमिति विग्रहः, तदाह—**शक्तिद्वयमध्य इति।** 'कालाध्वनोः—' इत्यनुवृत्तं पञ्चम्यन्ततया विपरिणाम्यत इत्याह—**यौ**

---

लक्षणः कः। 'अर्च पूजायाम्' अस्माद्भौवादिकाद् 'गुरोश्च हलः' इत्यप्रत्यये टाप्। चौरादिकात्तु 'ण्यासश्रन्थः—' इति युच्यर्चनेति स्यात्। **निपुणो राज्ञ इति।** साधुशब्दप्रयोगे त्वर्चा विना सप्तमी भवत्येव 'साध्वसाधुप्रयोगे च' इति वार्तिकात्। **अप्रत्यादिभिरिति।** 'लक्षणेत्थम्—' इति सूत्रोपात्ताः प्रत्यादयः। **प्रसितोत्सुकाभ्याम्।** 'तत्परे प्रसितासक्तौ' इत्यमरः। उत्सुकसाहचर्यात् प्रसितोऽपि तत्पर एवेह गृह्यते रूढ्या च। तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न भवति। **नक्षत्रे च लुपि।** लुप्शब्दोऽत्रार्थविशेषे लाक्षणिक इत्याशयेनाह—**यो लुप्संज्ञयेत्यादि। अधिकरण इति।** एतच्च 'सप्तम्यधिकरणे च' इत्यतो मण्डूकप्लुत्यानुवर्तत इति भावः। अधिकरणे किम्, मूलं प्रतीक्षते, मूलाय स्पृहयति। **मूलेनेति।** 'नक्षत्रेण युक्तः कालः' इत्यणो 'लुबविशेषे' इति लुप्। नक्षत्र इति किम्, पञ्चालेषु तिष्ठति। इह 'जनपदे लुप्' इति लुप्। **सप्तमीपञ्चम्यौ।** 'कालाध्वनोरत्यन्तसंयोगे' इत्यतः कालाध्वनोरित्यनु-

ध्वानौ ताभ्यामेते स्तः। अद्य भुक्त्वायं द्र्यहे द्र्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मशक्त्योर्मध्येऽयं देशः। अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते। 'तदस्मिन्नधिकम्–' (सू १८४६) इति 'यस्मादधिकम्–' (सू ६४५) इति च सूत्रनिर्देशात्। लोके लोकाद्वा अधिको हरिः। ६४४ **अधिरीश्वरे।** (१-४-९७) स्वस्वामिसंबन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात्। ६४५ **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी।** (२-३-९) अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्धे हरेर्गुणाः। परार्धा-

---

**कालाध्वानाविति।** **अद्य भुक्त्वेति।** सामीपिकाधिकरणत्वे सप्तम्यामेव प्राप्तायां वचनम्। अद्य भुक्त्वा द्र्यहे अतीते तत्समीपे तृतीयेऽह्नि भोक्तेत्यर्थः। भविष्यति लुट्। **कर्तृशक्त्योरिति।** अद्यतनभुजिक्रियानिरूपितकर्तृत्वस्य द्र्यहोत्तरदिनगतभुजिक्रियानिरूपितकर्तृत्वस्य चेत्यर्थः। कारकशब्दस्य कर्त्रादिपरत्वे त्विह न स्यात्, क्त्वाप्रत्ययस्य कर्त्रैकत्वे विधानात्। कर्तृशक्तिस्तु भुजिक्रियाभेदाद् भिद्यत एव। कारकद्वयमध्येऽप्युदाहरति—**इहस्थोऽयमिति।** इहापि देशतः सामीपिकमधिकरणत्वं पञ्चमीसप्तम्योरर्थः। इह तिष्ठन्नयमिष्वास इषुणा क्रोशोत्तरसमीपदेशे लक्ष्यं विध्येदित्यर्थः। **कर्तृकर्मशक्त्योरिति।** कर्तृत्वकर्मत्वरूपशक्त्योर्मध्य इत्यर्थः। कारकशब्दस्य कर्त्रादिपरत्वे त्विहैव स्यात्। अद्य भुक्त्वायमित्यत्र न स्यादिति सूचयितुमिदमप्युदाहृतम्। ननु लोके लोकाद्वा अधिको हरिरित्यत्र अवधित्वसंबन्धे शेषषष्ठ्येवोचितेत्याशङ्क्याह—**अधिकशब्देनेति।** **लोके लोकाद्वेति।** अवधित्वसंबन्धः सप्तमीपञ्चम्योरर्थः। लोकापेक्षया श्रेष्ठ इत्यर्थः। अधेः कर्मप्रवचनीयकार्यं वक्ष्यन् कर्मप्रवचनीयसंज्ञामाह—**अधिरीश्वरे।** ईश्वरशब्देन ईश्वरत्वं स्वस्वामिभावसंबन्धात्मकं विवक्षितम्। 'कर्मप्रवचनीयाः' इत्यधिकृतमेकवचनान्ततया विपरिणम्यते, तदाह—**स्वस्वामीति।** **यस्मादधिकम्।** कर्मप्रवचनीययुक्त इत्यनुवर्तते, तदाह—**अत्र कर्मप्रवचनीयेति।** शेषषष्ठ्यपवादः। **उप परार्धे इति।** अवधित्वं सप्तम्यर्थः, तदाह—

---

वर्तते, तच्च पञ्चम्या विपरिणम्यते तदाह—**यौ कालाध्वानौ ताभ्यामिति।** इह कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवत्यस्वरितत्वात्। **अद्य भुक्त्वाऽयमिति।** नन्वत्र कर्ता एक एव, तत्कथं कारकयोर्मध्ये कालः। सत्यम्। नात्र शक्त्याश्रयं द्रव्यं कारकमिति व्यवह्रियते, किं तु शक्तिरेव। सा च कालभेदाद् भिद्यत एव। एका हि अद्य भुजेः साधनम्, अपरा द्र्यहेऽतीते भुजेः, तदेतद्याचष्टे—**कर्तृशक्त्योर्मध्येऽयं काल इति।** **यस्मादधिकम्।** **उप परार्ध इति।** 'उपोऽधिके च' इत्यनेन उपेत्यस्य कर्मप्रवचनीयसंज्ञा। 'यस्य चेश्वरवचनम्' इत्यस्य तन्त्रादिना अर्थद्वयं विव-

दधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः। 'सप्तमी शौण्डैः' (सू ७१७) इति समासपक्षे तु रामाधीना। 'अषडक्ष–' (सू २०७९) इत्यादिना खः। ६४६ **विभाषा कृञि**। (१–४–९८) **अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे।** यदत्र मामधिकरिष्यति। विनियोक्ष्यत इत्यर्थः। इह विनियोक्तुरीश्वरत्वं गम्यते। अगतित्वात् 'तिङि चोदात्तवति'

---

**पराधर्धादधिका इत्यर्थ इति**। यस्मादधिकं संख्यान्तरं न विद्यते तत्परार्धम्। तदपेक्षयेत्यर्थः। 'उपोऽधिके च' इति उपेत्यस्य कर्मप्रवचनीयत्वस्येदं फलम्[1]। यस्येश्वरवचनमित्यस्य यत्सम्बन्धी ईश्वर उच्यते ततः सप्तमीत्येकोऽर्थः। इह यच्छब्देन स्वमुच्यते। एवंच स्ववाचकात्सप्तमीति लभ्यते। ईश्वरशब्दो भावप्रधानः, यस्येश्वरत्वमुच्यते ततः सप्तमीत्यन्योऽर्थः। यन्निष्ठमीश्वरत्वमुच्यते ततः सप्तमीति यावत्। एवं च स्वामिवाचकात्सप्तमीति लभ्यते, तदाह—**ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमीति। अधि भुवि राम इति।** अधिरीश्वरपर्यायः। संम्बन्धः सप्तम्यर्थः। भुवः स्वामी राम इत्यर्थः। अत्र स्ववाचकात्सप्तमी। **अधि रामे भूरिति।** अत्र अधिः स्वशब्दपर्यायः। सम्बन्धः सप्तम्यर्थः। रामस्य स्वभूता भूरित्यर्थः। अत्र स्वामिवाचकात्सप्तमी। **समासपक्षे त्विति**। शौण्डादिगणे अधिशब्दस्य पठितत्वेन तेनाधिशब्देन रामे इति सप्तम्यन्तस्य समासे सति 'सुपो धातु–' इति सुब्लुकि रामाधिशब्दाद् 'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः' इति खप्रत्यये 'आयनेयीनीयियः–' इति तस्य ईनादेशे रामाधीना भूरिति सिध्यति। रामस्वामिकेत्यर्थः। विभक्त्यर्थे अव्ययीभावे त्वधिरामं भूः। रामाधिकरणिका भूरित्यर्थः। खप्रत्ययस्तु न। अध्युत्तरपदत्वाभावात्। **विभाषा कृञि**। 'अधिरीश्वरे' इत्यनुवर्तते। कर्मप्रवचनीया इत्यधिकृतम्, तदाह—**अधिः करोताविति।** कृञ्धातौ परे अधिः कर्मप्रवचनीयो वा स्यादीश्वरत्वे इति यावत्। **यदत्र मामधिकरिष्यतीति।** अस्मिन्विषये मामधिकरिष्यतीति यत्तद्युक्तमित्यर्थः। अत्र कर्मप्रवचनीययोगे मामिति द्वितीया। अधि-

---

क्षितम्। तथाहि—यस्येत्यनेन स्वं निर्दिश्यते, यस्य स्वस्य संबन्धी ईश्वर उच्यते ततः सप्तमीति व्याख्याने स्ववाचकात् सप्तमीत्येकोऽर्थः। ईश्वरशब्दो भावप्रधानः। यन्निष्ठमीश्वरत्वमुच्यते ततः सप्तमीति व्याख्याने स्वामिवाचकात् सप्तमीत्यपरः। एवं स्थिते फलितमाह—**स्वस्वामिभ्यां पर्यायेणेति**। अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसंबन्धस्याप्युक्तत्वाद्युगपदुभाभ्यां न सप्तमी स्यादिति भावः। **रामाधीनेति**। विभक्त्यर्थेऽव्ययीभावे त्वधिरामम्। **यदत्रेति।** यो मामधिकरिष्यति

---

१ इदं प्रतीकं क्वचिन्नास्ति।

**(सू ३६७८) इति निघातो न** ॥ इति सप्तमी विभक्तिः ॥

**॥ इति कारकप्रकरणम् ॥**

करिष्यतीत्येतद् व्याचष्ट—**विनियोक्ष्यत इत्यर्थ इति** । तर्हि कर्मत्वादेव द्वितीया सिद्धेः किं कर्मप्रवचनीयत्वेनेत्यत आह—**अगतित्वादिति** । **तिङि चेति** । उदात्तवति तिङि परे गतिर्निहन्यत इति तदर्थः । अत्र करिष्यतीति तिङन्तमुदात्तवत् , 'तिङ्ङतिङः' इति निघातस्य 'निपातैर्यत्–' इत्यादिना निषेधात् । ततश्च अधेरत्र गतित्वान्निघात इह प्राप्तः । कर्मप्रवचनीयत्वे तु स न भवति, तेन गतित्वस्य बाधात् । अतः अधेर्निघाताभावार्थमिदं सूत्रमिति सिद्धम् ।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां-
बालमनोरमाख्यायां विभक्त्यर्थनिरूपणं समाप्तम् ।

विनियोक्ष्यते तस्य मद्विनियोक्तुरीश्वरत्वं गम्यत इत्यर्थः । **तिङि चोदात्तेति** । उदात्तवति तिङि परे गतिर्निहन्यत इति सूत्रार्थः । अत्र करिष्यतीति तिङन्त उदात्तवान्, 'तिङ्ङतिङः' इति निघातस्य 'निपातैर्यद्यदि–' इत्यादिना निषेधात् । **निघातो नेति** । मामिति द्वितीया तु 'कर्मणि द्वितीया' इत्यनेनैव सिध्यतीति भावः । इति सप्तमी । इति तत्त्वबोधिन्यां कारकप्रकरणम् ।

१ 'इति विभक्त्यर्थाः' इति क्वचित् पाठः ।

अकाराद्यनुक्रमेण

# कौमुदीकारकान्तभागस्थसूत्रसूचिका

# अकाराद्यनुक्रमण क कारकान्तभागस्थवार्तिकसूचिका।

७१८
वार्तिव
ओत्वोष्
औत्त्वप्र
कबरमणि
कर्मेरनि
कर्मणः
कर्मप्रवच
काम्ये रो
कालात्सप
क्लृपि स
क्तस्येन्विष
क्रियया
क्वौ लुप्तं
क्षिपकादी



| वार्तिकम् | सूत्रम् | वार्तिकम् | सूत्रम् |
|---|---|---|---|
| **श** | | समासप्रत्ययविधौ | २६ |
| शकन्ध्वादिषु पररूपं | ७६ | सहितसहाभ्यां चेति | ५२५ |
| शब्दायतेर्न | ५४० | साध्वसाधुप्रयोगे च | ६३३ |
| शरः खयः | १३८ | सिति च | ६१ |
| शूद्रा चामहत्पूर्वा | ४५४ | सीमन्तः केशवेशे | ७६ |
| शेषे विभाषा | ६२४ | सूतकापुत्रिका | ४६४ |
| श्वशुरस्योकाराकारलोपश्च | ५२३ | सूर्यागस्त्ययोश्छे | ४६६ |
| **ष** | | सूर्याद्देवतायां चाब्वाच्यः | ५०५ |
| षाद्यञश्चाब्वाच्यः | ५२८ | स्त्रियां न | ६४ |
| **स** | | स्त्रियाम् | ४८४ |
| संज्ञायां वा | ५०० | स्त्रीप्रत्यययोरकाकारयो | ६२४ |
| संज्ञोपसर्जनीभूतास्तु | २२२ | स्वादीरेरिणोः | ७३ |
| सम्पुङ्कानां सो | १३८, १३६ | **ह** | |
| सम्बुद्धौ नपुंसकानां | ६६८ | हयगवयमुकयमनुष्य | ५१८ |
| सम्भस्त्राजिनशण | ४५४ | हितयोगे च | ५८० |
| सदच्काण्डप्रान्त | ४५४ | हिमारण्ययोर्महत्त्वे | ५०५ |
| समानवाक्ये निघात | ४०७ | | |

## कौमुदीकारकान्तभागस्थपरिभाषासूचिका।

| परिभाषा | सूत्रम् | परिभाषा | सूत्रम् |
|---|---|---|---|
| अकृतव्यूहाः | ४६, ४१७, ४३५ | निर्दिश्यमानस्यादेशा | २२७ |
| अङ्गकार्ये कृते | ३८८ | पदाङ्गाधिकारे | २२७ |
| अनन्तरस्य विधिर्वा | ३५६ | परनित्यान्तरङ्गापवादानामु | ४६ |
| अनिनस्मन्ग्रहणा | ३५६ | पुरस्तादपवादा | १६१ |
| अन्त्यबाधेऽन्त्यसदेशस्य | ४१६ | प्रकृतिवदनुकरणम् | २८१ |
| अर्थवद्ग्रहणे नानर्थकस्य | ७३ | प्रत्ययग्रहणे तदन्त | २१७, ४५६ |
| असिद्धं बहिरङ्गमन्तरङ्गे | ४६ | प्रातिपदिकग्रहणे | १८२ |
| उपपदविभक्तेः कारक | ५८३ | यत्रानेकविधमान्तर्ये | ३६ |
| ताच्छीलिके णेऽपि | ४७० | लाश्रयमनुबन्धकार्ये | ४७० |
| नानर्थकेऽलोन्त्यविधि | ३४७ | संज्ञाविधौ प्रत्ययग्रहणे | २१७ |
| नानुबन्धकृतमनेकाल्त्वम् | २१४ | सन्निपातलक्षणो | २०४ |